कृत्यवस्तुषु चातुर्यं वैदग्ध्यं परिकीर्त्यते ।

यथा

चातुर्यं किमु वर्ण्यते गुणनिधेः श्रीवीररुद्रप्रभो-
र्यत्रान्योन्यविरुद्धयोरपि महद्वाणीश्रियोरार्जवम् ।

---

टखोर्दर्शितपोः' इति खश्प्रत्ययः । 'अरुर्द्विषत्—' इत्यादिना मुमागमः । 'उप-पदमतिङ्' इति समासः । अत्र नञः सूर्यकर्मिकया दृशिक्रियया संबन्धो न तु सूर्यस्थया सत्तया । अतोऽसूर्यमित्यसमर्थसमासः । तथापि साधुरेव । यदाह भगवान् भाष्यकारः । 'अवश्यं कस्यचिन्नञ्समासस्यासमर्थस्य गमकस्य साधुत्वं वक्तव्यमसूर्यपश्यानि मुखानीति' । तासामवधिगिरेः लोकालोकपर्वतस्य पाश्चात्यदृपदामप्रकाशप्रदेशवर्त्युपलानां प्रकाशव्युत्पत्तिः प्रकाशज्ञानम् । यद्वा । अयं प्रकाशशब्दवाच्य इति शृङ्गग्राहिकया संग्रहः । अत्र सूर्यप्रकाशरहितयोरपि देशकालयोरतिवेलप्रकाशजननाल्लोकोत्तरमस्य तेजस्वित्वमिति भावः ॥ १७ ॥

वैदग्ध्यमाह । कृत्येति । कृत्यवस्तुषु कर्तव्यार्थेषु चातुर्यं प्रयोगकौशलम् । उदाहरति । चातुर्यमिति । यत्र विद्या न तत्र श्रीर्यत्र श्रीर्न सरस्वतीति न्यायेना-न्योन्यविरुद्धयोरपि वाणीश्रियोर्यत्र वीररुद्रे महदार्जवं सौहार्दमेकत्रावस्थानमिति यावत् । अस्तीति गम्यते । अस्तिर्भवन्तिपरोऽप्रयुज्यमानोऽप्यस्तीति महाभाष्य-कारवचनात् । उक्तन्यायस्तु वीररुद्रव्यतिरिक्तनिर्गुणभूपालविषय इत्यर्थः । आभ्यां श्रीवाणीभ्याम् । सहेति शेषः । अत्र सहादिशब्दाप्रयोगेऽपि तदर्थगम्य-तायां 'वृद्धो यूना' इति ज्ञापनात् तृतीया । सदृशैः स्वस्वशीलोचितैरुपचारैः प्रियाचरितसत्कारविशेषैर्लालितां हृष्टामित्यर्थः । तदुक्तं भावप्रकाशे ।

'उपचारो यथासत्त्वं स्त्रीणामल्पोऽपि हर्षदः ।
महानप्यन्यथायुक्तो नैव तुष्टिकरो भवेत् ॥'

इति । उपचारलक्षणमपि तत्रैव ।

'वासोऽङ्गरागाभरणमाल्यशय्यासनादिषु ।
यत्र यत्र स्पृहा तत्तद्देशकालानुकूल्यतः ॥
अत्यादरेण सत्कार उपचार इतीरितः ॥'

इति । आभ्यामित्यत्राप्रधाने तृतीयाविधानेऽपि श्रीवाण्योः शाब्द एवोपसर्जन-

---

१ परिकीर्तितम् P.   २ संगतिग्रहः m., $m_1$, $m_2$.   ३ m., $m_1$, and $m_2$ drop अपि.
४ भाष्यकार° m.   ५ $m_1$ has निपातनात् for ज्ञापकात्.   ६ m. drops तदुक्तं भावप्रकाशे.

किं चाभ्यां सदृशोपचारलैलितां तत्तादृशैरुत्सवै-
निःसापत्न्यमिमां भुवं स नृपतिर्धत्ते दिशां जित्वरः ॥ १८ ॥

अथ धार्मिकत्वम् ।

धर्मैकायत्तचित्तत्वं धार्मिकत्वमुदीर्यते ।

यथा ।

परिहासेऽप्यनौचित्यं स्वप्नेऽप्यन्यवधूकथाम् ।
शत्रावप्यगुणारोपं काकतीन्द्रो न मृष्यति ॥ १९ ॥

आदिग्रहणान्महामहिमत्वपाण्डित्यप्रभृतयः ।

तन्महामहिमत्वं स्याद्या पुनर्देवतात्मता ।

यथा

कौसल्यासीत् प्रथमजननी देवकी च द्वितीया
विष्णोर्माता तदनुमहिता मुन्मुडी वा तृतीया ।

---

भावो न त्वार्थः । सह शाखया प्रस्तरं प्रहरतीत्यत्र प्रहरणे शाखाप्रस्तरयोरिव तयोर्भुवश्च समप्रधानभावोपपत्तेः । अन्यथानौचित्यादिति रहस्यम् । अतस्तिस्रोपि सदृशोपचारसंतुष्टा इति भावः । तां भुवम् । स नृपतिः । तत्तादृशशब्दयोः स्वरूपप्रकारस्मारकयोः खञ्जकुब्जादिवद्विशेषणसमासः । वक्तुमशक्यैरित्यर्थः । उत्सवैः हर्षोत्पादकव्यापारैः । 'उत्सूते हर्षमित्येष उत्सवः पैरिकीर्तितः' इति तत्रैवोक्तेः । मिथो विरुद्धानामेतासामन्योन्यानुरागजननेन वशीकरणाद्वैदग्ध्यमुक्तम् । वितरणविद्वद्गोष्ठीप्रजारञ्जनादिभिः [10]श्रीवाण्यौ धरणीं च [11]निर्विरोधं पोषयतीति भावः ॥ १८ ॥

धार्मिकत्वमाह । धर्मेति । धर्मं चरत्यासेवत इति धार्मिकः । 'सकृत्कृतधर्मो न धार्मिकः' इति वृत्तिकारः । तस्य भावस्तत्त्वम् । उदाहरति । परिहास इति । अनौचित्यमन्यद्रव्याभिलाषानृतभाषणादिहेतुकमित्यर्थः । परिहासादावप्यनौचित्यादिकमसहमानस्य धार्मिकत्वं किमु वक्तव्यमिति भावः ॥ १९ ॥

---

१ °ललितैस्त° P.; लुलिता R. २ महीं P. ३ °भृतिर्न R., M. ४ धार्मिकत्वं तदुच्यते $M_3$. ५ °पाण्डित्यादयः R. ६ Omitted in $M_5$. ७ कौसल्या च प्रथम° $M_5$. ८ मोम्मुडाम्बा तृतीया M.; मुम्मडीया $M_1$, मुन्मुडम्बा T., $M_3$; मुम्मडम्बा T'., $M_6$. ९ परिकीर्त्यते t. १० श्रीवाणीधरणीर्निर्विरोधं p., T. ११ m., $m_1$ and $m_2$ drop निर्विरोधं. १२ तोषयतीति m., $m_3$. १३ अथ धार्मिकत्व° t.

यस्त्रेतायां रघुपतिरभूद् द्वापरे शौरिरासीत्
त्रातुं क्षोणीं स जयति कलौ वीररुद्रावतारः ॥ २० ॥

अत्र गरुडध्वजात्मकतया महामहिमतोक्ता ।

अथ पाण्डित्यम् ।

सर्वविद्याधिकत्वं यत् पाण्डित्यं तदुदाहृतम् ।

यथा ।

गोष्ठीभिः परितोषयन् बुधगणान् षड्दर्शनीसीमभिः
सत्सारस्वतमार्गदर्शनचणैः सूक्तैः कवीन् प्रीणयन् ।
संगीतोपनिषद्रहस्यपिशुनैरातोद्ययोग्यकर्मै-
र्धिन्वन् संसदि वैणिकान् विहरते श्रीकाकतीन्द्रो नृपः ॥२१॥

---

आदिग्रहणसंगृहीतेषु महामहिमत्वमाह । तदिति । उदाहरति । कौसल्येति । कोसलस्यापत्यं स्त्री कौसल्या । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङ्प्रत्यये टाप् । तद्देवकीत्वमनु पश्चाद् देवकीत्वानन्तरमित्यर्थः । 'अनुर्लक्षणे' इति कर्मप्रवचनीयत्वात् तद्योगे द्वितीया । महिता पूज्यमाना । 'मतिबुद्धि—' इत्यादिना वर्तमाने क्तः । अत्र विष्ण्वतारत्वेन देवतात्मकत्वान्महामहिमत्वम् ॥ २० ॥

पाण्डित्यमाह । सर्वेति । उदाहरति । गोष्ठीभिरिति । षण्णां दर्शनानां पाणिन्यादिप्रस्थानानां समाहारः षड्दर्शनी ।

'पाणिनेर्जैमिनेश्चैव व्यासस्य कपिलस्य च ।
कणादस्याक्षपादस्य दर्शनानि षडेव हि ॥'

इत्याहुः । द्विगुत्वात् ङीप् । सा सीमा गोचरो यासां ताभिस्तथोक्ताभिर्गोष्ठीभिः शास्त्रप्रसङ्गैः । सत्सारस्वतमार्गस्य सत्कवितामार्गस्य दर्शनं प्रकाशनम् । दृशेर्ण्यन्ताल्ल्युट् । तेन वित्तैस्तच्चणैः । 'तेन वित्तश्चुञ्चुप्चणपौ' इति चणप्प्रत्ययः । संगीतोपनिषद्रहस्यपिशुनैर्नाट्यवेदमर्मोद्घाटकैः । आतोद्ययोग्यकर्मैस्ततादिचतु-

---

१ इति M. २ उक्ता is omitted in $M_1$. ३ अथ is omitted in $M_3$. ४ R. omits अथ पाण्डित्यम्. ५ $M_3$ has तथा after पाण्डित्यम्. ६ °सूक्तिदर्शन° R. ७ °योगकर्मैः $M_1$; °गीतिकर्मैः $M_3$; $M_3$ also notices नीतिकर्मैः. ८ विजयते श्रीवीररुद्रः प्रभुः $M_1$; $M_1$ notices विजयते in place of विहरति; $M_2$ and $M_3$ have श्रीवीररुद्रो नृपः; विहरति T. ९ आदिग्रहणात् $m_1$, $m_2$, $m_3$. १० तद्योगात् m. ११ °स्याक्षपादश्च p. १२ षडेव तु $m_3$. १३ m. omits इत्याहुः.

अथ नायकगुणनिरूपणानन्तरं नायकस्वरूपं निरूप्यते ।

यशःप्रतापसुभगो धर्मकामार्थतत्परः ।

धुरंधरो गुणाढ्यश्च नायकः परिकीर्तितः ॥ २२ ॥

यशःप्रतापाभ्यां सुभगत्वं यथा ।

धर्मालम्बसमुच्छ्रितां त्रिभुवनस्यैकातपत्रश्रियं

धत्ते काकतिवीररुद्रनृपतेः स्फारं यशोमण्डलम् ।

---

विधर्वाद्योचितपरिपाटीभिः । वीणा शिल्पमेषां वैणिकाः । तान् धिन्वन् प्रीणयन् । अत्र विभोः सर्वविद्याविशारदत्वादखण्डं पाण्डित्यमिति भावः । प्रभृतिग्रहणाद्विनीतत्वादयो ये दशरूपकोक्तास्ते तत्रैव द्रष्टव्याः । यथासंभवमेते स्त्रीपुंससाधारणा गुणाः पुरुषमात्रनियतास्त्वन्येऽपि शोभादयः । तदुक्तम् ।

'शोभा विलासो माधुर्यं गाम्भीर्यं स्थैर्यतेजसी ।

ललितौदार्यमित्यष्टौ सात्त्विकाः पौरुषा गुणाः ।' इति ॥ २१ ॥

तेऽपि तत्रैव द्रष्टव्या इत्युपेक्ष्य नायकलक्षणं प्रतिजानीते । अथेति । लक्षयति । यश इति । गुणैः पूर्वोक्तैः साधारणैर्महाकुलीनतादिभिरसाधारणैः शोभादिभिश्चाढ्य इत्येतावदेव सामान्यलक्षणम् । नयति प्राप्नोति वृत्तं फलं चेति नायक इति व्युत्पत्त्या प्रबन्धव्यापी फलवानित्यपि विशेषो द्रष्टव्यः । चशब्दोऽनुक्तसमुच्चयार्थस्सन्नुत्तममध्यमाधमभेदेन त्रिविधो नायक इतीमं विभागमाकर्षति । तेनोक्तसकलगुणसंपन्नः प्रबन्धव्यापिफलशिरस्कव्यापार उत्तमः । कतिपयगुणहीनो मध्यमः । बहुगुणहीनोऽधम इति विवेकः । अत्र धार्मिकत्वादय इत्यादिग्रहणसंगृहीतानां यशःप्रतापादीनां गुणाढ्यपदेनैवोपात्तानामपि पुनरुपादानमेतेषां सर्वेष्वपि नायकेष्वावश्यकत्वमभिव्यञ्जयितुमिति रहस्यम् । सत्समाख्या यशः । कोशदण्डजं तेजः प्रतापः । धर्मादयः प्रसिद्धाः । धूरेव धुरा । 'टाबन्तत्वं हलन्तानाम्' इति वचनाट्टाप् । तां धारयतीति धुरन्धरः । 'संज्ञायां भृतृवृजि—' इत्यादिना खच्प्रत्ययः । 'खित्यनव्ययस्य' इति ह्रस्वः । 'अरुर्द्विषद्—' इत्यादिना मुमागमः ॥ २२ ॥

तत्र यथायोगमुदाहरति । धर्मेति । धर्म एवालम्बो दण्डस्तस्मिन् समुच्छ्रितां विस्तारिताम् । त्रिभुवनस्येति समाहारद्विगुः । पात्रादित्वान्न स्त्रीत्वम् । स्फारं

---

१ Omitted in $M_3$. २ 'गुणस्वरूप' M. ३ नायकः स्वरूप्यते $M_1$; नायकस्य स्वरूपं निरूप्यते $M_2$ and $M_3$; नायकस्वरूपनिरूपणम् T'. ४ T. and T' have after this नायकस्वरूपनिरूपणम् as a heading. ५ परिकीर्त्यते M. ६ °नाट्योचित° $m_1$. ७ °दखण्डपाण्डित्यं $m_2$. ८ °रसाधारणैश्च p. ९ $m_2$ omits सन्. १० °माकर्षयति t. ११ मुम् $m_1$, $m_2$, $m_3$.

छायेवास्य नभस्थली कुवलयश्यामेयमालोक्यते
तन्मन्ये नियतं प्रतापतपनस्तस्योपरि द्योतते ॥ २३ ॥

धर्मकामार्थतत्परत्वं यथा ।

धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव स्थितः ।
कामस्ताविव तौ काम इव रुद्रनरेश्वरे ॥ २४ ॥

धुरीणता यथा ।

गायन्तीरनुमोदते निजवधूः शेषः शिरःकम्पनै-
र्लक्ष्मीं प्रीणयतेऽद्य कच्छपपतिर्वक्षस्थलीदर्शनात् ।
दिङ्नागाश्च करेणुकाशुचमपाकुर्वन्त्यनुव्रज्यया
दोष्णा काकतिवीररुद्रनृपतौ विश्वंभरां बिभ्रति ॥ २५ ॥

---

प्रभूतम् । अत्र त्रिभुवनोल्लङ्घिनः कीर्तिमण्डलातपत्रस्योपरि प्रतापतपनः प्रकाशत इत्युत्प्रेक्षणादर्वाचीनसूर्यादिमहसां छत्राधःखचितमणिगणवदवभासमानत्वं कीर्तिप्रतापयोश्चन्द्रसूर्याधिकत्वं च व्यज्यते ॥ २३ ॥

धर्म इति । अत्र धर्मार्थयोः पर्यायेणोपमानोपमेयभावादुपमेयोपमालंकार इति वक्ष्यति । एतेनानयोरन्योन्यमेव सादृश्यं[7] न त्वेतत्सदृशोऽन्यः कोऽपीति व्यज्यते । एवमुत्तरार्धेऽपि योज्यम् ॥ २४ ॥

धुरीणतेति । 'खः सर्वधुरात्' इत्यत्र 'खः' इति योगविभागात् खप्रत्ययः । गायन्तीरिति । स्वभर्तृभारावतरणसंतोषभराद्वीररुद्रकीर्तिमेवेति भावः । कच्छपपतिरादिकूर्मावतारो हरिरपोढभारत्वादालिङ्गनार्थं वक्षस्थलीदर्शनात् । दर्शपर्यन्ताल्ल्युट् । लक्ष्मीं प्रीणयते । प्रीञ् तर्पणे इत्यस्माद्धातोश्चोरादिकाण्णिचि 'धूञ्प्रीञोर्नुग्वक्तव्यः' इति नुक् । अनुव्रज्यया रन्तुमनुधावनेन । 'व्रजयजोर्भावे क्यप्' इति क्यप् । करेणुकाशुचं विप्रलम्भजनिताम् । अद्येति सर्वत्र संबध्यते । शेषादयो भुवं बिभ्रति शेषादींस्तु कूर्मराज इत्यागमः । शेषादिभरणीयां विश्वंभरां वीररुद्रो भुजेनैकेन बिभर्तीति [9]विश्वंभरातिशायि धुरन्धरत्वमस्योक्तम् ॥ २५ ॥

---

१ 'मालक्ष्यते R., M. २ धर्मार्थकाम' P.; धर्मकामार्थपरत्वं M₅. ३ रुद्रनरेश्वर P.; नरेश्वरः M₅. ४ धुरन्धरत्वं P., R., M₃. ५ M₄ omits यथा. ६ संप्रति वीररुद्र' M. ७ m₂ has वस्तुतः after सादृश्यम्. ८ सदृशोऽन्योऽस्तीति p. ९ विश्वातिशायि m., T.

गुणाढ्यत्वं यथा ।

> मुखैः सहस्रेण फणी वदेच्चेत्
>
> करैः सहस्रेण लिखेद्विवस्वान् ।
>
> नेत्रैः सहस्रेण हरिश्च पश्येत्
>
> स्थाने गुणान् काकतिवंशभर्त्तुः[1] ॥ २६ ॥

अथ नायकविशेषा निरूप्यन्ते ।

> उदात्त उद्धतश्चैव ललितः शान्त इत्यपि ।
>
> धीरपूर्वा इमे पूर्वैश्चत्वारो नायकाः स्मृताः ॥ २७ ॥

तत्र[2] सर्वरससाधारणाश्चत्वारो नायकाः धीरोदात्त[3]धीरोद्धतधीरललितधीरशान्ताः[4]। तेषां स्वरूपमुदाहरणं च ।

---

मुखैरिति । करैरित्यत्रांशुहस्तयोरभेदाध्यवसायाल्लेखनसाधनत्वं[6] विज्ञेयम् । वदेदित्यादौ 'अर्हे कृत्यतृचश्च' इत्यर्हार्थे लिङ्[7]प्रत्ययः । शेषादय एवास्य गुणानामभिवदनादीन्यर्हन्ति । तथा चेद्युक्तमिति वाक्यार्थः । असंख्येया गुणा इति भावः । सहस्रेणेत्यत्र संख्येयबाहुल्येऽपि 'विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोः' इत्यमरवचनादेकत्वमवगन्तव्यम्[8] ॥ २६ ॥

अथ धीरोदात्तादयश्चत्वारो नायकाः सर्वरससाधारणास्तेषामेव शृङ्गाराश्रयतयानुकूलादिभेदेन प्रत्येकं चतुर्विधानामुत्तमादिभेदेन[9] पुनः प्रत्येकं त्रैविध्ये ऽष्टाचत्वारिंशद्भेदाः[10] । धीरोदात्तादिशब्दाश्च महावीरचरितादिमहाप्रबन्धेष्वेकस्यानेकरूपाभिधानेन वत्सवृषभमहोक्षादिशब्दवदवस्थावाचिनो न जातिवाचिन इति प्रतिपादितं दशरूपके[11] । तत्र[12] कतिचिल्लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते । अथेत्यादिना । उदात्त[13] इति । धीरपूर्वा उदात्तादय इत्युक्ते धीरशब्दपूर्वा उदात्तादिशब्दा इत्युक्तं स्यात् । अतोऽत्र शब्दपरेणार्थलक्षणा कथंचित् कल्प्या ॥ २७ ॥

---

१ काकतिवीरभर्तुः M., T., T'. २ अत्र $M_{1}$. ३ धीरोदात्तः धीरोद्धतः धीरललितः धीरशान्तः $M_{3}$. ४ R. and $M_{1}$ have इति after धीरशान्ताः. ५ फलेषा T. ६ 'व्यवसायात् तेषु साधासाधनत्वं m. ७ लिङ्ग m. ८ वचनादवगन्तव्यम् m. ९ 'मुत्तममध्यमाधमभेदेन T. १० अष्टचत्वारिंशद्भेदाः p. ११ दशरूपकेन $m_{3}$. १२ अत्र m. १३ धीरोदात्त इति p.

महासत्त्वोऽतिगम्भीरः कृपावानविकत्थनः ।
प्रतापरुद्रवद्धीरो धीरोदात्तः स संमतः ॥ २८ ॥

यथा

संदिग्धे कृपया मृदुः क्षणमरीन् हन्तुं धृतासिः पुरः
शौर्यश्रीप्रणयप्रशंसिषु नमद्भूर्लज्जते बन्दिषु ।
आकारान् सुखरोषहर्षपिशुनान् वक्के न धत्ते मनाक्
त्रैलोक्यातिशयालुकीर्त्तिसुभगः श्रीवीररुद्रो नृपः ॥ २९ ॥

---

अत्र धीरोदात्तादीनां सर्वरससाधारण्येऽपि यथाक्रमं वीररौद्रशृङ्गारशान्तप्रधानत्वं वक्ष्यमाणविशेषलक्षणपर्यालोचनया विज्ञेयमिति रहस्यम् । तत्र धीरोदात्तमाह । महासत्त्व इति । क्रोधाद्यनभिभूतान्तःकरणो महासत्त्वः । अयमेव धीर इत्याहुः । अत्रत्यधीरशब्देन तु उद्योगादेरचलितत्वलक्षणः स्थिरः शास्त्रचक्षुर्वाभिधीयते इति न पौनरुक्त्यम् । सत्यपि विकारे सावहित्थो गम्भीरः । परदुःखापहरणेच्छुः कृपावान् । आत्मश्लाघाविहीनोऽविकत्थनः । ' अनुदात्तेतश्च हलादेः ' इति युच् । एवंगुणको यः प्रतापरुद्रवद्वर्तते स धीरोदात्त इति योजना । एवं च सर्वोत्कर्षेण वृत्तिरौदार्यमिति फलितम् । अत्र स्थैर्यादिसामान्यगुणानां विशेषलक्षणेपूपादानं तत्रावश्यकत्वसूचनार्थम् । उदाहरति । संदिग्ध इति । कृपया मृदुर्न तु कातर्येणेत्यनेन महासत्त्वतोच्यते । क्षणमल्पकालमेव । पश्चात्तु हन्त्येवेति स्थैर्यम् । पुरः स्थितानरीन् न तु पलायितानिति धार्मिकत्वम् । शौर्येति । बन्दिविहितप्रशंसाकर्णनेनैव लज्जमानस्यात्मश्लाघा तु दूरत एवेत्यविकत्थनत्वम् । नमद्भूत्वं लज्जानुभावः । इष्टानुभवजन्य आनन्दः सुखम् । सापराधविषयोऽमर्षो रोषः । इष्टलाभजन्यो मनःप्रसादो हर्षः । तेषां पिशुनान् सूचकानाकारानक्षिनिमीलनभ्रुकुटिमुखरागादीन् वक्के मनागीषदपि न धत्त इत्यवहित्थया गाम्भीर्यम् । त्रयो लोकास्त्रैलोक्यं तदतिशयालुरिति मधुपिपासुप्रभृतित्वात् द्वितीयासमासो द्रष्टव्यः । शीङो वक्तव्यादालुच्प्रत्ययः । अत्र स्थैर्यधार्मिकत्वकीर्तयः साधारणा गुणाः कृपादयस्तु विशेषा इति विवेकः ॥ २८।२९ ॥

---

१ Omitted in $M_3$. २ नाकारान् R., M. ३ वक्त्रेण धत्ते R., M. ४ °विमत: P. ५ 'शान्ति' p. ६ परदुःखप्रहारेच्छुः R.: परमदुःखप्रहरणेच्छुः m. ७ आत्मश्लाघाहीनो m. ८ सर्वोत्कर्षवृत्ति° m. ९ इत्यत्र इति m.

दर्पमात्सर्यभूयिष्ठश्चण्डवृत्तिर्विकत्थनः ।
मायावी सुलभक्रोधः स धीरोद्धत उच्यते ॥ ३० ॥

यथा

रे रे गुर्जर[1] जर्जरोऽसि समरे लम्पाक[2] किं कम्पसे
वङ्ग त्वङ्गसि किं मुधा बलरजःकीर्णोऽसि किं कोङ्कण ।
हूण प्राणपरायणो भव महाराष्ट्रापराष्ट्रोऽस्यमी
योद्धारो वयमित्यरीनभिभवन्त्यन्ध्रक्ष्माभृद्भटाः ॥ ३१ ॥

अत्र भटानां धीरोद्धतत्वम् ।

निश्चिन्तो धीरललितः कलासक्तः सुखी[3] मृदुः ।

यथा ।

शौर्योष्मा निरवग्रहः प्रतिनृपाः सर्वेऽपि नम्रीकृताः
पातिव्रत्यमुपैति भूरियमयं नाथः स्वयंभूः शिवः ।

---

धीरोद्धतमाह । दर्पेति । दर्पः शौर्यादिमदः । मात्सर्यमसहनमसूयेति यावत् । ताभ्यां भूयिष्ठश्चण्डवृत्तिः रौद्रः । विकत्थन आत्मश्लाघापरः । मन्त्रादिबलेनाविद्यमानवस्तुप्रकाशकः केवलवञ्चको वा मायावी । उदाहरति । रे रे इति । 'हीनसंबोधने तु रे' इत्यमरः । तस्य प्रतिवाक्यमावर्त्यमानस्य[4] 'वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु' इति यथायोगमसूयाद्यर्थेषु द्विर्भावः । अत्र 'स्वरितमाम्रेडिते—' इत्यादिना प्राप्तस्य प्लुतस्य सर्वतः[5] साहसमनिच्छता विभाषा वक्तव्येति पाक्षिकः प्रतिषेधः । शास्त्रत्यागः साहसमिति हरदत्तः । अत्र गुर्जरादिवाक्येषु यथायोगमुन्नावितैर्दर्पमात्सर्यादिभिर्योद्धारो वयमित्यात्मश्लाघया चान्ध्रक्ष्माभृद्भटानां[6] धीरोद्धतत्वम् ॥ ३०।३१ ॥

धीरललितमाह । निश्चिन्त इति । सुतसचिवादिविनिहित[7]योगक्षेमतया चिन्ताविरहितो निश्चिन्तः । अत एव कलासु गीतादिष्वासक्तः[8] । सुखी भोगप्रवणः । शृङ्गारप्रधानत्वात् सुकुमाराकारो[9] मृदुः । उदाहरति । शौर्येति अत्रा-

---

१ घूर्जर T'. २ लिम्पाक P.; कम्पाल R. ३ सुखैकभूः P., T., $M_2$, $M_4$, T'. ४ °मावर्तमानस्य t. ५ सर्वः प्लुतः साहस° p., T. ६ चान्धभटानां t.; चान्धभर्तृभटानां m., $m_1$, $m_2$. ७ °विहित° m., $m_1$, $m_2$. ८ कलासंगीतादिष्वा° m., $m_1$, $m_2$. ९ सुकुमारो p.

धीरोऽयं युवराज एव वहति श्रीवीररुद्रो धुरं
सर्वामित्यनुमोदते प्रतिकलं श्रीकाकतीन्द्रो विभुः ॥ ३२ ॥

धीरः शान्तः प्रसन्नात्मा धीरशान्तो द्विजादिकः ।

यथा ।

वीरं रुद्रनृपालरत्नमभितः प्राप्तोदयं मोदते
संख्यावद्गण एष पूषणमिव प्रत्यग्रमब्जाकरः ।
उन्मीलत्कमलाविहारवसतिर्भूत्वा विकासैर्निजै-
र्विश्वामोदमुदञ्चयन्नविरतं दोषावसानोत्सुकः ॥ ३३ ॥

अत्र विप्राणां धीरशान्तत्वम् ।

अथ शृङ्गारविषयाश्चत्वारो नायका इमे ।
अनुकूलो दक्षिणश्च धृष्टः शठ इति स्मृताः ॥ ३४ ॥

---

नर्गलशौर्यादिभिर्दैवानुकूल्येन युवराजधुरन्धरत्वेन च निश्चिन्तः सकलकला-सुखमनुभवतीति वीररुद्रकुलज्येष्ठस्य धीरललितत्वम् ॥ ३२ ॥

धीरशान्तमाह । धीर इति । विवेचकः क्लेशसहिष्णुर्वा धीरः । शमप्रधानः शान्तः । हृष्टान्तःकरणः प्रसन्नात्मा । द्विजादिक इत्यादिग्रहणाद्वणिक्सचिवौ विवक्षितौ । 'सामान्यगुणयुक्तस्तु धीरशान्तो द्विजादिकः' इति केचित् । उदाहरति । वीरमिति । संख्या ज्ञानं तद्वतां विदुषां गणः संख्यावद्गणः । प्राप्त उदयोऽभिवृद्धिरन्यत्रोदयाचलो येन तं तथोक्तम् । प्रत्यग्रमुभयत्राभिनवम् । उन्मीलन्त्या उल्लसन्त्याः कमलायाः संपत्तेरन्यत्र लक्ष्म्या विहारवसतिः । विकासैरुल्लसवादिभिरन्यत्र दलविश्लेषैः । विश्वस्यामोदं हर्षमन्यत्र गन्धविशेषमुदञ्चयन् उद्बोधयन् । दोषावसानं पापोपशमः । अन्यत्र दोषाया रात्रेरवसानं प्रभातम् । 'दोषा रात्रिमुखे रात्रावव्ययमप्यसौ' इति विश्वः । तत्रोत्सुक इति । अत्र दोषावसानेत्यादौ धैर्यशान्त्योर्विश्वामोदमित्यादौ प्रसादादेश्च प्रतिपादनात् विप्राणां धीरशान्तत्वम् ॥ ३३ ॥

अथ शृङ्गारनायकानां यथाक्रममुद्देशलक्षणोदाहरणानि दर्शयति । अथेत्यादिना ॥ ३४ ॥

---

१ वीरो $M_{8}$. २ एव T'. ३ श्रीवीररुद्रो M. ४ नृपः P., T., $M_{3}$, T', $M_{9}$. ५ द्विजोत्तमः P., T'. ६ 'नृपात्मजेन' M. ७ संख्यावद्गणमेष P. ८ R. and $M_{1}$ drop इमे. ९ शठो धृष्ट M. १० स्मृतः R., $M_{3}$, $M_{p}$. ११ t. omits संख्यावद्गणः.

एषां[1] स्वरूपमुदाहरणं च[2] ।

एकायत्तो[3]ऽनुकूलः स्यात्

एकस्यां नायिकायां विशेषानुरक्तोऽनु[4]कूलो नायकः ।

यथा[5] ।

किं नामाचरितं तपः सखि भुवा यस्याः पतिर्गीयते
वीरो रुद्रनृपः क तत् सुचरितं तस्य प्रिया स्यां यतः ।
जाने मानिनि मा विषीद पुरतः प्रख्या[6]प्य नाम स्थिरां
त्वां रत्नाकरमेखलां त्वयि सदा[7] सक्तं विधास्ये नृपम् ॥ ३५ ॥

अत्र प्र[8]तापरुद्रस्य क्षोण्यां विशेषानुरागो व्यज्यते येन वध्वा स्थिरा रत्नाकरमेखलेति तन्नामग्रहणेन[9] स्नेहप्रख्यापनं[10] क्रियते ।

तुल्योऽनेकत्र दक्षिणः ॥

अनेकासु ना[11]यिकासु अवैषम्येण स्नेहानुवर्ती द[12]क्षिणो ना[13]यकः ।

---

तत्रा[14]नुकूलमाह । एकेति । सत्स्वपि नायिकान्तरेष्विति शेषः । तदेवाह । एकस्यामिति । एकजानिरेवानुकूलो यथा रामादिरित्यन्ये । उदाहरति । किमिति । नायिकावाक्यमेतत् । भुवा कयाचिन्नायिकया । नामेति संभावनायाम् । यतः सुचरितात् । अथ सखी नायिकामाह । जान इति । नायकघटनोपायमिति शेषः[15] । 'अनुपसर्गात् ज्ञः' इत्यात्मनेपदम् । नामेति कुत्सायाम् । अनुरागोत्पादनार्थं सपत्नीनामसाम्येन नायिकाप्रकाशनस्य कुत्सितत्वात् 'नाम प्रकाश्यसंभाव्यकुत्साभ्युपगमेषु च' इति विश्वः । अत्र राज्ञो भूमौ विशेषानुरागोऽन्यत्र न तथेत्यानुकूल्यम् ॥ ३५ ॥

---

१ तेषां $M_1$. २ T. has शृङ्गारनायका निरूप्यन्ते as a heading after this. ३ M. has तत्र before एकायत्तो ४ °नुकूलनायकः M. ५ Omitted in $M_3$. ६ प्रख्यात° $M_1$. ७ समासक्तं M. ८ प्रतापरुद्रदेवस्य $M_1$. ९ $M_3$ omits तन्नामग्रहणेन. १० प्रकटनं $M_1$. ११ M. drops नायिकासु १२ दक्षिणनायकः M. १३ R. drops नायकः । यथा. and $M_3$ and $M_5$ drop नायकः. १४ अथानु° $m_2$. १५ t. drops शेषः.

यथा[1]

> नर्मोक्तेन[2] निर्मन्त्रिता स्मरकलाकेलीषु[3] काचिन्मया
> साकूतेन विलोकनेन हृदयं कस्यैचिदाविष्कृतम् ।
> कस्याश्चित् प्रहितः प्रसाधनविधिर्दूतीकरेण क्व वा
> गच्छामीत्यनुचिन्तयैव नृपतेरासीत् प्रभाता निशा ॥ ३६ ॥

तथा च[6]

> वाणीं मुखेन नेत्राभ्यां श्रियं दोष्णा च मेदिनीम् ।
> मानयंस्तुल्यतां धत्ते तासु रुद्रनरेश्वरः[7] ॥ ३७ ॥

व्यक्तापराधो[8] गतभीः स धृष्ट इति कथ्यते ।

यथा[9]

---

दक्षिणमाह । तुल्य इति । स्नेहेनानुवर्तते तच्छीलत्वेन स्नेहानुवर्ती । उदाहरति । नर्मेति । अग्राम्य इष्टजनावर्जनरूपः परिहासो नर्म । केलीष्विति विषयसप्तमी । स्वाभिमतभावप्रकाशको दृग्विकार[10] आकूतम् । तदुक्तम् । 'आकूतं[11] तद्यत्र भावः सो[12]ऽप्यभीष्टो विभाव्यते' इति । प्रसाधनविधिः स्रक्चन्दनाभरणादिः । प्रभातेति । प्रभातप्रायेत्यर्थः । अत्र वाक्यत्रये यथाक्रममुक्तिविशेषेण कलाविनोदस्य विलोकनविशेषेण वक्षस्स्थलाविष्करणस्य करेणुवशीकरणस्य च सूचनाद्वाणीलक्ष्मीवसुन्धराः प्रतीयन्ते । अत्राप्रभातमनिश्चितगन्तव्यतया चिन्ताकुलत्वेनास्य समानुरागत्वप्रतीतेर्दक्षिणोऽयं नायकः॥३६॥

उदाहरणान्तरमाह । वाणीमिति । अत्र वाण्यादीनां वाच्यत्वान्मुखादिशब्दैर्नर्मोक्त्यादीनां प्रतीयमानत्वाच्च पूर्वोदाहरणाद्[13] भेदः । स्त्रीलिङ्गमहिम्ना प्रतीयमानलौकिकनायिकाभेदाध्यवसायेन वाण्याद्यनुरागेऽपि न शृङ्गारनायकत्वभङ्गप्रसङ्गः ॥ ३७ ॥

---

१ $M_5$ drops यथा. २ नर्मोक्त्यैव T. ३ प्रियतमाकेलिषु M. ४ प्रसादन° M. ५ गन्तास्मी° T., M., T'. ६ Omitted in $M_5$. ७ वीरनरेश्वरः M. ८ व्यक्तागा गतभीर्धृष्टः P., T. ९ P. and T. have स्पष्टम् before यथा; $M_4$ omits यथा. १० दृग्विकारः साकूतम् t., m., $m_1$, $m_3$. ११ साकूतं t., m., $m_3$. १२ स्पष्टेऽप्यर्थे विभाव्यते $m_1$. १३ पूर्वोदाहरणात्र p.

राज्यश्रीपरिभोगशंसि भवतः सर्वाङ्गमालोक्यते
कस्तत्राविनयोऽस्ति साहसमिदं तन्नाम मय्यर्पितम् ।
जाने त्वां बहुवल्लभं किमपरं वक्तव्यमल्पा वयं
तस्यां प्रेम तवाधिकं वसुमतीया नाम किं जल्पितैः ॥ ३८ ॥

गूढविप्रियकृच्छठः ।

नायिकामात्रविदितविप्रियकारी शठः ।

यथा ।

दृष्ट्या पश्यसि केवलं न मनसा वाचा प्रियं भाषसे
नो भावेन भुजान्तरं प्रकटयस्यग्रे न चाभ्यन्तरम् ।
ज्ञातं काकतिनाथ भूस्तव परं प्राणेश्वरी ध्यायतो
मादृक्षेषु विडम्बनैव तदलं व्यर्थैर्बहिःसंभ्रमैः ॥ ३९ ॥

---

धृष्टमाह । व्यक्तेति । उदाहरति । राज्येति । राज्यश्रीस्तन्नाम्नी काचिन्नायिका राज्यलक्ष्मीश्च । तत्पक्षे सर्वाङ्गं सप्ताङ्गानि । अल्पा दरिद्राः । नामेति प्रसिद्धौ । जल्पितैः किं जल्पितसाध्यं नास्तीत्यर्थः । गम्यमानसाधनक्रियापेक्षया करणत्वात् तृतीया । 'न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्य अपि तु गम्यमानापि' इति न्यासोद्योतवचनात् । बहुशश्चैतदुक्तं तातपादैः संजीविन्यादौ । धनपरा राजानो न वाल्लभ्यपरा इति नायिकाभिप्रायः । अतः स्त्र्यन्तरसंभोगप्रकाशनाद् गोत्रस्खलनाद्यपराधाभिव्यक्तिनिर्भीकत्वं चेत्यस्य धृष्टत्वम् । अन्यासंभोगचिह्नैः कुपितत्वादियं खण्डिता । 'अधीरा परुषैर्वाक्यैः खेदयेद्वल्लभं रुषा' इति लक्षणादधीरा च ॥ ३८ ॥

शठमाह । गूढेति । उदाहरति । दृष्ट्येति । अत्र दर्शनप्रियभाषणयोश्चक्षुर्वागिन्द्रियकरणत्वाव्यभिचारादेव सिद्धेर्दृष्ट्या वाचेति च पुनरुपादानस्य तात्पर्यनिषेधार्थकत्वान्न पौनरुक्त्यम् । भूः परं भूरेव । ध्यायतश्चिन्तयतोऽन्यासक्तस्येत्यर्थः । मादृक्षेषु जनेष्विति शेषः । दृशेः क्सप्रत्ययो वक्तव्यः । अत्र नायिकामात्रविदितभावशून्यदर्शनादिविधानादस्य शठत्वम् । नायिका त्वधीरमध्या ॥ ३९ ॥

---

१ मय्यर्पिते M., $M_p$, T. २ वसुमती यन्नाम M. ( M. notices the reading in the text also ). ३ °विदिताप्रियकारकः $M_p$ ४ शठनायकः M.; नायकः शठः $M_s$. ५ °दुक्तमस्मत्तातपादैः p., T. ६ °संभोगवचनैः $m_s$. ७ भेदयेद्व° m., $m_p$ ८ °देतत्सिद्धे° t. ९ वक्तव्यत्वात् p., t.

अत्र[1] तत्तन्नायकविषय[2]तया काकतीश्वराणामुदाहरणेन[3] वीररुद्र[4]स्यैव वर्णनम्।[5]

एषां[6] नायिकानुकूलने पीठमर्दविटचेट[7]विदूषकाः सहायाः।[8]

किंचिदूनः पीठमर्द एकविद्यो विटः स्मृतः।
संधानकुशलश्चेटो हास्यप्रायो[9] विदूषकः॥ ४०॥

स्पष्ट[10]मेषामुदाहरणम्।

अथा[11]ष्टविधाः शृङ्गारनायिकाः।

स्वाधीनपतिका चैव तथा वा[12]सकसज्जिका।
विरहोत्कण्ठिता चैव विप्रलब्धा च खण्डिता॥ ४१॥
कलहान्तरिता चैव तथा प्रोषितभर्तृका।
त[13]थाभिसारिका चेति क्रमाल्लक्षणमुच्यते॥ ४२॥

---

वीररुद्रगुणवर्णनप्रतिज्ञाभङ्गं परिहरति। अ[14]त्रेति॥ अथ शृङ्गारनायकस्य नायिकासंबन्धनियमात् तदनुकूलने सहायानाह। एषामिति। क्रमेणैषां लक्षणमाह। किंचिदित्यादि। प्रधानेतिवृत्तनायकादीषन्न्यूनगुणः प्रासङ्गिकेतिवृत्तनायकः किंचिदूनशब्देन विवक्षितः। तदुक्तम्।

'पताकानायकस्त्वन्यः पीठमर्दो विचक्षणः।
तस्यैवानुचरो भक्तः किंचिदूनस्तु तद्गुणैः॥'

इति। स च सुग्रीवमकरन्दादिः। नायकोपयोगिगीतादिविद्यानामेकविद्याभिज्ञो विटः कलहंसादिः। वाक्याङ्गवेषविकारादिना हास्यकारी विदूषकः॥ ४०॥

अथ संभावितनायकसामान्यगुणयोगिनी नायिकेति सामान्यलक्षणं सिद्धवत्कृत्य तद्विशेषाः कतिचिल्लक्षणोदाहरणाभ्यां निरूप्यन्ते। अथेत्यादिना॥ ४१–४२॥

---

१ अत्र तु तन्नायकपरतया M.; अतस्तन्नाय° $M_2$; अत्र तन्नायकविषयपरतया $M_3$; अत्र तत्तन्नायकपरतया $M_5$. २ °विशेषतया $M_1$. ३ °मुदाहरणे P. ४ °रुद्रस्य $M_2$. ५ P. has तत्सहायाः पीठमर्दविटचेटविदूषकाः after this. ६ तेषां P. ७ °विदूषकनामानः T., T.' ८ P. T. and T.' have तेषां स्वरूपं निरूप्यते after this. ९ हास्यकारी M. १० एतेषामुदाहरणं स्पष्टम् $M_1$. ११ अथाष्टविधशृङ्गार° R., M. १२ वासवसज्जिका M. १३ अथा° $M_2$. १४ अत इति t., m., $m_1$, $m_2$. १५ °दूनश्च P.

प्रियोपलालिता नित्यं स्वाधीनपतिका मता ।

यथा

प्रियां सर्वसहां तैस्तैर्विशेषैरुपलालयन् ।
प्रतापरुद्रनृपतिः प्रतिक्षणमवेक्षते ॥ ४३ ॥

प्रियागमनवेलायां मण्डयन्ती मुहुर्मुहुः ।
केलीगृहं तथात्मानं सा स्याद्वासकसज्जिका ॥ ४४ ॥

यथा

स्वतेजसा परिष्कृत्य प्रधानागारमुत्कया ।
प्रियाभिषेकवेलायां वीररुद्रः प्रतीक्षितः ॥ ४५ ॥

---

तत्र स्वाधीनपतिकामाह । प्रियेति । अध्युपरि इनः स्वामी यस्यासावधीनः आयत्तः । 'अधीनो निघ्न आयत्तः' इत्यमरः । स्वस्मिन्नधीनः स्वाधीनः । यद्वा स्वस्मिन्नधिकृतमधीति वा विगृह्य 'सप्तमी शौण्डैः' इति समासः । 'अषडक्ष—' इत्यादिना अध्युत्तरपदात्खः प्रत्ययः । सुरतसुखास्वादलोभेनासक्तत्वात् स्वाधीन आयत्तः पतिर्यस्याः सा तथोक्ता । उदाहरति । प्रियामिति । सर्वं सहत इति सर्वंसहा नाम काचिन्नायिका । 'संज्ञायाम्—'इत्यादिना खश्प्रत्यये मुमागमः । विशेषैर्वासोऽङ्गरागादिभिरुपलालयन्नवेक्षत इत्यनेनासक्तायत्तरमणत्वप्रतीतेरियं स्वाधीनपतिका । नायकस्त्वनुकूलः । भूपरिपालने नित्यजागरूकोऽयमित्यपि गम्यते ॥ ४३ ॥

वासकसज्जिकामाह । प्रियेति । वासके वासवेश्मनि भोगोपकरणैः सज्जा संनद्धा सैव वासकसज्जिका । 'स्त्रीणां वारस्तु वासकः' इति पक्षे वासके वारदिवसे सज्जयति सज्जीकरोति हर्षेण केलीगृहादिकमिति वासकसज्जिका । अयमेव पक्षो विद्यानाथस्य विवक्षितः । उदाहरति । स्वेति । परिष्कृत्यालंकृत्य उत्कयोन्मनसा उत्कण्ठितयेत्यर्थः । 'उत्क उन्मनाः' इति निपातनात् साधुः । अत्र क्रीडागारपरिष्कारादिभिरियं वासकसज्जिका । अत एवोदात्तापि । तदुक्तम् ।

---

१ °गृहमथात्मानं P., $M_g$. २ या स्याद्वासकसज्जिता M. ३ प्रतीक्ष्यते $M_j$. ४ m. omits तत्र. ५ इति खश्प्रत्यये T., m., $m_j$. ६ °मिति च गम्यते m., $m_j$, $m_g$. ७ m., $m_j$ and $m_g$ have सह before सज्जा. ८ संनद्धा सा वासक° t.; संनद्धासौ वासक° m., $m_j$, $m_g$. ९ वासरे दिवसे m., $m_j$, $m_g$. १० p. omits हर्षेण. ११ °परिष्करणादिभि° m., $m_j$, $m_g$.

चिरयत्यधिकं[1] कान्ते विरहोत्कण्ठितोन्मनाः[2] ।

यथा

न शङ्कान्या तादृग्गुणपरिमले रुद्रनृपतौ
कथा वा गोष्ठ्यासौ चिरयति सखीभिर्न सुलभः ।
समानेतुं कान्तं व्रज मदनबद्धोऽञ्जलिरयं[3]
यतो विष्वद्रीचः किरति किरणांस्त्वत्प्रियसखः ॥ ४६ ॥

क्वचित् संकेतमावेद्य दयितेनाथ वञ्चिता ।
स्मरार्ता विप्रलब्धेति कलाविद्भिः[4] प्रकीर्त्यते[5] ॥ ४७ ॥

यथा

गच्छाग्रे सखि का प्रियागमकथा प्राप्तो निशीथः परं
संकेतालय मोक्ष्यसे मम वृथा[6] जातोऽश्रुभिः पङ्किलः ।

---

'उदात्ता केशवासोऽङ्गमाल्यभूषासु सादरा ।
शय्याभवनसंस्कारपरिबर्हसमेधिनी ॥'

इति ॥ ४४–४५ ॥

विरहोत्कण्ठितामाह । चिरयतीति । अव्यलीक इति शेषः । अत एव 'चिरयत्यव्यलीका तु[7]' इति धनिकेनोक्तम् । अनपराधप्रियविलम्बेनोन्मना विरहोत्कण्ठितेत्यर्थः । उदाहरति । नेति । अन्या शङ्का नायिकान्तरासक्तिरूपेत्यर्थः । अत एवानपराध इति भावः । तादृगिति । 'त्यदादिषु—' इत्यादिना क्विन् प्रत्ययः[8] । 'आ सर्वनाम्नः' तद आत्वम् । अत्र दृश्यर्थाभावेनासत्यप्यवयवार्थे तैलपायिकादिवत् व्युत्पत्तिर्द्रष्टव्या । अत एवाह वृत्तिकारः । 'तादृशादयो रूढिशब्दाः' इति । भाष्ये तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता । 'तमिव पश्यन्ति जनाः सोऽयं स इव दृश्यमानस्तमिवात्मानं पश्यति' इति । गोष्ठ्या संगीतादिप्रसङ्गेन । अत एवासौ धीरललितो नायकः । त्वत्प्रियसखश्चन्द्रः । विष्वद्रीचः सर्वतोदिक्कान् । 'ऋत्विक्—' इत्यादिना क्विन् प्रत्यये 'विष्वग्देवयोः—' इति टेरद्र्यादेशः ॥ ४६ ॥

विप्रलब्धामाह । कचिदिति । उदाहरति । गच्छेति । आगमनसमय इवा-

---

१ चिरयत्यव्यलीकेऽपि R. २ °त्कण्ठिता मता M. ३ बद्धाञ्जलि° M., M₁. ४ सूरिभिः परिकीर्तिता M. ५ प्रकीर्तिता M. ६ मुधा M. ७ p. omits तु. ८ m., m₁, and m₂ omit प्रत्ययः

यद्वा रुद्रनरेश्वरे प्रियतमे राज्यश्रियो वल्लभे
भारत्या दयिते भुवः कृतपदाः प्रायो वयं वञ्चिताः ॥ ४८ ॥

नीत्वान्यत्र निशां प्रातरागते प्राणवल्लभे ।
अन्यासंभोगचिह्नैस्तु कुपिता खण्डिता मता ॥ ४९ ॥

यथा

रात्रिर्यामत्रयपरिमिता वल्लभास्ते सहस्रं
मार्गासक्त्या मम गृहमपि प्रातरेवागतोऽसि ।
किं कर्तव्यं वद नृपतिभिर्वीक्षणीया हि सर्वाः
को वा दोषस्तव पुनरहं काममायासयित्री ॥ ५० ॥

---

धुना पुरो गन्तुमशक्ताह । अग्रे गच्छ इति । निशीथः परमर्धरात्र एव प्राप्तः । न तु प्रियः । हे संकेतालय त्वं मोक्ष्यसे । नाद्यापि संकेतस्थानं मोक्तुं शक्नोमीति भावः । अश्रुभिर्न तु सुरतश्रमजलादिना पङ्किल इत्यनेन द्वारदेशं प्रति यातायाते सूच्येते । अन्यथा पङ्किलत्वाभावात् । अथ प्रियमुद्दिश्य न चायं तवापराधः किं तु बहुवल्लभे त्वय्यासक्ताया ममैवेत्याह । यद्वेति । नाहमेकैव त्वया वञ्चिता किं त्वनुमन्तारः सख्यादयः सर्वेऽपि मदीया इत्याह । वयमिति । अत एव न ममेत्येकवचनप्रक्रमभङ्गः । अत्र भारत्या दयिते भुव इति पाठः साधीयान् । क्षितिनायक इति समासपाठे व्यासप्रक्रमभङ्गः । अत्र संकेतमावेद्य दयितेन वञ्चिता सती कामातुरेतीयं विप्रलब्धा ॥ ४७।४८ ॥

खण्डितामाह । नीत्वेति । उदाहरति । रात्रिरिति । आद्यन्तयामार्धयोरकुण्ठितसंचारत्वेनारात्रित्वाभिमानात् त्रियामेति व्यवहारः । सहस्रमिति 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः' इत्येकत्वम् । तथापि मार्गासक्त्या न तु मदुद्देशेन । प्रातरेव विहारानर्हसमय एवेति भावः । अत एवागमनप्रयोजनं पृच्छति । किमिति । यद्वा नैवान्यत् प्रयोजनं प्रजापालनपराणां नृपाणामित्याह । नृपतिभिरिति । किं तु तवैवं प्रयासजननात् कियद्वा पापं ममैवं जीवन्त्या इति चिन्तयामीत्याह । को वेति । तत्र प्रातरागतस्य प्रेयसो अन्यासङ्गविकारदर्शनात कुपितेयं खण्डिता । 'वक्ति सोत्प्रासवक्रोक्त्या धीरमध्या कृतागसम्' इति लक्षणात् धीरमध्या च । नायकस्तु धृष्टः ॥ ४९।५० ॥

---

१ नरेश्वरप्रियतमे M. २ क्षितिनायके R. ३ पण्यासंभोग° $M_p$ ४ कम्पिता R. ५ नृपतिभिः प्रेक्षणीया R. ६ सर्वे $M_g$. ७ t. omits हे संकेतालय त्वं. ८ t. drops अथ प्रियमुद्दिश्य. ९ °प्रक्रमभङ्गप्रसङ्गात् p., T. १० °परिजननात् m., $m_p$, $m_g$. ११ कोऽपीति t. m., $m_p$, $m_g$. १२ अथ t.

कोपात् [१] प्रियं [२] पराणुद्य [३] पश्चात्तापसमन्विता ।
कलहान्तरिता नाम सूरिभिः [४] परिकीर्त्तिता ॥ ५१ ॥

यथा [५]

तह तह अणुणअंतो [६] [७] पिओ तुए हिअअरोसकलुसेण ।
अवहीरिदो [८] ण मुणिओ [९] राएत्ति [१०] विओअवेअणं [११] सहसु [१२] ॥ ५२ ॥

देशान्तरगते [१३] कान्ते खिन्ना प्रोषितभर्त्तृका ॥

यथा

त्रैलोक्यप्रथमानकीर्तिर्महसः [१४] श्रीवीररुद्रप्रभोः
सेवार्थं चिरयत्सु काकतिपुरे भूपेषु यद्योषितः ।

---

कलहान्तरितामाह । कोपादिति । प्रियं प्रणामादिना प्रसादनपरमित्यर्थः । तदुक्तम्—

'सत्यवागार्जवरतिरुपकुर्वन् प्रियं वदन् ।
भजते यः स्वयं प्रीतः प्रियः स भवति स्त्रियाः ॥'

इति । कलहे सति सुखेनान्तरिता कलहान्तरिता । उदाहरति । तहेति । 'तथा तथा अनुनयन् प्रियस्त्वया हृदयरोषकलुषेण । अवधीरितो न ज्ञातो राजेति वियोगवेदनां [१५] सहस्व ॥' मुणं [१६] इति । 'जाणमुणौ ज्ञः' इति जानातेर्मुणादेशः । विसूरणमिति खिदेर्विसूर इति विसूरादेश इति कोशान्तरे । तथा तथेत्यनेन पुनः पुनः प्रणामादिर्द्योत्यते । अत्र तादृशं राजानं प्रियमनादृत्य किमर्थमधुना दूयस इति हृदयोपालम्भादियं कलहान्तरिता । नायकस्तूत्तमः । 'कामतन्त्रेषु निपुणः क्रुद्धानुनयकोविदः' इत्यादिलक्षणात् ॥ ५१।५२ ॥

प्रोषितभर्त्तृकामाह । देशेति । कान्त इति ।

'कथाभिः कमनीयाभिः काम्यैर्भोगैश्च सर्वदा ।
उपचारैश्च रमयेद्यः स कान्त इतीरितः ॥'

---

१ रोषात् R.   २ कान्तं P., $M_2$, $M_3$, $M_4$, T.'   ३ पराभूय M.   ४ सूरिभिः परिकीर्त्यते R.; कविभिः परिकीर्तिता P.   ५ Omitted in $M_4$.   ६ छाया । तथा तथा अनुनयन् प्रियस्त्वया हृदयरोषकलुषेण । अवधीरितो न ज्ञातो राजेति वियोगवेदनां सहस्व ॥   ७ अणुणयन्तो $M_3$; अणुणंतो R.   ८ अवहीरिओ P., $M_3$, $M_4$; ओहिरियो M.   ९ ण हि मुणओ $M_2$; ण मुणिअं $M_3$, ण मुणओ राएत्ति T'.   १० कण आगछदि P.   ११ विअह˘ R.; विरह˘ P.   १२ सहस्सु M.; सहस T., सहस्स T'.   १३ देशान्तरं गते R.   १४ ˘विमव P., ˘महतः R.   १५ वियोगखेदं m., $m_3$, $m_4$.   १६ मुणिअमिति T.

द्वारासक्तदृशो नयन्ति दिवसान् व्युष्टायाय च क्षपा-
स्तद्ध्यानप्रतिबद्धसान्द्रपुलकव्याकीर्णकामेषवः ॥ ५३ ॥

कान्ताभिसरणोद्युक्ता स्मरार्ता साभिसारिका ॥

यथा[1]

संभ्रमैरलमल्पज्ञे प्रेयानस्तु महीपतिः ।
करेणुस्थां न पश्यामि न शृणोम्यभिसारिकाम् ॥ ५४ ॥

---

इत्युक्तलक्षण इत्यर्थः । उदाहरति । त्रैलोक्येति । व्युष्टं प्रभातम् । तद्ध्यान-प्रतिबद्धाः प्रियचिन्ताप्ररूढाः सान्द्रपुलका एव व्याकीर्णकामेषवः [2]कीलितका-मबाणा यासां तास्तथोक्ताः । अत्र चिन्ताजागरादिप्रतिपादनत्वात् खिन्नत्वेनेयं प्रोषितभर्तृका ॥ ५३ ॥

अभिसारिकामाह । कान्तेति । कान्तस्य कर्मणो [3]भर्तुर्वाभिसरणे उद्युक्ता । अत एवोक्तम् ।

'स्मरार्ताभिसरेत् कान्तं सारयेद्वाभिसारिका ।'

इति । सारयेदिति दूत्यादिमुखेनेति शेषः । उदाहरति । संभ्रमैरिति । कान्ता-भिसरणाय करेणुमानयेति कयाचिदुक्ते सख्या वचनमेतत् । अथवा नैव करेणु-स्थाभिसरणं दृष्टचरं श्रुतचरं वेत्याभाणकमुखेन सखी नायिकायाः प्रकटाभिस-रणं वारयति । अल्पं जानात्यल्पज्ञे मुग्धे । अत्र 'आतोऽनुपसर्गे कः' इति कप्रत्ययो न तु 'इगुपधज्ञाप्रीकिरः कः' इत्यादिना । अत एवाह भगवान् कात्यायनः । 'आकारादनुपपदात् कर्मोपपदो विप्रतिषेधेन' इति । एतच्च संजीविनीसर्वङ्कषादावस्मदुक्तं तातपादैः । अत्र कान्ताकर्मकाभिसरणमुक्तम् । एवं कान्तकर्तृकाभिसरणेऽप्युदाहार्यम् । एतासां च

चिन्तानिश्वासखेदाश्रुवैवर्ण्यग्लान्यभूषणैः ।
युक्ताः षडन्त्या द्वे चाद्ये क्रीडौज्ज्वल्यप्रहर्षितैः ॥

इत्युक्तदशविकारा द्रष्टव्याः ॥ ५४ ॥

---

१ Omitted in $M_5$. २ कलित' P. ३ कर्तु' T.

एतासां नायकानुकूलने सहायाः

> दूत्यो दासी सखी कारुर्धात्रेयी प्रातिवेशिनी ।
> लिङ्गिनी शिल्पिनी स्वा च सहायाः परिकीर्त्तिताः ॥५५॥

एतासां स्वरूपमुदाहरणं च स्पष्टम् । कामशास्त्रप्रसिद्धाः पद्मिनीचित्रिणीप्रभृतयो जातिविशेषाः ॥

संक्षेपेण नायिका त्रिविधा । मुग्धा मध्या प्रौढा चेति ।

> उदययौवना मुग्धा लज्जाविजितमन्मथा ।
> लज्जामन्मथमध्यस्था मध्यमोदितयौवना ॥
> स्मरमन्दीकृतव्रीडा प्रौढा संपूर्णयौवना ॥ ५६ ॥

---

अथासां दूतीराह । दूत्य इति । दासी कर्मकरी । सखी स्नेहनिबन्धना । कारू रजक्यादिः । धात्रेयी उपमातृसुता । प्रातिवेशिनी समीपगृहवर्त्तिनी । लिङ्गिनी परिव्राजिका । शिल्पिनी चित्रकारादिस्त्री । स्वा स्वयं चेति दूत्यः सहाया नायकानुकूलने इति शेषः । स्वा चेति स्त्रीलिङ्गे मूलं मृग्यम् । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति नपुंसकत्वेनाभिधानात् । अथवा स्वा स्वकीया बान्धवस्त्रीति यावत् । तदुक्तं सर्वज्ञसोमेश्वरेण ।

> भगिनी स्यालिका वापि मातुलस्याथवा सुता ।
> एता भवन्ति दूत्यस्तु बान्धवस्त्रीति संज्ञिताः ॥

इति ॥ ५५ ॥

पद्मिन्यादीनां जातिवाचित्वं न मुग्धादिवदवस्थावाचित्वमित्याह । पद्मिनीति । प्रभृतिग्रहणाच्छङ्खिनीहस्तिन्यौ गृह्येते । लक्षणादिकमेतासां कामशास्त्र एव द्रष्टव्यम् । इत्थं स्वाधीनपतिकाद्यवस्थाष्टकमुक्त्वा तदाश्रयभूतानेकनायिकामध्ये मुग्धादित्रयं लक्षणोदाहरणाभ्यां प्रदर्शयति । संक्षेपेणेत्यादिना ॥

---

१ तासां M., $M_1$; आसां T., T'. २ दूती P., M., T., T'. ३ चैव धात्रेयी P., M.; चेटी धात्रेया T.; चेटी धात्रेयी T'.; कामा धात्रेयी $M_1$; R. notices चारुधात्रेयी also. ४ प्राड्निवेशिनी M. ५ चैव P. ६ तासां $M_5$. ७ $M_1$ and $M_5$ omit च. ८ °प्रसिद्धम् M., प्रसिद्धाश्च $M_1$. ९ P., T. and T' have ज्ञातव्याः after this. १० नायिकास्त्रिविधा; $M_1$, T'. ११ मध्यमा M., $M_1$. १२ प्रगल्भा चेति R.; प्रगल्भेति $M_1$. १३ °पिहित° R. १४ °मदन° M. १५ दूतिकामाह m.

यथाक्रममुदाहरणानि ।[1]

मुग्धे यन्मनसोऽपि गोप्यमखिलं [2]तन्मह्यमावेद्यते
किं यां[3] काचिदहं तव प्रियसखी प्रच्छाद्य किं ताम्यसि ।
आसक्तिस्तव [4]वीररुद्रनृपतावाशास्यते किं भवे-
दित्याल्यां प्रणयैकवाचि सुतनुर्दत्तोत्तरा [5]व्रीडया ॥ ५७ ॥

[6]मध्या यथा

लीलाविभ्रमपूर्वरङ्गमुदितं तारुण्यमेत्य त्रपा—
नेपथ्यान्तरबिम्बितस्मरकलालास्यप्रपञ्चश्रियः ।

---

तत्र मुग्धामुदाहरति । मुग्ध इति । या काचिदनाप्ता किम् । नेत्यर्थः । [7]अनुक्तेऽपि तव मनोरथं जानामीत्याह । आसक्तिरिति । अस्तीति शेषः । आशास्यत इत्येकं वाक्यम् । यः सर्वाभिरभिलष्यत इत्यर्थः । यद्वा रुद्रनृपतौ तवासक्तिराशास्यते अस्माभिरपेक्ष्यत इत्यर्थः । आङः शासु इच्छायामित्यस्माद्धातोः कर्मणि यक् । किं भवेदिति संप्रश्ने लिङ् । अत्राभिरूप्यादिगुणयोगसूचकेन सुतनुशब्देन प्रथमयौवनस्य दत्तोत्तरा [8]व्रीडया इत्यनेन लज्जाविजितमन्मथत्वस्य च प्रतीतेरियं मुग्धा ।

'आभिरूप्यमकाठिन्यमङ्गानां चातिमार्दवम् ।
एवमादिगुणावस्था प्रथमे यौवने भवेत् ॥'

इत्युक्त्वा 'कृताधराङ्गसंस्कारा सखीकेलीषु लालसा' इत्यादिना तच्चेष्टाश्चोक्ताः । [9]तच्चाल्यां प्रणयैकवाचीत्यनेन सूच्यते ॥ ५६–७.

[10]मध्यामुदाहरति । लीलेति । पूर्वरङ्गो नाम नाट्यादौ कर्तव्यो रङ्गप्रसाधनाख्यः कर्मविशेषः । तदुक्तम्——

'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः ॥'

---

१ P., $M_5$ and T. have मुग्धा यथा after this. २ तन्मह्य° M. ३ वा M., P., $M_1$, $M_2$, T. ४ रुद्रदेवनृपता° P., T. ५ लज्जया R., M. ६ मध्यमा यथा R., M., $M_1$, T.' ७ m. has प्रच्छाद्य अनुक्तेत्यर्थः before अनुक्तेऽपि. ८ विजितेत्यनेन लज्जापिहितमन्मथत्वस्य m. ९ इत्याल्यां t. १० मध्यमाम्° m.

सख्यः पश्यत काकतीयनृपतौ भावानुबन्धोज्ज्वलः
कोऽप्यस्यास्तरलभ्रुवो विजयते शृङ्गारनाट्यक्रमः ॥ ५८ ॥

---

इति । लीलाविभ्रमाणामयत्नलब्धविलासानां पूर्वरङ्गं तारुण्यस्य विलासहेतुत्वेन तत्पूर्वभावित्वात् पूर्वरङ्गत्वेन रूपणम् । यद्वा लीलाविभ्रमा एव पूर्वरङ्गो यस्य तत् तारुण्यमेव रङ्गस्थलमिति गम्यते । त्रपैव नेपथ्यं नीहारावरणसदृशी यवनिका । अत एव तस्यान्तरे बिम्बिता स्मरकला कामोद्दीपनं सैव लास्यप्रपञ्चश्रीर्यस्यास्तथोक्ताया लज्जामन्मथमध्यस्थाया इत्यर्थः । लास्यलक्षणं तु संगीतचूडामणौ ।

'शृङ्गाररसभूयिष्ठैर्भूरिभावतरङ्गितैः ।
अङ्गैरनङ्गसर्वस्वैः शोभातिशयशालिभिः ॥
अन्वितो नृत्तभेदो यस्तल्लास्यमिति कथ्यते ॥'

इति । बिम्बग्रहणोचितनेपथ्यं तदन्तरे नर्तनं च । तत्रैवोक्तं कुण्डलिनृत्तप्रस्तावे

'नीरन्ध्रा तत्र कर्तव्या स्निग्धा यवनिकादिमा ।
अपरे द्वे यवनिके नीहारावरणोपमे ॥
प्रेक्षकाणां वितन्वाना नयनानन्दकन्दलम् ।
नेपथ्यान्तरिता भूत्वा नर्तकी नृत्तमाचरेत् ॥'

इति । भावस्य रत्याख्यस्थायिभावस्यानुबन्धो विच्छेदाभावः । सजातीयविजातीयैरतिरस्कार इत्यर्थः । अथवा भावानां सात्त्विकसंचारिणामनुबन्धः कल्लोलवदसकृदनुवर्तनं तेनोज्ज्वलो मनोहरः नाट्यपक्षे भावो नाम व्यापारविशेषः । तदुक्तम् ।

'वागङ्गसत्त्वाभिनयैर्मुखरागोपशोभितैः ।
भावयन्नान्तरं भावं व्यापारो भाव इष्यते ॥'

इति । कोऽप्यनिर्वचनीयशृङ्गार एव नाट्यं नर्तनं तस्य क्रमः । पश्यतेत्यस्य वाक्यार्थः कर्म ॥ ५८ ॥

---

१ 'सर्वस्वशोभा' m.

प्रौढा यथा

> स[1]हेलं पश्यन्त्याः प्रकृतिसुभगं रुद्रनृपतिं
> त[2]दात्वप्रत्युद्यद्विविधललिताटोपमधुरम् ।
> रसप्रादुर्भावाद्युगपदुदयत्सात्त्विकमहो
> मृगाक्ष्यास्ता[3]रुण्ये कुसुमशरशिल्पं विजयते ॥ ५९ ॥

भेदान्तरं यथासंभवमुदाहार्यम्[4] ।

> गुणालंकाराणां रसमहति काव्ये विलसितं
> स्फुरच्छब्दार्थाभ्यां तदपि हृदयानन्दि भवति ।

---

प्रौढामुदाहरति । सहेलमिति । प्रकृत्या मधुरं प्रियदर्शनम् । व्यक्तशृङ्गारसूचकोऽन्तःकरणविकारो हेला । तत्सहितं यथा भवति तथा पश्यन्त्याः अत एव तदात्वे तत्काले प्रियदर्शनसमय इत्यर्थः । प्रत्युद्यन्ति उत्पद्यमानानि विविधानि च ललितानि कर्णकण्डूयनकुचविमर्दनादिकोमलाङ्गविन्यासाः ।

'सुकुमाराङ्गविन्यासो ललितं परिकीर्त्यते'

इति लक्षणात् । तेषामाटोपेन मधुरमिति स्मरमन्दीकृतव्रीडत्वमुच्यते । रसस्य शृङ्गारस्य प्रादुर्भावादुदयानुभावादित्यर्थः ।

> 'उत्पन्ना रतिरेकत्र प्रथमं दर्शनादिभिः ।
> हृदारम्भानुभावेन शृङ्गारं विशिनष्टि सा ॥'

इति वचनात् । कुसुमशरशिल्पं कामकलाकौशलम् । अत्र दयितावलोकनकाले अङ्गादौ सातिशयविशेषकथनाद्विलासः ।

'तत्कालीनो विशेषस्तु विलासोऽङ्गक्रियादिषु ।'

इति लक्षणात् ॥ ५९ ॥

विस्तरभयादस्माभिरुपेक्षितानां धीराद्यवस्थानामुदाहरणानि स्वयमेव द्रष्टव्यानीत्याह । भेदान्तरमिति । अत्रायं नायिकासंग्रहः ।

---

१ सहासं M. २ तदा तु प्रत्यु° R. ३ °लावण्यं M. ४ M. closes the नायकप्रकरण at °मुदाहार्यम्.

तयोरप्युन्मेषः स्रवदमृतमाधुर्यसुभगः
परं पुण्यश्लोकं[1] चरितमनुबध्नन् विजयते[2] ॥ ६० ॥

इति श्रीविद्यानाथकृतौ[3] प्रतापरुद्रयशोभूषणेऽलंकारशास्त्रे[4] नायकप्रकरणं समाप्तम्[5] ॥ १ ॥

---

'स्वान्या साधारणा चैवं[6] मुग्धा मध्या प्रगल्भिका ।
आद्यैकधा त्रिधान्ये द्वे धीराधीरोभयात्मना ॥
ज्येष्ठा कनिष्ठा भेदेन ते एव द्विविधे पुनः ॥
अन्या कन्या परोढा च वेश्या त्वेकेति षोडश ॥
स्वाधीनपतिकाद्यष्टावस्थाभिस्ताः[7] समन्विताः ॥
प्रत्येकमष्टधा मुख्या मध्या हीनेति ताः त्रिधा ।
इत्येवं नायिकावस्थाः समुद्राष्टाग्नि (३८४) सम्मिताः ॥
विरहोत्कण्ठिता चैव विप्रलब्धाभिसारिका ।
इत्यवस्थात्रयं प्राहुः केचित् कन्यापरोढयोः ॥
चतुःपञ्चाशदधिकत्रिशत्यासां तदा भवेत्[8] ॥'

इत्थं प्रसक्तमनुप्रसक्तं च परिसमाप्य परमप्रकृतं पुण्यश्लोकगुणवर्णनमुपस्कुर्वन्नुपसंहरति । गुणेति । पुण्यः श्लोको यशो यस्मिंस्तत् पुण्यश्लोकम् । 'पद्ये यशसि च श्लोकः' इत्यमरः ॥ ६० ॥[9]

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्याय[10]कोलचलमल्लिनाथसूरिसूनुना विश्वजनीनविद्यस्य विद्वन्मणेः पेद्दयार्यस्यानुजेन[11] कुमारस्वामिसोमपीथिना[12] विरचिते प्रतापरुद्रीयव्याख्याने रत्नापणाख्याने[13] नायकनिरूपणं नाम[14] प्रथमं प्रकरणम्[15] ।

---

१ 'श्लोकाचरितं' p. २ Here ends the नायकप्रकरण of R., T', $M_g$, $M_p$, $M_s$. ३ विद्यानाथकृते M., $M_p$. ४ 'यशोभूषणालं P, T., T'. 'यशोभूषणालंकारे R. ५ R. omits समाप्तम्. ६ च स्वा t., T. ७ 'वस्थाभिश्च m. ८ तु भेदवत् p.; तथा भवेत् m. ९ P. and T. have उपस्कारहेतूनामित्याद्यतिशायाकारणमित्यन्तो ग्रन्थो बहुषु कोशेषु न दृश्यते नापि व्याख्यातः कुमारस्वामिसोमपीथिना। १० p. omits महोपाध्याय. ११ पेद्दयाचार्यस्य $m_g$. १२ सोमभट्टेन m., $m_p$. १३ p. omits रत्नापणाख्याने १४ नायकप्रकरणं नाम p. १५ has समाप्तम् after प्रकरणम्.

# Appendix to नायकप्रकरण ।

(Giving the portion found in $M_{1}$, P. and T.)

एष संग्रहश्लोकः । उपस्कारहेतूनां गुणालंकाराणां सदृशेऽलंकार्ये सति चरितार्थत्वम् । यस्यालंकाराश्रयत्वं तदेव लोकन्यायेनालंकार्यम् । तेन गुणालंकाराणां काव्यमेवाश्रयभूतमिति तदेवालंकार्यम् । रसादेरलंकार्यत्वोक्तिः प्राधान्येनात्मन इव हारनूपुराद्यलंकार्यत्वम् । जीवितभूतत्वाद्रसादेः काव्यात्मता । क्वचिद्रसस्य प्राधान्यम् । क्वचिदलंकारस्य प्राधान्यम् । क्वचिद्वस्तुनः प्राधान्यं च ।

रसप्राधान्यं यथा ।

> ईषदङ्कुरितविभ्रमचारौ
> देहपल्लवितकान्तिनि तन्व्याः ।
> यौवने मुकुलितस्तनमात्रे
> पुष्पितश्च फलितश्च मनोभूः ॥ ६१ ॥

एतत् कांचिद्बालामालोक्य सस्पृहस्य प्रतापरुद्रस्य वचनम् । अत्र[1] शृङ्गाररसो व्यज्यते ॥

अलंकारप्राधान्यं यथा ।

> कीर्त्तौ प्रतापरुद्रस्य विहरन्त्यां दिगन्तरम्[2] ।
> लोकालोकतटाः शश्वद्द्रवच्चन्द्रोपलाङ्किताः ॥ ६२ ॥

अत्र चन्द्रकान्तकुट्टिमानां लोकालोकतटानां[3] रुद्रदेवकीर्त्तौ चन्द्रिकाबुद्ध्या[4] शश्वद् द्रवो[5]ऽभूदिति भ्रान्तिमदलंकारो व्यज्यते । व्यङ्ग्यावस्थायामलंकारस्यापि[6] प्राधान्यमस्त्येव ॥

वस्तुप्राधान्यं यथा ।

> अवतरति वीररुद्रे काकतिवंशे त्रिलोकमहनीये[7] ।
> त्यक्त्वा दुग्धपयोधिं तल्पफणीशः स्वमन्दिरं प्राप्तः ॥ ६३ ॥

अत्र तल्पफणीशः दुग्धाब्धिं[8] विहाय स्वगृहं प्राप्त इत्यनेन क्षीरसमुद्रे

---

१ $M_{1}$ drops अत्र शृङ्गाररसो व्यज्यते. २ दिगन्तरे P., T. ३ लोकालोकाचलतटानां T. ४ चन्द्रबुद्ध्या $M_{1}$. ५ रसो P. ६ °मलंकारस्य P. ७ °वंशं त्रिलोकमहनीयम् P. ८ दुग्धाम्बुधिं T.

हरिर्नास्तीति व्यज्यते । अनेन पुरुषोत्तमः प्रतापरुद्ररूपेण काकतीयकुले वर्त्तत इति वस्तु व्यज्यते । इति त्रिविधं व्यङ्ग्यप्राधान्यम् ॥

काव्यं समाश्रित्य गुणालंकाराणां विलासः । तच्च काव्यं शब्दस्फुरणेनार्थस्फुरणेन तदुभयस्फुरणेन च सहृदयहृदयानन्दि भवति ॥

शब्दस्य स्फुरणं नाम प्रौढबन्धस्य डम्बरः ।

यो बन्धाडम्बर आरभट्यां प्रतिपादयिष्यते तच्छब्दस्फुरणम् ।

यथा

क्षोणीरक्षणदक्षिणाः क्षतजगत्क्षोभादुरीक्ष्यक्रमाः
क्षुद्रक्षत्रियपक्षशिक्षणविधौ प्रोत्क्षिप्तकौक्षेयकाः ।
उद्दामोद्यमनस्य रुद्रनृपतेर्दोर्दण्डयोश्चण्डयो-
र्गर्जद्दुर्जनगर्वपर्वतभिदादम्भोलयः केलयः ॥ ६४ ॥

अचुम्बितार्थसंपत्तिरर्थस्फुरणमुच्यते ॥

यथा

खग्गे जुज्झविजिम्भिए रिउमहीणाहांजलिं बिंबिअं
पेक्खंतो जअलच्छिवासकमलं मण्णंति विण्णाणिणः ।
मण्णे वीरपआवरुद्दविहुणो जण्णेसु घेत्तुं उणो
सिट्ठीए रिउजीविआइ विहिणो पत्तस्स पीढंवुअम् ॥ ६५ ॥

उभयस्फुरणं यथा

उद्यद्बृंहितगर्जितैर्द्विपघटाकादम्बिनीडम्बरैः
क्षोणीभृत्कटकोपरोधपटुभिः सद्यः स्फुरद्दिक्तटाः ।
प्रावृट्संभ्रमशंसिनो रिपुवधूबाष्पोद्भवं दुर्दिनं
कुर्वन्तश्चलमर्त्यगण्डनृपतेर्जैत्रप्रयाणोद्यमाः ॥ ६६ ॥

---

१ काव्यमाश्रित्य P., T. २ उभय° $M_1$. ३ °बन्धस्य डम्बरः $M_1$. ४ बन्धारम्भ P., शब्दाडम्बर T. ५ प्रतिपाद्यते P. ६ °दुर्जनगर्वपर्वत° $M_1$. ७ °मिष्यते P., T.

८ छाया—खड्गे युद्धविजृम्भिते रिपुमहीनाथाञ्जलिं बिम्बितं
प्रेक्षन्तो जयलक्ष्मिवासकमलं मन्यन्ति विज्ञानिनः ।
मन्ये वीरप्रतापरुद्रविभोर्जन्येषु ग्रहीतुं पुनः
सृष्ट्यै रिपुजीवितानि विधेः प्राप्तस्य पद्माम्बुजम् ॥

९ रिपु° T. १० जयलच्छि° T. ११ सिट्ठीए T. १२ रिपु° T. १३ पत्तस्स p. १४ °र्जितैः करिघटा P., T., १५ °बाष्पोद्भवैर्दुर्दिन $M_1$. १६ वर्तन्ते चल° $M_1$. १७ °मर्त्यगण्ड° T. १८ तत्प्रहष्टै $M_1$.

एवंविधशब्दार्थस्फुरणाभ्यां काव्यस्य चारुत्वम् । शब्दार्थयोरपि पुण्यश्लोकानुवर्णनेन सहृदयहृदयानन्दित्वम् । अतो नायकस्यैव काव्ये प्राधान्यम् ।

कुलाचारयशःशौर्यश्रुतशीलादिवर्णनम् ।
क्रियते नेतुरेवं यत्तद्यत्र बहुसंमतम् ॥ ६७ ॥
अथवा प्रतिपक्षस्य वर्णयित्वा बहून् गुणान् ।
तज्जयान्नायकोत्कर्षकथनं च केचिन्मतम् ॥ ६८ ॥

यथाक्रममुदाहरणम् ।

तत्त्वं यस्य परः पुमानवतरो यस्यान्वयः काकति-
क्ष्मापानां चरितं च यस्य भुवनक्षेमंकरप्रक्रमम् ।
श्लाघा यस्य लघूकृतामरतरुस्वर्धेनुचिन्तामणिः
सोऽयं विश्वधुरंधरो विजयते श्रीवीररुद्रो नृपः ॥
यत्तेजः प्रतिपक्षभूपविहरद्गर्वान्धकारातपो
यद्दोरर्गलविक्रमस्त्रिजगतीशुद्धान्तदौवारिकः ।
सोऽप्यासीद्युधि सेवणक्षितिपतिः सन्नाहभेरीध्वनिं
श्रुत्वा रुद्रनरेश्वरस्य महतो भीतः प्रलापाकुलः ॥ ७० ॥

एवंविधवर्णनमुत्पाद्यनायके न घटते। तस्य सर्वलोकप्रसिद्ध्यर्थं कुलव्यपदेशादयो वर्णयितुमेवोचिताः। स्वतःसिद्धे तु नायके द्वैविध्यमपि संभवति । तस्य कुलव्यपदेशादीनां लोकप्रसिद्धत्वात् कविभिर्बलवत्प्रतिपक्षविजयवर्णनं युक्तम्। स्वतःसिद्धोत्पाद्यत्वभेदेन नायकद्वैविध्यमपि संभवति। तत्र

१ पुण्यश्लोकाचरितवर्णनेन. P; पुण्यश्लोकचरितवर्णनेन T. २ नायकस्य प्राधान्यम् P. ३ °त्तदेव P., T. ४ गुणान् बहून T. ५ °वर्णनं T. ६ मतं कश्चित् P., T. ७ सेवन: क्षितिपतिः P. ८ पलाप्याकुलः T. ९ एवं वर्णनं P. १० सर्वं is dropped in P. and T. ११ T. has बहुधा after it १२ °वर्णना युक्ता P. १३ P. and T. have एवं before it. १४ द्वैविध्यम् P., T. १५ तत्र च P., T.

धीरोद्धते यथा रौद्रो वर्ण्यते बाहुसंभ्रमैः[1] ।
यथा च धीरललिते शृङ्गारो बहुभावकृत् ॥ ७१ ॥

न धीरोदात्तविषये तथा वर्णनमिष्यते ।
कार्यतो[2] रससंपूर्त्तिस्तस्मिन्नप्युचितक्रमा ॥ ७२ ॥

हास्यादीनां तथान्येषां रसानामपि वर्णनम्[3] ।
मन्दोद्यमानुभावं[4] स्याद्धीरोदात्ते तु नेतरि[5] ॥ ७३ ॥

सर्वनायकातिशयत्वाद्धीरोदात्तस्य तद्विषयत्वाद्धि[6] प्रबन्धानामतिश्लाघ्यास्पदत्वम्[7] ॥

१ °संभ्रमः P., T. २ काव्यतो M₁. ३ कीर्तनम् P., T. ४ °भावः M₁. ५ नेतरे M₁. ६ तद्विषयत्व P., T. ७ °मतिशयास्पदम् P.; °मतिश्लाघाकारणम् T.

अथ काव्यस्वरूपं निरूप्यते ।

गुणालंकारसहितौ शब्दार्थौ दोषवर्जितौ ।
गद्यपद्योभयमयं काव्यं काव्यविदो विदुः ॥ १ ॥

अदोषौ सगुणौ सालंकारौ शब्दार्थौ काव्यमिति काव्यसामान्यलक्षणम् ।

शब्दार्थौ मूर्त्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम् ।
हारादिवदलंकारास्तत्र स्युरुपमादयः ॥ २ ॥
श्लेषादयो गुणास्तत्र शौर्यादय इव स्थिताः ।
आत्मोत्कर्षावहास्तत्र स्वभावा इव रीतयः ॥ ३ ॥
शोभामाहार्यकीं प्राप्ता वृत्तयो वृत्तयो यथा ।
पदानुगुण्यविश्रान्तिः शय्या शय्येव संमता ॥ ४ ॥
रसास्वादप्रभेदाः स्युः पाकाः पाका इव स्थिताः ।
प्रख्याता लोकवदियं सामग्री काव्यसंपदः ॥ ५ ॥

---

अथ प्रासङ्गिकं नायकस्वरूपं निरूप्य प्रकृतं काव्यस्वरूपनिरूपणं प्रतिजानीते । अथेति । काव्यसामान्यलक्षणमाह । गुणेति । अत्र गद्यपद्येत्यादिना काव्यस्य त्रेधा विभागो दर्शितः । शेषं लक्षणम् । अतस्तदेव निष्कृष्याह । अदोषाविति । अत्र सूत्रे प्रथममनुपात्तस्यापि दोषवर्जनस्यादौ व्याख्यानमल्पोऽपि दोषः प्रमादादिनाप्यनुपेक्ष्य इति द्योतयितुम् । तदुक्तं दण्डिना—

'तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन ।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥'

इति । 'एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' ॥ इति तु काव्यव्यतिरिक्तविषयमिति द्रष्टव्यम् ॥ १ ॥

अथ वक्ष्यमाणलक्षणशब्दार्थादिकाव्यसामग्र्यां शरीरादिलोकसामग्रीमारोपयति । शब्दार्थावित्यादि । स्वभावा जातिप्रयुक्तधर्माश्लेषादयः । आहार्यकीं कृत्रिमाम् । वृत्तयो वर्त्तनानि । पदानामानुगुण्यं पदविनिमयासहिष्णुत्वम् । रसः शृङ्गारादिरास्वाद्यते येन गाम्भीर्येण तस्य विशेषाः रसास्वादप्रभेदाः २–५॥

---

१ T' has काव्यप्रकरणम् । काव्यस्वरूपनिरूपणम् before अथ. २ काव्यं M., $M_g$. ३ शोभामाहार्यकं $M_g$. ४ °माहार्यिकीं P., T. ५ स्मृताः $M_j$. ६ This latter half of the verse is omitted in P. ७ $M_g$. has इति after संपदः. ८ दुर्गतम् $m_g$. ९ बोद्धव्यम् m.; बोध्यम् $m_g$.

वाचकलक्षकव्यञ्जकत्वेन [1]त्रिविधं शब्दजातम् । वाच्यलक्ष्यव्यङ्ग्यत्वेनार्थजातम[2]पि त्रिविधम् । ता[3]त्पर्यार्थो व्य[4]ङ्ग्यार्थ एव न[5] पृथ-

अथ यथायोगं विवेचयन् आदौ तावच्छब्दार्थौ विभजते । वाचकेत्यादिना । क्रमेणाभिधालक्षणाव्यञ्जनाव्यापारैरर्थावबोधकाः शब्दा वाचकलाक्षणिकव्यञ्जकाः । तैरेव बोध्या अर्था वाच्यलक्ष्यव्यङ्ग्या इति विवेकः । ननु चतुर्थे तात्पर्यार्थे जाग्रति कथमर्थत्रैविध्योक्तिरित्याशङ्क्य तस्य तृतीयेऽन्तर्भाव इत्याह । तात्पर्यार्थ इति । अत्र वक्तृबुद्धिसंनिधापितो वाक्यावगम्यो वाक्यार्थो रसादिरूपस्तच्छब्देनोच्यते । तस्मिन् परास्तत्परास्तदासक्तास्तद्विषया इत्यर्थः । तेषां भावस्तात्पर्यम् । नन्वभिहितानां पदार्थानामर्थाभिधायिनां वा पदानां विशिष्टार्थप्रत्यायनशक्तिस्तात्पर्यमिति मतभेदेन मीमांसका वर्णयन्ति । अतस्तन्मते देवदत्त गामानयेत्यादौ दे[6]वदत्तकर्तृकगोकर्मकानयनरूपो विशिष्टार्थ एव व्यङ्ग्यत्वविधुरस्तात्पर्यादवगतत्वात् तात्पर्यार्थ इत्युच्यते कथमस्य व्यङ्ग्येऽन्तर्भाव इति चेत् सत्यम् । न हि तावन्मात्रे कविसंरम्भविश्रान्तिः । काव्यशब्दानामन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिविषयभूतस्य प्रधानस्य प्रयोजनान्तरस्यासम्भवात् । किं तु तदर्थन्यक्कारेण प्रतीयमाने सामाजिकानन्दास्वा[7]दफले रसादावर्थान्तरे । अतः स एव तात्पर्यार्थः । तत्प्रत्यायकपदार्थशक्तिरेव तात्पर्य[8]मिति कविसमये । तत्र नाभिधा । स्वार्थे [9]संकेताभावात् । नापि लक्षणा । मुख्यार्थबाधाद्यभावात् । अतो वक्ष्यमाणलक्षणस्य व्यञ्जनस्यैवेदं नामान्तरकरणमिति तदर्थस्य व्यङ्ग्यार्थत्वमेवेति भावः । तर्ह्यत्र संसर्गरूपो वाक्यार्थः कथं प्रतीयत इति चेत् तार्किकाणामिव वाक्यमहिम्ना न पुनस्[10]तात्पर्येणेति ब्रूमः । अत एव ते वर्णयन्ति । आकाङ्क्षादिमत्त्वे सति पदानां पदार्थानां वा समन्वयशक्तिर्वाक्यं तद्बलायातो वाक्यार्थः । तात्पर्यार्थस्तु परिणतिविरसं पनसफलं परिणतिसुरसमाम्रफलमि[11]त्यादि निन्दाप्रशंसादिवाक्येषु

१ शब्दजातं त्रिविधम् $M_1$. २ $M_1$ drops अपि. ३ तात्पर्यार्थोऽपि T., $M_3$. ४ व्यङ्ग्यार्थान्तर्गत एव $M_2$; व्यङ्ग्यान्तर्गत एव $M_1$. ५ न पुनः पृथ° R., $M_3$, T. ६ देवदत्तकर्तृकदण्डकरणकगोकर्म° P., T. ७ °स्वादे फले $m_1$. ८ T. drops इति. ९ संकेतितत्वाभावात् m. १० °स्तात्पर्येण मीमांसकानामिवेति p., T. ११ °मिति निन्दा° p.

म्भूतः । अभिधालक्षणाव्यञ्जनाख्यास्तिस्रः[1] शब्दवृत्तयः । गौणवृत्ति-[2]

---

हानोपादानादिरूप एव नान्यः । तात्पर्यमिति भावाभिप्रायाद्यपरपर्यायम् । उद्देशो नाम वक्तृधर्मो न मीमांसकानामिव वाक्यधर्म इति । तदेतदुदयनाचार्यैः कुसुमाञ्जलौ 'उद्देश एव तात्पर्यम्' इत्येतच्छ्लोकव्याख्यानावसरे प्रतिपादितम् । यद्वा वैयासिकदेवताधिकरणे अर्थान्तराभावे संसर्ग एव तात्पर्यार्थः तत्सद्भावे तत्रैव प्रतीतिविश्रान्तेः स एव तात्पर्यार्थो न संसर्ग इति प्रतिपादितं तद्वदत्रापि द्रष्टव्यम् । काव्ये संसर्गमात्रविश्रान्तिर्न संभवतीत्युक्तम् । तर्हि 'अव्यङ्ग्यमपरं स्मृतम्' इति काव्यप्रकाशवचनस्य का गतिरिति चेन्नैष दोषः । अव्यङ्ग्यमित्यत्रानुदरा कन्येतिवन्नञीषदर्थत्वेनास्फुटव्यङ्ग्यत्वस्य विवक्षितत्वात् । तदुक्तमलंकारसुधानिधौ—

'अनुल्बणत्वाद्व्यङ्ग्यानामव्यङ्ग्यं चित्रमीरितम् ।
व्यङ्ग्यस्यात्यन्तविच्छेदः काव्ये कुत्रापि नेष्यते[3] ॥'

इति । एवं च सति प्राचीनालंकारशास्त्रकाराणां संसर्गरूपवाक्यार्थस्य तात्पर्यार्थत्वेन प्रतिपादनं मतान्तराभिप्रायेणेति द्रष्टव्यम् । अत एवोक्तं काव्यप्रकाशे 'तात्पर्यार्थोऽपि केषुचित्' इति । उक्तं च सुधानिधौ । 'अस्मन्मतं तात्पर्यव्यापारापेक्षं न भवति' इति । विद्याधरेणाप्युक्तम् । 'तात्पर्यं नाम व्यापारान्तरं परैरभ्युपगतम्' इति । तस्माद्व्यञ्जनापरपर्यायमेव तात्पर्यं कविभिरङ्गीकृतं नान्यदिति सिद्धम् । अत एवोक्तं भावप्रकाशे—

'अतो ध्वन्याख्यतात्पर्यैर्गम्यमानत्वतः[4] स्वतः ।
काव्ये रसालंक्रियादिर्वाक्यार्थो भवति स्फुटम् ॥

इति । उक्तं च ध्वन्याचार्यैः । 'यत्त्वभिप्रायविशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यां प्रकाश्यते तद्भवति विवक्षितं तात्पर्येण प्रकाश्यमानम्' इति । वृत्तयोऽपि त्रिविधा इत्याह । अभिधेति । गौणवृत्तिर्लक्षणातो भिन्नेति प्रभाकराः[5] । तदयुक्तम् । तस्या लक्षणायामन्तर्भावादित्याह । गौणवृत्तिरिति । गुणनि-

---

१ °स्तिस्रो वृत्तयः R.  २ गौणवृत्तिर्लक्षणा° R., M.  ३ नोष्यते p.  ४ °गम्यमाने तु तस्य तत् m.  ५ प्रभाकराः t., m.

रपि लक्षणाप्रभेद एव । संबन्धानुपपत्तिमूलत्वात् । यथाग्निर्माणवक इत्यत्राग्निसादृश्यविशिष्टमाणवकप्रतिपत्तिर्विवक्षिता । तथैव गङ्गायां घोष इत्यत्र गंगासंबन्धविशिष्टतीरप्रतिपत्तिर्विवक्षिता । गंगासंबन्धस्योपलक्षणत्वे घोषगतपवित्रत्वाद्यसिद्धेः । अत एव सादृश्यनिबन्धना

मित्ता वृत्तिर्गौणवृत्तिरित्यर्थः । अत्र हेतुमाह । संबन्धेति । लक्षणाया अपि तथात्वादिति भावः । मुख्यार्थयोगः संबन्धः । तद्बाधोऽनुपपत्तिः । अग्निर्माणवक इत्यत्राग्निलक्षितपैङ्गल्यादिगुणसामान्ययोगः संबन्धः । अनग्नावग्निशब्दप्रयोगोऽनुपपत्तिः । अत्रोभयनिष्ठस्य गुणसामान्यरूपस्य गुणविशेषरूपस्य वा सादृश्यस्य संबन्धरूपत्वम् । तस्य चोभयनिरूपणीयत्वसाधर्म्येणोपचारात् । तदुक्तं वाक्यपदीये—

‘ सादृश्यमात्रं सामान्यं द्विष्ठं कैश्चित् प्रतीयते ।
गुणभेदोऽप्यभेदेन द्विवृत्तिर्वा विवक्षितः ॥’

इति । ननु गौण्यां यथा संबन्धस्य लक्ष्यविशेषणत्वेनान्वयो न तथा लक्षणायाम् । अतः कथमनयोः संबन्धमूलकत्वसाम्यमित्याशङ्क्य लक्षणायामपि संबन्धस्य विशेषणत्वं सदृष्टान्तमाह । यथाग्निरिति । अत्र सादृश्यस्य माणवकनिष्ठत्वात् तस्य तद्विशिष्टत्वम् । अन्यत्र गङ्गाशब्दबोध्यत्वहेतुकप्रवाहप्रतीतिविषयत्वमेव तीरस्यापि गङ्गासंबन्धविशिष्टत्वम् । एवं च स्रोतस्तीरयोरेकशब्दबोध्यत्वेन तादात्म्यप्रतीतेः स्रोतोधर्मा अत्यन्तपावनत्वादयस्तीरे प्रतीयन्त इति प्रयोजनसिद्धिः । एवमनङ्गीकारे तदसिद्धिरेव बाधिकेत्याह । गङ्गासंबन्धस्येति । उपलक्षणत्व इति नेदं समुद्रादितीरं किं तु गङ्गातीरमिति गङ्गासंबन्धमात्रप्रतीताविन्यर्थः । घोषगतेति । तीरद्वारेति भावः । तथा सति गङ्गातीरे घोष इति मुख्यशब्दाभिधानाल्लक्षणाया भेदो न स्यादिति हृदयम् । न च मा भूद्भेद इति वक्तुं युक्तम् । तथा सति मुख्ये संभवति गौणस्यान्याय्यत्वात् सर्वसंप्रतिपन्ना लक्षणैवोत्सीदेदिति । अनेन संबन्धानुपपत्तिप्रयोजनानां त्रयाणां लक्षणाबीजत्वमुक्तम् । तस्या विभागमाह । अत एवेति । निमित्तभे-

१ संबन्धानुपपत्तिमूलकत्वात् P., T., $M_1$, $M_2$, T' ; संबन्धानुपपत्तिप्रयोजनकमूलकत्वात् $M_3$. २ M. drops अग्नि. ३ घोषः प्रतिवसतीत्यत्र $M_1$, $M_2$. ४ °स्योपलक्षकत्वे R. ५ सादृश्ययोगः m. ६ वरदराजीये for वाक्यपदीये m. ७ °प्रवाहात्मकत्वप्रतीति° p. ८ संबन्धस्येति for गङ्गासंबन्धस्येति । p. ९ °संप्रतिपन्नलक्षणैव p. १० °प्रयोजनानामपि t. ११ त्रयाणामपि m. १२ p. omits लक्षणा.

संबन्धनिबन्धना[1] चेति द्विविधा[2] लक्षणा । संबन्धनिबन्धना[3] जहल्लक्ष्याजहल्लाक्ष्या[4] चेति द्विविधा[5] । सादृश्यनिबन्धना सारोपा साध्यवसाया[6] चेति द्विधा[7] । एवं लक्षणा[8] चतुर्विधा । कैशिक्यारभटीसात्वती भारती चेति रचनाश्रितत्वेन रसावस्थानसूचकाश्चतस्रो[10] वृत्तयः । तथोक्तं[11] दशरूपके

---

दादित्यर्थः । अत्र सादृश्यशब्देनारोपाध्यवसायहेतवोऽन्येऽपि कार्यकारणभावादयः संबन्धा उपलक्ष्यन्ते । संबन्धशब्देन तद्व्यतिरिक्ता गोबलीवर्दन्यायेनोच्यन्ते । द्वयोरपि प्रत्येकं द्वैविध्यमाह । संबन्धेत्यादि । अत्र यद्यपि सारोपसाध्यवसाययोः[12] सादृश्यनिमित्तत्वे गौणत्वं गौर्वाहीको गौरयमित्यादौ कार्यकारणभावादिसंबन्धान्तरनिमित्तत्वे तु शुद्धत्वमायुर्घृतमायुरेवेदमित्यादौ एवं चातुर्विध्ये[13] जहदजहल्लक्षणाभ्यां सह षोढा लक्षणेति काव्यप्रकाशकारस्तथापि मुख्यार्थस्य हानोपादानारोपाध्यवसायलक्षणोपाधिवशाच्चातुर्विध्यमेव लक्षणायाः । आयुर्घृतमायुरेवेदमित्यादावपि गौणत्वस्यैव सुकल्पत्वाच्च । तदुक्तमलंकारचूडामणौ । 'यत्र वस्त्वन्तरे वस्त्वन्तरमुपचर्यते स गौणोऽर्थः । यत्र न तथा स लक्ष्य इति विवेकः' इति । कुशलप्रवीणादिशब्दानां तु[14] साक्षात् संकेतविषयत्वेन मुख्यत्वाच्च रूढिहेतुकत्वं लक्षणाया इत्याचार्यहेमचन्द्रः । रूढिपक्षाश्रयणे तु प्रयोजनलक्षणापेक्षं चातुर्विध्यमिति विज्ञेयम् । ननु कैशिक्यादिवृत्तीनां विद्यमानत्वात् कथं तिस्रः शब्दवृत्तय इत्याशङ्क्य शब्दसंदर्भाश्रितत्वात्तासामशब्दवृत्तित्वमित्यभिप्रायेणाह । कैशिकीति । रसाद्यनुगुणत्वेनौचित्यवानर्थव्यापारः कैशिक्यादिः । तादृश एव शब्दव्यापारो वैदर्भ्यादिः । तदुक्तं ध्वन्याचार्यैः ।

'रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः ।
[15]औचित्यवान् यस्ता एव वृत्तयो द्विविधाः स्थिताः ॥'

इति । एवं कैशिक्यादीनामर्थप्राधान्येऽपि नान्तरीयकाणां शब्दानां यथायोगं

---

१ संबन्धान्तरनिबन्धना R., M. २ लक्षणा द्विविधा M. ३ संबन्धान्तरनिबन्धना R., M. ४ T., T' insert च after it. ५ द्विविधा is omitted in R., M., $M_5$. ६ साध्यवसाना $M_7$. ७ द्विधा is omitted in R., M., $M_5$; T. and T' have द्विविधा. ८ लक्षणा तु $M_4$. ९ R omits इति. १० रसावस्थासूचका° T'. ११ तथा चोक्तं T,' P., $M_5$, T. १२ °साध्यवसान° m. १३ °साध्यवसानयो° m. १४ तु is omitted in p. and T. १५ औचित्यवत्यस्ता एवा m.

कैशिक्यारभटी चैव सात्वती[1] भारती तथा ।
चतस्रो वृत्तयो ज्ञेया रसावस्थानसूचकाः ॥

इति[2] । रचनाया[3] अपि रसव्यञ्जकत्वं प्रसिद्धम् । रसानुगुणवर्णर[4]चनाया दोषत्वमुक्तम् । वैदर्भीप्रभृतयो रीतिविशेषा न वृत्तिष्वन्तर्भूताः । तत्र[5] संकेतितार्थगोचरः शब्दव्यापारोऽभिधा । सा द्विविधा रूढिपूर्विका योगपूर्विका चेति । रूढिपूर्विका[6] यथा ।

---

वैदर्भ्यादिसापेक्षत्वस्य धनिकादिभिः[*] प्रतिपादनाद्रचनाश्रितत्वमित्यनुसंधेयम् । कैशिक्यादीनां रसव्यञ्जकत्वस्य रचनाधीनत्वात् तस्यास्तथात्वमन्वयव्यतिरेकाभ्यां दर्शयति । रचनाया अपीति । प्रसिद्धमिति । काव्यादाविति[8] शेषः । तदुक्तम् ।

'यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।
वाक्ये संघटनायां च स प्रबन्धेऽपि दीप्यते ॥'

इति । यद्यपि विभावादीनामेव रसव्यञ्जकत्वं रचनादीनां तु विभावादिसहकारित्वमेव अत एवोक्तं लोचने । 'सहकारित्वमेवाभिधातुं संघटनायामित्यादौ सप्तमीनिर्देशः' इति तथाप्यौपचारिकं रसव्यञ्जकत्वमिति बोद्धव्यम् । दोषत्वमिति 'रसस्य स्याद्विरोधाय वृत्त्यनौचित्यमेव च' इति वचनाद्रसभङ्गहेतुत्वादिति भावः । अथ प्रसंगाद्वैदर्भ्यादीनां वक्ष्यमाणे कैशिक्याद्यनन्तर्भावमधुना प्रतिजानीते । वैदर्भीप्रभृतय इति । अथोद्देशक्रमानुसारेणाभिधालक्षणमाह । तत्रेति[10] । संकेतः शब्दार्थयोः संबन्धावधारणं स कृतो यस्य स संकेतितोऽर्थो[11] जातिगुणक्रियाद्रव्यात्मकः केवलजातिर्जात्यालिङ्गितव्यक्तिरन्यापोहो वा मतभेदात् । सर्वपथीनाः[12] खलु कवयो भवन्ति । विशेषणद्वयेन व्यञ्जनचेष्टयोः क्रमेण व्युदासः । लक्षणायास्तु द्वयोरन्यतरेणेति विवेकः । लक्ष्येऽपि संकेतोऽस्तीत्यन्विताभिधानवादिनः । तन्मते शब्दव्यापारपदेनैवेति विशेषः । अशब्दव्यापारो लक्षणेति वक्ष्यते । अभिधां विभजते । सेति । रूढिरश्वकर्णादिवदवयवार्थाभावेन समुदायप्रसिद्धिः । तदुक्तमाचार्यैः ।

---

१ सात्त्विकी M., $M_p$, $M_5$.  २ इति is dropped in M., $M_g$, $M_d$, $M_5$.  ३ रचनायामपि R.  ४ रसाननुगुणरूपताया दोषत्व° M., $M_g$, $M_d$; रसाननुगुणवर्णनेन रचनाया $M_p$.  ५ अत्र R., $M_p$.  ६ तत्र रूढिर्यथा R.; रूढिर्यथा $M_p$, $M_d$, $M_5$.  * ध्वनिकारादिभिः b.  ८ काव्यालोकादा° b. T.; काव्यलोकादौ m.  ९ विद्यते $m_g$.  १० अत्रेति b., m., T.  ११ °र्थोऽत्र जाति° m., T.  १२ सर्वपथीनाः $m_g$.

तपोविशेषैः प्रथितैः प्रजानां
शुभैश्चरित्रैर्जगतीमहिष्याः ।
भाग्यैः प्रभूतैर्भुवनस्य चास्य
बिभर्ति राज्यं वरवीररुद्रः ॥ ६ ॥

अत्र सर्वे शब्दा रूढाः । योगपूर्विका यथा ।
राज्ञि रुद्रनराधीशे रञ्जयत्यखिलाः प्रजाः ।
भूरन्वर्था वसुमती रत्नगर्भा स्थिरेति च ॥ ७ ॥

अत्र[1] वसुमतीरत्नगर्भेत्येवमादयो[2] यौगिकाः ।

---

'असत्स्ववयवार्थेषु योऽन्यैत्रार्थे प्रयुज्यते ।
तत्रानन्वगतित्वेन समुदायः प्रसिध्यति ।'

इति । योगः प्रोक्षण्यादौ प्रकृष्टोक्षणकरणत्वादिवदवयवप्रसिद्धिः । आद्यामुदाहरति । तप इति । तपोविशेषैः कृच्छ्रचान्द्रायणादिभिः । जगतीमहिष्या भूकान्तायाः शुभैश्चरित्रैः पुरन्ध्रीसाध्यैर्गौरीव्रतादिभिरस्य भुवनस्य मध्यमलोकस्य भाग्यैरदृष्टपरिपाकैः[4] । अत्र तपःप्रभृतिनिमित्तभेदाद्विच्छित्तिविशेषं[5] वक्तुं मध्यमलोक एव समष्टिव्यष्टिभ्यामाश्रितः प्रजापृथिवीव्यतिरिक्तमध्यमलोकासंभवादिति द्रष्टव्यम् । अत्र तपःप्रभृतीनामवयवार्थाभावाद्रूढत्वे न कोऽपि विवादः । प्रजादिशब्दानामवयवार्थसद्भावेन यौगिकत्वेऽपि[6] रूढिर्योगमपहरतीति शब्दशक्तिस्वाभाव्यादर्थान्तरे प्रयोगनिवारणान्निर्मन्थ्यपङ्कजादिवद्रूढत्वमभिमतमेवेत्याशयेनाह । अत्र सर्व इति ॥

द्वितीयामुदाहरति । राज्ञीति । अत्र वसुमत्यादिशब्दानां धनवत्ताद्यवयवार्थसद्भावाद्यौगिकत्वमित्याह । अत्रेति ॥

लक्षणां लक्षयति । वाच्येति । वाच्यार्थानुपपत्त्या मुख्यार्थबाधेन हेतुना तत्संबन्धिनि मुख्यार्थसंबन्धे विषये आरोपितः शब्दव्यापारो लक्षणेत्यर्थः । अत्र

---

१ इत्यत्र M., $M_{3}$. २ रत्नगर्भावसुमतीत्येवमादयो R., $M_{5}$; रत्नगर्भादयो M., $M_{3}$, $M_{5}$.
३ न्यवार्थः प्रयु॰ p. ४ ॰रदृष्टैः परिपाकैः m. ५ ॰विशेषकं m. ६ यौगिकत्वेन p.
७ धनवत्ता॰ t., m. ८ लक्षणा p.

वाच्यार्था[1]नुपपत्त्या तत्संबन्धिन्यारोपि[2]तः शब्दव्यापारो लक्षणा ।

त[3]त्र जहल्लक्षणा यथा ।

> जेतुः काकतिभूभर्त्तुराकर्ण्य पटहध्वनिम् ।
> सामन्तनगराण्युच्चैराक्रोशन्ति समन्ततः ॥ ८ ॥

अ[4]त्र न[5]गराण्याक्रोशन्तीति वा[6]च्यस्यानन्वयः । अचेतनाना[7]माक्रोशासंभवात् ।[8]

अजहल्लक्षणा यथा ।

> पत्युः काकतिनाथस्य पा[9]दपीठीमनारतम् ।
> स्फुरद्रत्नप्रभाजालैरलंकुर्वन्ति मौलयः ॥ ९ ॥

---

य[10]द्यपि स्वार्थं प्रत्याय्योपरतव्यापारस्य शब्दस्य पुनर्व्यापारान्तरायोगादर्थ एव लक्षक इत्यर्थव्यापारो लक्षणा तथापि वाच्यधर्मो वाचक उपचर्यत इति लक्षणायाः शब्दवृत्तित्वव्यवहार इति विज्ञेयम् । अत्र ता[11]वत् पूर्वोक्तविभागक्रमेण जहल्लक्षणामुदाहरति । जेतुरिति । अत्राक्रोशसिद्ध्यर्थं नगरशब्दः स्वार्थं हित्वा तद्वासिनः प्राणिनो लक्षयतीत्येषा जहल्लक्षणा । तत्रत्यप्राणिमात्रभयप्रतीतिः प्रयोजनम् । मुख्यार्थबाधं व्यनक्ति । अत्रेति ॥

अजहल्लक्षणामुदाहरति । पत्युरिति । पादपीठीमिति । अल्पं पीठं पीठी । गौरादित्वात् ङीष् । अत एवोक्तममरकोशे ।

> ‘ स्त्री स्यात् काचिन्मृणाल्यादिर्विवक्षापचये यदि ।’

इति । बाहुल्यप्रतीतिः प्रयोजनम् । लक्ष्ये लक्षणं योजयति । अत्रेति । नृपतय इति । मौलिसहिता ए[12]वेत्यर्थः । एवं चात्रापि स्वार्थं हित्वैव तद्विशिष्टार्थान्तरल-

---

१ वाच्यानुपपत्त्या M., $M_4$, $M_5$. २ °रोपितशब्द° $M_1$. ३ अत्र $M_1$. ४ अत्र is omitted in $M_1$. ५ नगराण्युच्चैराक्रो° T. ६ वाच्यार्थस्या° R. ७ °माक्रोशस्यासंभवात् P., T. ८ After this $M_1$ has तत्रत्या जना इत्यर्थः and $M_5$. तत्रत्या जना लक्ष्यन्ते. ९ पादपीठ° M., $M_1$, $M_4$, $M_5$. १० यद्यपि is omitted in c. ११ तावत् is omitted in p. १२ एव is omitted in m.

अत्रालंकरणसिद्ध्यर्थं मौलिभिराश्रयभूता नृपतयो लक्ष्यन्ते । सारोपलक्षणा यथा ।

मन्थानाचलमूलमेचकशिलासंघट्टनश्यामिका-
कारं यत्तुहिनद्युतौ स्फुरति तत् सारङ्गमाचक्षते ।
मन्ये नन्विह वीररुद्रनृपतेः कीर्तिश्रिया निर्जित-
स्तन्मुद्राङ्कवराहमिन्दुरुरसा बिभ्रत् समुज्जृम्भते ॥ १० ॥

---

क्षणेति सिद्धम् । स्वार्थापरित्यागे तु स्वार्थांशेऽभिधा अंशान्तरे तु लक्षणा चेत्येकस्य शब्दस्यैकदा वृत्तिद्वयापत्तेः । तर्हि जहदजहल्लक्षणयोरभेद इति चेत् सत्यम् । किं त्वत्राभिधातः प्रच्याव्य स्वार्थस्यापि लक्ष्यत्वेन स्वीकारादजहत्स्वार्थेति व्यपदेशः । अन्यत्र तु तदपि नास्तीति जहत्स्वार्थेति । तदुक्तं तातपादैरेकावलीतरले तन्त्रवार्त्तिकव्याख्याने सिद्धाञ्जने च—

'स्वार्थत्यागे समानेऽपि सह तेनान्यलक्षणा ।
यत्रेयमजहत्स्वार्था जहत्स्वार्था तु तं विना ॥'

इति । नन्वर्थ एव लक्षक इत्युक्तं तथा सत्यजहत्स्वार्थायाः स्वार्थांशे वृत्तिविरोध इति चेन्नैष दोषः । केवलस्वार्थस्य लक्षकत्वं तत्सहितस्यान्यस्य लक्ष्यत्वमिति भेदसद्भावादित्येतदपि तत्रैवोक्तमित्यलमाबालसुलभैः प्रसङ्गैः ॥

सारोपलक्षणामुदाहरति । मन्थानेति । मन्थानो मन्थदण्डस्तदचलो मन्थानाचलो मन्दराद्रिरित्यर्थः ।

'मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा च वासुकिम् ।'

इति विष्णुपुराणात् । तस्य मूलोपलेषु संघट्टनेन वासुकिसंघर्षणेन या श्यामिका कालिमा तदाकारमतिनीलमित्यर्थः । तन्मुद्रेति । वराहध्वजत्वात् काकतीश्वरस्येति भावः । लोके केनचिज्जितस्तन्मुद्रामुरसा बिभर्तीति प्रसिद्धिः । अत्र कुरङ्गस्य वराहात्मकत्वं प्रतीयते । अत्र विषयविषयिणी विविच्यारोपं दर्शयति । अत्रेति ॥

---

१ अत्रालंकारसिद्ध्यर्थं P., T., T'. २ मौलिभिस्तदाश्रयभूता T., T'. ३ °राश्रयतया P. ४ नृपा R. ५ सारोपा लक्षणा R. ६ °स्वार्थाया m. * इत्याबालसुलभैः प्रसङ्गैरलम् m. ८ सूत्रे m., योक्तं p., T. ९ वासुकीम् m. १० पुराणात् t., m. ११ वासुकी° m. १२ t. omits वासुकि. १३ तत्र m. १४ वराहात्मप्रतीतिः m.

अत्र चन्द्रस्य कलङ्करूपे कुरङ्गे वराहत्वमारोप्यते।

विषयविषयिणोरभिहितयोरभेदप्रतिपत्तिरारोपः।

विषयनिगरणेनाभेदप्रतिपत्तिरध्यवसायः।

सोऽध्यवसानलक्षणा यथा।

काकतीयकुलाम्भोधेः प्रभवत्येष चन्द्रमाः।
कृतः कुवलयोल्लासो येनोदयमुपेयुषा ॥ ११ ॥

अत्र प्रतापरुद्रश्चन्द्रतयाध्यवसीयते। काकतीयकुलाम्भोधेरित्यारोपश्च ॥

---

भेदान्तरसांकर्यशङ्कानिरासार्थमारोपलक्षणमाह। विषयेति। विषयः प्रकृतो माणवकादिः। विषय्यप्रकृतो वह्न्यादिः। तयोरभिहितयोरपह्नुतभेदतया सामानाधिकरण्येनोक्तयोरित्यर्थः। एतेनाध्यवसायाद्भेद उक्तः। प्रसङ्गात् तस्यापि लक्षणमाह। विषयेति। विषयस्य निगरणमत्यन्तापलापस्तेनाभेदप्रतिपत्तिर्विषयिण इति सामर्थ्याल्लभ्यते। न चायं जहल्लक्षणाभेदः। अत्र सादृश्यादिनिबन्धनस्य वस्त्वन्तरे वस्त्वन्तरोपचारस्य विद्यमानत्वात्। साध्यवसायलक्षणामुदाहरति। काकतीयेति। उदयमभ्युदयं पूर्वपर्वतं चोपेयुषा प्राप्तवता। कुवलयोल्लासो भूमण्डलाह्लादः कैरवविकासश्च। अत्रैष चन्द्रमा इत्येतच्छब्देन चन्द्र एव पुरोवर्त्यभेदाध्यवसायेनेदन्तया विशिष्यते। न तु राजा विवक्ष्यते। अन्यथा सारोपत्वप्रसङ्गात्। अतस्तादृशचन्द्र एव निगीर्णविषयतया ऐकरस्येन प्रतीयते। सर्वमेतन्मनसि निधायाह। अत्रेति। लक्षणान्तरयोगे विच्छित्तिविशेषोऽस्तीत्यभिप्रायेणाह। काकतीयेति ॥

---

१ चन्द्रकलङ्क° P., T., T'. २ कुरङ्गरूपे कलङ्के M., ३ °रूपकुरङ्गे R. ४ साध्यवसाय° R., T., T'. ५ °रित्यत्रारोपः R. ६ च is omitted in P., T., T'. ७ P. drops सांकर्य. ८ रूपतया t.; °रूपतया कथंचन m.

## अथ व्यञ्जनावृत्तिः ।

अन्वितेषु पदार्थेषु वाक्यार्थोपस्कारार्थमर्थान्तरविषयः शब्दव्यापारो व्यञ्जनावृत्तिः ।

सा त्रिविधा[1] । शब्दार्थोभयशक्तिमूलत्वेन[2] ।

तत्र शब्दशक्तिमूला[3] यथा ।

> वाहिन्यः काकतीन्द्रस्य सर्वतोमुखसंभ्रमाः ।
> कुर्वन्त्युद्यत्कबन्धाढ्यं प्रतिपक्षबलार्णवम् ॥ १२ ॥

---

व्यञ्जनावृत्तेर्लक्षणमाह । अन्वितेष्विति । पदार्थेषु पदैरभिहितेषु । अन्वितेष्वाकाङ्क्षादिवशान्मिथः संबद्धेषु सत्सु । समन्वयशक्त्या वाक्यार्थे प्रतीत इत्यर्थः । यद्वार्थप्रकरणादिना प्राकरणिकार्थपर्यवसितेष्वित्यर्थः । एतेनाभिधान्वयशक्त्योः सति संभवे लक्षणायाश्चानन्तरभावी व्यञ्जनाव्यापार इति सूचितम् । लक्षणा तु समन्वयशक्तिसमर्पितान्वयविधुरीकरणधुरीणत्वादन्वयशक्त्यनन्तरभाविन्येवेत्यवोचन्नभिनवगुप्ताचार्यपादाः । वाक्यार्थस्य काव्यशरीरभूतस्योपस्कारार्थं शोभार्थं व्यङ्ग्यरहितस्य काव्यस्यानात्मकशरीरवदचारुत्वादिति[4] भावः । वाच्यलक्ष्याभ्यामन्योऽर्थोऽर्थान्तरं व्यङ्ग्यं तद्विषयः शब्दव्यापारः । अत्र शब्दग्रहणमर्थस्याप्युपलक्षणार्थम् । अज्ञातार्थस्य शब्दस्य विशिष्टस्य शब्दानभिधेयस्य चार्थस्य व्यञ्जकत्वायोगादुभयव्यापारस्याभ्युपगमात् । किं तु शब्दार्थशक्तिमूलयोर्यथायोगमेकस्य प्राधान्यमितरस्य सहकारित्वमुभयशक्तिमूलेऽपि तत्तद्दशयोरेवमेव विभागो द्रष्टव्यः । व्यञ्जनावृत्तिं विभजते । सा त्रिविधेति[5] । अत्रानेकार्थस्य शब्दस्यार्थप्रकरणादिभिरप्रकृतार्थवाचकत्वे निवारितेऽपि तत्प्रतीतिर्यत्प्रसादल्लब्धा सा शब्दशक्तिमूला । वक्तृबोद्धव्यादिवशात् सहृदयानामर्थान्तरप्रतीतिहेतुर्वाच्याद्यर्थव्यापारोऽर्थशक्तिमूला । उभयसंबन्धे तूभयशक्तिमूलेति विवेकः । तत्र[6] शब्दशक्तिमूलामुदाहरति । वाहिन्य इति । नदीपक्षे सर्वतोमुखस्योदकस्य संभ्रमो यासां ता इति व्यधिकरणो बहुव्रीहिः । अर्शआदित्वाद्वा मत्वर्थीयोऽच्प्रत्ययः । सर्वमन्यत् स्वयमेव व्याचक्षाणो व्यञ्जनावृत्तेः[7] शब्द-

---

१ विधा T'. २ °मूलकत्वेन M., T., T'. ३ °मूलकत्वं $M_2$. ४ °नात्मशरीर° p., M. ५ त्रिधेति p., m., $m_2$. ६ अत्र m. ७ व्यञ्जनवृत्तेः p., m., $m_1$, $m_2$.

अत्र वाहिनीसर्वतोमुखकबन्धशब्दानामर्थप्रकरणादिना सैन्यसर्वव्यापित्वलूनमस्तकदेहपराणां वाचकत्वे नियन्त्रितेऽपि शब्दशक्तिमूला नदीजलप्रतिपत्तिर्यथा जायते सा व्यञ्जनावृत्तिः । प्राकरणिकार्थपर्यवसिताभिधा न शक्तोत्यप्राकरणिकार्थप्रतिपत्तिं कर्तुमप्राकरणिकार्थस्यापि वाक्यार्थशोभार्थं वक्तुर्विवक्षितत्वात् । अन्यतस्तदप्रतीतेर्व्यञ्जनाख्यं व्यापारान्तरं शब्दस्यैव कल्प्यते । नात्र लक्षणावृत्तिः संभवति । वाच्या-

शक्तिमूलत्वं विविनक्ति । अत्रेत्यादिना । वाहिनीसर्वतोमुखकबन्धशब्दानामिति । अनेकार्थानामिति शेषः । अर्थः प्रयोजनम् । प्रकरणं प्रस्तावः । आदिग्रहणादर्थनिर्णायकाः संयोगादयो गृह्यन्ते । तदुक्तं वाक्यपदीये ।

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥'

इति । एतेषामुदाहरणप्रपञ्चः काव्यप्रकाशिकादौ द्रष्टव्यः । वाचकत्वेऽप्रकृतनदीजलवाचकत्वे इत्यर्थः । नियन्त्रिते निवारिते सत्यपि यतस्तत्प्रतिपत्तिर्जायते सा शब्दशक्तिमूला व्यञ्जनावृत्तिरिति योजना । अन्यथोद्देश्यविधेयभाववैपरीत्यापत्तेः । नन्वभिधा लक्षणा वा प्रसिद्धैवाप्रकृतेऽर्थान्तरेऽपि प्रवर्ततां किमप्रसिद्धेन व्यञ्जनाव्यापारेणेत्याशङ्क्य क्रमेण दूषयति । प्राकरणिकेत्यादिना । ननु मा भूदप्रकृतार्थप्रतीतिर्यदर्थं व्यापारान्तरकल्पनेत्यत आह । अप्राकरणिकेति । व्यङ्ग्यरहितस्य काव्यत्वस्यैवाभावादिति भावः । शब्दान्वयव्यतिरेकानुविधायकत्वात् शब्दस्यैवायं व्यापार इत्याह । अन्यत इति । अन्यतः शब्दव्यतिरिक्तादित्यर्थः । अथ लक्षणां प्रतिक्षिपति । नात्रेति । तत्र मुख्यार्थबाधाभाव एव हेतुरित्याह । वाच्येति । नन्वेकस्मिन् वाक्ये व्यापारभेदेनानेकार्थप्र-

१ तत्र T'. २ शब्दादीनां मुख्यप्रकरणा° $M_g$; शब्दानां मुख्यप्रकरणा° T'. ३ T' has सर्वतोमुख for सर्वव्यापित्व. ४ प्रतीति° $M_p$. ५ प्रतिपत्तिर्यो जायते P., T., T'; प्रतिपत्तिर्जायते R., $M_g$; प्रतिपत्तिस्ततो जायते $M_g$. ६ प्राकरणिके न पर्यवसि° $M_g$. ७ पर्यवसायिना $M_p$. ८ °ताभिधाशक्तिः T'. ९ न शक्ताप्राक° P., $M_b$; शक्ता नेत्यप्राक° M. १० प्रमितिं $M_b$; प्रतीतिं $M_g$. ११ तदन्यत° R. १२ °न्यतः प्रमाणात्तद° $M_b$; °न्यतस्तत-स्तद° M. १३ व्यञ्जनाख्यापारा° P. १४ वृत्तिः is omitted in R., $M_p$, T., T'. १५ प्रस्तावः प्रकरणम् p. १६ काव्यप्रकाशादौ m. १७ व्यञ्जन° m. १८ काव्यवाक्यत्वस्यैवा° t., काव्यस्यैव m. १९ °विधायिक° t.

नुपपत्त्यभावात् । नात्र व्यापारद्वयेनार्थप्रतिपादने वाक्यभेदः । प्रयो-
क्तुर्विवक्षापरतन्त्रत्वाल्लौकिकवाक्यानाम् ॥

---

तिपादने वाक्यभेददोषः स्यादित्यत आह । नात्रेति । अत्र हेतुमाह । प्रयोक्तु-
रिति । पौरुषेयवाक्यानां प्रयोक्तृपरतन्त्रत्वाच्छ्वेतो धावतीत्यादिवदनेकार्थत्वं न
दोषायेति भावः । ननु शब्दशक्तिमूले ध्वनौ प्रकृताप्रकृतौ द्वावप्यर्थौ वाच्यौ ।
तत्राप्रकृतार्थाभिधाने वाक्यस्यासंबन्धार्थाभिधायित्वं मा प्रसाङ्क्षीदिति प्रकृत-
स्याप्रकृतेन सहोपमारूपणादिकं व्यङ्ग्यतया कल्प्यते । तच्च व्यङ्ग्यमन्यथासिद्धं
चेच्छ्लेष एव । यथा

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

इत्यत्र जलवाचिना विषशब्देनाप्रकृतगरलार्थाभिधाने यदसंबन्धार्थाभिधायकत्वं
तज्जलदभुजगेति वाच्येन रूपकेणैव निराकृतमिति व्यङ्ग्यस्यावकाशाभावा-
च्छ्लेष एवायमित्युक्तं ध्वन्याचार्यैः । तद्वदत्रापि वाहिन्यादिशब्दानामर्थान्तरा-
नभिधाननिबन्धनस्य प्रतिपक्षबलार्णवमिति रूपकेणैव निराकरणाच्छ्लेष एव
युज्यते । किं चालंकारसर्वस्वकारोऽपि विद्वन्मानसहंसो वीर इत्यत्र राज्ञो
हंसत्वेन रूपणं मानसमेव मानसं सर इत्यर्थद्वयप्रतिपादकस्य श्लेषस्य निमित्तम् ।
अतोऽत्र रूपकमेव । भ्रमिमरतिमित्यादौ तु विषशब्दस्य गरलार्थाभिधानं भ्रम्या-
दिकार्याष्टकनिबन्धनं न पुनर्जलदभुजगेति रूपकहेतुकम् । अतः श्लेष एवायं न
रूपकमित्यवोचत् । अत एवोक्तं तद्व्याख्याने चक्रवर्तिना—

‘रूपकं पूर्वसंसिद्धं श्लेषमुत्थापयेद्यदि ।
तदा रूपकमेव स्यादन्यथा श्लेष इष्यते ॥’

इति । तन्मतावलम्बने तु वाहिन्यादिशब्दानामर्थान्तराभिधाने निमित्तान्तरा-
भावाद्रूपकहेतुत्वाच्च रूपकालंकारतैवोचिता । अतः पक्षद्वयेऽपि न ध्वनित्वशङ्काव-
काश इति चेत् सत्यमप्रकृतार्थस्य तेन सहोपमादेरलंकारस्य च व्यङ्ग्यत्वमिति
केचित् तदुक्तं काव्यप्रकाशे । ‘शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेय-
स्यार्थान्तरस्य तेन सहोपमादेरलंकारस्य च निर्विवादं व्यङ्ग्यत्वम्’ इति । अत
एवासाविदमेवोदाहरणं प्रयुज्य व्यङ्ग्यभाविनोरर्थान्तरालंकारयोर्मध्येऽलंकारस्य

---

१ °प्रतिपादनवाक्यभेदः $M_4$, $M_5$. २ प्रयोक्तृविवक्षा P., M., T., T'. ३ °मूलध्वनौ P. ४ °मलसहृदतां T. ५ इहालंकार° p. ६ m. drops एव. ७ पूर्वसंबन्धं m. ८ ध्वनिशङ्का° p. ९ °शङ्काकलङ्कावकाश m. १० °मेवोदाहृत्य. p., T.

अर्थशक्तिमूला[1] व्यञ्जनावृत्तिर्यथा[2][3]

> श्रुत्वा काकतिभूभर्तुः क्षोणीपाणिग्रहोत्सवम् ।
> अङ्गुष्ठेनालिखन् भूपाः पादपीठीं[4] नताननाः ॥ १२ ॥

---

जलदभुजगेति रूपकेणाभिहितत्वादप्रकृतगरलार्थेऽभिधायाः कुण्ठीभावाद् व्यञ्जनाव्यापारविषयत्वेनार्थान्तरमेव व्यङ्ग्यम् । तच्च वाच्यस्य जलदभुजगेति रूपकस्य साधकत्वाद्वाच्यसिद्ध्यङ्गं नाम गुणीभूतव्यङ्ग्यमित्यवोचत् । तद्वदत्रापि वाहिन्यादिशब्दगम्यस्य नद्याद्यर्थान्तरस्य प्रतिपक्षबलार्णवमिति रूपकसाधकत्वात् पूर्वोक्तमेव गुणीभूतव्यङ्ग्यं भविष्यतीति न दोषः । नन्वेवमपि ध्वन्युदाहरणप्रस्तावे मध्यमकाव्योदाहरणं किमर्थं क्रियत इति चेदस्तु तद्वा तादृग्वा कोऽन्यत्र विशेषः । व्यङ्ग्यसामग्रीमात्रप्रदर्शनपराणामस्माकमुभयत्र प्रयोजनसिद्धेः । उत्तममध्यमविवेकः पुनरुत्तरत्र भविष्यति । नन्वेवमपि शान्तिकर्मणि वेतालोदयः यदत्र द्वयोरप्यर्थयोः प्राकरणिकत्वेनाप्राकरणिकत्वेनोभयविधत्वेन च त्रिविधः श्लेषः । तत्र तृतीयं भेदमनङ्गीकुर्वतः काव्यप्रकाशकारस्य मतेऽर्थान्तरमस्तु व्यङ्ग्यम् । अभिमतोभयश्लेषस्य भवतः पूर्वापरविरोधः स्यात् । यदुत्तरत्र भवानेव ब्रवीति ।

> नीराजयन्त्यत्रपुरीरमण्यः
> प्रदीपजालैर्वरवीररुद्रम् ।
> चन्द्रानना गोत्रपतिं रजन्य-
> स्तारागणैर्मेरुमिव स्फुरद्भिः ॥

इत्यत्रोभयश्लेष इति । न च शब्दशक्तिमूलध्वनेरनवकाशत्वम् । यत्र विशेष्यस्यापि श्लिष्टत्वं तत्र तस्यावकाशसंभवात् । यथा

> राजमौलिरसौ भाति रुद्रदेवो जगत्पतिः ।

इति । एवं च सतीहान्ययोदाहरणं परीक्षकप्रतिभापरीक्षार्थमेवेत्यलमतिप्रसङ्गेन ॥

अर्थशक्तिमूलामुदाहरति । श्रुत्वेति । अत्र नताननत्वादेरनुभावस्यानेककार-

---

[1] °मूलव्यञ्जना° $M_1$. [2] व्यञ्जनवृत्ति° $M_5$; $M_4$ drops व्यञ्जनावृत्तिः. [3] R. drops वृत्तिः. [4] पादपीठं $M_1$, $M_4$, $M_5$; पादपीठे $M_3$.

अत्र भूपा विषण्णा इत्यर्थशक्त्या व्यज्यते । न चार्थशक्तिमूले व्यञ्जनेऽनुमानशङ्का । व्यङ्ग्यव्यञ्जकयोरविनाभावाभावात् । नम्राननत्वादिकार्यस्यानेककारणकत्वात् । नियतकारणप्रतीतिर्विवक्षानुगृहीताच्छब्दादेव । किं चैकस्मादेव व्यञ्जकात् तत्तत्प्रतिपत्तुर्विवक्षानुसारेणानेकव्यङ्ग्यार्थप्रतीतिरनुमानपरिपाटीविरुद्धा । न चाभिधावृत्तिः संकेतितार्थ

---

णकत्वसंभावनया झटिति कारणविशेषाप्रतीतौ वीररुद्रविभोर्धरणिपरिणयश्रवणानुसारेण विषाद एव विश्रान्तेस्तस्य संलक्ष्यक्रमव्यङ्ग्यत्वम् । शब्दनियमानपेक्षणादर्थशक्तिमूलत्वं चेत्यभिप्रायेणाह । अत्रेति । तर्ह्यसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिरित्यस्य का गतिः । अत्र स्थायिभावव्यभिचारिभावविभावानुभाववशादाशुभाविनी रसाभिव्यक्तिः सैव गतिरिति रहस्यम् । तदुक्तमभिनवगुप्ताचार्यैः । 'यद्यपि रसभावादिरर्थो ध्वन्यमान एव भवति न वाच्यः कदाचिदपि तथापि न सर्वोऽसंलक्ष्यक्रमस्य विषयः' इत्यादिना । अत एव ध्वनिकारोऽपि

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥'

इत्यत्रोदाहरणे लज्जाख्यं व्यभिचारिभावमनुरणनव्यङ्ग्यत्वेनावोचत् ॥

व्यञ्जनव्यापारस्यानुमानत्वमङ्गीचकार महिमभट्टस्तन्मतं दूषयति । न चेति । अर्थशक्तिमूल इति । अर्थोऽभिधेयः स च वस्त्वलंकारध्वन्योर्वस्त्वलंकाररूपो रसादिध्वनौ तु विभावादिरूपश्चेति विवेकः । तन्मूले तत्सामर्थ्याक्षिप्त इत्यर्थः । अत एवोक्तं लोचने । 'वाच्यसामर्थ्याक्षिप्त इति भेदत्रयव्यापकं सामान्यलक्षणम्' इति । अनुमानत्वाभावे व्याप्त्यभावो हेतुरित्याह । व्यङ्ग्येति । तत्रापि हेतुमाह । नम्रेति । नम्राननत्वादिहेतोर्गुरुनमस्कारादावनैकान्तिकत्वाद् व्याप्त्यभाव इति भावः । तर्ह्यत्र विषादैकविषयप्रतीतिः कुत इत्यत आह । नियतेति । शब्दस्वरूपप्रकाशनेच्छा शब्देनार्थप्रकाशनेच्छा चेति द्विविधा विवक्षा । वाच्यो व्यङ्ग्यश्चेति द्विविधः प्रतिपाद्यः । चतुष्टयं चेदं शब्दानां विषयः । तत्र विवक्षाद्वयमनुमेयम् । प्रतिपाद्यद्वयं शाब्दमिति विवेकः । तदेतत् सर्वं ध्वन्याचार्यैः

---

१ °मूलव्यञ्जने R. २ व्यञ्जनयोः $M_1$. ३ नतानन° P. ४ अनियत° P. ५ °विवक्षितानु° T'. ६ तत्तत्प्रतीतिर्वक्तृ° $M_1$, $M_2$; तत्प्रतिपत्तुर्विवक्षा° R; तत्तद्व्यङ्ग्यार्थप्रतीतिर्वक्तृविवक्षानुसारेणभवति । इयमनेक° P., T., T' has the same reading, but it drops इयम् in इयमनेक°. ७ प्रतिपत्तिरनुमान° P., T., T'. ८ कथंचिदपि $m_2$. ९ लीलाख्यं p. १० अर्थमूल t., m. ११ वाच्ये t. १२ अत्रापि t. १३ °विषयत्व° m.

एव तस्याः परिचय इति गमनिका ।

उभयशक्तिमूला यथा ।

---

प्रपञ्चेन प्रतिपादितम् । 'द्विविधो हि विषयः शब्दानामनुमेयः प्रतिपाद्यश्च' इत्यादिना । तत्र शब्देनार्थप्रकाशनेच्छालक्षणया विवक्षयानुगृहीतात् तत्सहायादित्यर्थः । शब्दादिति । व्यञ्जकादित्यर्थः । दूषणान्तरमाह । किं चेति । यथास्तमेति गभस्तिमानित्युक्ते संध्यावन्दनविक्रेयवस्तूपसंहरणाभिसरणाद्यनेकार्थप्रतीतिर्यथाक्रमं विप्रवणिक्कामुकादीनामुत्पद्यते तथा वह्निमानयं प्रदेशो धूमवत्त्वादित्युक्ते न कस्याप्यर्थान्तरप्रतीतिरिति व्यङ्ग्यानुमेययोर्विलक्षणत्वादनुमानत्वं व्यञ्जनस्य विरुद्धमिति भावः ॥

मीमांसकाः पुनरभिधैव प्रतीयमानेऽपि प्रवर्तत इत्याहुस्तन्मतं दूषयति । न चेति । कुत इत्यत आह । संकेतितेति । आनन्त्यव्यभिचाराभ्यां प्रतिव्यक्ति संकेतानुपपत्तेः सामान्यरूपाणां केवलपदार्थानां संकेतगोचरत्वम् । ततस्तेषामाकाङ्क्षादिवशात् मिथोऽन्वये तत्संसर्गरूपो वाक्यार्थो लक्ष्यमाणः समुल्लसतीति भाट्टः । तदुक्तम् । 'तस्मात् पदैरभिहितैः पदार्थैर्लक्षणया वाक्यार्थः प्रतिपाद्यते' इति । अतस्तन्मतेऽपि स्वार्थसंसर्गरूपतया संनिकृष्टवाक्यार्थाभिधानेऽप्यसमर्थानां पदानामर्थान्तरत्वेन विप्रकृष्टस्य व्यङ्ग्यस्याभिधानं दूरापास्तमिति व्यञ्जनोपादानमेव समञ्जसमिति भावः । तदुक्तम् ।

'विशेषरूपं वाक्यार्थमपदार्थमपीच्छता ।
व्यक्तिरिष्टाभिधातोऽन्याभिहितान्वयवादिना ॥"

इति ।

प्राभाकराः पुनरन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिनिमित्तस्य वाक्यस्यैव प्रयोगयोग्यत्वात् तदन्तर्वर्तिनामेव पदानां पदार्थविशेषान्वितस्वार्थसंकेतपक्षे प्रतिवाक्यं स्वार्थस्य विशेषरूपत्वाद्वाक्यान्तरेष्वस्यार्थस्यैतद्वाचकमिति प्रत्यभिज्ञानुपपत्तेः पदार्थान्तरसामान्यान्विते स्वार्थे संकेतः । विशेषव्युत्पत्तिस्तु संबद्धानां पदार्थानां विशेषरूपत्वात् भविष्यतीत्याहुः । तन्मतेऽपि विशिष्टार्थाभिधायिनो वाक्यस्य स्वार्थसंनिकृष्टपदार्थाभिधानेऽप्यसमर्थस्य कुतो विप्रकृष्टार्थान्तराभिधानशङ्का । अतस्तेषामपि व्यञ्जनमवश्यमेष्टव्यमिति भावः । तदुक्तं काव्यप्रकाशे ।

---

१ इतीयती P., T., T.' २ तत्सहायादि° m. ३ °वादिनाम् P. ४ स्वार्थस्यापि विशेष° P.

विजितारिपुरो मूर्त्तौ विलसत्सर्वमङ्गलः ।
राजमौलिरसौ भाति रुद्रदेवो जगत्पतिः ॥

[1]अत्र विजितारिपुर इत्यर्थशक्तिमूलत्वं विलसत्सर्वमङ्गलो [3]राजमौलिरिति शब्दशक्तिमूलत्वमित्युभयशक्तिर्[4]मूलत्वम् । [5]अत्र प्रतापरुद्रशङ्करयोरुपमालंकारध्वनिः ॥

[6]अथ कैशिक्यादीनां स्वरूपं [7]निरूप्यते ।[8]

[9]अत्यर्थसुकुमारार्थसंदर्भा कैशिकी [10]मता ।
अत्युद्धतार्थसंदर्भा वृत्तिरारभटी स्मृता ॥ १५ ॥
[11]ईषन्मृद्वर्थसंदर्भा भारती वृत्तिरिष्यते ।
ईषत्प्रौढार्थसंदर्भा [12]सात्वती वृत्तिरिष्यते ॥ १६ ॥

[13]तत्र

अत्यन्तसुकुमारौ द्वौ शृङ्गारकरुणौ मतौ ।
अत्युद्धतरसौ रौद्रबीभत्सौ परिकीर्त्तितौ ॥ १७ ॥
हास्यशान्ताद्भुताः किंचित्सुकुमाराः प्रकीर्त्तिताः ।
ईषत्प्रौढौ समाख्यातौ रसौ वीरभयानकौ ॥ १८ ॥

यत्र शृङ्गारकरुणावतिकोमलेन [14]संदर्भेण वर्ण्येते तत्र कैशिकी[15] ।

---

'अनन्वितोऽर्थोऽभिहितान्वये पदार्थान्तरमात्रेणानितस्त्वन्विताभिधानेऽन्वितविशेषस्त्ववाच्य एवेत्युभयमतेऽप्यपदार्थ एव वाक्यार्थः' इत्यादि सर्वं मनसि निधायाह । इयतीति । गमनिका गम्यते ज्ञायतेऽनयेति गमनी गतिः । अल्पा गमनी गमनिका । करणे ल्युटि टित्वात् ङीपि "अल्पे" इति कनि च "केऽणः" इति ह्रस्वः ॥

उभयशक्तिमूलामुदाहरति । विजितेति । अत्र प्रकृते निर्जितारातिनगरोऽ-

---

१ M. notices जातः. २ $M_{5}$. omits अत्र. ३ राजमौलिरसौ भातीति $M_{5}$. ४ 'मूला M., $M_{5}$. ५ अत्र is dropped in $M_{1}$, $M_{2}$, $M_{4}$, $M_{5}$. ६ T' has कैशिक्यादित्रयः before अथ. ७ निगद्यते R. ८ R. has तत्र after निरूप्यते. ९ अत्यन्त° $M_{1}$. १० मता P., T'. ११ The order of the two distichs is reversed in P. १२ सात्त्विकी $M_{1}$. १३ तत्र is omitted in P., $M_{3}$, T., T'. अत्र $M_{1}$. १४ संदर्भेणैव $M_{1}$. १५ $M_{3}$ has वृत्तिः after it.

यत्र रौद्रबीभत्सावतिप्रौढेन संदर्भेण प्रतिपाद्येते तत्रारभटी । यत्र नातिसुकुमारा हास्यशान्ताद्भुता नातिसुकुमारेण संदर्भेण संग्रथ्यन्ते तत्र भारती । यत्र नातिप्रौढौ वीरभयानकौ नातिप्रौढेन संदर्भेण निर्बो-ध्येते तत्र सात्वती ।[6]

[7]कैशिकी यथा ।

> जितमदनविलासं काकतीयान्वयेन्दुं
>   नरपतिमनिमेषं द्रष्टुमाशंसिनीनाम् ।
> सपदि विरचितासीदङ्गनानामपाङ्गै-
>   र्दिवि कुवलयदामश्यामला तोरणश्रीः ॥ १९ ॥

---

न्यत्र त्रिपुरान्तकः । मूर्तौ विलसत्सर्वमङ्गलः कल्याणमूर्तिरित्यर्थः । अन्यत्र पार्वतीपरिच्छिन्नार्धदेह इत्यर्थः । राजमौली राजोत्तमः । अन्यत्र चन्द्रशेखरः । अर्थशक्तिमूलत्वमिति । शब्दपरिवृत्तिसहिष्णुत्वादिति भावः । अत्र प्रतीयमानेनाप्रकृतेन शङ्करेण प्रकृतस्य राज्ञ उपमानोपमेयभावो यथेवादिवाचकाप्रयोगात् गम्यत इत्याशयेनाह । प्रतापेति ॥

अथ संग्रहकारिकोद्देशक्रमप्राप्तौ गुणालंकारौ बहुवक्तव्यत्वेनोपेक्ष्य सूचीकटाहन्यायेनादौ वाग्वृत्तिशब्दवाच्यत्वसाम्यात् शब्दवृत्तिनिरूपणानन्तरं कैशिक्यादिस्वरूपनिरूपणं प्रतिजानीते । अथेत्यादिना । गतार्थमेतत् ॥

कैशिकीमुदाहरति । जितेति । जितमदनविलासमित्यनेन सूचितैर्लोकोत्तररूपयौवनाद्युद्दीपनविभावैर्नरपतिमङ्गनानामिति चालम्बनविभावैरनिमेषं द्रष्टुमाशंसिनीनां कामिनीनामित्यौत्सुक्यादिव्यभिचारिभावैर्दिवि कुवलयैरुपमामूषितैरपाङ्गैरित्यनुभावैश्चासंयुक्तकोमलवर्णसंदर्भसंस्कृतैः प्रतीयमानो रससार्वभौमः शृङ्गारः काकतीयान्वयेन्दुं नरपतिं चेति विशेषणद्वयसूचितमहाकुलीनतादिगुणगरिमगम्भीरविदग्धनायकविषयतया परिपोषातिभूमिमनुभवतीत्यत्रेयं कैशिकी ॥

---

१ The sentence defining भारती follows that defining सात्वती in P. २ प्रतिपाद्यन्ते R.; समर्प्यन्ते M., $M_3$, $M_4$; बध्यन्ते $M_5$. ३ नातिप्रौढेन संदर्भेण नातिप्रौढौ वीरभयानकौ M., $M_3$. ४ अनतिप्रौढेन $M_3$. ५ प्रतिपाद्येते R. ६ M. has इति after this. ७ तत्र कैशिकी P., T'; तेषु कैशिकी $M_4$. ८ 'मनिशं तं M. ९ राजसत्तमः M. १० समाहृतैः M.

आरभटी यथा ।

> [1]खड्गाघातनिकृत्तशात्रवशिरोनिष्ठ्यूतरक्तच्छटा-
> [2]जालैरुद्भटशस्त्रघट्टनभवत्स्फारस्फुलिङ्गोत्करैः ।
> स्त्यानासृक्पिशितास्थिखण्ड[3]विकटस्थूलो[4]ज्ज्वलाङ्गारकै-
> रुद्दण्डश्चलमर्तिगण्डनृपतेः क्रोधाग्निरायोधने ॥ २० ॥

भारती [5]यथा ।

> औन्नत्यं महदन्यदेव महितः कोऽप्येष गंभीरिमा
> काप्यन्या सरणिः प्रतापयशसोरन्यैव [6]बाह्वोः प्रथा ।
> सर्वं नूतनमेव रुद्रनृपतेर्जाने न तन्निर्मितौ
> सामग्री [7]चतुराननस्य कियती [8]कीदृक्क्रमा कल्पिता ॥ २१ ॥

---

आरभटीमुदाहरति । खड्गेति । अत्र लालादिनिरसनवाचिना निष्ठ्यूतशब्दे-नोपचारान्निर्गमनमात्रमुच्यते इति चारुत्वातिशयः । तदुक्तं दण्डिना ।

> ‘ निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
> अतिसुन्दरमन्यत्र ग्राम्यकक्ष्यां विगाहते ॥’

इति । स्त्यानं घनीभूतमसृक् येषां पिशितास्थिखण्डानामिति बहुव्रीहिः । चल-मर्तिगण्डेति शौर्यातिशयसूचकं विरुदनाम । अत्र खड्गादिशस्त्रोल्लासादिसूचितो रौद्रो रक्तमांसादिसूचितो बीभत्सश्च परस्परं प्रधानोपसर्जनभावमापन्नौ परुष-वर्णविकटबन्धेन प्रतिपाद्येते ॥

भारतीमुदाहरति । औन्नत्यमिति । अत्र सर्वत्र यथाक्रमं किमन्यशब्दावनि-र्वचनीयत्वलोकोत्तरत्वप्रतिपादकौ । अत एव रुद्रनृपतेः संबन्धि सर्वमौन्नत्यादिकं नूतनमेव सामग्रीति ब्राह्मणादिष्यञन्तात् सामग्र्यशब्दात् स्त्रियां ङीष्प्रत्ययो वैक-ल्पिकः षित्करणसामर्थ्याल्लभ्यते । तदुक्तं वामनेन । ‘ ष्यञः षित्करणादीकारो बहुलम् ’ इति । जाने इति । “ अनुपसर्गात् ज्ञः ” इत्यात्मनेपदम् । अत्र संयुक्तमृदुवर्णबन्धेनाद्भुतरसप्रतिपादनात् भारती ॥

---

१ खड्गापात° M. २ °ज्वाले° M., $M_5$, $M_6$, $M_9$. ३ °विकटैः R. ४ °रुग्णज्वल° T'. ५ यथा is dropped in M. ६ बाह्वो P., R. ७ चतुराननेन T. ८ कीदृक् क वा P., T ; कीदृक्क्रमात् कल्पिता M.

सात्वती[1] यथा।

दूरादाकर्ण्य विश्वप्रसृमरमहसो वीररुद्रस्य जैत्र-
प्रस्थानारम्भभेरीनिनदमरिनृपाः पूर्णकर्णज्वरार्त्ताः।
आरुह्याद्रीन् विशन्तो गहनमतिमहत्कण्टकाकृष्टकेशा-
स्त्रायध्वं मुञ्चतेति प्रतिनृपतिधिया पादपान् प्रार्थयन्ते॥ २२॥

मध्यमारभटी[3] त्वन्या तथा मध्यमकैशिकी।
वृत्ती इमे उभे[4] सर्वरससाधारणे मते[5]॥ २३॥[6]

मृद्वर्थेऽप्यनतिप्रौढबन्धा मध्यमकैशिकी।

शृङ्गारकरुणयोरतिसुकुमारयोरल्पप्रौढत्वं[7] न दूष्यते। किं त्वतिप्रौढ-संदर्भो[8] नेष्यते[9]। प्रतिकूलवर्णरूपदोषापत्तेः[10]॥

मध्यमारभटी प्रौढेऽप्यर्थे नातिमृदुक्रमा॥ २४॥

अतिप्रौढयोरपि रौद्रबीभत्सयोरीषन्मृदुबन्धो न दूष्यते[11]। अतिमृदु-[12]संदर्भस्तु विरुद्धः।[13]

सात्वतीमुदाहरति। दूरादिति। विश्वप्रसृमरमहसो विश्वव्यापितेजसः। "सृघस्यदः क्मरच्"। जैत्रयात्रारम्भभेरीझाङ्काराकर्णनेनैव कान्दिशीकानाम-रिभूपतीनां दूरत एव समरकथेति भावः। अत्र विकटबन्धपरुषवर्णसंदर्भेण भयानकप्रतिपादनात् सात्वती॥

अथ मतान्तरानुसारेण सर्वरससाधारणं वृत्तिद्वयमाह। मध्यमेति। अनयोः क्रमेणैषत्कोमलेषत्प्रौढयोरतिप्रौढातिकोमलरसानुप्रवेशो न विरोधायेति व्युत्क्र-मेण प्रतिपादयति। मृद्वर्थ इत्यादिना। न दूष्यते[14] इत्येतदध्याहृत्य व्याचष्टे। शृङ्गारेति। किं तर्हि दुष्टमित्याकाङ्क्षायामाह। किं त्विति। विपक्षे दण्ड-माह। प्रतिकूलेति। रसाननुगुणत्वं प्रातिकूल्यम्। एतद्वैपरीत्यं मध्यमारभट्या-मित्याह। मध्यमेति।

१ सात्विकी M., $M_4$. २ °बद्ध° R. ३ कैशिकी मध्यमा त्वन्या मध्यमारभटी तथा। P. ४ उभे वृत्ती इमे M., $M_3$, $M_2$. ५ स्मृते M., $M_4$. ६ After this अनयोः स्वरूपं in p. आसां स्वरूपं in T., T′. ७ °प्रौढसंदर्भतो न M. ८ °संदर्भतो M. ९ न दुष्यति R. १० प्रतिकूलसंदर्भवर्णरूप° P. ११ दुष्यति R., P. १२ किं त्वति° $M_1$. १३ After विरुद्धः P., T′, and T. have यथाक्रममुदाहरणानि। १४ दूष्यतीत्ये° M.

[1]मध्यम[2]कैशिकी यथा ।

आसन्नेऽपि महोत्सवे कथमितस्त्यक्त्वा प्रवासं [3]व्रजे-
धिग् धिक् साहसमावयोर्विघटनं को[4] वा विधिः काङ्क्षति[5] ।
इत्थं स्वप्ननिवारितप्रियतमप्रस्थानबुद्धिस्ततो
बुद्ध्वा मूर्च्छति काकतीयनृपते त्वद्वैरिनारीजनः ॥ २५ ॥

मध्यमारभटी यथा ।

मांसकीकस[6]संकीर्णाः प्रस[7]रद्रुधिरापगाः ।
वसाकर्दमिता युद्धे[8] भुवोऽन्ध्रसुभटैः कृताः ॥ २६ ॥

एवं [9]रसान्तरेष्वप्युदाहरणं द्रष्टव्यम् ॥

वैदर्भ्यादिरीतीनां [10]शब्दगुणाश्रितानामर्थविशेषे[11]निरपेक्षतया केवलसं-

---

मध्यमकैशिकीमुदाहरति । आसन्न इति । त्यक्त्वा महोत्सवमिति शेषः । इतः सर्वसौभाग्यनिधेर्निवासादित्यर्थः । कथं प्रवासं व्रजेः । गर्हितमेतदिति भावः । " विभाषा कथमि लिङ् च " इति गर्हायां लिङ् । धिग्धिगिति " नित्यवीप्सयोः " इत्याभीक्ष्ण्ये द्विरुक्तिः । को वा विधिरिति । न त्वमेवं साहसिक इति भावः । त्वद्वैरिनारीजनस्त्वया वियोजितभर्तृक इति शेषः । अत्रेषत्प्रौढसंदर्भेण शृङ्गारसंकीर्णः करुणो रसः प्रतिपाद्यते ॥

मध्यमारभटीमुदाहरति । मांसेति । अत्रेषन्मृदुसंदर्भेण बीभत्सः प्रतिपाद्यते ॥

अथ वैदर्भ्यादीनां मतभेदेन वृत्तिशब्दवाच्यत्वसाम्यात् कैशिक्याद्यनन्तरं तन्निरूपणं चिकीर्षुः प्रथमं तावत्तदन्तर्भावं वारयति । वैदर्भ्यादीति । तत्स्वरूपमाह । शब्दगुणाश्रितानामिति । माधुर्यादिपरतन्त्राणामित्यर्थः । यद्यपि सहृदयहृदयानामाह्लादकः शृङ्गारादिधर्मो माधुर्यं चित्तविस्ताररूपदीप्तिजनको रौद्रादिधर्म ओजः शुष्केन्धनानलवदमलजलवद्वा यथायोगं [12]सहसा सहृदयहृदयव्यापी सर्वरसधर्मः प्रसादस्तथापि तेषां शब्दगुणत्वमात्मधर्मस्य शौर्यादेराकारधर्मत्व-

---

१ तत्र मध्यम° P., T., T². २ मध्यमा कैशिकी M., $M_1$, $M_2$. ३ व्रजेद् P., M., $M_1$, $M_2$. ४ कस्माद्विधिः P. ५ काङ्क्षते R. ६ संकीर्णप्रसर° $M_1$, $M_2$. ७ प्रस्रवद्रु° R., P. ८ यद्भुवो R., $M_1$. ९ रसान्तरेऽप्यु° R., M., $M_2$. १० सर्वशब्द° M., $M_2$. ११ °निरपेक्षत्वेन M. १२ M. omits सहसा.

दर्भसौकुमार्यप्रौढत्वमात्रविषयत्वात् कैशिक्यादिभ्यो भेदः । संदर्भस्यातिमृदुत्वमसंयुक्तकोमलवर्णबन्धत्वम् । अतिप्रौढत्वं परुषवर्णविकटबन्धत्वम् । संयुक्तमृदुवर्णेष्वीषन्मृदुत्वम् । अविकटबन्धपरुषवर्णेष्वीषत्प्रौढत्वम् ॥

अथ रीतीनां स्वरूपमुदाहरणं च ।

रीतिर्नाम गुणाश्लिष्टपदसंघटना मता ।

सा त्रिधा । वैदर्भी गौडी पाञ्चाली चेति ।

---

मिवौपचारिकम् । तदुक्तं ध्वन्याचार्यैः । 'शब्दधर्मत्वं चैषामन्याश्रितत्वेऽपि शरीराश्रितत्वमिव शौर्यादीनाम्' इति । तदाश्रितत्वं तासां काव्यप्रकाशे

'माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा कोमला परैः ।
केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः ॥'

इति । फलितमाह । अर्थविशेषेति । माधुर्यादिपर्यवसितत्वेन शृङ्गारादिनिरपेक्षत्वादित्यर्थः । वैदर्भ्यादीनां रसाश्रितमाधुर्यादिशब्दधर्मपरत्वं कैशिक्यादीनां तु साक्षादेव रसपरत्वमिति महान् भेद इति भावः । तदुक्तं ध्वन्याचार्यैः ।

'शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वाश्रयाः पराः'

इति ।

टवर्गवर्जिताः स्पर्शाः स्वस्ववर्गान्त्यशेखराः ।
लघुरेफणकारौ च कोमलाः परिकीर्तिताः ॥
रेफेण यस्य कस्यापि योग आद्यतृतीययोः ।
स्वोत्तराभ्यां तुल्ययोर्वा परुषाष्टगणः शषौ ॥

इति कोमलवर्णपरुषवर्णसंग्रहः । यद्वा शब्दः पदरचनात्मकः । तद्गुणा ओजःप्रसादादयः । यदाह वामनः । 'ओजःप्रभृतयो बन्धगुणाः' इति ॥

अथ रीतिसामान्यलक्षणमाह । रीतिरिति । गुणाश्लिष्टपदसंघटना माधुर्यादिपरतन्त्रशब्दसंदर्भ इत्यर्थः । यद्वा ओजःप्रसादादिविशिष्टपदरचनेत्यर्थः ॥

---

१ °विषयकत्वात् T'. २ पदसंदर्भस्य R. ३ अतिविकट' M., $M_1$, $M_2$, $M_4$, $M_5$. ४ बन्ध is omitted in P., T., T'. ५ T., T'. have अथ वैदर्भ्यादिरीतयः before this. ६ °वर्णसंघटना M., $M_2$, $M_4$, $M_5$. ७ संदर्भजातिता R., संघट्टना मता P., $M_1$. ८ सा त्रिधा is omitted in M., $M_1$, $M_2$, $M_4$, $M_5$. ९ त्रिविधा T'. १० चासां T. ११ °वर्णैर्घटना माधुर्येष्यते m. ११ कोमलाक्षरैः m. १२ कोमलौ परिकीर्तितौ m., कोमलत्वेन कीर्तिताः $m_2$. १३ परुषाष्टगणाः m. १४ 'संघट्टना' m.

बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता ।
नातिदीर्घसमासा च वैदर्भीरीतिरिष्यते ॥ २७ ॥

यथा

काकतीयनरेन्द्रस्य कीर्त्तिचन्दनचर्चनम् ।
दिगङ्गना वितन्वन्ति वतंसीकृततद्गुणाः ॥ २८ ॥

यथा वा

वितरणगुणलीलातोषिताशेषलोके
विभवति नरनाथे काकतीयान्वयेन्दौ ।

---

विदर्भादिदेशीयविदग्धजनपरिग्रहेण वैदर्भ्यादिसंज्ञकानामेतासां विशेषलक्षणानि विषयव्याहृत्यर्थं प्रत्येकमुदाहरणद्वयं च क्रमेणाह । बन्धेति । बन्धपारुष्यं दुःसन्धिकृतं शब्दकाठिन्यं परुषवर्णारब्धम् । नञर्थस्य नशब्दस्यातिदीर्घसमासेत्यनेन "सुपसुपा" इति समासः । एतेनात्रासमासा मध्यमसमासा च विवक्षितेति बोद्धव्यम् । तदुक्तम् ।

'अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ।'

इति । उदाहरति । काकतीयेत्यादि । वतंसीकृतेत्यत्र

'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः'

इति वचनादकारलोपः । वितरणेति । विभवति प्रभौ सति । क्षितिसुरजना ब्राह्मणजनास्तेषां समूह इति जनशब्दान्तात् "ग्रामजन—" इत्यादिना तल्प्रत्ययः । "खण्डिकादिभ्यश्च" इत्यत्र सामूहिकेषु तदन्तविधिरस्तीति ज्ञापनात् । अत्रोदाहरणद्वयेऽपि कोमलवर्णैरल्पसमासैर्मृदुबन्धेन च कीर्त्यौदार्याद्युद्दीपनविभावव्यङ्ग्यशृङ्गारगताह्लादकत्वलक्षणमाधुर्यप्रतिपादनाद् वैदर्भी रीतिः । अत्र यद्यपि कीर्तिचन्दनचर्चनमित्यादौ रेफसंयोगः तोषिताशेषेत्यादौ शकारषकारौ चेत्येवमल्पशः परुषवर्णाः सन्ति तथापि न माधुर्यभङ्गः । अत एवानन्दवर्धनाचार्यैः

'शषौ च रेफसंयोगटवर्गश्चापि भूयसा ।
विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युताः ॥'

इत्यत्र भूयसेत्युक्तम् । एवमुत्तरत्राप्यूहनीयम् ॥

---

१ यथा च P., $M_3$. २ प्रभवति, M., $M_1$, $M_2$, $M_4$, $M_5$. ३ °न्वयेन्द्रे P., R., T., $M_1$. ४ यद्यप्यत्र m.; यद्यपि $m_1$. ५ सरेफसंयोगः m.

सुरतरुगणनायां कामधेनुप्रसंगे
क्षितिसुरजनतेयं वीतकौतूहलासीत्[1] ॥ २९ ॥

ओजःकान्तिगुणोपेता गौडीया रीतिरिष्यते ।

यथा ।

प्रचण्डतरदोर्दण्डखण्डितारातिमण्डलः ।
बिभर्त्युर्वीधुरं[2] गुर्वीं प्रभवन्नान्ध्रभूपतिः[3] ॥ ३० ॥

यथा वा[4] ।

उद्यद्दोःस्तम्भखड्गत्रुटदरिमुकुटाटोपसंजातराहु-
भ्रान्तिभ्रश्यत्पतङ्गाभयकरणचणस्फारनासीररेणुः ।
आन्ध्रक्ष्माभर्तुरासीदधिकरणधुरा भिन्नमत्तेभकुम्भ-
प्रोद्यन्मुक्तौघतारानिकरपरिवृताः[6] स्वर्वधूवक्त्रचन्द्राः[7] ॥ ३१ ॥

---

गौडीयामाह । ओज इति । ओजःशब्देन समासभूयस्त्वमुच्यते । कान्तिशब्देन चोद्भटपदत्वम् । उदाहरति । प्रचण्डेति । उर्वीधुरां[8] भूभारम् । "ऋक्-पुरब्धूर्—" इत्यादिना समासान्तोऽच्प्रत्ययः । उद्यदिति । अत्र खड्गोत्कृत्तप्रतिभटमुकुटेषु स्वर्भानुभ्रान्त्या कान्दिशीकस्य भानोरभयकरणचणत्वं नासीररेणोरुत्प्रेक्ष्यते । तेनास्य सूर्यास्तमयप्रतीतिजनकं तन्मण्डलावरणं गम्यते । ततश्च वीरवरणोत्सुकतया समागताप्सरोमुखानां चन्द्रत्वेन दलितेभकुम्भयुगलोद्गलितमौक्तिकानां तारात्वेन च रूपणाद्रणधुराया रजनीत्वं गम्यते । न चानेकनिशानाथकथनं दोषाय वीररुद्रविक्रमविह्वलीकृतचेतसां तद्वैरिवीराणां[9] तथात्वेन प्रतीतेः । अत्र परुषवर्णसंदर्भेण समासभूयस्त्वेन च रौद्ररसगतदीपकत्वलक्षणौजःप्रतिपादनाद्गौडीया ॥

---

१ नातिकौतूहला° M., M₂, M₄, M₅. २ धुरं P. ३ °ब्रन्ध° P., R., T., T'. ४ किं च P.; यथा च R.; यथा वा omitted in T'. ५ अन्ध° P., T., R., T'. ६ °परिवृताः P. ७ °चन्द्रः P. ८ उर्वीधुरं t., m. ९ दारितेभ° m.

पाञ्चाली रीतिर्वैदर्भीगौडीरित्युभयात्मिका ॥

यथा ।

जेतुः काकतिवीररुद्रनृपतेर्जैत्रप्रयाणोत्थिते
क्षोणीरेणुभरे नभस्यतिभृशं भूविभ्रमं बिभ्रति ।
जाता मर्त्यनदी विशंकटतटी दीर्घा वियद्दीर्घिका
गाढं गूढतमा च गौतमनदी पातालगङ्गायते ॥ ३२ ॥

यथा च ।

स्थाने तच्चलमर्त्तिगण्डनृपते त्वत्खड्गभोगी द्विषत्-
प्राणैर्यत् परितोषमेति सततं किं त्वेतदत्यद्भुतम् ।
पीतेन प्रतिपक्षपार्थिवयशःक्षीरेण गौरत्विषं
यत् संवर्धयति त्रिलोकभरितां त्वत्कीर्तिलक्ष्मीसुधाम् ॥ ३३ ॥

---

पाञ्चालीमाह । पाञ्चालीति । उदाहरति । जेतुरिति । नभस्यन्तरिक्षे भूविभ्रमं भूभावं बिभ्रति सति । वियद्दीर्घिका मन्दाकिनी विशङ्कटाभ्यां विशालाभ्यां तटीभ्यां दीर्घा सती मर्त्यनदी भागीरथी जाता । तथा गूढतमा रजोमयभूमेरधो वर्तमाना गौतमनदी पातालगङ्गायते भोगवती भवतीत्यहो महदद्भुतमिति भावः । स्थान इति । सर्पाणां वाताहारत्वात् खड्गोरगस्य द्विषत्प्राणपरिपुष्टत्वं नाद्भुतमिति भावः । तर्हि किमद्भुतमित्याकाङ्क्षायामेतदित्याह । पीतेनेति । ' पयःपानं भुजङ्गानां केवलं विषवृद्धये ' इति लोकप्रसिद्धम् । अत्र पुनरधिकतरसुधावृद्धय इति महदद्भुतमिति भावः । त्रिलोकभरितामिति । त्र्यवयवो लोकस्त्रिलोकः । शाकपार्थिवादित्वान्मध्यमपदलोपी समासो न द्विगुरिति प्रतिपादितं प्रथमश्लोके त्रिलोकजननीमित्यत्र । अत्रोदाहरणद्वयेऽपि पूर्वोक्तरीतिसाङ्कर्येणाद्भुतरसप्रतिपादनात् पाञ्चाली ॥

---

१ पाञ्चालि° P.; पाञ्चाल° T. २ °वैदर्भगौडी° R. ३ नभस्यूशि मृश° R. ४ °तटा P. ५ यथा वा M.; तथा च M. ६ °मर्हिता M. ७ अथ पाञ्चाली° P. ८ पाञ्चालेति P., m. T. ९ मर्त्या नदी P. १० वाताहारत्वात् P., m. ११ त्रिलोकजननीमित्यत्र प्रथमश्लोके P., T.

## अथ शय्या ।

या पदानां परान्योन्यमैत्री शय्येति कथ्यते ।

यथा ।

दातुः काकतिवंशमण्डनमणेर्निःसीमविश्राणन-
श्लाघालङ्घितकल्पपादपगुणप्रौढेरगाधौजसः ।
बिभ्रच्छारदकौमुदीपरिमलं सामन्तसीमन्तिनी-
गण्डाभोगनिरूढपाण्डिमधुरां धत्ते यशः प्रायशः ॥

अत्र पदविनिमयासहिष्णुत्वाद्बन्धस्य पदानुगुण्यरूपा शय्या ॥

## अथ पाकः ।

अर्थगम्भीरिमा पाकः स द्विधा हृदयंगमः ।
द्राक्षापाको नारिकेलपाकश्च प्रस्फुटान्तरौ ॥ ३८ ॥
द्राक्षापाकः स कथितो बहिरन्तःस्फुरद्रसः ।

---

अथ रीतयश्चेयतीत्यत्र चशब्दसमुचितयोः शय्यापाकयोर्मध्ये शब्दधर्मत्वसाम्यात् रीत्यनन्तरं शय्यामाह । या पदानामिति । परा उत्कृष्टा अन्योन्यमैत्री विनिमयासहिष्णुत्वमित्यर्थः । अत एवास्य रीतिभ्यो भेद इति भावः । उदाहरति । दातुरिति । गतार्थमेतत् । लक्ष्ये लक्षणं योजयति । अत्रेति ॥

परिशेषात् पाकमाह । अर्थेति । अर्थस्य शृङ्गारादेर्गम्भीरिमा आस्वाद्यमानताविशेष इति षष्ठीसमासः । "पूरणगुण—" इत्यादिना निषेधस्तु "तदशिष्यं संज्ञाप्रमाणत्वात्" 'तद्यत्नगौरवं प्रसज्येत' इत्यादि पाणिनिशबरस्वामिप्रमुखमहापुरुषप्रयोगदर्शनादनित्यः इति पदमञ्जरीकारः ।

---

१ धातुः R.; जेतुः M, . २ °निगूढ° P., R. ३ °धुरं P., T., T'. ४ T'. has अथ द्राक्षादिपाकः; T' has अथ द्राक्षादिपाकाः ५ नारिकेर° T., नालिकेर° T'. ६ प्रस्फुटार्थकः M, . ७ P. has before this यथाक्रमं स्वरूपमुदाहरणम् and T. and T'. यथाक्रमं स्वरूपमुदाहरणं च. ८ अन्योन्यस्य p. T. ९ °मयासहत्व° m.

यथा ।

स्मेरस्मेरान् मन्दस्मितमधुरसौरभ्यसुभगान्
मनाग्व्रीडाजाड्यान् प्रणयरसकल्लोलभरितान् ।

---

द्राक्षापाकमुदाहरति । स्मेरेति । विषयमात्रविश्रान्तिविरहिणो विशृङ्खल-वृत्तित्वमदमन्थरत्वादिगुणशीलाः स्मेराः । तदुक्तं भावप्रकाशे—

'अपरिच्छिन्नविषयं मदमन्थरमीलितम् ।
स्फुरद्भ्रूपक्ष्मतारं यत् तत् स्मेरमिति कथ्यते ॥'

इति । ते च स्मरप्रधानाः स्मरस्मेराः मन्दस्मिता हासगर्भाः संभोगौत्सुक्यसूचकाः मधुराः संतापहराः सौरभ्येण पद्मिनीजातेरस्याः स्मितनिमित्तेन सुभगाश्च ये तथोक्ताः

'कटाक्षैर्हासगर्भैस्तु संभोगौत्सुक्यभावना ।
शीतलीक्रियते तापो येन तन्मधुरं स्मृतम् ॥'

इति चोक्तेः नायिकायाः प्रौढत्वान्मनागल्पं व्रीडाजाड्यं येषां ते तथोक्ता अत एव स्वानुकूल्यप्रकाशकाः । तदुक्तं

'सव्रीडालोकनेनैव स्वानुकूल्यप्रकाशनम्'

इति ।

'विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः ।
येनान्तरङ्गं द्रवति स स्नेह इति कथ्यते ॥'

इत्युक्तलक्षणः स्नेहः प्रणयशब्देन विवक्षितः । स एव रसो द्रवद्रव्यं तस्यान्तरङ्गवारिधिवात्सल्यकल्लोलैर्महोर्मिभिर्भरिताः प्रेमदायिन इत्यर्थः । 'द्रवीभूतं मनो यत्र दर्शने प्रेमदायिनः' इति लक्षणात् । कृतानेकस्कन्धाः प्रियदृष्टिप्रतिघातेनौत्सुक्यभरेण च यथाक्रममासारप्रसाराभ्यामङ्गीकृततरङ्गभङ्गिका इत्यर्थः । अत एवैते सोत्सुकास्तरङ्गिताश्च । तदुक्तम्

'सोत्सुकं तद्यदालोक्य भूयो भूयोऽवलोकनम् ।
कल्लोल इव यः कान्तिविच्छेदस्तत् तरङ्गितम् ॥'

इति । मनसिजसहस्राणि सृजतः विरक्तस्यापीति भावः । 'यद्दर्शने विरक्तोऽपि क्षुभ्यते तत् समन्मथम्' इति लक्षणादेते समन्मथा उच्यन्ते । एवंविधान्

---

१ स्मरस्मेरा R. २ °सौभाग्य° $M_4$. ३ °जाड्य° P. ४ स्मरणा° P.

कृतानेकस्कन्धान् मनसिजसहस्राणि सृजतः
कटाक्षान् वामाक्षी किरति परितो रुद्रनृपतिम् ॥ ३६ ॥

स नारिकेलपाकः स्यादन्तर्गूढरसोदयः।

यथा।

लीलाविभ्रमपूर्वरङ्गमुदितं तारुण्यमेत्य त्रपा-
नेपथ्यान्तरविम्बितस्मरकलालास्यप्रपञ्चश्रियः।
सख्यः पश्यत काकतीयनृपतौ भावानुबन्धोज्ज्वलः
कोऽप्यस्यास्तरलभ्रुवो विजयते शृङ्गारनाट्यक्रमः ॥ ३७ ॥

अत्र न द्रागर्थप्रतीतिः। एवं वस्त्वलंकारप्रतीतावपि द्रष्टव्यम्। पाकान्तराणि यथासंभवमूह्यानि ॥

---

कटाक्षान् वामाक्षी मनोहरनयना रुद्रनृपतिं परितः सर्वतः किरति। "अभितः परितः—"इत्यादिना द्वितीया। कटाक्षलक्षणं तु संगीतरत्नाकरे

'यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम्।
तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥'

इति। अत्रैवं सम्मर्दसहिष्णोः शृङ्गारस्य पाठसमयेऽप्यास्वाद्यमानत्वादन्तर्बहिश्च स्फुरणं द्रष्टव्यम् ॥

नारिकेलपाकमुदाहरति। लीलेति। विस्तरेण व्याख्यातमेतन्नायिकाप्रकरणे मध्यमोदाहरणप्रस्तावे। लक्ष्ये लक्षणं योजयति। अत्रेति। एवं व्याख्यानसापेक्षत्वान्न द्रुतमर्थप्रतीतिरित्यर्थः। द्राक्षापाकनारिकेलपाकावर्थस्य द्रुतविलम्बितप्रतीत्योः परां कोटिमारूढौ। अतस्तदन्तरालवर्तिन्या मध्यप्रतीतेरनेकविधत्वात् तदनुसारेण कदलीरसालादिपाकाः स्वयमूह्या इत्याह। एवमिति ॥

---

१ नालिकेर° T′. २ °पूर्वरङ्गमित्यादि R., $M_3$, $M_4$, $M_5$, M. ३ प्रतिपत्तिः $M_p$. ४ P., T′ and T. have मधुक्षीरादीनि after this. ५ °मुदाहार्याणि P., $M_p$, T′. ६ °त्वात् तदन्त° P. ७ द्रुततरमर्थ° P. ८ मध्यम° P.

## अथ काव्यविशेषाः ।

व्यङ्ग्यस्य प्राधान्याप्राधान्याभ्यामस्फुटत्वेन च त्रिविधं काव्यम् । व्यङ्ग्यस्य प्राधान्ये उत्तमं काव्यं ध्वनिरिति व्यपदिश्यते । अप्राधान्ये मध्यमं[1] गुणीभूतव्यङ्ग्यमिति गीयते । व्यङ्ग्यस्यास्फुटत्वेऽधमं काव्यं चित्रमिति[2] गीयते ।

ध्वनिर्यथा ।

> स्वामिन् गोत्रमहीधरान् किमधुना नीचैर्विधत्से कुतो
> गाधानम्बुनिधीन् करोषि कुरुषे किं दिक्पतीनल्पकान् ।
> इत्थं पार्श्वचरानुलापमखिलं न्यक्कृत्य धर्मैषिणा
> सृष्टः पद्मभुवा गुणैकवसतिः श्रीवीररुद्रो नृपः ॥ ३८ ॥

---

इत्थं काव्यसामग्रीं निरूप्य तद्भेदा निरूप्यन्ते । अथेत्यादिना । तेषां सामान्यतः स्वरूपनिरूपणपूर्वकं विभागमाह । व्यङ्ग्यस्येति । प्राधान्यादिनिमित्तवशादुत्तमादिकाव्यानां[3] ध्वन्यादिसंज्ञाप्रवृत्तिरित्याह । व्यङ्ग्यस्य प्राधान्य इत्यादिना । यथा लोके कस्यचिद् वस्तुनः संज्ञानार्थं प्रदीपादाविव व्यङ्ग्यार्थमेव वाच्यवाचकवैचित्र्यादौ महाकविप्रवृत्तेर्व्यङ्ग्यस्य मध्ये विश्रान्तिविरहेण स्वपर्यन्तं सहृदयहृदयाकर्षणाच्च तस्य प्राधान्यमित्यनुसन्धेयम् । तद्विरुद्धमप्राधान्यम् । तच्च व्यङ्ग्यस्य चारुत्वापकर्षोपाधिकृतं न स्वाभाविकमिति गुणीभूतव्यङ्ग्यमित्यत्र च्विप्रत्ययेन सूच्यते । अधमकाव्यस्यास्फुटव्यङ्ग्यत्वेन नीरसत्वात् केवलवाच्यवाचकवैचित्र्याश्रयत्वेनालेख्यप्रख्यत्वाच्चित्रशब्दवाच्यत्वम् । तच्च शब्दार्थालंकारयोर्व्याससमासाभ्यां निबन्धने शब्दचित्रमर्थचित्रमुभयचित्रमिति[4] त्रेधा[5] विभिद्यते[6] ॥

तत्र ध्वनिमुदाहरति । स्वामिन्निति । अल्पकानित्यल्पान् । अनुलापं मुहुर्भाषामसकृत्कथनमिति[7] यावत् । धर्मैषिणा न तु कुलाचलाद्योपमैषिणा[8] । गुणैक-

---

१ T' has काव्यं after मध्यमं. २ कथ्यते M., $M_2$, $M_3$, $M_4$, $M_5$. ३ °काव्यादीनां t. ४ °मुभयचित्रमिति p., T. ५ त्रिधा m. ६ भिद्यते m. ७ मुहुर्भाषणम्° p., T. ८ °द्यापरा-मिणा t.

अत्र प्रतापरुद्रस्य कुलशैला[1]तिशायिसमुन्नतत्वमतिसमुद्र[2]गाम्भीर्यं लोकपालाधिकमैश्वर्यं च[3] व्यज्यते[4] । तथा कुलशिखरि[5]पयोधि[6]लोकपाल-निर्माणसंरम्भातिशायी सर्व[7]विलक्षण[8]काकतीयनिर्माणविभवे[9] इति च[10] व्यज्यते ॥[11]

गुणीभूतव्यङ्ग्यं यथा ।

> प्रत्यग्रप्रसरत्प्रतापविभवव्याप्ताखिलाशान्तरे
>
> विश्वत्रातरि वीररुद्रनृपतौ सिंहासनाध्यासिनि ।
>
> आस्थानीं समुपागतैर्नृपति[12]भिस्तास्तास्तथा दर्शिता-
>
> श्चेष्टा याभिरमुष्य काकतिविभोर्दृष्टिः कृपार्द्रीकृता ॥ ३९ ॥

अत्र प्राप्ता[13]भिषेकमहोत्सवस्य प्रताप[14]रुद्रमहा[15]राजस्याग्रे शरणार्थिनां[16] पार्थिवानां तथाविध[17]कार्पण्योक्तिपुनःपुनः[18]प्रणामादि[19] व्यङ्ग्यं[20] तास्ता-श्चेष्टा दर्शिता इति वाच्यादनतिशायि इति[21] गुणीभूतव्यङ्ग्यता[22] ।

चित्रं त्रिविधम् । शब्द[23]चित्रमर्थचित्रमुभयचित्रं चेति ।

---

वसतिर्न पुनरचलादिवदेकैकगुणाधारः । अत्रौन्नत्यादिव्यङ्ग्यस्यागूढत्वाद्यपकर्ष-निमित्ताभावात् प्राधान्येनोत्तमकाव्यत्वमेवेत्यभिप्रायेणाह । अत्रेति ॥

गुणीभूतव्यङ्ग्यमुदाहरति । प्रत्यग्रेति । अत्र कार्पण्यवचनादिचेष्टाविशेषरू-पव्यङ्ग्यस्य याभिरमुष्येत्यादिवाक्येनोक्तप्रायत्वादगूढत्वेन न चारुत्वातिशय इत्याह । वाच्यादनतिशायीति ॥

---

१ °शैला° P.  २ समुद्र गाम्भीर्य R.  ३ R. drops च.  ४ व्यन्यते T′.  ५ शैल for शिखरि in $M_2$ and T.  ६ °पयोनिधि° $M_3$, T., T′.  ७ R. drops सर्व.°  ८ °विलक्षण: T., T′.  ९ °वैभव T., T′.  १० च is omitted in R., T., T′.  ११ The sentence beginning with तथा and ending in व्यज्यते is dropped in P., M., and $M_4$.  १२ °नृपवरै° P., T., T′.  १३ कृताभिषेक° P.  १४ प्रतापरुद्रदेवमहाराज° T′.  १५ महादेव° P.  १६ शरणार्थितानां M., $M_3$, $M_4$.  १७ तथातिकार्प° P., R.  १८ पुरःसर for पुनः पुनः $M_1$, $M_3$, $M_4$, $M_5$.  १९ प्रणामादिकं T., T′.  २० व्यङ्ग्यादयः M., $M_3$, $M_4$, $M_5$.  २१ T′ has दर्शिता after इति.  २२ °व्यङ्ग्यम् $M_4$.  २३ Omitted in P., R., M., $M_3$, $M_4$; $M_1$ has शब्दार्थोभयचित्रभेदेन after त्रिविधम्. T′.

शब्दचित्रं यथा ।[1]

क्षोणीरक्षणदक्षिणाः क्षतजगत्क्षोभा दुरीक्ष्यक्रमाः[2]
क्षुद्रक्षत्रियपक्षशिक्षणविधौ प्रोत्क्षिप्तकौक्षेयकाः ।
उद्दामोद्यमनस्य रुद्रनृपतेर्दोर्दण्डयोश्चण्डयो-
र्गर्जद्दुर्जनगर्वपर्वतभिदा दम्भोलयः केलयः ॥

अर्थचित्रं यथा ।

खग्गे जुज्झविजिम्भिए[3] रिउ[4]महीणाहांजलिं बिंबिअं
पेक्खंतो[5] जअ[6]लच्छिवासकमलं मण्णंति विण्णाणिणः ।
मण्णे वीरपआवरुद्दविहुणो[7] जण्णेसु घेत्तुं उणो
सिट्ठीए[8] रिउ[9]जीविआइ विहिणो[10] जत्तस्स पीठंबुअं ॥ ४१ ॥[11]"

---

शब्दचित्रमुदाहरति । क्षोणीति । दुरीक्ष्यक्रमाः[12] अभ्यासजनितलाघवाति-शयेन दुरवबोधायुधप्रयोगपरिपाटीकाः । क्षुद्रक्षत्रियपक्षो राजपार्श्वबलम् । कौक्षे-यकः खड्गः । "कुलकुक्षि—" इत्यादिना शैषिको ढकञ्प्रत्ययः । यदेतत्सूत्रं भाष्यकारो न ममृषे तदा "दृतिकुक्षि—" इत्यादिना ढञ् । स्वार्थिकः कप्र-त्ययः । अत्र दोर्दण्डक्रीडानामशनित्वरूपणं गर्वाणां पर्वतत्वरूपणे हेतुः । अतः परस्परितं रूपकम् । तस्मिन् सत्यपि कवेर्वृत्त्यनुप्रास एवाभिनिवेशाच्छब्दचित्र-स्यैव प्राधान्यमर्थचित्रस्य तु गुणभाव एवेति नोभयचित्रत्वमस्येति भावः ॥

अर्थचित्रमुदाहरति । खड्गेति ।

खड्गे युद्धविजृम्भिते रिपुमहीनाथाञ्जलिं बिम्बितं
पश्यन्तो[13] जयलक्ष्मीवासकमलं मन्यन्ते विज्ञानिनः ।
मन्ये वीरप्रतापरुद्रविभोर्जन्येषु ग्रहीतुं पुनः
सृष्ट्यै रिपुजीवितानि विधेर्यातस्य पीठाम्बुजम् ॥

जन्येषु युद्धेषु यातस्य गच्छतः । पत्तस्येति पाठे प्राप्तस्येति छाया । लच्छिवासे-त्यत्र लक्ष्मीशब्दस्य 'दिहो[14] मिथः सः' इति पाक्षिको ह्रस्वः । घेत्तुं उणो इत्यत्र

---

१ T., T, insert तत्र before शब्दचित्रं ; R., M., $M_2$ and $M_4$ have चित्रं यथा for शब्दचित्रं यथा. २ दुरीक्ष° R.; °दुरीक्ष° T., °दुरीक्ष्य° T'. ३° विजंभिए T.; °विजुंभिए T'.; विअम्भिए M. ४ रिपु° M., T., T'. ५ पेक्खंतो T'. ६ जय° T., T'. ७ °वरुद्दवि° T'. ८ सिट्ठिए T.; सिट्ठीए M.; सिर्व्हीए T'. ९ रिपु° T; रिपु° T'.; रिउ M. १० विहुणो M. ११ T' has after this अस्य च्छाया । खड्गे &c. as given in the commentary. १२ दुरीक्ष्य° t., m., T. १३ प्रेक्षन्तो p. १४ सिदिहो t.

उभयचित्रं यथा ।

विद्यासमुद्रे भुवनैकभद्रे
प्रतापरुद्रे जितवैरिभद्रे[1] ।
रक्षार्थिनिद्रे धृतशौर्यमुद्रे
कान्तेव पृथ्वी रमते गुणार्द्रे ॥

---

'तुमुन्तव्यक्त्वासु ग्रहेः' इति तुमुन्प्रत्यये ग्रहेर्वेरादेशे वेत्तुमिति सिद्धम् । तस्योत्तरपदेन सन्ध्यभावः । 'पद्योः सन्धिर्वा' इति विकल्पितत्वात् । वीरत्तभावेत्यत्र 'वा समासे' इति समासे विकल्पाद् द्वित्वाभावः । जत्तस्सेति वर्तमानापदेशेन परासुवैरिप्राणसंग्रहणलम्पटस्य कमलभुवः कमलोपवेशनावकाशाभावः[2] प्रतीयते । अत्र प्रतापरुद्रखड्गप्रतिबिम्बिते रिपुनृपाञ्जलौ लयलक्ष्मीवासकमलत्वमारोप्य तदपह्नवेनार्थसिद्धेन ब्रह्मासनकमलत्वप्रतिपादनादपह्नवालङ्कारः । अत्रैव कवेरभिनिवेशादस्यार्थचित्रत्वम् । वृत्त्यनुप्रासे तु गुणभाव एवेति नात्राप्युभयचित्रत्वमिति भावः ॥

उभयचित्रमुदाहरति । विद्येति । अत्रोभयत्र कवेरभिनिवेशादुभयचित्रत्वमित्यभिप्रायेणाह । अत्रेति । यद्यप्येतत् प्राचीनालंकारकारैर्नोदाहृतं तथाप्यन्यतरप्राधान्येनेतरभेदद्वयवदुभयप्राधान्येनास्यापि सुवचत्वाद्[3]विरोधः । किं च

'पादाम्बुजं भवतु वो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥'

इत्यत्रोपमानुप्रासयोरन्योन्यनिरपेक्षत्वेन समप्रधानभावयोः संसृष्टिमङ्गीकुर्वाणैः पूर्वैरेवोभयचित्रमप्यङ्गीकृतमिति विज्ञेयम् । नन्वेषूदाहरणेषु यथायोगं विभावानुभावविशेषकथनेन वीरशृङ्गारयोः पर्यवसानात् कथमधमत्वम् । सत्यम् । शब्दार्थालंकारयोरेव कविविवक्षाविषयत्वाद् विद्यमानोऽपि रसो दिवा चन्द्रप्रकाशवन्न[4] प्रतीयते । तदुक्तं काव्यालोके

'रसभावादिविषयविवक्षाविरहे सति ।
अलंकारनिबन्धो[5] यः स चित्रविषयो मतः ॥'

इति ।

---

१ विजितारिभद्रे M., M,. २ कमलोपवेशनाभावः m. ३ सुवचनत्वाद° m. ४ प्रकाश is omitted in P. ५ °निबद्धो m.

अत्रानुप्रासोपमाभ्यां चित्रता ॥

## अथ ध्वनिविशेषा [3]निरूप्यन्ते ।

अत्र ध्वनेर्लक्षणाभिधामूलत्वेनाविवक्षितवाच्यविवक्षितान्यपरवाच्याख्यौ प्रथमं द्वौ भेदौ । अविवक्षितवाच्यस्यार्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यतया द्विविधस्य वाक्यपदगतत्वेन द्वैविध्ये चातुर्विध्यम् । विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमव्यङ्ग्यासंलक्ष्यक्रमव्यङ्ग्यतया द्वौ भेदौ । संलक्ष्यक्रमव्यङ्ग्ये शब्दशक्तिमूले वस्त्वलंकाररूपतया द्वैविध्ये वाक्यपदगतत्वेन चातुर्विध्यम् ।

---

एवं त्रिविधमपि काव्यं सामान्यतो निरूप्य तत्रोत्तमकाव्यं प्रपञ्चयितुं प्रतिजानीते । अथेति । विभजते । अत्रेति । अविवक्षितं व्यङ्ग्येन न्यग्भावितं वाच्यं यत्र सोऽविवक्षितवाच्यः । अन्यपरं व्यङ्ग्यपरं राजतात्पर्येण राजपुरुषसेवनवद् व्यङ्ग्यपरत्वेनैव विवक्षितं विवक्षितान्यपरं तथाभूतं वाच्यं यत्र स विवक्षितान्यपरवाच्यः । तत्र लक्षणामूलं चतुर्धा विभजते । अविवक्षितेति । तत्रार्थान्तरसंक्रमितवाच्ये वाच्यस्योपपद्यमानत्वेऽपि तावतानुपयोगादजहल्लक्षणामूलत्वम् । अत्यन्ततिरस्कृतवाच्ये वाच्यस्यानुपपन्नत्वात् जहल्लक्षणामूलत्वमिति विवेकः । संक्रमितेति णिचा व्यञ्जनसहकारिवर्गस्यायं प्रभाव इति सूच्यते । अभिधामूलं विभजते । विवक्षितेति । संलक्ष्यः स्फुटसंवेद्यः क्रमो व्यङ्ग्यव्यञ्जकयोर्यत्र स संलक्ष्यक्रमव्यङ्ग्यः । यत्र व्यञ्जकस्य विभावादेर्व्यङ्ग्यस्य च रसादेः सन्नपि क्रमो निशितसूच्या शतपत्रपत्रशतवेधवदाशुभावित्वान्न लक्ष्यते सोऽसंलक्ष्यक्रमव्यङ्ग्यः । तत्राद्यस्य शब्दार्थोभयशक्तिमूलत्वेन त्रैविध्यं सिद्धवत्कृत्याद्यं चतुर्धा विभजते । संलक्ष्येति । जातिगुणादिरूपोऽर्थो वस्तु । तदेव

---

१ R. omits अथ; अत्रोपमाप्रासाभ्यामुभयचित्रता $M_5$; अत्रानुप्रासोपमाया $M_2$, $M_4$. २ T. has अथ ध्वनिविशेषाः as a heading before it. ३ कथ्यन्ते निरूप्यन्ते च $M_3$. ४ अथ M., $M_4$. ५ भेदौ द्वौ P., T. ६ °व्यङ्ग्यस्य M., $M_3$, $M_4$. ७ °मूलत्वे R. ८ °सेवन m. ९ °नुपपन्नत्वात् t. १० शतपत्रच्छेदवदाशुविदितत्वात m.

अर्थशक्तिमूले संलक्ष्यक्रमव्यं[1]ङ्ग्येऽर्थस्य स्वतः[2]संभवित्वेन [3]कविप्रौढोक्तिसिद्धत्वेन कविनि[4]र्बद्धोक्तिसिद्धत्वेन च [5]त्रैविध्यम्। त्रिविधस्य [6]वस्त्वलंकाररूपतया द्वैविध्ये [7]षड्विधत्वम्। षड्विधस्यापि व्यङ्ग्यव्यञ्ज[8]कतया द्वैविध्ये द्वादशविधत्वम्। द्वादशविधस्यापि प्रबन्धगतत्वेन वाक्यगतत्वेन पदगतत्वेन च[9] त्रैविध्ये षट्त्रिंशत्प्रकारोऽर्थशक्तिमूलोऽनुरणन-

---

विच्छित्तिविशेषयुक्तमलंकारः। द्वितीयः षट्त्रिंशत्प्रकार इत्याह। अर्थशक्तिमूल इत्यादिना। अर्थस्य मूलभूतस्य व्यञ्जकस्येत्यर्थः। यो न केवलं साहित्यमात्रसिद्धः किं तु लोकेऽप्यौचित्येन संभाव्यते स स्वतःसंभवी। यः पुनरसन्नपि लोके कविना प्रतिभामात्रेण संभाव्य संपाद्यते स कविप्रौढोक्तिसिद्धः। कविनिबद्धवक्तृप्रौढोक्तिसिद्धस्तु क[10]विनिबद्धोक्तिसिद्ध इति त्रयाणां विवेकः। षड्विधस्येति। व्यञ्जकस्येति भावः। व्यङ्ग्यव्यञ्जकतयेति। व्यङ्ग्ययोर्वस्त्वलंकाररूपयोर्व्यञ्जकतयेत्यर्थः। तथा चोक्तं काव्यप्रकाशे

> 'अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः।
> प्रौढोक्तिमात्रात् सिद्धो वा कवेस्तेनोदितस्य वा॥
> वस्तु वालंकृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत्।
> वस्त्वलंकारमथवा तेनायं द्वादशात्मकः॥'

इति। हेमचन्द्रस्तु प्रौढोक्तिमन्तरेण स्वतःसिद्धस्याप्यकिंचित्करत्वात् सिद्धे[11]त्वमेव सर्वत्रेति स्वतः[12]संभवित्वादिभेदत्रयं नाङ्गीचकार। अनुरणनेति। घण्टादेः [13]प्रथमस्वनानन्तरभावी स्नि[14]ग्धः स्वनोऽनुरणनम्। तत्सादृश्यात् संलक्ष्यक्रमव्यङ्ग्यस्त्रिविधोऽप्यनुरणनध्वनिरुच्यते। तत्र

> 'विच्छित्तिशोभिनैकेन भूषणेनेव भामिनी।
> पदद्योत्येन सुकवेर्ध्वनिना भाति भारती॥'

इति ध्वन्याचार्यवचनात् पदगतेष्वपि रम्यत्वमस्तीति [15]वेदितव्यम्। तृतीय-

---

१ °व्यङ्ग्यस्य $M_p$. २ °संभावितत्वेन M. ३ R. drops कवि. ४ °निबन्धनोक्ति° T., T'; °निबद्धवक्तृप्रौढोक्ति° P. ५ त्रैविध्ये M. ६ वस्त्वलंकारतया R. ७ षड्विधम् M., $M_g$. ८ °व्यञ्जकभेदतया M., $M_g$, $M_g$. ९ च is omitted in P. and R. १० कविनिबन्धनोक्ति° t., p. ११ सिद्धमेव p. १२ °संभवत्वा° p., m., १३ प्रथमध्वननानन्तर° p. १४ स्निग्धस्वनो° p.; स्निग्धस्वनानन्तरभावी T. १५ विदितव्यम् p.

ध्वनिः । उभयशक्तिमूलो वाक्यगतत्वेनैकविध एव । एवं संलक्ष्यक्रमव्यङ्ग्यध्वनेरेकचत्वारिंशद्भेदाः । असंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः प्रबन्धवाक्यपदपदैकदेशरचनावर्णगतत्वेन षड्विधः । एवं विवक्षितान्यपरवाच्यध्वनेः सप्तचत्वारिंशद्भेदाः । अविवक्षितवाच्यभेदैश्चतुर्भिः सह ध्वनेः प्रथमं शुद्धा एकपञ्चाशद् भेदाः । तेषां प्रत्येकमेकैकस्यैकैकेन संबन्धे प्रथमभेदस्यैकपञ्चाशद् भेदाः । द्वितीयस्य पञ्चाशद् भेदाः । तृतीयस्यैकोनपञ्चाशद् भेदाः । अनेन क्रमेणोत्तरोत्तरस्यै-

---

माह । उभयशक्तीति । एकविध एवेति । प्रकारवैचित्र्यकल्पनस्य दुःशकत्वादिति भावः । अनुरणनध्वनिभेदान् क्रोडीकृत्याह । एवमिति । एकश्च चत्वारिंशच्च एकचत्वारिंशदिति द्वन्द्वः । 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्येकवद्भावः । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यकारवचनाज्जनपदादिशब्दवन्नपुंसकत्वाभावः । नापि भेद्यलिङ्गत्वम् । विंशत्यादीनां नवत्यन्तानाममरकोशे 'तासु चानवतेः स्त्रियः' इति नियमेन स्त्रीलिङ्गताभिधानात् । यद्वा एकोत्तरा चत्वारिंशदिति मध्यमपदलोपी समासः । एवमन्यत्रापि द्रष्टव्यम् । द्वितीयमभिधामूलध्वनिं विभजते । असंलक्ष्येति । रसादीनामानन्त्येन तद्भेदकल्पनस्याशक्यत्वात् तद्द्योतकप्रबन्धादिकृतो रसादेः षोढा विभाग इत्याह । प्रबन्धेति । सर्वानपि ध्वनिभेदान् संकलय्याह । एवमिति । शुद्धा ध्वन्यन्तरासंबद्धा इत्यर्थः । मिश्रभेदानाह । तेषामिति । तेषां शुद्धानामित्यर्थः । ननु लक्षणामूलध्वनेरभिधामूलध्वनिसंबन्धे यथैको मिश्रभेदस्तथैवाभिधामूलध्वनेर्लक्षणामूलध्वनिसंबन्धे भेदान्तरं भविष्यति । एवमेकपञ्चाशतोऽपि भेदानां विचार्यमाणे एकोत्तरशतषट्काधिकसहस्रद्वयसंख्याकमिश्रभेदसंभवादेकैकन्यूनताश्रयणेन षड्विंशत्युत्तरशतत्रयाधिकसहस्रसंख्यावलम्बनमयुक्तमिति चेत् सत्यम् । भेदद्वयेऽपि तस्यामुना संबन्धोऽमुष्य वा तेनेति संबन्धिप्रतिसंबन्धिनोरुच्चारणव्यत्यासमात्रं न पुनश्चमत्कारविशेषः । अतस्तेषां यथायोगं मिथोऽन्तर्भाव एवेति युक्तमेवोक्तम् । तदेतदाह । अविवक्षितवाच्यस्येति । विषयव्याप्त्यर्थं ध्वन्यन्तरेऽप्यन्तर्भावं दर्शयति । अनेनैवेति । भूयो विभागमाह । तस्यापीति । ध्वन्योः संदेहा-

---

१ व्यङ्ग्ये R., $M_5$. २ M. omits this sentence. ३ द्वितीये R.; द्वितीयभेदस्य M. ४ तृतीये R.; तृतीयभेदस्य M. ५ अनेनैव M., $M_1$, $M_4$, $M_5$. ६ °णोत्तरोत्तरपरित्यागे M., $M_4$, $M_5$. ७ दुःशकपात्वा° $m_1$; दुःशकत्वा° $m_2$. ८ तद्भेदे तत्प्रबन्धा° p.

कैकभेदपरित्यागे षड्विंशत्युत्तरशतत्रयाधिकसहस्रसंख्याका मिश्रभेदाः । अविवक्षितवाच्यस्य विवक्षितान्यपरवाच्यसंबन्धे यो भेदस्तस्मिन्नेवान्तर्भूतो विवक्षितान्यपरवाच्यस्याविवक्षितवाच्यसंबन्धे भेदो न पृथग्भूतः । अनेनैव क्रमेण वस्तुध्वनेरलंकारध्वनिसंबन्धभेदोऽप्यलंकारध्वनेर्वस्तुध्वनिसंबन्धान्न पृथग्भूत इति पूर्वपूर्वस्योत्तरोत्तरसंबन्धे एकैकभेदन्यूनता ज्ञेया । तस्यापि मिश्रणस्य त्रिरूपेण संकरेणैकरूपया संसृष्ट्या च पुनश्चतुर्धायोजने चतुरुत्तरशतत्रयाधिकपञ्चसहस्राणि भेदाः ।[5]

> शुद्धाश्चन्द्रशरा मिश्रा ऋतुनेत्रानलेन्दवः ।
> संसृष्टिसंकरायत्तास्त्वब्धिखाग्निशराभिधाः ॥

तत्र शुद्धानामेकपञ्चाशद्भेदानां नामधेयानि कथ्यन्ते । पदगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिः । १ । वाक्यगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिः । २ । पदगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः ।३। वाक्यगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः । ४ । पदगतशब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः ।५। पदगतशब्दशक्तिमूलसंलक्ष्यक्रमालंकारध्वनिः । ६ । वाक्यगतशब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः ।७। वाक्यगतशब्दशक्तिमूलसंलक्ष्यक्रमालंकारध्वनिः । ८ । पदगतस्वतःसिद्धार्थ-

---

स्पदत्वेनानुग्राह्यानुग्राहकभावेनैकव्यञ्जकानुप्रवेशेन च त्रिरूपेणेत्यर्थः । संकरवत् सापेक्षत्वाभावात् संसृष्टेरेकरूपत्वं द्रष्टव्यम् । फलितां संख्यामाह । चतुरुत्तरेति । न्यूनाधिकसंख्याव्यवच्छेदार्थमुक्तामेव संख्यां संकेतभाषया क्रोडीकृत्याह । शुद्धा इति । अत्राङ्कप्रस्तारो व्युत्क्रमेण द्रष्टव्यः । चन्द्र एकः । शराः पञ्च । ऋतवः षट् । नेत्रे द्वे । अनलास्त्रयः । इन्दुरेकः । अब्धयश्चत्वारः । खं शून्यं बिन्दुरित्यर्थः । अग्नयस्त्रयः । शराः पञ्च । तर्हि किंनिमित्तं काव्यप्रकाशकारोऽन्तर्भावयातयामानपि कतिचिद् भेदान् संगृह्य चतुरुत्तरचतुःशतीयुतायुतसंख्या-

---

१ °वाच्यस्य संबन्धे R.; °वाच्यस्य च संबन्धे M., $M_4$, $M_5$. २ °क्षितवाच्यसंबन्धभेदः M., $M_2$, $M_4$, $M_5$; °क्षितस्य संबन्धोऽपि $M_1$. ३ °संबन्धेऽप्य° R. ४ संबन्धभेदात् R. ५ After this M. and $M_2$ have संदेहास्पदत्वेनानुग्राह्यानुग्राहभावेनैकव्यञ्जकानुप्रवेशेन इति. ६ After this $M_1$ has अनुग्राह्यानुग्राहकभावः संदेहलक्षणश्चैकव्यञ्जकानुप्रवेशश्चेति तु संकरभेदाः. ७ अत्र P., $M_5$. ८ °क्रमव्यङ्ग्यवस्तु° $M_5$. ९ P. drops संख्या.

शक्तिमूलो वस्तुना वस्तुध्वनिः । ९ । पदगतस्वतःसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः । १० । पदगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः । ११ । पदगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः ।१२। वाक्यगतस्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः।१३। वाक्यगतस्वतःसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः । १४ । वाक्यगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः।१५। वाक्यगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः ।१६। प्रबन्धगतस्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ।१७। प्रबन्धगतस्वतःसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः । १८ । प्रबन्धगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः । १९ । प्रबन्धगतस्वतःसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः । २० । पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ।२१। पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः ।२२। पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः ।२३। पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः ।२४। वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः । २५ । वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः । २६ ।वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः । २७ । वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः ।२८। प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः।२९। प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः । ३० । प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः । ३१ । प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः । ३२ ।

---

कान् संसृष्टिसंकरायत्तभेदानजीगणत् । को वेद किं वात्र निमित्तं तत् पुनस्त एव तत्रभवन्तो विदांकुर्वन्तु । अस्माभिस्तु 'युक्तियुक्तं वचो ग्राह्यं न तु पुरुषगौरवात्' इति न्यायसरणिरनुसरणीयेति विद्यानाथहृदयम् ॥

---

१ °मूल° $M_{I}$. २ °मूल° $M_{I}$. ३ °मूल° $M_{I}$. ४ °मूल° $M_{I}$; similarly °मूल° for °मूलो° althrough in $M_{I}$. ४ कवि omitted in $M_{3}$. ५ T' has निबन्धोक्ति for प्रौढोक्ति. ६ °निबन्धोक्ति° T'. ७ °निबन्धोक्ति° T'. ८ °निबन्धोक्ति° T'. ९ °निबन्धोक्ति° T'. १० वा तत्र p., T. ११ विद्यानाथस्य हृदयम् p.

पदगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः । ३३ । पदगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः । ३४ । पदगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः । ३५ । पदगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः । ३६ । वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः । ३७ । वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः । ३८ । वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः।३९। वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः ।४०। प्रबन्धगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः । ४१ । प्रबन्धगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुनालंकारध्वनिः । ४२ । प्रबन्धगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेणालंकारध्वनिः।४३। प्रबन्धगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलोऽलंकारेण वस्तुध्वनिः ।४४। प्रबन्धगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः । ४५ । वाक्यगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः । ४६ । पदगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः । ४७ । पदैकदेशगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः । ४८ । रचनागतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः । ४९ । वर्णगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः । ५० । वाक्यगतोभयशक्तिमूलो ध्वनिः । ५१ ।

तत्र दिङ्मात्रमुदाह्रियते ।

अर्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिर्यथा ।

> मूर्धानो यूयमास्माकाः किमित्यौन्नत्यमिच्छथ ।
> इति प्रतापरुद्रस्य प्रणताः प्रतिपार्थिवाः ॥ ४३ ॥

---

अथ प्रतिपत्तिसौकर्यार्थं शुद्धभेदानां प्रतिज्ञापूर्वकं नामानि कथयति । तत्रेति । गतार्थमेतत् ।

अत्र कतिपयोदाहरणप्रदर्शनेनेह कुशलानां भेदान्तराणि सुबोधानीत्यभिप्रायेणाह । तत्र दिङ्मात्रमिति । उदाहरति । मूर्धान इति । आस्माका अस्म-

---

१ निबद्धवक्तृप्रौढोक्तिसिद्धा° $M_1$, $M_4$; °निबन्धनोक्ति° M; °निबन्धार्थशक्ति° $M_3$. २ रसध्वनिः $M_1$, $M_4$. ३ पदपदैकदेशभेदेन रचनागतासंलक्ष्यक्रम° ( for ४७-४८-४९ ) M. ४ अत्र $M_3$; अथ $M_1$; तत्र is omitted in $M_3$. ५ पदगतार्थान्तर° M. ६ यूयमस्माकं $M_3$. ७ °स्यौन्नत्यशालिनः M. ८ M. notices देवस्य for रुद्रस्य. ९ सुबोधानीत्याह p.

अत्र आस्माका इति सर्वदैन्यभूमयो वयमीदृशानामस्माकं संबन्धिन इत्यर्थान्तरसंक्रमितवाच्यता ।

अत्यन्ततिरस्कृतवाच्यो यथा ।

> विशदिमविलिप्तवियतो धवलिमपरिपूरिताखिलाशान्ताः ।
> विहरन्ति यशःपूरा गौराः श्रीकाकतीन्द्रस्य ॥ ४४ ॥

अत्र विशदिमविलिप्तवियत इत्यन्ततिरस्कृतवाच्यम् । अनेनैव क्रमेण वाक्यगतत्वेनाप्युदाहार्यम् ।

---

दीयाः । "युष्मदस्मदोः" इत्यणप्रत्यये "तस्मिन्नणि च" इत्यास्माकादेशः । अत्रास्माकप्रकृत्यास्मच्छब्देनास्मदर्थमहित्वैव तावतानुपयोगाद् दैन्यविशिष्टोऽस्मदर्थः सामान्यविशेषभावसंबन्धेन लक्ष्यत इत्याह । सर्वदैन्येति । व्यङ्ग्यं पुनर्वीररुद्रवैरिणां वैनतेयसंनिधाने वाताशिनामिव विक्रमविमुखत्वमित्येतदभिसंधायाह । अत्रेति ॥

विशदिमेति । अत्र विशदिमधवलिम्नोर्विषयभेदान्मिथो न पौनरुक्त्यम् । अनयोर्वियद्विलेपनदिगन्तपरिपूरणविधानार्थत्वेनानुवाद्यत्वाद्विधेयेन गौरा इत्यनेनापि न पौनरुक्त्यमिति विज्ञेयम् । अत्र विलिप्तपदं मूर्तोचितस्य विलेपनस्यामूर्ते वियत्यनुपपद्यमानत्वात् स्वार्थपरित्यागेनोपरञ्जनातिशयं कार्यकारणभावसंबन्धेन लक्षयदाकाशे प्रकाशाधिक्यं व्यनक्तीत्यभिप्रायेणाह । अत्रेति । अनेनै-

---

१ अत्रास्माकमिति $M_8$.　२ $M_5$ omits सर्व.　३ °दैन्यविश्रान्तिभूता ये वयं $M_1$.　४ वयं तादृशाना° P.　५ संबन्धिनो पूपमित्यर्था° P., T., T'.　६ °संक्रमिताविवक्षितवाच्यता T., T'.　७ °वाच्यं M.; °वाच्यध्वनिर्यथा $M_8$; °तिरस्कृताविवक्षितवाच्यता $M_4$; °वाच्यता $M_1$; °वाच्यता R.; °वाच्यो ध्वनिर्यथा T., T'.　८ धवलिम° M.　९ °तिरस्कृताविवक्षितवाच्यता $M_4$.　१० °वाच्यत्वम् T., T'., $M_1$, $M_5$;　११ °स्मदोरन्यतरस्यां खञ् च p., T.　१२ मिथो is omitted in p.

अथार्थशक्तिमूलो वस्तुना वस्तुध्वनिर्यथा ।

अब्दानृतून् विना मासान् शुक्लपक्षान् विना तिथीन् ।
रात्रीर्विनापि काङ्क्षन्ते काकतीयरिपुस्त्रियः ॥ ४५ ॥

अत्र ऋतुप्रभृतीनां मन्मथोद्दीपकत्वात् तदभावो रिपुस्त्रीभिराकाङ्क्ष्यत इति प्रतीयते । तेन तासां प्रियवियोगरूपं वस्तु व्यज्यते । अनेन प्रतापरुद्रस्य सर्वे शत्रवो निहता इति वाच्यादतिशयः । तथा प्रियविरहविधुराः शत्रुस्त्रियः कतिपयवत्सरान् जीविताशया प्रथममृतूनामभावं वाञ्छन्ति । अनन्तरं तानपि गमयितुमशक्ताः कतिपयमासेषु

---

चेति वाक्यगतत्वमेवात्र भेदकमिति भावः । अत्र जहदजहल्लक्षणयोर्वस्तुमात्रं व्यङ्ग्यम् । तच्च शब्दैकव्यापाराद् व्यञ्जनादेव । अन्यथा लक्षणाया एवानुपादेयत्वप्रसङ्गादिति द्रष्टव्यम् । तदुक्तं काव्यप्रकाशे–

'यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥'

इति ।

शब्दशक्तिमूलापेक्षया भेदबाहुल्येन बहुवक्तव्यत्वादर्थशक्तिमूलानादावुदाहर्तुमाह । अथेति । अब्दानिति । अत्र ऋत्वाद्यभावाकाङ्क्षाया वाच्यत्वेऽपि तस्याः कामोद्दीपकत्वहेतुकत्वं व्यङ्ग्यमेवेत्यभिप्रायेणाह । अत्रेति । तस्य व्यङ्ग्यमाह । तेनेति । तेनानन्तरोक्तव्यङ्ग्येनेत्यर्थः । तस्यापि व्यङ्ग्यमाह । अनेनेति । प्रियवियोगेनेत्यर्थः । व्यज्यत इत्यनुषज्यते । एवमुत्तरोत्तरव्यङ्ग्य एव कविसंरम्भविश्रान्तेस्तस्य वाच्यादुत्कर्षो येनास्य ध्वनिव्यपदेश इत्याह । इतिवाच्यादिति । किं च प्रथमकक्ष्यायां प्रतीयमानस्य ऋत्वाद्यभावाकाङ्क्षालक्षणस्य वस्तुनो व्यञ्जकवस्तुत्रैविध्यात् त्रैविध्यमित्याह । तथेत्यादिना ॥

---

१ अतः स्वतःसिद्धार्थशक्तिमूलो $M_1$. २ तिथीः M., $M_1$. ३ °विना च M., $M_1$, $M_2$. ४ काङ्क्षन्ति P. ५ काकतीन्द्ररिपु° M., $M_1$, $M_2$. ६ कामोद्दीपकत्वात् P., T., T'. ७ °राकाङ्क्षित R. ८ °रूपवस्तु $M_2$. ९ सर्वेऽपि M., $M_1$, $M_2$; सर्वशत्रवो $M_3$; सर्वे is omitted in $M_3$. १० वाच्यातिशयः M., $M_1$, $M_2$. ११ तथा हि $M_2$. १२ °वत्सरजीवितेच्छया R.; °वत्सरजीविताशया M. ( M. notices वत्सरान् ); °संवत्सरान् $M_2$. १३ °मभावान् M., $M_2$. १४ आकाङ्क्षन्ति $M_2$. १५ तदनन्तरं $M_1$. १६ गन्तुमशक्ताः R.

प्राणान् धारयितुमुद्युक्ता ज्योत्स्नावतां पक्षाणां विनाशं वाञ्छन्ति । अनन्तरं मासानप्यपनेतुमपारयन्त्यः कतिपयतिथिषु जीविताशया रात्रीणामसृष्टिमभिलषन्तीति बहुवस्तु वस्तुना व्यज्यते ।

वस्तुनालंकारध्वनिर्यथा ।

> दृष्ट्वा काकतिवीररुद्रनृपतेः कीर्त्तिं जगद्व्यापिनीं
> वस्तुं वाञ्छति शंभुरत्र शयितुं लक्ष्मीपतिः काङ्क्षति ।
> स्नातुं धावति दिव्यतापसगणः संवर्धितुं वार्धय-
> श्चेष्टन्ते सविलासमभ्रमुरपि स्प्रष्टुं शनैरीहते ॥ ४६ ॥

अत्र हरस्य कैलासभ्रान्तिः हरेः क्षीरार्णवभ्रान्तिरिति भ्रान्तिमदलंकारो व्यज्यते ॥

अलंकारेण वस्तुध्वनिर्यथा ।

> प्रतापरुद्रस्य रणे कृपाणः
> सद्यः समुद्यद्रुधिरारुणश्रीः ।
> आलम्बते रोषकषायितस्य
> कालीकटाक्षस्य विजृम्भितानि ॥

अत्रालम्बत इति निदर्शनालंकारेण सकलरिपुक्षयः क्षणात् कृत इति वस्तु व्यज्यते ॥

---

दृष्ट्वेति । अत्र कीर्त्तौ शंभुप्रभृतीनां निवासाकाङ्क्षादिलक्षणेन वस्तुना तेषां यथाक्रमं कैलासक्षीरोदमन्दाकिनीचन्द्राश्रमातङ्गभ्रान्तिरूपो भ्रान्तिमदलंकारो व्यज्यते । तदेतदाह । अत्र हरस्येति । अत्र व्यङ्ग्यस्य प्राधान्येनालंकार्यत्वेऽपि ब्राह्मणश्रमणन्यायेन प्रत्यभिज्ञानबलादलंकारव्यपदेशो न विरुध्यते । एवमन्यत्राप्यलंकारध्वनौ वेदितव्यम् ॥

प्रतापेति । कषायितस्यारुणीकृतस्य । अत्र कृपाणस्य चण्डिकाकटाक्षविजृम्भितालम्बनासंभवाद्विजृम्भितानीव विजृम्भितानीति सादृश्याक्षेपादसंभवद्वस्तुसंबन्धरूपो निदर्शनालंकारः ॥

---

१ °मुद्यता R. २ मासान् वाहयितु° P. ३ °दिवसेषु R. ४ रात्रीणामप्यसृष्टिं° $M_{3}$; रात्रीणां विसृष्टिं $M_{1}$. ५ °ष्टिं संमभिलषन्ती° R. ६ वस्तुना बहुवस्तु P. ७ लक्ष्मीपतिः काङ्क्षते R.; लक्ष्मीपतिर्वाञ्छति T. ८ वाञ्छति R. ९ क्षीराब्धि° M., $M_{1}$, $M_{2}$, $M_{5}$. १० R. and $M_{1}$ has अलंकारेणालंकारध्वनिः treated before अलंकारेण वस्तुध्वनिः. ११ अत्र is omitted in M., $M_{1}$, $M_{3}$, $M_{4}$, $M_{5}$. १२ क्षिपत M., $M_{1}$, $M_{2}$, $M_{4}$.

अलंकारेणालंकारध्वनिर्यथा ।

> काकतीयविभोः कीर्त्तिपुण्डरीके विजृम्भिते ।
> धत्ते मधुकरक्रीडां तमालश्यामलं नभः ॥ ४८ ॥

अत्र कीर्त्तिपुण्डरीके नभोभ्रमरक्रीडां धत्त इति निदर्शनालंकारेणाश्रयाश्रयिणोरनानुगुण्यरूपो[1]ऽधिकालंकारो[2] व्यज्यते । आश्रयस्य कीर्त्तिपुण्डरीकस्य वैपुल्यं भ्रमरसादृश्यप्रतिपादनेनाल्पत्वं नभसः प्रतीयते । एषु स्वतः सिद्धार्थशक्तिमूलत्वम्[3] ।

अथ[4] कविप्रौढोक्तिसिद्धार्थशक्तिमूलो[5] वस्तुना वस्तुध्वनिर्यथा ।

> श्रावं श्रावं खुरलिविहरत्कार्तिकेयेषुर्जात[6]-
> च्छिद्रच्छद्मश्रवणपदवीचारिणीं चारणौघैः ।
> शश्वद्गीतां भुवनमहितां काकतीन्द्रस्य[7] कीर्त्तिं
> क्रौञ्च[8]क्ष्माभृद्भवति महतो[9] विस्मयाक्षिप्तलाङ्गः ॥ ४९ ॥

---

काकतीयेति । पूर्ववन्निदर्शनालंकारः । अनानुगुण्यरूप इति । आधारस्य नभसोऽल्पत्वादाधेयस्य यशसोऽधिकत्वाच्चेति भावः । तच्च व्यज्यत इत्याह । आश्रयस्येति । एषु स्वतः सिद्धेति । व्यञ्जकस्य लोकसिद्धार्थत्वादिति भावः ॥

अथ कविप्रौढोक्तिसिद्धार्थशक्तिमूलेषु वस्तुना वस्तुध्वनिमुदाहरति । श्रावं श्रावमिति । श्रावं श्रावं पुनः पुनः श्रुत्वेत्यर्थः । "आभीक्ष्ण्ये णमुलि नित्यवीप्सयोः" इति द्विर्भावः । खुरलिर्मल्लादिसाधनशाला । तत्र विहरतः क्रीडतः कार्त्तिकेयस्य कृत्तिकापत्यस्य स्कन्दस्येषुणा शरेण जातं यच्छिद्रं तस्य छद्मना व्याजेन या श्रवणपदवी । बहिर्निर्गतं बाणरन्ध्रमेव श्रवणसरणिर्बभूवेति भावः । तत्र चरति ताच्छील्येन तां तथोक्ताम् । पुरा किल कार्त्तिकेयः खुरलीविहरणवेलायां परशुरामस्पर्धया क्रौञ्चगिरिं ददारेति प्रसिद्धिः । भुवनानां महितां पूज्यमानामिति शेषषष्ठ्या निष्ठान्तेन समासः । अत एव "क्तेन च पूजायाम्" इत्यादिषु कारकषष्ठ्या एव समासनिषेध इति हरदत्तः । अत्र क्रौञ्चाद्रेर्निश्च-

---

१ °रूपाधिका° P. २ °धिकोऽलंकारो R. ३ एषु स्वतः सिद्धार्थशक्तिमूलश्च R. ४ अथ is omitted in R., M., $M_1$, $M_2$, $M_3$; $M_4$ has पुनः for अथ. ५ मूलत्वेन M., $M_3$; मूलत्वं यथा R., $M_2$, $M_4$. ६ जातः R., M., $M_1$, $M_2$, $M_5$. ७ काकतीयस्य M., $M_1$, $M_2$, $M_5$. ८ कुञ्च° M. ९ महितो R.

अत्र [1]प्रतापरुद्रस्य कीर्तिः स्थावराणामपि विस्मयकारिणीति [2]वस्तु व्यज्यते ॥

वस्तुनालंकारध्वनिर्यथा ।

> वीररुद्रभटान् दृष्ट्वा [3]जयलक्ष्मी[4]वृतान् रणे ।
> क[5]र्षन्त्यरिवधूकेशान् कानने कण्टकिद्रुमाः ॥ ५० ॥

अत्र जयलक्ष्मीसमालिङ्गितान् वी[6]ररुद्रभटान् दृष्ट्वा समदना इव कण्टकिद्रुमाः [7]शत्रुवधूकेशान् क[8]र्षन्तीवेत्युत्प्रेक्षा व्यज्यते ।

अलंकारेण वस्तुध्वनिर्यथा ।

> [9]ओसरइ सहीहि समं [10]लंजा वहुआए सिढिलमाणाए ।
> [11]अप्पग्गहणभ[12]येण [13]व सविहगए म[14]णोहरे दइए ॥ ५१ ॥[15]

---

लाङ्गले विस्मयादिवेति हेतोरुत्प्रेक्षणादुत्प्रेक्षालंकारो व्यञ्जकाप्रयोगाद् गम्यः । एवमलंकारे सत्यपि कौञ्चक्ष्माभृदिति वस्त्वेव स्थावराणामपि विस्मयकारिणी कीर्तिरिति वस्तु व्यनक्ति न पुनरलंकारभागः । अतो वस्तुना वस्तुध्वनेरेवेदमुदाहरणम् ॥

वीररुद्रेति । निगदव्याख्यानमेतत् ॥

ओसरईति । त्वोदवापोता इत्यपशब्दस्यौकारः ।

> अपसरति सखीभिः समं लज्जा वध्वाः शिथिलमानायाः ।
> आत्मग्रहणभयेनेव सविधगते मनोहरे दयिते ॥

[16]भयेण वेत्यत्र 'इवस्य पिवमिवतिवव्वा' इति वशब्दस्य केवलो वकारो हेतूत्प्रेक्षाव्यञ्जकः ॥

---

छाया ।

> अपसरति सखीभिः समं लज्जा वध्वाः शिथिलमानायाः ।
> आत्मग्रहणभयेनेव सविधगते मनोहरे दयिते ॥

१ प्रतापरुद्रकीर्तिः $M_1$, $M_3$; समाभूतो निश्चलाङ्गत्वेन वस्तुना स्थावराणामपि विस्मयकारिणी कीर्तिरिति M. २ वस्तु is omitted in $M_3$. ३ जयश्रिया $M_1$. ४ $M_5$ has समावृतान् for वृतान् रणे. ५ 'वृतान् $M_4$; समागतान् $M_5$. ६ वीरभटान् $M_5$. ७ शत्रुवधू is omitted in $M_3$. ८ इव is omitted in $M_5$. ९ अपसरइ P. १० लंजा T', R. ११ अपगहण T', अपगहण R. १२ भयण M. १३ व्व P., M. १४ मणहरे R. १५ छाया is omitted in T. and p. १६ भयेनेवेत्यत्र t.

अत्रोत्प्रेक्षयोल्लिङ्गनं[1] वस्तु व्यज्यते ॥

अलंकारेणालंकारध्वनिर्यथा ।

> अभयं याचमानानां काकतीयेन्द्रविद्विषाम् ।
> रक्षां नाङ्गीकरोतीव वनं शाखाग्र[2]कम्पनैः ॥ ५२ ॥

अत्र नाङ्गीकरोतीवेत्युत्प्रेक्षया प्रतापरुद्रशत्रुभ्यो रक्षणं कर्त्तुं वनमपि[3] बिभेतीवेत्युत्प्रेक्षा व्यज्यते ॥

कविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो[4] वस्तुना वस्तुध्वनिर्यथा ।

> जह[5] तह वै[6] होदु अज्जा[7] णरणाह करेहि[8] रक्खणं ससिणो ।
> जं ताए कडक्खुक्का[9] आणत्ता[10] तं मसीकादुं ॥ ५३ ॥

अत्र विरहातुरा[11] आर्या चन्द्रिकामसहमाना रोषोज्ज्वलितया[12] कटाक्षोल्कया चन्द्रं मर्षीकरोति सा[13] रक्षणीय इत्यनेन वस्तुना[14] इतः परं सा[15] जीवितं धारयितुमशक्ताधुनैव[16] त्वया[17] समागन्तव्यमिति वस्तु[18] व्यज्यते ॥

---

अभयमिति[19] । अत्र क्रियोत्प्रेक्षयोर्व्यङ्ग्यव्यञ्जकभाव इत्याह अत्रेति ॥

अथ कविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थेषु वस्तुना वस्तुध्वनिमुदाहरति । जह[20] तह वेति । 'नवी[21]च्चयो दातादौ' इति ह्रस्वः । यथा तथा वाभवत्वार्या नरनाथ कुरु रक्षणं शशिनः । यत्तया कटाक्षोल्का आज्ञापिता तं मर्षीकर्तुम् ।[22] विलम्बितागमनं प्रियं प्रति विदग्धदूती[23]वचनमेतत् ॥

---

छाया ।

> यथा तथा वा भवत्वार्या नरनाथ कुरु रक्षणं शशिनः ।
> यत्तया कटाक्षोल्का आज्ञप्ता तं मर्षीकर्तुम् ॥

१ °लिङ्गनरूपं वस्तु T'., R., T.; °लिङ्गनादिकं M., $M_2$, $M_4$, $M_5$. °लिङ्गनस्वरूपं $M_1$. २ शाखाग्र° $M_1$. ३ वनमपि is dropped in R. ४ कविनिबद्धार्थशक्तिमूलत्वं यथा R.; कविनिबन्धनोक्तिसिद्धार्थशक्तिमूलत्वेन M.; कविनिबन्धनार्थशक्तिमूलं यथा $M_2$; कविनिबद्धार्थशक्तिमूलं यथा $M_5$. ५ जइ R. ६ वा T'., T. ७ अज्जा R. ८ करेहि णरणाह $M_1$. ९ कडक्खोक्का $M_1$ कडक्खुक्का T. १० आक्खित्ता (छाया आक्षिप्ता) M. ११ विरहार्ता $M_1$. १२ रोषज्वलितया $M_1$. १३ सा रक्षणीया M., $M_1$, $M_2$, $M_4$ $M_5$. १४ वस्तुना is omitted in $M_1$. १५ सा omitted in P. १६ °काधुना $M_1$. १७ त्वयागन्तव्यं M., $M_1$, $M_2$, $M_4$, $M_5$. १८ वस्तु omitted in $M_1$. १९ अभयमिति is omitted in p. २० जइ तवेति p. २१ नवीच्च° p. २२ छाया is omitted in p. and T. २३ दूती is omitted in t.

वस्तुनालंकारध्वनिर्यथा ।

कस्त्वं शुभ्राखिलाङ्गश्चरसि ननु यशो वीररुद्रस्य वर्ते
कोऽयं ते दीप्तदेहः स्फुरति परिसरे मत्सुहृत्तत्प्रतापः ।
प्रच्छाद्यालं स्फुरद्भिः कुमुदसरसिजैः ख्यापितं वः स्वरूपं
सोमार्कौ स्वागतं वामवधिगिरिरहं कल्पितो निस्तमस्कः ॥ ५४ ॥

अत्र प्रतापरुद्रयशःप्रतापयोः सोमार्कसादृश्यप्रतीतिरुपमा व्यज्यते ॥
अलंकारेणालंकारध्वनिर्यथा ।

उवह हला वहुआए तह आरूढो वि णिब्भरो माणो ।
णिवइसमाअमसंभमसंजाअभएव्व ओसरइ ॥ ५५ ॥

---

कस्त्वमिति । अत्र प्रथमार्धे लोकालोकवीररुद्रयशसोः प्रश्नोत्तरवाक्यानि चत्वारि । द्वितीयार्धमेकं लोकालोकवाक्यं मत्सुहृदिति । उभयोरेकजन्यत्वादिति भावः । मे सुहृदिति क्वचिदपपाठो लेखकदोषात् । युष्मदस्मदादेशानां पदात् परत्वनियमात् । अत्र तु वाक्यादित्वेन तदभावादिति । अत एवोक्तम् । 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति । प्रच्छाद्यालमिति । न प्रच्छादनीयमित्यर्थः । "अलंखल्वोः—" इति क्त्वाप्रत्यये ल्यबादेशः । ख्यापितं व इत्यत्र द्वित्वेऽभिधेये व इति पाक्षिकं बहुवचनम् । 'युष्मदि गुरावेकेषाम्' इति जयादित्यवचनात् । निस्तमस्को बाह्यभागेऽपीति भावः ॥

उवहेति । उवहेति पश्यतेत्यर्थेऽव्ययम् । हलेति च सख्याह्वाने । 'वा सख्यामामि हलाहल' इति । भओव्वेत्यत्र 'मिवपिवविवव्वल इवार्थे' इतीवार्थे द्वित्वं प्राप्तो

---

छाया ।

पश्यत हला वध्वास्तथारूढोपि निर्भरो मानः ।
नृपतिसमागमसंभ्रमसंजातभय इवापसरति ॥

१ कीर्तिः $M_g$. २ दिव्यदेहः T', T.; दीप्रदेहे R. ३ मे सुह° $M_4$. ४ प्रद्दाद्यालं M.; आच्छाद्यालं T', R., $M_g$, $M_5$, P. ५ वां P., $M_1$, $M_4$; त्वत्स्व° R. ६ °रयं R. ७ साम्याचन्द्रसूर्यप्रतीते° $M_4$. ८ उव्वह R.; पेच्छ M., $M_g$; अवह $M_1$. ९ ओ वहुए R; M., $M_g$. १० तम्महारूढो R. ११ समागम $M_1$. १२ भओव्व T'; भओविव M., $M_1$, $M_4$.

अत्रोत्प्रेक्षया प्रियप्रार्थनां विनैव मानिनीमनः प्रसन्नमिति विभावनालंकारो व्यज्यते ॥

अलंकारेण वस्तुध्वनिर्यथा।

> अप्राप्य सेवावसरं नाथ कान्तावृतस्य ते।
> त्वत्कीर्त्तिं सेवमानेव श्यामा सर्वाङ्गपाण्डुरा ॥ ५६ ॥

अत्र सेवमानेवेत्युत्प्रेक्षया सर्वथा स्वीकार्यत्वादिरूपं वस्तु व्यज्यते॥

एवं प्रबन्धादिगतत्वेन यथासंभवमुदाहरणानि द्रष्टव्यानि विस्तरभयादिह नोक्तानि ॥

अथ शब्दशक्तिमूलध्वनिः। स च वस्त्वलंकारगतत्वेन द्विविधः। तथा चोक्तम्

---

वकारः । पश्यत हला वध्वस्तथा रूढोऽपि निर्भरो मानः। नृपतिसमागमसंभ्रमसंजातभय इवापसरति ॥ 'विभावनालंकार इति । अकारणकार्योत्पत्तेस्तल्लक्षणत्वादिति भावः ॥

अप्राप्येति। श्यामा यौवनवतीति। अत्र विरहपाण्डिम्नः कीर्त्तिसेवाहेतुकत्वमुत्प्रेक्ष्यते ॥

अवशिष्टा अर्थशक्तिमूला अन्यत एव द्रष्टव्या इत्याह। एवमिति। अत्रानुक्तौ हेतुमाह । विस्तरेति। उक्तोदाहरणावहितचेतसामुदाहरणान्तरावगमस्य सुलभत्वात् पुनस्तदुपादानं ग्रन्थगौरवमेवावहेदिति शब्दप्रपञ्चपरं विस्तरशब्दं प्रयुञ्जानस्य हृदयम्। "प्रथने वावशब्दे" इति घञ्प्रतिषेधादप्प्रत्ययः। 'स तु शब्दस्य विस्तरः' इत्यमरः ॥

शब्दशक्तिमूलध्वनेर्द्वैविध्ये वृद्धसंवादमाह। तथा चोक्तमिति। यद्यप्यलं-

---

१ मानिनीजनः प्रसन्न इति R.; मानिनीमानः प्रसन्न इति M., $M_a$, $M_p$. २ त्वत्कीर्तिः सावमानेव P. ३ सावमानेवे° P. ४ स्वीकार्यत्वं वस्तु M., $M_a$. ५ वस्तु is omitted in R. ६ °मूलो ध्वनिः $M_p$. ७ °मूलत्वेन P., T. °लंकारत्वेन $M_p$. ८ This गाथा is omitted in p. and T.

'अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥'

इति । तत्रालंकारध्वनिर्यथा ।

एसो सैच्चं राआ सामा खु तुमं समाअमो दोण्णं ।
किं उण ण पदोसकहा दीसइ एदं खु अच्चरिअं ॥

अत्र प्रकरणेन कान्तानृपवाचकाभ्यां श्यामाराजशब्दाभ्यां निशाचन्द्रप्रतीतिरुपमा व्यज्यते ॥

---

कारोऽपि वस्त्वेव तथाप्यलंकारो विचित्रं वस्तु इतरत्तु शुद्धमिति प्रतिपादयितुं वस्त्वेवेत्येवकारः ॥

एष सत्यं राजा श्यामा खलु त्वं समागमो द्वयोः ।
किं पुनर्न प्रदोषकथा दृश्यत एतत्खल्वाश्चर्यम् ।"

एसो इति । नायिकां प्रति सखीवाक्यमेतत् । समागम इति । युज्यते इति शेषः । प्रदोषो दोषः कालविशेषश्च । अत्र श्यामाराजशब्दवाच्ययोः कान्तानृपयोः प्रकृतयोरप्रकृतनिशाचन्द्राभेदाध्यवसायेन प्राप्तस्य प्रदोषस्य कालविशेषलक्षणस्य प्रतिषेधेन विरोधः प्रतीयते । तद्द्योतकमाश्चर्यपदम् । परिहारस्तु दोषनिषेधादिति विरोधाभासोऽलंकारः । व्यङ्ग्यं विविनक्ति । अत्रेति । अनेकार्थपदगुम्फनमहिम्ना कवेरर्थान्तरं विवक्षितमेव प्रतीयते । तस्यासंबन्धत्वपरिहाराय प्रकृतेनौपम्यं कल्पनीयम् । तेन व्यङ्ग्यस्योपमालंकारस्य श्लिष्टशब्दान्वयव्यतिरेकानुविधायित्वाच्छब्दशक्तिमूलत्वमिति भावः ॥

---

छाया

एष सत्यं राजा श्यामा खलु त्वं समागमो द्वयोः ।
किं पुनर्न प्रदोषकथा दृश्यते एतत्खल्वाश्चर्यम् ॥

१ विशेषः R.; संक्षेपः M. २ अत्रा° M., $M_1$, $M_2$, $M_4$, $M_5$. ३ सं च T'; स च R. ४ राजा P.; राओ T', T. ५ समाअमं दोण्णं $M_4$. ६ दोहं R.; दाण M.; दुण्णम् and दुण्णम् $M_1$. ७ किं ण्णं $M_2$. ८ णपओस R., M., $M_1$. णप्पदोस T. ९ ण अं for एदं खु M. १० अचरिअं R. ११ This छाया is omitted in T and. P; m. gives it after एसो इति । १२ प्रकृष्टो दोषः $m_2$. १३ तद्विरोधसूचक° m. १४ M. has निच्चं राआ in गाथा.

कान्तारवाससंतप्ताः संशृणुध्वं हितादितः ।
कुरुध्वमधुना राजपादसेवां नरेश्वराः ॥ ५८ ॥

अत्र राजपादसेवामिति शब्दशक्त्या प्रकृतस्य प्रतापरुद्रस्य प्रतीतिः प्रकरणाज्ज्ञायते । अनेन प्रतापरुद्रस्य सेवा कर्तव्या किमरण्यवासेन संतप्ता इति वस्तु व्यज्यते ॥

उभयशक्तिमूलध्वनिर्यथा ।

जिष्णुरेष भुजस्तम्भजृम्भमाणाद्भुतायुधः ।
मुञ्चन्तु क्ष्माभृतः सर्वे निजपक्षविजृम्भितम् ॥ ५९ ॥

अत्र क्ष्माभृतो निजपक्षविजृम्भितं मुञ्चन्तु जिष्णुरेष इत्यत्र शब्दशक्तिमूलता । भुजस्तम्भजृम्भमाणाद्भुतायुध इत्यत्रार्थशक्तिमूलता ॥

---

कान्तारेति । हितादाप्तादितोऽस्मात् मत्त इत्यर्थः । संशृणुध्वमित्यत्र कर्मणो हितोपदेशस्याविवक्षितत्वादकर्मकत्वम् । तदुक्तम्—

‘धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥’

इति । अत एव “समो गम्यृच्छि—” इत्यादिनात्मनेपदम् । अत्र प्रकरणादनुगृहीतस्य राजपदस्य महिम्ना प्रतापरुद्रसेवा कर्तव्या नैवं दुःखमनुभवितव्यमिति वस्तु व्यज्यत इत्याह । अत्रेति ॥

जिष्णुरिति । जिष्णुर्जयशील इन्द्रश्च । अद्भुतायुधं खड्गादिकं वज्रायुधं च । क्ष्माभृतो राजानः पर्वताश्च । पक्षा बलानि गरुतश्च । शब्दशक्तिमूलतेति । शब्दपरिवृत्तिसहिष्णुत्वाभावादिति भावः । अर्थशक्तिमूलतेति । तत्सहिष्णुत्वादिति भावः । अयं तु वाक्यगत एव ॥

---

१ हितार्थिनः P.; हितानि वः M₁. २ पादसेवामिति M. ३ °निवासेन R.; °सेवासंतप्ता M₁. ४ °मूलो ध्वनि° M₁. ५ °माणोद्यतायुधः P. ६ मुञ्चत M₁. ७ अत्र जिष्णुरित्यत्र M₁. ८ मुञ्चत M₁. ९ हितार्थिन इति पाठान्तरम् is inserted before it in p. and T. १० प्राप्ते m₁; इत्ते धात्व° p., T.

असंलक्ष्यक्रमव्यङ्ग्यो [1]रसादिध्वनिः । तथा चोक्तं शृङ्गारतिलके ।

> ' रसभावतदाभासभावशान्त्यादिरक्रमः।
> भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः ॥'

इति । रसभावो[2]दाहरणस्वरूपनिरूपणप्रपञ्चो [3]रसप्रकरणे भविष्यति ॥

[4]गुणीभूतव्यङ्ग्यं [5]मध्यमं काव्यमष्टविधम् ।

तथा चोक्तं [6]काव्यप्रकाशे

> ' अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
> संदिग्धतुल्यप्राधान्ये काकाक्षिप्तमसुन्दरम् ॥'

इति । कामिनी[7]कुचकलशवद्गूढस्यैव [8]चमत्कारित्वाद्[9]गूढव्यङ्ग्यं मध्यमं काव्यम् । यथा

---

असंलक्ष्यक्रमव्यङ्ग्यस्य रसादिध्वनित्वे संमतिमाह । रसभावेति । तदाभासा रसभावाभासाः । आदिग्रहणेन भावोदयभावसंधिभावशबलत्वानि गृह्यन्ते । अक्रमः असंलक्ष्यक्रम इत्यर्थः । न चात्र रसवदाद्यलंकारशङ्का कार्येत्याह । भिन्न इति । तत्र हेतुमाह । अलंकार्यतयेति । प्रधानतयेत्यर्थः । रसादीनामङ्गभाव एवालंकारत्वात् । तदुक्तम् ।

> ' प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
> काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः ॥'

इति । उदाहरणमुत्तरत्र भविष्यतीत्याह । रसेति ॥

अथ मध्यमकाव्यस्योक्तलक्षणत्वाद्विभागमाह । गुणीभूतेति । संवादव्याजेनोद्दिशति । अगूढमित्यादिना । गूढस्यैवेति । ' सर्वमभ्यर्हितं द्रव्यं प्रच्छादनमपेक्षते ' इति न्यायादिति भावः । व्यङ्ग्यस्य द्रुतप्रतीतावगूढत्वं मध्यमप्रतीतौ गूढत्वं विलम्बितप्रतीतावस्फुटत्वम् । तत्राद्यन्तयोर्मध्यमत्वं मध्यमस्योत्तमत्वं चेति विवेकः ॥

---

१ रसध्वनिः R. २ °दाहरणं P.; °दाहरणतत्स्वरूप° T'.; °स्वरूप रस° $M_1$; °दाहरणं तत्स्वरूप° T. ३ रसे प्रकरणे R.; रसभावप्रकरणे $M_4$. ४ Before this गुणीभूतव्यङ्ग्यमष्टविधं निरूप्यते in T', T. ५ मध्यमकाव्य $M_1$. ६ काव्यप्रकाशे is omitted in $M_2$. ७ °कुचवद्गू° $M_4$. ८ चमत्कारकारित्वात् R., M., T. ९ गूढव्यङ्ग्यं यथा R.

औन्नत्यं यदि वर्ण्यते शिखरिणः कुध्यन्ति नीचैः कृता
गाम्भीर्यं यदि कीर्त्यते जलधयः क्षुभ्यन्ति गाधीकृताः।
तत्त्वां वर्णयितुं बिभेमि यदि वा जातोऽस्म्यगस्त्यः स्थित-
स्त्वत्पार्श्वे गुणरत्नरोहणगिरे श्रीवीररुद्रप्रभो ॥ ६० ॥

अत्र यदि वा जातोऽस्म्यगस्त्यः स्थित इत्यनेन जलनिधिपर्वतेभ्यो न बिभेमीति व्यङ्ग्यमत्रागूढम् ॥

**अपरस्याङ्गं यत्र रसादे रसादिरङ्गं तदपि गुणीभूतंव्यङ्ग्यमेव।**

यथा।

वीतव्रीडमपास्तमौनमुदयद्वैस्वर्यमाविर्भवत्-
स्वेदं निर्भरगात्रवेपथुमिलन्मूर्च्छं गलद्बाष्पकम्।
संजातप्रलयं च काकतिमहीनाथ स्मरोद्वेजिता
भूपाः शैलगुहासु यान्ति विजनं भीत्या समालिङ्गिताः ॥६१॥

---

अगूढमुदाहरति । औन्नत्यमिति । वामनीकृतविन्ध्याचलश्चुलुकीकृतसिन्धुसलिलश्च कुम्भसंभव इति महती प्रथा । अतोऽगस्त्योऽस्मीत्यनेन शैलसमुद्रेभ्यो न बिभेमीति व्यङ्ग्यस्य वाच्यायमानत्वादगूढमित्याह । अत्रेति ॥

अपरस्याङ्गमिति । अनयोर्विवक्षितावर्थौ क्रमेणाह । यत्रेति । अत्र प्रथमादिशब्देन भावादयो वाक्यार्थीभूतो वाच्यश्च गृह्यन्ते । द्वितीयादिशब्देन च भावादयोऽनुरणनं च गृह्यन्ते । तेन यत्राङ्गिनो रसभावादेर्वाच्यस्य वा रसभावादिरनुरणनं चाङ्गत्वेन निबध्यते तदपराङ्गमित्यर्थः । उदाहरति । वीतव्रीडमिति । एकत्रोत्क्रोशनादन्यत्रालापाच्च मौनत्यागः । वैस्वर्यं गद्गदभाषित्वम् । मूर्च्छा शून्येन्द्रियत्वम् । प्रलयो नष्टचेतता । शैलगुहास्वित्यत्रापिशब्दोऽनुक्तोऽपि सामर्थ्याल्लभ्यते । अतस्तत्रापि विजनं कञ्चन कोणप्रान्तं प्रविशन्तीति भावः ।

---

१ किमु M. २ नीचीकृताः M., $M_p$, $M_s$. ३ वर्ण्यते R., $M_p$, $M_s$. ४ °गिरेः M., $M_p$, $M_s$. ५ उभयत्र R.; अत्र is omitted in $M_s$. ६ °गस्त्य इत्यनेन R., M., $M_s$; °गस्त्यः स्थितः $M_p$. ७ जलधि° M. ८ व्यङ्ग्यमगूढम् M., $M_p$. ९ °रङ्गं भवति $M_p$. १० °भूतं P. ११ °मपास्तमान° P., T. १२ °माविर्भवेद् P., R. १३ °स्वादं M. १४ °लापनाच्च m.

अत्र शृङ्गाररसस्य[1] भयरसाङ्गत्वम्[2]।[3]

वाच्यसिद्ध्यङ्गं[4] यथा।

> करालः काकतीन्द्रस्य करवालनवाम्बुदः[5]।
> धारया शमयत्युग्रं[6] प्रतापज्वलनं द्विषाम्[7] ॥ ६२ ॥

अत्र[8] जलधारा व्यङ्ग्या सा च करवालनवाम्बुद इत्यत्र[9] वाच्यभूतस्य रूपकस्य[10] सिद्धिकृदिति गुणीभूतम्[11] ॥

---

अत्र प्रस्तुतविशेषणसाम्यादप्रस्तुतनायकधर्मप्रतीतेः समासोक्तिः । अत्रान्यपोषकत्वेनाङ्गस्यापि शृङ्गारस्य वर्ण्यमानत्वेन प्राधान्यात् तद्वशेन गुणीभूतव्यङ्ग्यमित्येव व्यपदेशो न पुनरङ्गीभूतभयानकरसापेक्षया ध्वनिरिति । अत एवोक्तं काव्यप्रकाशे । 'क्वचित् केनचिद् व्यवहारः' इति । एवमपराङ्गान्तरमुदाहार्यम् ॥

तृतीयं भेदमाह । वाच्येति । वाच्यस्य सिद्धेरुत्पत्तेरङ्गमिति व्युत्पत्त्यैव स्वतःसिद्धस्य वाच्यस्योपोद्बलकादपराङ्गादस्य भेदो दर्शित इति वेदितव्यम् । उदाहरति । कराल इति । अत्र जलधारा व्यङ्ग्येत्यभिधायाः प्रकरणात् खड्गधारायामेव नियन्त्रणादिति भावः । अत एव न श्लेष इत्युक्तं । वाह्निन्यः काकतीन्द्रस्येत्येतद्व्याख्यानावसरे । रूपकस्य सिद्धिकृदिति । यतो रूपकं स्वनिर्वाहाय प्रतीयमानजलधारामपेक्षते । अन्यथा करवाल एव नवाम्बुदः करवालो नवाम्बुद इवेति वा रूपकोपमितसमासयोः संदेहः स्यात् । न चात्र प्रयुज्यमानस्य करालत्वस्योपमितसमासबाधकत्वम् । केवलकरवालविशेषणत्वाङ्गीकारेण समानधर्मत्वाभावात् । न चास्तु नाम संदेह इति वाच्यम् । साधकबाधकाभाव एव तस्यालंकारत्वादिति ॥

---

१ शृङ्गारस्य P., T, T'. २ भयरसाभासत्वम् M., $M_1$., $M_4$. ३ $M_1$ has after this, भयरसस्य प्राधान्यत्वेऽत्र प्रतापरुद्रस्याधिक्यं प्रतिपाद्य तच्छत्रूणां भयप्रतिपादनेनैवेति; $M_5$ has भयरसस्य प्राधान्यं प्रतापरुद्रस्याधिक्यं प्रतिपाद्यम् । तत्र शत्रूणां भयप्रतिपादनेनैवेति । ४ वाच्यसिद्ध्यङ्गत्वं R. ५ नवाम्बुदाः M. ( नवाम्बुदः is also noticed ). ६ शमयन्त्यु° M ( शमयत्यु ) also is noticed. ७ द्विषा R. ८ अत्र च P. ९ इत्यस्य R., T', T. १० वाच्यस्य रूपकस्य M., $M_1$, $M_4$, $M_5$; वाच्यभूतरूपकस्य R. ११ गुणीभूतः M., गुणीभूतव्यङ्ग्यत्वम् R., गुणीभूतव्यङ्ग्यम् T', T.

अस्फुटं यथा ।

वीररुद्रकृपाणस्य महिमा कोऽप्येनङ्कुशः ।

प्रसूते कीर्त्तिगङ्गां यः पीत्वा द्विषदसृङ्नदीम् ॥ ६३ ॥

अत्र कृपाणस्य जह्नोराधिक्यप्रतिपादनाद् व्यतिरेकः परमस्फुटः प्रतीयते ॥

संदिग्धं यथा ।

काकतिक्ष्मापतेर्दृष्टिरनुरागतरङ्गिता ।

लग्ना कल्हारमालेव वध्वास्तुङ्गे कुचद्वये ॥ ६४ ॥

अत्रालिङ्गनेच्छायां वाक्यविश्रान्तिरथवा स्तनमण्डलालोक एवेति संदेहः ॥

तुल्यप्राधान्यं यथा ।

नृपाः प्रतापरुद्रस्य निषेवध्वं पदाम्बुजे ।

अन्यथास्य मनस्तादृक्प्रसादं कलुषायते ॥ ६५ ॥

---

अस्फुटमुदाहरति । वीररुद्रेति । जह्नुः पीतामेव नदीं पुनरजीजनदयं पुनरन्यथेत्युपमानादुपमेयस्याधिक्यलक्षणस्य व्यतिरेकस्य विलम्बेन प्रतीतेरस्फुटमित्याह । अत्रेति ॥

संदिग्धप्राधान्यमुदाहरति । काकतीति । अत्रालिङ्गनेच्छारूपव्यङ्ग्यस्य चमत्कारकारित्वात् प्राधान्यमुत वाच्यस्येति संदेहात् संदिग्धप्राधान्यमत्रेत्याशयवानाह । अत्रालिङ्गनेति ॥

तुल्यप्राधान्यमुदाहरति । नृपा इति । अकलुषं कलुषं भवति कलुषायते । लोहितादित्वात् क्यष्प्रत्ययः । "वा क्यषः" इत्यात्मनेपदम् । सर्वत्र कविना व्यञ्जनैकप्रवणेन भाव्यम् । अत्र तु वाच्यस्य व्यङ्ग्येन सह समप्राधान्यसंपादनात् गुणीभाव इति भावः । प्राधान्यस्य संदेहसादृश्ययोः सहृदय एव प्रमाणम् । उद्भुतैरन्यथापि वक्तुं शक्यत्वादित्युक्तं भट्टगोपालेन ॥

---

१ °ष्यनन्तकः T'. २ °गङ्गाम्मः $M_g$; गङ्गा यः R. ३ नदी R. ४ °राधिक्ये M. ५ °मस्फुटं M. ६ संदिग्धप्राधान्यं M. ७ क्ष्माभृतो दृष्टि° P.; काकतीयविभोर्दृष्टि° P. ८ कुचे द्वये R. ९ मण्डलावलोकन एव R., M., $M_p$, $M_g$. १० एवेति वा M., $M_p$, $M_g$, $M_g$. ११ पदाम्बुजे R. १२ प्रसन्न $M_j$. १३ p. drops तु.

अत्र प्रतापरुद्रस्य पादसेवा[1] यदि त्यज्यते तदानीं[2] नैगरेषु वासो[3] दुर्लभ इति व्यङ्ग्यार्थस्य[4] वाच्यस्य च समं प्राधान्यम्[5] ॥

असुन्दरं[6] यथा ।

> 'एअसिलामहिलाणं सोऊण[7] णरिंददंसणामोअं[8] ।
> गुरुअणणिअंतिआए[9] वहुआए सामलं वअणं ॥ ६६ ॥

अत्र नरेन्द्रदर्शननिमित्तं हर्षमुत्पश्यन्त्या वध्वा मुखं श्यामलमिति वाच्यस्यैव चारुत्वम् । गुरुजननियन्त्रिताहं नरेन्द्रं द्रष्टुं[10] न गतवत्यस्मि इति व्यङ्ग्यार्थस्याचारुत्वम् ॥

**यत्र[11] काकार्थान्तरमाक्षिप्यते तदपि[12] गुणीभूतव्यङ्ग्यमेव ।**

---

सप्तममुल्लङ्घ्य बुद्धिस्थत्वादष्टमं भेदमुदाहरति । असुन्दरमिति । एतेनैतेषामुद्देशक्रमो न विवक्षित इति सूच्यते । एअसिलेति ।

> एकशिलामहिलानां श्रुत्वा नरेन्द्रदर्शनामोदम् ।
> गुरुजननियन्त्रिताया वध्वाः श्यामलं वदनम् ॥[13]

अत्र गुरुजनपराधीना काचिदेकशिलामहिलानां नरेन्द्रसंदर्शनसंतोषमहालाभं श्रुत्वा[14] मलिनमुखाभूदिति वाच्यस्यातिचारुत्वादात्मनस्तदलाभरूपस्य व्यङ्ग्यस्यासुन्दरत्वमित्याह । अत्र नरेन्द्रेति ॥

अवशिष्टं भेदमाचष्टे । यत्र काकेति । काकुर्नाम शब्दधर्मः । तत्प्रयोगे सर्वत्र शब्दस्पृष्टत्वेन व्यङ्ग्यस्य गुणीभाव एव । तदुक्तं लोचने । 'काकुयोजनायां सर्वत्र गुणीभूतव्यङ्ग्यतैव' इति । काव्यप्रकाशकारस्तु 'गुरुः खेदं

---

छाया ।

एकशिलामहिलानां श्रुत्वा नरेन्द्रदर्शनामोदम् ।
गुरुजननियन्त्रिताया वध्वाः श्यामलं वदनम् ॥

१ सेवा P.; पादपूजा M., $M_4$, $M_5$; यदि पादपूजा त्यज्यते M., $M_4$, $M_5$; पादसेवा यदि त्यज्यते $M_1$. २ तदेदानीं P. ३ नगरवासो M., $M_4$, $M_5$. ४ व्यङ्ग्यस्य M., $M_4$, $M_5$. ५ समप्राधान्यम् R. ६ $M_1$ has असुन्दरं यथा to चारुत्वम् before चित्रं तु काव्यं &c. ७ सोअणं T'. ८ नरेंद्र' P., णरिंद M., $M_1$, $M_3$, $M_4$, $M_5$. ९ णिअन्तिदाए M., $M_1$, $M_3$, $M_4$, $M_5$. १० नरेन्द्रं प्रतिद्रष्टुं R. ११ अत्र $M_5$. १२ तत्रापि M., $M_4$, $M_4$, $M_5$. १३ The छाया is not given in p. and T. १४ दृष्ट्वा $M_5$.

यथा ।

> पिअसहि कहेहि अहिआ खोणी लच्छी सरस्सई [1]मज्झा ।
> [2]जां बहु मण्णइ [3]सो णरणाहो [4]गुणविसेसण्णो ॥ ६७ ॥

अत्र क्षोणी [5]मेदधिकेति काकुकल्पनयाधिका न भवतीति [6]व्यज्यते ॥

चित्रं तु काव्यं [7]शब्दार्थालंकारचित्रतया बहुविधं तत्प्रपञ्चोऽप्यलंकारप्रकरणे [8]भविष्यति ।

---

खिन्ने मयि भजति नाद्यापि कुरुषु' इत्यादौ कचित् काकोः प्रश्नमात्रपर्यवसानाद् व्यङ्ग्यस्य मयि न योग्यः खेदः कुरुषु योग्य इत्येवंरूपस्य गुणीभावानौचित्येन प्राधान्यात् ध्वनित्वमप्यङ्गीचकार । उदाहरति । पिअसहीति ।

> प्रियसखि कथयाधिका क्षोणी लक्ष्मीः सरस्वती मत्तः ।
> यां बहु मन्यते स नरनाथो गुणविशेषज्ञः ॥[9]

'मइममममहमज्झङसौ' इति पञ्चम्येकवचनेऽस्मदो मज्झादेशः । 'ङसेर्लुक्' इति वैकल्पिको लुक् । ङित्वात् पूर्वस्य दीर्घः । अत्राधिक्यनिषेधस्य वाचकाभावात् केवलवाच्यसामर्थ्य[10]लभ्यत्वेन व्यङ्ग्यत्वम् । तस्य च [11]काकुसंस्पर्शाद् गूढत्वकृतचारुत्वातिशयभङ्गेन गुणीभूतत्वमेव । तदेतत् सर्वं मनसि निधायाह । अत्रेति ।

अधमकाव्यप्रपञ्चोऽलंकारप्रकरणे भविष्यतीत्याह । चित्रं त्विति ॥

---

छाया ।

> प्रियसखि कथयाधिका क्षोणी लक्ष्मीः सरस्वती मत्तः ।
> यां बहु मन्यते स नरनाथो गुणविशेष[12]ज्ञः ॥

१ मज्ज P. २ या $M_1$; जं T; जाओ $M_1$, $M_2$, $M_3$, $M_4$, $M_5$. ३ सोअं P. ४ विण $M_1$, $M_4$. ५ समधिकेति M. ६ वस्तु व्यज्यते T., T. ७ शब्दालंकार॰ T., T'. ८ व्यक्तीभविष्यति T., T'. ९ This छाया is omitted in P., T. १० लभ्यव्यङ्ग्यत्वम् t. ११ काकुस्पर्शाद् p.; काकुसंस्पर्शनाद् $m_1$. १२ विशेषज्ञाम् $M_1$.

[1]अथ महाकाव्यादयः प्रबन्धा निरूप्यन्ते ।

नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम् ।
उद्यानसलिलक्रीडामधुपानर[2]तोत्सवाः ॥
विप्रलम्भो विवाहश्च कुमारोदयवर्णनम् ।
मन्त्रद्यूत[3]प्रयाणानि नायकाभ्युदया अपि ॥
एतानि यत्र वर्ण्यन्ते तन्महाकाव्यमु[4]च्यते ॥

[5]एतेषामष्टादशानां वर्ण्यानां यैः कैश्चिदूनमपीष्यते । तत्त्रिविधम् । गद्यमयं पद्यमयमुभयमयं चेति ।

अपादः [6]पदसंघातो गद्यं पद्यं चतुष्पदम् ।

गद्यकाव्यं कादम्बर्यादि । पद्यकाव्यं [7]रघुवंशादि ।

असर्गबन्धमपि यदुपकाव्यमुदीर्यते ।

असर्गबन्धरूपं सूर्यशतकादि ।

गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ।
वक्त्रं चापरवक्त्रं च [8]सोच्छ्वासत्वं च भेदकम् ।
वर्ण्यते यत्र काव्यज्ञै[9]रेसावाख्यायिका मता ॥

---

पूर्वं प्रबन्धानां ध्वन्याश्रयत्वमुक्तं तत्स्वरूपस्य लक्षणमन्तरेण [10]दुर्ज्ञेयत्वात् तन्निरूपणं प्रतिजानीते । अथेति । तत्र महाकाव्यलक्षणमाह । नगरेत्यादिना । एतच्च सर्गनिबन्धचतुर्वर्गफलचतुरोदात्तनायकत्वादीनामुपलक्षणम् । तत्प्रपञ्चस्तु काव्यादर्शे द्रष्टव्यः । चम्पूकाव्यं दमयन्त्यादि । आख्यायिका नाम गद्यकाव्यविशेषः । तल्लक्षणमाह । वक्त्रमिति । उच्छ्वासः सर्गादिरिव परिच्छेदभेदः ।

---

१ T. has महाकाव्योपकाव्यादिप्रबन्धनिरूपणम् as a heading before अथ &c. २ ॰रतोत्सवः M., $M_{1}$. ३ ॰प्रयाणानि॰ M., T'; ॰प्रमाणानि॰ $M_{1}$. ४ ॰मिष्यते M. ५ यथा॰ R., T. ६ पदसंदोहो B. ७ रामायणादि $M_{1}$. ८ सोच्छ्वासं तथ R. ९ सारसाख्यायिका मता P. १० दुर्ज्ञानत्वात् m.

[1]यत्र वक्त्रापरवक्त्रनामानौ वृत्तविशेषौ वर्ण्येते सोच्छ्वासपरिच्छिन्नाख्यायिका हर्षचरितादि ।[1]

[2]अथ [3]क्षुद्राः प्रबन्धा निरूप्यन्ते ।

येन केनापि तालेन गद्यपद्यसमन्वितम् ।
[4]जयत्युपक्रमं [5]मालिन्यादिप्रासविचित्रितम् ॥
तदुदाहरणं नाम [6]विभक्त्यष्टकसंयुतम् ॥

[7]तत्रादौ जयत्युपक्रमं मालिन्यादि[8]वृत्तरम्यं पद्यं [9]निबध्यते । अनन्तरमपि चेत्युपक्रमाण्यष्टवाक्यानि सप्रासानि सतालानि प्रतिविभक्ति निबध्यन्ते । [10]अनन्तरं [11]विभक्त्याभासास्तदुदाहरणम् ।

---

भेदकमिति । कथाया इति शेषः । तदुक्तमभिनवगुप्ताचार्यैः । 'आख्यायिकोच्छ्वासादिना वक्त्रापरवक्त्रादिना युक्ता । कथा तु तद्विरहिता' इति । दण्डिना पुनरुभयोर्नाममात्रभेदो न जातिभेद इत्युपपादितम् । 'तत्कथाख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता' इत्यादिना । वक्त्रं नामाष्टाक्षरपादो मात्रावृत्तविशेषः । अपरवक्त्रमर्धसमवृत्तभेदः । उभयोर्लक्षणं तु वृत्तरत्नाकरे

'वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्'
'अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ ॥'

इति ।

अथ क्षुद्रप्रबन्धेषूदाहरणस्य लक्षणमाह । येन केनेति । तालेन चञ्चत्पुटादिना गद्यैः क्रमेण कलिकोत्कलिकापरपर्यायैर्विभक्तिविभक्त्याभासाङ्कितैर्वाक्यैः पद्यैः प्रतिवाक्यमादौ तत्तद्वाक्यसमानविभक्तिकनायकनामाङ्कितैः श्लोकैश्च समन्वितम् । मालिनी नाम वृत्तविशेषः । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् । अत्र लक्षणस्य न्यूनत्वाद्वर्तमानपदानां च संकीर्णत्वादुभयं वारयन् व्याचष्टे । यत्रेत्यादिना । तत्र संबोधनविभक्तिरष्टमी । प्रबन्धान्ते सर्वविभक्त्यङ्कितो नवमश्लोकश्चेत्यादिविशेषाणां साक्षिश्लोकाः साहित्यचिन्तामणौ द्रष्टव्याः । अन्ते कविप्रबन्धनामाङ्कितं पद्यविशेषं कुर्यात् । तदुक्तम्

---

१ The portion within १ and १ is omitted in P., T., T'. २ T. has क्षुद्रप्रबन्धनिरूपणम् as a heading before this. ३ क्षुद्रप्रबन्धाः $M_1$. ४ जयेत्युपक्रमं M., $M_1$, $M_3$, $M_4$, $M_5$. ५ मालिन्यासादिप्रासचित्रितम् M. ६ विभक्त्यष्टकसंमितम् M.; विभक्त्यष्टकसंयुतम् $M_3$.; विभक्त्यष्टाङ्क° P.; विभक्त्यष्टक° R. ७ यत्र जयेत्युपक्रमं M ; पद्यादौ T. ८ M. drops वृत्त. ९ निगद्यते R., M. १० तदनन्तरं M. ११ विभक्त्याभास° P., R.

संबोधनविभक्त्या यत् प्रचुरं पद्यपूर्वकम् ।
विभक्तपुनराकृष्टशब्दं स्याच्चक्रवालकम् ॥
आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका ।
अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता ॥
प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपोचिता ।
सर्वतो देवशब्दादिरेषा भोगावली मता ॥
वर्ण्यमानाङ्कविरुद्वर्णनप्रचुरोज्ज्वला ।
वाक्याडम्बरसंयुक्ता सा मता विरुदावली ॥

---

'अन्तेऽनुष्टुभमार्यां वा कविकृत्याख्ययान्विताम् ।
कुर्याच्चाटुप्रबन्धानामयं साधारणो विधिः ॥'

इति ।

चक्रवाललक्षणमाह । संबोधनेति । पद्यपूर्वकमित्यनेन गद्यानां कलिकात्वेनानुप्रवेश उक्तः । विमुक्तः सन् पुनराकृष्टो विमुक्तपुनराकृष्टः । स्नातानुलिप्तादिवत् पूर्वकालसमासः । तथाभूतः शब्दो द्वित्राक्षरपदं यस्य तत् तथोक्तम् । शृङ्खलितदलाद्यन्तपदमित्यर्थः । अत्र गद्यपद्ययोरावृत्त्यादिकमन्यतो द्रष्टव्यम् तदुक्तम् ।

'ओजस्विपदभूयिष्ठमाद्यन्ताशीःसमन्वितम् ।
चतुर्धा वाष्टधा वृत्तं चक्रवालं प्रचक्षते ॥'

इति ।

भोगावलीमाह । आद्यन्तेति । स्कन्धः परिच्छेदभेदः । अत्र भोगोपकरणोद्यानवसन्तनायकगुणादिवर्णनं प्रायेण कर्तव्यम् ॥

विरुदावलीमाह । वर्ण्यमानेति । अत्र स्वविक्रमकुलक्रमागतबिरुद्वर्णनातिरिक्तं भोगावलीवत् द्रष्टव्यम् ॥

तारणां संख्यया पंचैर्युक्ता तारावली मता ।

एवं कविप्रौढोक्तिसिद्धाः क्षुद्राः प्रबन्धा यथासंभवमूह्याः । अथैषा-मुदाहरणानि विस्तरभयादिह नोक्तानि ॥

इति श्रीविद्यानाथकृतौ प्रतापरुद्रयशोभूषणेऽलंकारशास्त्रे काव्यप्र-करणं समाप्तम् ॥ २ ॥

---

तारावलीमाह । तारणामिति । संख्यया सप्तविंशत्येत्यर्थः ॥

नन्वन्येऽपि चतुरुत्तरचतुर्भद्रादिचाटुप्रबन्धाः किमिति न लक्ष्यन्ते इत्यत्राह । एवमिति । उदाहरणानुक्तौ हेतुमाह । अथेति ।

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिसू-नुना विश्वजनीनविद्यस्य विद्वन्मणेः पेद्दयार्यस्यानुजेन कुमारस्वामिसोमपीथिना विरचिते प्रतापरुद्रीयव्याख्याने रत्नापणाख्याने काव्यस्वरूपनिरूपणं नाम द्वितीयं प्रकरणम् ॥

---

१ युक्ता पद्यैस्ता° M., $M_1$, $M_3$, $M_4$, $M_5$. २ क्षुद्रप्रबन्धा M., $M_1$, $M_4$, $M_5$; सिद्धार्थाः प्रबन्धाः $M_3$. ३ अथैतेषा° P., T., T'. ४ श्री is omitted in R., T., T'. M., $M_4$. ५ °विरचिते T., P. ६ °भूषणालंकार° R. ७ समाप्तम् is omitted in R., $M_4$; $M_1$ has काव्यप्रकरणं नाम द्वितीयं प्रकरणं समाप्तम्; $M_3$ has इति काव्यप्रकरणम्, P. has द्वितीयं before समाप्तम्. ८ °सूनोः T'. ९ °सोमभट्टेन m. १० p. omits रत्ना-पणाख्याने. ११ द्वितीयप्रकरणं समाप्तम् T. १२ $m_1$ has समाप्तं after प्रकरणम्.

## अथ[1] नाट्यप्रधाना[2]: प्रबन्धा निरूप्यन्ते ।

तत्र[3] नाट्यस्वरूपं निरूप्यते[4] ।

चतुर्विधैरभिनयैः सात्त्विकाङ्गिकपूर्वकैः[5] ।
धीरोदात्ताद्यवस्थानुकृतिर्नाट्यं रसाश्रयम् ॥

---

अथ श्रव्य[6]प्रबन्धनिरूपणानन्तरं नाटकादिदृश्यप्रबन्धनिरूपणं प्रतिजानीते । अथेति । अभिनयत्यैभिव्यनक्ति[7] पदार्थानित्यभिनयः । पचाद्यजन्तः ।

'अभिपूर्वस्तु णीञ्धातुराभिमुख्यार्थनिर्णये ।
यस्मात् पदार्थान् नयति तस्मादभिनयः स्मृतः ॥'

इति । तैश्चतुर्विधैः । तत्र परगतसुखदुःखभावनया भावितान्तःकरणत्वं सत्त्वम् । ततो भवा भावाः सात्त्विकाः स्तम्भादयः । तदभिनयोऽनिमेषनयनत्वादिः । अङ्गं हस्तादि । तद्व्यापारः पताकादिराङ्गिकाभिनयः । पूर्वशब्देन वाचिकाहार्याभिनयौ गृह्येते । अत्र पाठ्यापरपर्यायं काव्यनाटकरूपं वाचिकम् । तदभिनयो रसोचितरागानुषङ्गादिः ।

'आहार्याभिनयो नाट्योचितालंकारधारणम् ।'

अभिनयादिलक्षणं तु संगीतचूडामणौ ।

'अभिव्यञ्जन् विभावानुभावादीन् नाटकाश्रयान् ।
उत्पादयन् सहृदये रसज्ञानं निरन्तरम् ॥
अनुकर्तृस्थितो योऽर्थोऽभिनयः सोऽभिधीयते ।
आङ्गिको वाचिकश्चैव सात्त्विकाहार्यकाविति ॥
स चतुर्धा कृतस्तज्ज्ञैराङ्गिकोऽङ्गक्रियोच्यते ।
रागानुषङ्गि यद्वाक्यं नाट्ये तद्वाचिकं स्मृतम् ।
सत्त्वक्रिया सात्त्विकं[8] स्यादाहार्यो भूषणादिकम् ॥'

इति । धीरोदात्तादिनायकानामवस्था धीरोदात्तादयः । अनियतत्वादवस्थात्वमेव तेषां न जातित्वमित्युक्तं नायकप्रकरणे । तासामनुकृतिरनुकरणं चतुर्विधाभिनयेनाभिनेयतादात्म्यापत्तिरित्यर्थः । रसाश्रयमिति । वक्ष्यमाणक्रमेण वाक्यार्थीभूतरसविषयमित्यर्थः । अतोऽत्र वाक्यार्थाभिनय इति वेदितव्यम् । नट अव-

---

१ T. has प्रतापरुद्रीये तद्व्याख्याने नाटकप्रकरणम् and T' has नाटकप्रकरणम् before this. २ प्रधानकाः M., $M_2$. ३ अथ $M_2$. ४ कथ्यते T', M., $M_2$. ५ °पूर्वकैः R., T., T'. ६ काव्य p., $m_2$. ७ 'ति व्यनक्ति m. ८ सात्त्विकः p., T.

भावाश्रयं तु नृत्तं स्यान्नृत्यं तालल[1]याश्रितम्।

ए[2]षा दशरूपकोक्ता प्रकिया। नृ[3]त्तनृत्ययोर्ना[4]टकाद्यङ्गत्वादिह स्व[5]रूपनिरूपणं कृतम्। तथोक्तं दशरूपके

मधुरोद्धतभे[6]देन तद्द्वयं द्विविधं पुनः।
लास्यताण्डवरूपेण नाटकाद्युपकारकम्॥

तेन ना[7]ट्येन दश रूपकाणि भवन्ति।

---

स्पन्दन इत्यस्माद्धातोरीषच्चलनार्थाण्ण्यत्प्रत्यये नाट्यमिति व्युत्पत्त्या सात्त्विकाभिनयबाहुल्यं सूच्यते। प्रसङ्गान्नृत्यनृत्तयोर्लक्षणमाह। भावेति। भावाः पदार्थीभूता विभावाद्या आश्रया विषयत्वेन यस्य तद् भावाश्रयम्। अत एवात्र पदार्थाभिनयो द्रष्टव्यः। नृतेर्गात्रविक्षेपवाचिनो निष्ठान्तादर्हार्थे यति नृत्यमिति व्युत्पत्त्या आङ्गिकाभिनयबाहुल्यं सूच्यते। अत एव नाट्याद्भेदद्योतकस्तुशब्दः। रसविषयं सात्त्विकबहुलं नाट्यम्। भावविषयमाङ्गिकबहुलं मार्गापरपर्यायं नृत्यमिति विवेकः। नृत्तमिति। गीतादिपरिमाणावच्छेदः। कालविशेषस्तालश्चञ्चत्पुटादिः। तदुक्तम्।

'कालो लघ्वादिमितया क्रियया संमितो मितिम्।
गीतादेर्विदधत्तालः स च द्वेधा बुधैः स्मृतः॥

इति। लयोऽपि

'तालान्तरालवर्ती यः कालोऽसौ लयनाह्वयः।'

इत्युक्तलक्षणः कालविशेषः। एतदुभयाश्रयं देश्यापरपर्यायं नृत्तमित्यर्थः।

अस्य स्वकपोलकल्पितत्वं परिहरति। एषेति। नृत्येति क्वचिदवान्तरपदार्थाभिनयेन शोभाहेतुकत्वेन च नाटकादावुपयोगात्तदङ्गत्वमिति विज्ञेयम्। तदेतत्संवादव्याजेनानयोः पुनर्द्वैविध्यमाह। मधुरेति। मधुरं लास्यमुद्धतं ताण्डवमित्यर्थः। तेनेति। नृत्यनृत्तोपकृतेनेत्यर्थः। दश रूपकाणीति। नाटिकासट्टकादीनामत्रैवान्तर्भावादिति भावः। तत्प्रकारस्तु दशरूपके द्रष्टव्यः।

---

१ °लयाश्रयम् T', °लयाश्रितम् M., $M_1$, $M_2$, $M_4$; M. notices लयाश्रयम् also. २ एषां M., $M_2$. ३ नृत्यनृत्तयो° M., $M_1$, $M_2$; नृत्यनर्तनयो° $M_4$. ४ नाट्याद्य° P.; नाट्यकाङ्गत्वा° R., M., M., $M_2$, $M_4$. ५ स्वरूप is omitted in P.; उभयस्वरूप° M., $M_2$. ६ °भेदेन M., $M_2$. ७ नाटकानि दशरूपाणि R. ८ °नृत्तोपयोगिनेत्यर्थः m.

नाटकं संप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा इति ॥ २ ॥
नाट्याश्रयत्वेनाभेद इति शङ्का न युज्यते ।
वस्तुनेतृरसास्तेषां रूपकाणां हि भेदकाः ॥ ३ ॥

वस्तु त्रिविधम् । प्रख्यातमुत्पाद्यं मिश्रं चेति । तथोक्तं दशरूपके ।

'प्रख्यातोत्पाद्यमिश्रत्वभेदात् तत्त्रिविधं मतम् ।'

इति ।

---

नाट्याभेदेऽपि वस्त्वादिभेदाद्रूपकभेद इत्याह । नाट्याश्रयत्वेनेति । वस्तु कथाशरीरम् । तस्येतिवृत्तमिति नामान्तरम् । तदुक्तं भावप्रकाशे ।

'वस्तु यत् स्यात् प्रबन्धस्य शरीरं कविकल्पितम् ।
इतिवृत्तं तदेवाहुर्नाट्याभिनयकोविदाः ॥'

इति । तद् द्विविधम् । आधिकारिकं प्रासङ्गिकं चेति । तत्राधिकारः फलस्वाम्यं तद्वानधिकारी । अधिकारेणाधिकारिणा वा निर्वृत्तमाधिकारिकं प्रधानम् । यथा रामायणे सीतारामवृत्तान्तः । प्रसङ्गेन निर्वृत्तं प्रासङ्गिकमङ्गभूतम् । तच्च द्विविधम् । पताका प्रकरी चेति । तत्र दूरानुवर्तिनी कथा पताका । यथा सुग्रीवादिवृत्तान्तः । अल्पानुवर्तिनी प्रकरी । यथा जटायुश्रमणादिवृत्तान्तः ।

एवमेकमाधिकारिकं द्विविधं प्रासङ्गिकमिति त्रैविध्यं सिद्धवत्कृत्य पुनस्त्रैविध्यमाह । वस्तु त्रिविधमित्यादि । प्रख्यातं महावीरचरितादि । उत्पाद्यं मालतीमाधवीयादि । मिश्रमुत्तररामचरितादि । एवमाधिकारिकपताकाप्रकरीणां प्रत्येकं प्रख्यातादिभेदभिन्नत्वेन त्रैविध्ये वस्तुनो नवविधत्वं विज्ञेयम् । एतदेवा-

---

१ संप्रकरणं R., M$_p$. २ दश P., M. notices it; T. and T′ have दश इति; M. has अपि for इति । ३ तदुक्तं M$_p$. ४ M$_2$ omits दशरूपके. ५ इति is omitted in P. ६ श्रवणादि॰ m. ७ p. omits प्रत्येकं.

इतिहासनिबन्धनं प्रख्यातम्। कविकल्पितमुत्पाद्यम्। संकरायत्तं मिश्रम्[1]। एवमादिवस्तुभेदान्नायक[2]भेदाद्रूपकाणां परस्परं भेदः। तथा हि। नाटके प्रख्यातमितिवृत्तम्। [3]धीरोदात्तो नायकः। शृङ्गारवीररसयोर[4]न्यतरस्य प्राधान्यम्। अन्येषां रसानामङ्गत्वे[5]नानुप्रवेशः। प्रकरण उत्पाद्यमितिवृत्तम्। धीरशान्तो नायकः। [6]शृङ्गारस्यैव प्राधान्यम्। [7]भाणे धूर्तविटो नायकः। उत्पाद्यमितिवृत्तम्। शृङ्गारवीरयोः सूचनामात्रसारता। प्रहसने [8]कल्प्यमितिवृत्तम्। [9]पाषण्डप्रभृतयो नायकाः। [10]हास्यरसः प्रधानम्। डिमे प्रख्यातमितिवृत्तम्। देवगन्धर्वरा[11]क्षसपिशाचादयो [12]धीरोद्धता नायका[13]स्ते षोडश। रौद्ररसः प्रधानम्। [14]हास्यशृङ्गारयोरनुप्रवेशः। व्यायोगे प्रख्यातमितिवृत्तम्। धीरोद्धतो नायकः। वीररसः प्रधानम्। [15]समवाकारे देवासुरादयो द्वादश नायकाः। वीररसः प्रधानम्। कल्पितमितिवृत्तं [16]प्रसिद्धं वा। वीथ्यां कल्पितमितिवृत्तम्। [17]धीरोद्धतो नायकः। [18]शृङ्गाररसस्य सूचनामात्रसारता। [19]अङ्के

---

भिप्रेत्याह। [20]एवमादिवस्तुभेदादिति। दिव्यमर्त्योभयात्मना वस्तुनः पुनरपि त्रैविध्याङ्गीकारे तद्वदन्येऽपि बहवो भेदाः कल्पयितुं शक्यन्त एव। लक्ष्येषु ते स्वयमेवोहनीया इति वि[21]स्तरभिया नेह पृथग्व्युत्पाद्यन्ते।

वस्त्वादयो रूपकभेदका इत्युक्तम्। तद्विविनक्ति। तथा हीत्यादिना। स्पष्टोऽर्थः।

---

१ मिश्रं चेति T., $T_{/}$. २ °भेदान्नसभेदान्न M.; भेदान्नसभेदात् $M_{/}$. ३ धीरोद्धतो M. ४ °न्यतरप्राधान्यम् $M_{/}$. ५ °त्वेन प्रवेशः M. ६ शृङ्गाररसस्यैव T. ७ भाणे उत्पाद्यमितिवृत्तं धूर्त° T., T'. ८ कल्पितमिति° M., $M_{/}$. ९ पाषण्डतापसप्रभृतयो M.; पिशाचादयो धीरोद्धता नायकाः T., T'. १० हास्यरसप्राधान्यम् M.,; हास्यरसस्य प्राधान्यम् R. ११ पिशाचराक्षसादयो° P.; राक्षसपिशाचप्रभृतयो° M. १२ P. drops धीरोद्धता; $M_{/}$ has धीरशान्ता. १३ M., $M_{2}$ drop ते. १४ शृङ्गारवीरयो° P., T., T'. १५ समवकारे $M_{/}$. १६ प्रसिद्धं वा is omitted in M., $M_{4}$. १७ धीरोद्धतो नायकः dropped in R., $M_{3}$. १८ $M_{2}$ omits शृङ्गाररसस्य सूचनामात्रसारता. १९ अङ्के इतिवृत्तं प्रख्यातम् M., $M_{3}$, $M_{4}$. २० एवमादिभेदादिति p. २१ विस्तरभयान्नेह p.

प्रख्यातमितिवृत्तम् । प्राकृतजनो नायकः । करुणरसः प्रधानम् । ईहामृगे मिश्रमितिवृत्तम् । धीरोद्धतो नायकः । शृङ्गाररसस्याभासत्वम् ।

अथैतेषां सामग्री निरूप्यते । तत्र पञ्च सन्धयः । तथोक्तं दशरूपके ।

मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः ।

इति ।

संधिर्नामैकेन प्रयोजनेनान्वितानां कथानामवान्तरप्रयोजनसंबन्धः । तत्रारम्भबीजसंबन्धो मुखसंधिः । यत्नबिन्दुसंबन्धः प्रतिमुखसंधिः । प्राप्त्याशापताकयोः संबन्धो गर्भसंधिः । नियताप्तिप्रकर्योः संबन्धो

---

वस्त्वादिभेदाद्रूपकभेदो निरूपितः । अधुना वस्त्वेकदेशविशेषभूतसंध्यादिस्वरूपं निरूपयति । अथेत्यादिना । तत्र संमतिव्याजेन संधीनां विभागमाह । मुखमिति । सावमर्शा अवमर्शसहिता उपसंहृतिर्विमर्शो निर्वहणं चेत्यर्थः । एतेषां सामान्यलक्षणमाह । सन्धिरिति । प्रयोजनमत्र त्रिवर्गरूपं फलं तच्च धर्मार्थकामेष्वेकैकस्य स्वव्यतिरिक्ताभ्यां द्वाभ्यामुपसर्जनाभ्यां व्यासेन समासेन च संबन्धे कैवल्ये च द्वादशविधम् । तदुक्तम् ।

'फलं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च'

इति । तेनैकेन मुख्येनान्वितानामितिवृत्तखण्डानामवान्तरैकप्रयोजनसंबन्धः संधिरित्यर्थः । तदुक्तम् ।

'एककार्यान्वितेष्वत्र कथांशेषु प्रयोगतः ।
अवान्तरैककार्यस्य संबन्धः संधिरिष्यते ॥'

इति । अथावस्थार्थप्रकृतिसंबन्धे मुखादिसंधयो जायन्त इत्याह । तत्रेति । अत्र संमतिमाह । अर्थेति । अर्थप्रकृतयः प्रयोजनसिद्धिहेतव इति केचित् । कथाशरीरकारणानीति भोजराजादयः । तद्विशेषाः पूर्वोक्ता बीजादयः पञ्च । फलसिद्धये स्वीक्रियमाणस्य नायकव्यापाररूपस्योपायस्य पूर्वोक्ता आरम्भादयः पञ्चावस्था भवन्ति । तदुक्तम् ।

---

१ शृङ्गाररस्याभासत्वम् R. २ तथा चोक्तं P., T.; तदुक्तं M,. ३ P. omits इति. ४ प्रयोजनेन संबन्धः P. ५ प्रधान° P., T. ६ वस्त्वेकविशेष° p. ७ अत्रेति m. ८ बीजे° p., T. ९ भोजादयः

विमर्शसंधिः। फलागमकार्यसंबन्धो निर्वहणसंधिः। तथा चोक्तं दशरूपके।

> बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः।
> आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः॥
> अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः।
> यथासंख्येन जायन्ते मुखाद्याः पञ्च संधयः॥

इति।

आरम्भादीनां लक्षणं निरूप्यते।

> **औत्सुक्यमात्रमारम्भः फललाभाय भूयसे।**
> **प्रयत्नस्तु फलाप्राप्तौ व्यापारोऽतित्वरान्वितः॥ ४॥**

---

> 'अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः।'

इति। तदेतदुभयसंबन्धे पञ्च संधयो जायन्त इत्यर्थः। तत्र साधनत्वाद् बीजस्यादावुपक्षेपः। साध्यत्वात् कार्यस्यान्ते। अविच्छेदार्थं बिन्दोस्तयोर्मध्ये। पताकाप्रकर्योस्तु बीजकार्ययोर्मध्ये यथायोगं निवेश इति विज्ञेयम्। तत्र पताकाया विकल्पमाह कोहलः। तन्मते पताकास्थाने

> 'अपताके निवेशः स्याद्बिन्दोर्बीजस्य वा क्वचित्।'

इति भावप्रकाशोक्तो विशेषो द्रष्टव्यः। अवस्थानामुद्देशक्रमः सामर्थ्यलब्धः स्पष्ट एव।

अवस्थापञ्चकं क्रमेण लक्षयति। औत्सुक्येति। कालाक्षमत्वलक्षणोऽभिलाषप्रकर्ष औत्सुक्यम्। मात्रशब्दो वक्ष्यमाणप्रयत्नादिव्यवच्छेदकः। फलस्य त्रिवर्गरूपस्य लाभाय न पुनः क्षुद्रस्य। अत्र फलगतं भूयस्त्वं लाभे उपचर्यते। नायकव्यापारस्य स्वरूपात्किञ्चिदुच्छूनत्वमारम्भ इत्यर्थः। आरम्भादीनां सर्वेषां नाटक एवोदाहरणं भविष्यतीति लक्षणमात्रमत्र परीक्ष्यते। प्रयत्नस्त्विति। फलाप्राप्ताविति सतिसप्तमी। फलप्राप्ताविति पाठे विषयसप्तमी। कार्यसंपाद-

---

१ °कार्ययोः संबन्धो T', T. २ यथोक्तं R.; तथोक्तं M., $M_3$, $M_4$. ३ °काख्याः T., T'. ४ फलप्राप्तये P.; फलोत्पत्तौ $M_4$. ५ फलार्थिनः P. ६ दोहलः m.

उपायापायशङ्काभ्यां प्राप्त्याशा कार्यसंभवः ।
अपायाभावतः कार्यनिश्चयो नियताप्तिका ॥
समग्रफलसंपत्तिः फलागम उदाहृतः ॥ ५ ॥

अथ बीजादिपञ्चकं निरूप्यते ।

स्तोकोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकधा ।
अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥ ६ ॥

---

नयोग्यता प्रयत्न इत्यर्थः । उपायेति । उपायेनापायशङ्कया च कार्यस्य संभवः । संभावनाप्रतिबन्धकोपनिपातेन शङ्क्यमानत्वं प्राप्त्याशेत्यर्थः । नियताप्तिं लक्षयति । अपायेति । प्रतिपक्षनिवृत्त्या कार्यनिश्चयो नियताप्तिरित्यर्थः । समग्रेति । बाधकबाधनेन फलपर्यन्तत्वादार्ध्यं फलागम इत्यर्थः ।

अथार्थप्रकृतिपञ्चकं क्रमेण लक्षयति । स्तोकेति । स्तोकोद्दिष्टः स्वल्पोपक्षिप्तः अनन्तरमनेकधा मूलस्कन्धशाखापलाशादिवन्नायकोपनायकप्रतिनायकभेदेन बहुधा विस्तारी कार्यस्य त्रिवर्गरूपस्य फलस्य यो हेतुस्तद्बीजमिव बीजम् । तच्च क्वचिदात्माधीनसिद्धेर्नायकस्यात्मोत्साहात्मकं क्वचिदमात्याधीनसिद्धेस्तदुत्साहात्मकं क्वचिदुभयाधीनसिद्धेरुभयोत्साहात्मकं चेति द्रष्टव्यम् । अत्रामात्यगतोऽप्युत्साहो याजकव्यापारो यजमानस्येव नायकस्यैव फलं जनयतीति बोद्धव्यम् । अवान्तरेति । अवान्तरार्थैरवान्तरप्रयोजनैर्विच्छेदसामर्थ्यात् परमप्रयोजनस्येति भावः । तदविच्छेदकारणं बिन्दुः । तदुक्तं भावप्रकाशे ।

'फले प्रधाने विच्छिन्ने बीजस्यावान्तरैः फलैः ।
तस्याविच्छेदको हेतुर्बिन्दुरित्याह कोहलः ॥

---

१ बीजे पञ्चकं R. २ विच्छेदो M. ३ °लक्षणम् P. ४ °विच्छेदे L, m., T.

प्रतिपाद्यकथाङ्गं स्यात् [1]पताकाव्यापिनी कथा ।
[2]अव्यापिनी प्रकरिका कार्यं निर्वाहकृत् फले ॥ ७ ॥

इति । प्रतिपाद्येति । प्रतिपाद्यकथायाः फलोद्देशप्रवृत्तत्वेन प्रधानभूताया रामादिनायकव्यापाररूपाया अङ्गं तत्संबन्धित्वादिति भावः । तदुक्तमाचार्यैः

'प्रधानं फलसंबन्धि तत्संबन्ध्यङ्गमिष्यते ।'

इति । तथाभूता कथा सुग्रीवाद्युपनायकव्यापाररूपा पताका व्यापिनीत्यनेन प्रकरीव्यवच्छेदः । ननु पताकायामपि पृथक्फलमिच्छन्ति शारदातनयादयः । सुग्रीवादीनां तथा दर्शनात् । नैतन्न्यायसहम् । अङ्गानां प्रधानफलेनैव फलवत्त्वनियमादिति चेन्नैष दोषः । दध्नेन्द्रियकामस्येत्यादावङ्गभूतानामपि दध्यादीनां फलसंबन्धाङ्गीकारात् । नन्वङ्गप्रधानफलयोरेकाश्रयत्वं दृष्टान्ते दार्ष्टान्तिके तु न तथेति वैषम्यमिति चेन्नैवम् । फलसंतुष्टस्यैवानुचरस्यार्थक्रियाकारित्वेन तत्फलस्यापि स्वामिफलत्वाभिमानात् । अव्यापिनीति । लघुः प्रकरः प्रकरी । गौरादित्वाद् ङीष् । तदुक्तम् ।

'स्त्री स्यात् काचिन्मृणाल्यादिर्विवक्षापचये यदि ।'

इति । यथा पुष्पादिप्रकरः परेषामेव वेदिकादीनां शोभायै भवति एवमृतुवर्णनजटायुश्रमणादिवृत्तान्तरूपा प्रकर्यपि प्रधानस्यैव फलं जनयति न पुनः स्वस्येति ग्रन्थान्तरोक्तो विशेषो द्रष्टव्यः । अव्यापिनीति । विशेषनिषेधस्तु पताकोक्तप्रतिपाद्यकथाङ्गत्वमात्राभ्यनुज्ञापर इति द्रष्टव्यम् । कार्यमिति । प्रधानफलनिर्वाहकोऽन्तिमः कथावयवः कार्यमित्यर्थः ।

इत्थमवस्था अर्थप्रकृतयश्च निरूपिताः । तदुभययुगलपञ्चकसमन्वयसंभूतसं-

१ पताकाव्यापिनी P. २ त्वव्यापिनी P.

अथ मुखं निरूप्यते।[1]

मुखं बीजसमुत्पत्तिर्नानार्थरससंभवा।
अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ॥ ८ ॥

---

धिपञ्चकलक्षणं क्रमेणाह। मुखमित्यादिना। एतदेव लक्षणं दशरूपकादावप्युक्तम्। तत्र नानाभूतानामर्थानां प्रयोजनानां रसानां च हेतुर्बीजसमुत्पत्तिर्मुखसंधिरिति कश्चिद् व्याचष्टे। नानार्थशब्दस्य रसविशेषणत्वमङ्गीकृत्यानेकप्रकारप्रयोजनरसहेतुरित्यन्यः। मतद्वयेऽपि सर्वेष्वपि रूपकेषु लक्षणानुगतिलाभायार्थशब्दस्य त्रिवर्गव्यतिरिक्तं प्रयोजनजातं विवक्षितम्। अत एवोक्तमुभाभ्यां तेनात्रिवर्गफले प्रहसनादौ रसोत्पत्तिहेतोरेव बीजत्वमिति। भावप्रकाशकारस्तु

'यथा कामोपयोग्यत्र शृङ्गारो दृश्यते रसः।
अर्थोपयोगी वीरः स्याद्रौद्रोऽपि स्यात् क्वचित् क्वचित् ॥
रक्षारूपेण धर्मार्थोपयोगी करुणो भवेत्।
अद्भुतोऽपि मनःप्रीतिप्रदत्वात् काम्यसाधकृत् ॥
ते भयानकबीभत्सहास्याः काव्येषु योजिताः।
तत्तच्चेतृमनोवृत्तिवशात् प्रायस्त्रिवर्गगाः ॥'

इत्यनेन शृङ्गारादीनां यथायोगं त्रिवर्गोपयोगित्वमङ्गीचकार तत्र। तन्मतेऽनेकविधत्रिवर्गलक्षणप्रयोजनकरसहेतुत्वं विवक्षितम्।[2] लक्षणानुगतिरपि सुलभैव। यदत्र युक्तं तद् ग्राह्यम्। अङ्गानामुत्पत्तिमाह। अङ्गानीति।

---

१ M, has अथ मुखादि पञ्च सन्धीनामङ्गानि निरूप्यन्ते।
नानार्थरसनिष्पत्तिहेतुर्मुखमितीरितम्।
बीजारम्भानुगुण्येन द्वादशाङ्गानि तस्य तु ॥ for
अथ मुखं निरूप्यते——प्रयोक्तव्यानि

२ तन्मते नैक° m.; 'तेनैकविध' p.

बीजारम्भानुगुण्येन मुखसंधेरङ्गानि प्रयोक्तव्यानि ।

> उपक्षेपः परिकरः [1]परिन्यासो विलोभनम् ।
> युक्तिः प्राप्तिः समाधानं विधानं परिभावनम् ॥
> उद्भेदभेदकरणान्य[2]न्वर्थानि यथाक्रमम् ॥ ९ ॥

[3]यथाक्रममेषां स्वरूपं निरूप्यते ।

बीजन्यास उपक्षेपः । बीजस्य [4]बहूपकरणं परिकरः । बीजनिष्पत्तिः परिन्यासः । बीजगुणवर्णनं विलोभनम् । बीजानु[5]कूलसंघट्टनप्रयोजनविचारो युक्तिः । बीजसुखागमः प्राप्तिः । बीजसंनिधानं समाधानम् । बीजसुखदुःखहेतुर्विधानम् । बीज[6]विषयाश्चर्यावेशः [7]परिभावनम् । गूढबीजप्रकाशनमुद्भेदः । बीजानुगुणप्रोत्साहनं भेदः । बीजानुगुणप्रस्तुतकार्यारम्भः [8]करणम् । एतानि द्वादश मुखसंधेरङ्गानि । एतेषां मध्ये उपक्षेपपरिकरपरिन्यासयुक्त्युद्भेदसमाधानानामावश्यकत्वम् ।

अथ [9]प्रतिमुखम् ।

> लक्ष्यालक्ष्यस्य बीजस्य व्यक्तिः प्रतिमुखं मतम् ।
> बिन्दुप्रयत्नानुगमादङ्गान्य[10]स्य त्रयोदश ॥ १० ॥

---

उद्दिशत्युपक्षेप इति । अन्वर्थानीति । न पृथक् लक्षणापेक्षेति भावः ।

तथापि मन्दबुद्ध्यनुग्रहार्थमुपक्षेपादीनां क्रमेण लक्षणं प्रतिजानीते । [11]यथाक्रममेषामिति । कण्टकशोधनमङ्गलक्षणानां यथायोगमुदाहरणप्रदेश एव करिष्यामः । मिथः प्रयोगक्रमो न विवक्षित इति वक्ष्यामः ।

अथ साङ्गं प्रतिमुखसंधिमाह । लक्ष्येति । केनचिदंशेन लक्ष्यत्वमपरेणांशेनालक्ष्यत्वं चेत्यर्थः । प्रत्यङ्कनिबद्धकार्यानुकूलानेकप्रयोजनमध्ये कतिपयानिष्पत्ति-

---

१ परिन्यासोऽपि लोभनम् M. ( M. also notices the reading in the text ). २ °न्यङ्गानि द्वादशक्रमम् M. ( M. also notices the reading in the text ). ३ एतेषां M., T. ४ बहूलीकरणं M., $M_2$, $M_6$; बहूकरणम् $M_1$. ५ °कूलसंघटन° T; °कूलप्रयोजनसंघट्टना° B., M., $M_6$. ६ विषय आश्चर्या° M., $M_2$, $M_6$. ७ परिभावना P. ८ कारणम् M., $M_2$, $M_6$. ९ प्रतिमुखसंधिः T., T', $M_6$. १० °न्यत्र P., $M_1$. ११ एतेषामिति for यथाक्रममेषामिति T., P.

बिन्दुप्रयत्नानुगुण्येन प्रतिमुखसंधेरङ्गानि प्रयोक्तव्यानि ।

> विलासः परिसर्पश्च विधूतं शमनर्मणी ।
> नर्मद्युतिः प्रगमनं विरोधः पर्युपासनम् ॥
> वज्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि ॥ ११ ॥

एषां स्वरूपं निरूप्यते ।

संभोगविषयमनोरथो विलासः । दृष्टनष्टपदार्थानुसरणं परिसर्पः । अनिष्टवस्तुविक्षेपो विधूतम् । अरत्युपशमनं शमः । परिहासवचनं नर्म । अनुरागोद्घाटनोत्था प्रीतिर्नर्मद्युतिः । उत्तरोत्तरवाक्यैरनुरागबीजप्रकाशनं प्रगमनम् । छद्मनाहितागमननिरोधनं विरोधः । इष्टजनानुनयः पर्युपासनम् । प्रमुखनिष्ठुरवचनं वज्रम् । अनुरागप्रकाशनविशिष्टवचनं पुष्पम् । अनुरागहेतुवाक्यरचनोपन्यासः । चतुर्वर्णनिवर्णनं वर्णसंहारः । एतेषां मध्ये परिसर्पप्रगमनवज्रोपन्यासपुष्पाणां प्राधान्यम् ।

अथ गर्भसंधिः ।

> गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।
> अस्याप्त्याशापताकानुगुण्येनाङ्गोपकल्पनम् ॥ १२ ॥

---

लक्ष्यत्वं कतिपयानिष्पत्तिरलक्ष्यत्वं चेति मतान्तरम् । तादृशस्य बीजस्य व्यक्तिः प्रकाशनं प्रतिमुखमिति ।

अथ साङ्गं गर्भसन्धिमाह । गर्भ इति । प्रतिमुखसन्धौ लक्ष्यालक्ष्यतया दृष्टनष्टस्य बीजस्यापायशङ्कानुवृत्त्या विच्छेदानुवृत्तेर्मुहुः पौनःपुन्येनान्वेषणं गर्भसंधिरिति । अत्र पताकया वैकल्पिकत्वात् तदभावपक्षेऽपि प्राप्त्याशा नियतैव । पताकास्थाने तु बीजबिन्द्वोरन्यतरस्य निवेश इत्यनुपदमेवोक्तम् ।

---

१ निरोधः M., $M_2$, $M_4$. २ पुष्पमुप° R. ३ एतेषां M., $M_2$, $M_4$. ४ विषये R. ५ विधूननम् M., R. ६ °रागोद्घाटना प्रीति° M., $M_2$. ७ प्रगमः M., R. ८ निरोधः R., M., $M_2$. ९ प्रतिमुख° P. १० M. and $M_2$ drop विशिष्ट. ११ पुष्टम् R. १२ चतुर्वर्गवर्णनं P. १३ एषां R. १४ °प्रगम° R., M. १५ अस्याप्त्याशा° R.; M. drops the whole line.

पताकाप्रास्त्याशोनुगुण्येन गर्भसंधेरङ्गानि कल्पनीयानि ।

> अभूताहरणं मार्गो रूपोदाहरणक्रमाः ।
> संग्रहश्चानुमानं च तोटकाधिबले तथा ॥
> उद्वेगसंभ्रमाक्षेपाद् द्वादशाङ्गान्यनुक्रमात् ॥ १३ ॥

एषां स्वरूपं निरूप्यते ।

प्रस्तुतोपयोगिछद्माचरणमभूताहरणम् । तत्त्वार्थानुकीर्त्तनं मार्गः । वितर्कप्रतिपादनवाक्यं रूपम् । प्रस्तुतोत्कर्षाभिधानमुदाहृतिः । संचिन्तितार्थप्राप्तिः क्रमः । प्रस्तुतोपयोगिसामदानवचनं संग्रहः । लिङ्गाद्भ्यूहनमनुमानम् । रोषसंभ्रमवचनं तोटकम् । इष्टजनाभिसंधानमधिबलम् । अपकारिजनाद् भयमुद्वेगः । शंकात्रासौ च संभ्रमः । इष्टार्थोपायानुसरणमाक्षेपः । एतेषां मध्येऽभूताहरणमार्गतोटकाधिबलाक्षेपाणां प्राधान्यम् ।

अथ विमर्शसंधिः ।

> गर्भसंधौ प्रसिद्धस्य बीजार्थस्यावमर्शनम् ।

---

अथ साङ्गं विमर्शसंधिमाह । गर्भसंधाविति । येन केनापि हेतुना क्रोधव्यसनादिनार्थस्यावमर्शनं पर्यालोचनं क्रोधव्यसनादिजन्यौ गर्भनिर्भिन्नबीजार्थसंबन्धः फलप्राप्त्यवसायात्मको विचारनिर्णयो विमर्श इत्यर्थः । तदुक्तम् ।

> ' गर्भनिर्भिन्नबीजार्थसंबन्धो व्यसनादिजः ।
> विचारनिर्णयो यस्तु स विमर्श इति स्मृतः ॥'

इति ।

---

१ °शाभिगमाद् M., $M_{g}$, $M_{r}$. २ °रङ्गानि द्वादश परिकल्पनीयानि R. ३ प्रयोक्तव्यानि T'., M., $M_{g}$, $M_{r}$. ४ प्रभूताहरणं $M_{g}$. ५ °हरणे क्रमः M., $M_{g}$. °हरणं क्रमाः R. ६ तोटकादिबले M. ७ एतेषां M.; तेषां $M_{r}$. ८ तत्त्वानुकीर्तनं R., T'., M'. ९ °पादकं वाक्यं R.; °पादनं रूपम् T'. १० प्रस्तुतोत्तरत्वाभिधानं T'. ११ संचितार्थप्राप्तिः M., $M_{g}$. १२ समाधानवाक्यं $M_{j}$. १३ °वाक्यं P., T. १४ अङ्गादभ्यू° $M_{g}$. १५ °नातिसंधानम° T'.

हेतुना येन केनापि विमर्शः संधिरिष्यते ।
नियताप्तिप्रकर्युक्तेरङ्गान्य[1]त्र त्रयोदश ॥ १४ ॥

नियताप्तिप्रकर्यानुगुण्येन विमर्शसंधेरङ्गानि प्रयोक्तव्यानि ।

तत्रापवादः संफेटो[2] विद्रवद्रवशक्तयः ।
द्युतिः प्रसङ्गश्चलनं व्यवसायो निरोधनम्[3] ॥
प्ररोचनं[4] विचलनमादानं तु त्रयोदश ॥ १५ ॥

एतेषां स्वरूपं निरूप्यते ।

दोषप्रख्यापनमपवादः । रोषसंभाषणं संफेटः[6] । वधबन्धादिकं वि-द्रवः । गुरुतिरस्कृतिर्द्रवः । विरोधशमनं शक्तिः । तर्जनोद्वेजने द्युतिः । गुरुकीर्तनं प्रसङ्गः । उपमानं[8] चलनम् । स्वशक्तिप्रशंसनं व्यवसायः । क्रोधसंरब्धानामन्योन्यविक्षेपो निरोधनम्[9] । सिद्धवन्द्राविभेयःकथनं प्ररोचनम् । स्वगुणाविष्करणं विचलनम् । कार्यसंग्रह[10] आदानम् ।

अथ निर्वहणसंधिः ।

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥ १६ ॥
फलाप्तिकार्यानुगुण्यादङ्गान्य[11]स्य चतुर्दश ॥

[12]फलाप्तिकार्यानुगुण्येन निर्वहणसंधेरङ्गानि चतुर्दश प्रतिपादनीयानि ।

---

अथ साङ्गं[13] निर्वहणसंधिमाह । बीजवन्त इति । संसर्गे मतुप् । बीजयुक्ता इत्यर्थः । यथायथं यथास्वं विप्रकीर्णा निजस्थानेषूपन्यस्ता इत्यर्थः । एको मुख्यो-ऽर्थः प्रयोजनं येषां तेषां भावस्तत्त्वम् । यत्र बीजयुक्ता मुखसंध्याद्यर्थाः परमप्र[14]-योजनसंबन्धं लभन्ते स निर्वहणसंधिरित्यर्थः । अत्रोपक्षेपादिषु यत्र क्वचन कार्य-कारणभावसद्भावस्तत्रैव क्रमोऽङ्गीकर्तव्यो न त्वन्यत्र । वस्तुस्वरूपविचारे क्रमा-ङ्गीकारे कारणाभावाल्लक्ष्येषु व्युत्क्रमदर्शनाच्च । तदुक्तम् ।

---

१ °न्यस्य M. २ संफेट: T'; संभेदो M.; संपोटो $M_{f}$. ३ विरोधनम् M., $M_{f}$. ४ प्ररो-चना $M_{f}$. ५ च M., $M_{f}$. ६ संभेदः M.; संपोटः $M_{f}$. ७ पदबन्धा° P. विविबन्धा° $M_{f}$. ८ अवमाननं चलनम् M. ९ विरोधिनम् $M_{f}$. १० °संग्रहणं M. ११ °न्यत्र $M_{f}$. १२ M. has एतेषां स्वरूपं निरूप्यते for फलाप्ति—प्रतिपादनीयानि. १३ साङ्गं is dropped in t. १४ परप्रयोजन° $m_{g}$.

संधिर्विरोधो ग्रथनं निर्णयः परिभाषणम्[1] ।
प्रसादानन्दसमयाः कृत्याभाषोपगूहनम्[2] ॥
पूर्वभावोपसंहारौ[3] प्रशस्तिश्च चतुर्दश[4] ॥ १८ ॥

एतेषां स्वरूपं निरूप्यते ।

बीजोपशमनं[5] संधिः । कार्यमार्गणं विरोधः[6] । कार्योपक्षेपणं ग्रथनम् । बीजानुगुणकार्यप्रख्यापनं निर्णयः । मिथोजल्पनं परिभाषा । पर्युपासनं प्रसादः । वाञ्छितार्थप्राप्तिरानन्दः । दुःखप्रशमनं समयः । लब्धस्थिरीकरणं कृतिः । प्राप्तकार्यानुमोदनमाभाषणम्[7] । अद्भुतार्थप्राप्तिरूपगूहनम् । इष्टकार्यदर्शनं पूर्वभावः । कार्यार्थोपसंहृतिः[8] संहारः । शुभशंसनं प्रशस्तिः ।

एवं चतुःषष्ट्यङ्गसमन्विताः पञ्च सन्धयः प्रतिपादिताः । एतेषां षट् प्रयोजनानि संभवन्ति[9] । विवक्षितार्थप्रतिपादनम् । गोप्यार्थगोपनम् । प्रकाश्यार्थप्रकाशनम् । अभिनयरागसंमृद्धिः[10] । चमत्कारित्वम् । इति-

'वस्तुनेतृरसादीनामानुगुण्येन योजयेत् ।
विवक्षितोऽत्र नाङ्गानां क्रम इत्येव निर्णयः ॥'

इति । न च तेषां प्रधानवस्तुसंबन्ध एव निबन्धनीय इति वाच्यम् । अन्यथापि दोषाभावात् । तदुक्तं नाटकप्रकाशे

'उपक्षेपादयः प्रबन्धेष्वाधिकारिका वा प्रासङ्गिका वा प्रयोक्तव्या यथा संदर्भस्य शोभायै भवन्ति ' इति ।

विभज्य लक्षितानि संध्यङ्गानि संख्यया संकलय्योपसंहरति । एवं चतुःषष्टीति । तत्राङ्गानां प्रयोजनमाह । एतेषामिति । अभिनयरागसमृद्धिरिति । अभिनयदर्शनेन सामाजिकमनोरञ्जनसमृद्धिरित्यर्थः । नन्वेतेषां प्रयोजनकथ-

---

१ प्रतिभाषणम् P. २ कृतिभाषोपगूहने M., $M_1$, $M_2$, $M_3$. ३ पूर्वभावानुसंहारौ M., $M_1$, $M_2$, $M_3$. ४ M. has इति after चतुर्दश and drops एतेषां स्वरूपं निरूप्यते. ५ बीजोपगमनं $M_1$. ६ विरोधः कार्यमार्गणम् M. ७ °मोदनं भाषणम् P. ८ कार्यार्थो° P. ९ भवन्ति for संभवन्ति P. १० °संवृद्धिः P.

15

वृत्तविस्तरश्चेति । तत्रेतिवृत्तं सूच्यमसूच्यं चेति द्विविधम्[1] । असूच्यमपि[2] द्विविधम् । दृश्यं श्रा[3]व्यं च । तत्र सूच्यस्य सूचनाक्रमः पञ्चविधः । त[4]थोक्तं दशरूपके

'विष्कम्भचूलिकाङ्कास्यप्रवेशाङ्कावतारणैः ।'

इति ।

---

नमनुपपन्नम् । अङ्गानां प्रधानफलेनैव फलवत्त्वनियमादिति न वाच्यम् । तस्यादृष्टफलवत्त्वे नियतत्वात् । एतत्तु दृष्टं फलम् । तदुक्तं शृङ्गारप्रकाशे

'अङ्गानां षड्विधं ह्येतत् दृष्टं शास्त्रे प्रयोजनम् ।'

इति । प्रयोजनानामेतेषां लक्ष्येषूदाहरणमूहनीयमित्युपेक्ष्य पुनरपि वस्तुनो द्वेधा विभागमाह । तत्रेतिवृत्तमिति । द्वितीयं द्वेधा विभजति । असूच्यमिति । तत्र

'नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः ।
दृश्यस्तु मधुरोदात्तरसभावनिरन्तरः ॥'

इत्याद्ययोर्व्यवस्था द्रष्टव्या । श्राव्यं चेत्यत्र चशब्दः श्राव्यगतावान्तरभेदाननुक्तमश्राव्यभेदं च समुच्चिनोति । श्राव्यं च सर्वश्राव्यं नियतश्राव्यं चेति द्विधा । एतेषां [6]द्वितीयं च जनान्तिकमपवारितं चेति द्विधा । एतेषां लक्षणं तु

'सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ॥'
'त्रि[7]पताककरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत् स्यात्तज्जनान्ते जनान्तिकम् ॥'
'रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितम् ।'

इति । त्रि[8]पताकग्रहणं पताकस्याप्युपलक्षणार्थम् । तदुक्तं तद्वेदिभिः ।

'त्रिपताकः पताकश्च गण्डश्रोत्रं गतः करः ।
जनान्तिके रहस्ये च दोषे श्रवसि कीर्तितः ॥'

इति । लक्षणं[9] त्वनयोः संगीतरत्नाकरे ।

---

१ M. has च instead of चेति द्विविधम्. २ M. drops अपि. ३ श्रव्यं P. ४ तदुक्तं M., ५ °फलविषयत्वात् m. ६ p. drops द्वितीयं—द्विधा. ७ त्रिपताक।° p. ८ त्रिपताका° p. ९ °लक्षणम् p.

[1]एतेषां स्वरूपं निरूप्यते ।

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः[2] ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः[3] ॥ १९ ॥

स द्विविधः । शुद्धः संकीर्णश्चेति । केवल[4]संस्कृतप्रायः शुद्धः । संस्कृतप्राकृतमिश्रितः[5] संकीर्णः ।

अथ चूलिका ।

अन्तर्यवनिका[6]संस्थैश्चूलिकार्थस्य सूचना ॥ २० ॥

यत्र नेपथ्यगतैः पात्रैरर्थः सूच्यते सैवं[7] चूलिका ।

---

'तर्जनीमूलसंलग्नकुञ्चिताङ्गुष्ठको भवेत् ।
पताकः संहताकारः प्रसारिततलाङ्गुलिः ॥
स एव त्रिपताकः स्यादुञ्चितानामिकाङ्गुलिः ॥'[8]

इति । विष्कम्भेत्यादि श्लोकशेषः पुनः

'अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।'

इति । प्रथमाङ्के प्रस्तावनानन्तरं विष्कम्भं कुर्यादिति भोजराजः । अन्यत्राङ्कद्वयमध्ये इत्यन्ये । मतद्वयमप्यङ्गीकृत्य तल्लक्षणमाह । वृत्तेति । वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः भूतभाविकथासूचक इत्यर्थः । संक्षेपार्थः संक्षेपैकप्रयोजनः । मध्यपात्रेणैकेनानेकेन वा[9] प्रयोजितः । तत्रैकमध्यपात्रोऽनेकमध्यपात्रश्चेति शुद्धो[10] द्विविधः । [11]नीचमिश्रस्तु संकीर्ण एकविधः । तदुक्तम् ।

'एकानेककृतः शुद्धः संकीर्णो नीचमध्यमैः ।'

इति । तत्र संकीर्णेऽपि मध्यपात्रसंभवात् तत्प्रयोजितत्वं न विहन्यते । अत एवं[12] नायकपात्रप्रवेश इति वेदितव्यम् ।

चूलिकां लक्षयति । अन्तरिति । अन्तःप्रधाना यवनिका अन्तर्यवनिका तत्र संस्था येषां तैर्यवनिकान्तर्वर्तिभिरप्रविष्टरङ्गैरित्यर्थः । विशेष्यमध्याहृत्य व्याचष्टे । यत्रेति ।

---

१ एषां P., M. २ प्रदर्शकः M. ३ प्रयोजनम् M. ४ केवलं T. ५ ˚मिश्रः M., M., M.; मिश्रस्तु M. ६ ˚जवनिका˚ p. ७ सा चूलिका M., T. ८ p. omits this line. ९ वापि चोदितः m. १० शुद्धो is omitted in p. ११ p. drops नीच˚—एकविधः. १२ एव नात्र नायक˚ T.

अथाङ्कास्यम् ।

अङ्कान्तपात्रैरङ्कास्यमुत्तराङ्कार्थसूचना ॥ २१ ॥

यत्र पूर्वाङ्कान्तपात्रैरुत्तराङ्कार्थः सूच्यते तदङ्कास्यम् ।

अथ प्रवेशकः ।

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
प्रवेशकस्तु नाद्येऽङ्के नीचपात्रप्रयोजितः ॥ २२ ॥

नीचपात्रप्रयुक्तः प्रवेशकः आद्येऽङ्के न युक्तः

अथाङ्कावतारः ।

यत्र स्यादुत्तराङ्कार्थः पूर्वाङ्कार्थानुसंगतः ।
असूचिताङ्कपात्रं तदङ्कावतरणं मतम् ॥
एभिः सूच्यं सूचयित्वा दृश्यमङ्कैः प्रदर्शयेत् ॥ २३ ॥

---

अङ्कास्यं लक्षयति । अङ्कान्तेति । यत्र कुत्राप्यङ्कान्तपात्रैरिति शङ्काङ्कुरमु-त्पाटयन् व्याचष्टे । यत्र पूर्वेति ।

प्रवेशकं लक्षयति । वृत्तेति । नीचपात्रैश्चेटीप्रमुखैरेकेन द्वाभ्यां बहुभिर्वा मध्यमासंकीर्णैर्वृत्तवर्तिष्यमाणानां पूर्वोत्तराङ्कशेषाणामेवेत्यर्थः । अत एवास्य विष्कम्भवत् प्रथमेऽङ्के न प्रवेश इत्याह । नाद्येऽङ्के इति ।

अङ्कावतारं लक्षयति । यत्र स्यादिति । पूर्वोत्तराङ्कार्थयोर्विष्कम्भादिविच्छे-देन न भाव्यमिति भावः । असूचितेति । पूर्वाङ्कवर्तिनामेव पात्राणामत्रानुप्रवे-शान्न तत्सूचनमिति भावः ।

अङ्काभ्यन्तरभावित्वमङ्कास्याङ्कावतारयोः ।
भवेदङ्कबहिर्भावो विष्कम्भे च प्रवेशके ॥
उभयं चूलिकायां तु यथायोगमिति स्थितिः ॥

इति ।

---

१ °राङ्कस्य सूचना M., $M_3$, $M_4$. २ °ङ्कगतपात्रै° $M_4$. ३ °र्थस्य सूचना P. ४ प्रवेशः $M_4$. ५ प्रदर्शकः $M_4$. ६ नाद्यङ्के P. ७ °योजकः आद्यङ्के न प्रयोक्तव्यः P., °युक्तप्रवेशकः आद्यङ्के न प्रयुक्तः M., $M_1$, $M_3$, $M_4$. ८ अङ्कान्तपात्रैरिति m. ९ t. omits इति.

तत्राङ्कस्वरूपं निरूप्यते ।

प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ २४ ॥

दृश्यमङ्कैः प्रदर्शयेदित्युक्तम् । तत्र कीदृशोऽङ्क इत्याकाङ्क्षायामाह । तत्राङ्केति । प्रत्यक्षं रङ्गप्रवेशेन साक्षान्निर्दिश्यमानं नेतृचरितं नायकव्यापारो यत्र स तथोक्तः । बिन्दुव्याप्तिपुरस्कृतः बिन्दुसूचनार्थं परिच्छिन्न इत्यर्थः । नानाप्रकारार्थानामनेकावान्तरप्रयोजनानां संविधानानां कथासंनिवेशविशेषादीनां

'रसानामङ्गभूतानामङ्गिनो वा रसस्य च ।
न चातिरसतो दूरं वस्तु विच्छिन्नतां नयेत् ॥
रसं वा न तिरोदध्याद् वस्त्वलंकारलक्षणैः ॥'

इत्युक्तरीत्या परस्परानुपमर्दिनामाश्रयः । अत्राङ्के

'दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ।
संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ॥
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ।
नाधिकारिवधः क्वापि त्याज्यमावश्यकं न च ॥
अधिकारिवधस्यापि क्वचित् स्यात् कल्पनार्हता ।
अर्वाक् प्रकारात् स पुनः प्रत्युज्जीविष्यते यदि ॥
नायकस्य यदेकाहचरितप्रतिपादकः ।
एकप्रयोजनाश्लिष्टस्तत्रैवासन्ननायकः ॥
विदूषकादिभिः पात्रैर्योज्यस्त्रिचतुरैरपि ।
समस्तपात्रनिष्क्रामावसानोऽङ्कोऽभिधीयते ॥'

इत्यादि प्रतिपादिता प्राचीनालङ्कारिकपद्धतिरनुसरणीया ।

एवं सूच्यासूच्यवस्तुखण्डप्रतिपादकमङ्कविष्कम्भादिकं स्वरूपतो निरूपितम् । अथ सर्वस्यापि काव्यार्थस्य सूचिका भारती वृत्तिर्निरूपणीया । तस्याश्चत्वार्यङ्गानि । आमुखं प्ररोचना वीथिः प्रहसनं चेति । तत्र वीथिप्रहसनयोः प्रायेण प्रबन्धादावनुदाहरणेन कृताकृतत्वाद्दशरूपकमध्ये प्राधान्येनापि पठितत्वाच्च

---

१ तत्र is dropped in M., $M_2$, $M_4$; $M_7$ has अत्र for it. २ °सहितो M. ३ °दशरूपमध्ये L.

अथामुखं निरूप्यते ।

सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।
स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥ २५ ॥
प्रस्तावना वा[1] तत्र स्यात् कथोद्घातः प्रवर्त्तकम्[2] ।
प्रयोगातिशयश्चेति त्रीण्यङ्गान्यामुखस्य हि[3] ॥ २६ ॥

---

तल्लक्षणं प्राचीनालंकारमार्गेण तत्रैव भविष्यतीत्युपेक्ष्याल्पवक्तव्यां प्ररोचनामुदाहरणसमय एव दर्शयिष्यन् संप्रति साङ्गस्यामुखस्य स्वरूपनिरूपणं प्रतिजानीते । अथेति । तत्र पुरुषविशेषप्रयोज्यः संस्कृतप्रधानो वाग्व्यापारो भारती । प्रस्तुतार्थप्रशंसनेन श्रोतॄणां प्रवृत्त्युन्मुखीकरणं प्ररोचना । तदुक्तम् ।

'भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः ।
उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना ॥'

इति । आमुखविशेषः प्रस्तावनेति केचित् । प्रस्तावनाविशेष आमुखमित्यपरे । अस्यैव पर्यायः प्रस्तावनेति दशरूपककारः । तन्मतानुसारेण लक्षणमाह । सूत्रधार इति । द्वावत्र सूत्रधारौ । एकः पूर्वरङ्गविधायकः । इतरस्तु नटस्थापकापरपर्यायः पूर्वसूत्रधारसदृशगुणाकृतिः प्रस्तावनाप्रवर्त्तकः । अत्र तु नटीमारीषादिसंभाषणादयमेव विवक्षितः । अस्य गृहिणी नटी । मारीषः पारिपार्श्विकः । नर्मसचिवो विदूषकः । एतेषां लक्षणानि भावप्रकाशे ।

'आसूत्रयन् गुणान् नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढः सूत्रधार इहोदितः ॥
चतुरातोद्यभेदज्ञा तत्कलासु विशारदा ।
करणाभिनयज्ञा च सर्वभाषाविचक्षणा ॥
नटानुयोक्त्री कृत्येषु नटस्य गृहिणी नटी ।
भरतेनाभिनीतं यो भावं नानारसाश्रयम् ॥
परिष्करोति पार्श्वस्थः स भवेत् पारिपार्श्विकः ।
तदात्वप्रतिभो नर्मचतुर्भेदप्रयोगवित् ॥
वेदविन्नर्मवादी यो नेतुः स स्याद्विदूषकः ॥'

---

[1] च for वा P. [2] प्रवर्तकः M₁. [3] तु or 'हि P., T. [4] नद्या' P.

एषामङ्गानां स्वरूपं निरूप्यते।

स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः।
गृहीत्वा प्रविशेत् पात्रं कथोद्घातो द्विधैव सः॥ २७॥
प्रस्तूयमानकालस्य गुणवर्णनया स्वतः।
प्रविशेत् सूचितं पात्रं यत्र तत् स्यात् प्रवर्त्तकम्॥ २८॥
एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः।
पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः॥ २९॥

---

इति। स्वकार्यमभिमतरूपकप्रयोगेण परिषदाराधनात्मकं प्रस्तुतं काव्यार्थरूपं वस्त्वादिचतुष्टयं तदाक्षेपिण्या उभयप्रतिपादिकयेत्यर्थः। अत एव चित्रोक्त्या नाट्यादिकं यद् ब्रूते तदामुखमित्यर्थः। तदुक्तम्।

'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते।
प्रविश्य तद्वदपरः काव्यार्थं स्थापयेन्नटः॥
दिव्यमार्त्यें स तद्रूपो मिश्रमन्यतरस्तयोः।
सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा॥'

इति। स्थापको दिव्यं वस्तु दिव्यो भूत्वा मार्त्यं वस्तु मर्त्यो भूत्वा मिश्रं वस्तूभयोरन्यतरो भूत्वा सूचयेदित्यर्थः।

अथामुखाङ्गत्रये कथोद्घातं लक्षयति। स्वेति। पात्रं कर्तृ। सूत्रिणः सूत्रधारस्य वाक्यमर्थं वाक्यार्थं वा। प्रवर्त्तकं लक्षयति। प्रस्तूयमानेति। कालस्य ऋतुं कंचिदुपादायेति वचनप्राप्तस्य शरद्वसन्तादेर्गुणवर्णनया आसन्नप्रवेशपात्रसाम्येनेति भावः।

'प्रकटितरामाम्भोजः कौशिकवाग्लक्ष्मणानन्दी।
सुरचापनमनहेतोरयमवतीर्णः शरत्समयः॥'

इत्यत्र रामलक्ष्मणविश्वामित्राणां शरद्वर्णनसाम्येन प्रवेशकथनात् प्रवर्त्तकम्। प्रयोगातिशयं लक्षयति। एष इति। एतदिदमोरन्यतरशब्दप्रयोगेणोपक्षेपादित्यर्थः।

---

१ यस्यार्थं M. २ काव्यमास्था° p. ३ मर्त्यें p., m₂.

वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्तेऽत्र स्वभावतः ।
उद्घातकावलगिते प्रपञ्चत्रिगते छलम् ॥ ३० ॥

वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि त्रयोदश ॥ ३१ ॥

एषां स्वरूपं निरूप्यते ।

गूढार्थपदपर्यायमालारूपेण प्रश्नोत्तरमालारूपेण वोद्घात्यकं द्विविधम् । अवलगितमपि द्विविधम् । अन्यकार्यच्छद्मना अन्यकार्यकरणम् । अन्यकार्यप्रसङ्गात् प्रकृतकार्यसिद्धिश्च । असद्भूतं मिथः स्तोत्रं प्रपञ्चः ।

---

नन्वनन्तरमुद्घात्यकादीनि वीथ्यङ्गान्युच्यन्ते कथं तेषामामुखे संगतिरित्याशङ्क्योभयेषामङ्गानामभेदाददविरोध इति संगमयन्नाह । वीथ्यङ्गानीति । न चैवं वीथ्यामुखयोरङ्गिनोर्नाममात्रभेद इति शङ्कनीयम् । वीथ्यां कथोद्घातादिविशेषाङ्गविकलत्वं सूत्रधारादिसंबन्धवैधुर्यमुद्घात्यकादिसर्वाङ्गावश्यकत्वं पाक्षिकप्राधान्यं च । आमुखे पुनरेतद्वैरूप्यमित्यनयोरत्यन्तविलक्षणत्वात् । अथ साधारणाङ्गान्युद्देशपूर्वकं लक्षयति । उद्घात्यकेत्यादिना ।

अन्योन्यालापो गूढार्थपदं ततः पर्यायश्चेत्येवमेका माला । प्रश्नोत्तरं चेति द्वितीया । द्वेधावलगितमित्याह । अन्यकार्येति । पूर्वत्र प्रकृतकार्यसिद्धेः प्रयत्नपूर्वकत्वमुत्तरत्र प्रासङ्गिकत्वं चेत्यर्थः । असद्भूतं पारदार्यादिप्रसंगेन दुष्टम् । पूर्वाचार्यास्तु स्तोत्रं हास्येन विशिंषन्ति ।

---

१ °दुच्यन्ते तत्स्वभावतः P. २ °मवस्कन्दित° M. ३ °मार्दवानि P. ४ प्रश्नोत्तररूपेण चो° M. ५ चोद्घात्यकं T. ६ Before this T. has यत्रैकत्र समावेशात् कार्यमन्यत्र सिद्ध्यति । वस्तुनोऽन्यत्र वा यत्स्याद्द्विधावलगितं मतम् । ७ T' drops कार्य. ८ प्रसङ्गात्प्रकृत° M. ९ °श्चेति P. १० प्रपञ्चम् M. ११ t. drops अत्यन्त. १२ द्वितीया माला t. १३ t. drops स्तोत्र.

पूर्वरङ्गे नटादिसल्लापोऽत्र तु साम्यादनेकार्थयोजनं त्रिगतम्। प्रियसदृशैर्वाक्यैरप्रियैर्विलोभनं छलम्। साकाङ्क्षस्यापि वाक्यस्य निवर्त्तनमुक्तिप्रत्युक्तिर्वाक्केलिर्द्विधा। स्पर्धयान्योन्यवाक्याधिक्यमधिबलम्। सहसोदितं प्रस्तुतविरोधि गण्डम्। रसवशादुक्तान्यथाव्याख्यानमवस्यन्दितम्। सोपहासानिगूढार्थप्रहेलिका नालिका। असंबन्धकथाप्रायः-

---

'असद्भूतं मिथः स्तोत्रं प्रपञ्चो हास्यकृन्मतः।'

इति। त्रिगतं द्विविधम्। तत्रैकं पूर्वरङ्गाङ्गमपरमामुखाङ्गमिति विविच्योभयोः क्रमेण लक्षणमाह। पूर्वरङ्ग इति। नटादिसल्लाप इत्यत्रादिग्रहणान्मारिषसूत्रधारौ गृह्येते। तदुक्तं भावप्रकाशे पूर्वरङ्गप्रस्तावे।

'सूत्रधारो नटश्चैव तथा वै पारिपार्श्विकः।
सल्लापं यत्र कुर्वन्ति तदेव त्रिगतं स्मृतम्॥'

इति। अत्र त्विति प्रस्तावनायाम्। साम्यादिति। शब्दसाम्यादित्यर्थः। तदुक्तं दशरूपके।

श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह।
नटादित्रितयालापः पूर्वरङ्गे तदिष्यते॥'

इति। छलं व्यक्तम्। साकाङ्क्षस्येति। निवर्त्तनमुपरि प्रस्तुतमौनमः शिवायेतिवदिति भावः[11]। उक्तिः प्रत्युक्तिरुक्तिप्रत्युक्तिः। अत्र द्विर्द्विरिति शेषं प्राञ्चः पूरयन्ति। अन्योन्यवाक्येति। परस्परसामर्थ्यप्रकाशकवाक्याधिक्यमित्यर्थः। सहसोदितमविमृश्योक्तं प्रस्तुतविरोधि गण्डम्। अर्थभेदेन प्रस्तुतोपयोगि गण्डमिति केचित्। तदुक्तम्। 'गण्डः प्रस्तुतसंबन्धि भिन्नार्थं सहसोदितम्' इति। रसवशादित्युक्तेन सम्बध्यते न तु व्याख्यानेन। सोपहासेति। निगूढो गोपितो

---

१ नटादिभिः साम्यादनेका° P.; नटादिशब्दसाम्यादनेका° M. २ P. has पूर्वरङ्गाङ्गं प्रस्तावनाङ्गमिति तद् द्विविधम् before it and T. notices in a bracket ( त्रिगतं द्विविधं पूर्वरङ्गाङ्गं प्रस्तावनाङ्गं चेति ). ३ °रप्रियैर्विलोभनं M. ४ चलनम् M.; छलनम् T'. ५ °प्रयुक्तिकल्पेन T., T'. ६ °द्विविधा M₁. ७ °मवस्पन्दितम् P., M₁; °मवस्कन्दितम् M. ८ °निगूढार्था M., M₂, M₁, M₄. ९ °कथालापो P.; कथाप्रायोऽसत्प्रलापः M.; कथाभिप्रायोऽसत्प्रलापः M₁. १० °ङ्गं तत्र परमामुखाङ्ग° t., m₂. ११ p. has this:—

'कुलशोकदरं कुमारमेकं कुहनाभैरवपारणोन्मुखाभ्याम्।
उपहूय कृतादरं पितृभ्यामुपरि प्रस्तुतमौनमः शिवाय'॥

इति महेश्वरानन्दे

प्रलापोऽसत्प्रलापः । अन्यार्थं हास्यलोभकरं वचनं व्याहारः । दोषाणां गुणत्वप्रतिपादनं मृदवम् । एतेषां मध्ये यथासंभवं कानिचित् प्रस्तावनायां प्रयोक्तव्यानि ।

अथ दशरूपकाणां स्वरूपं निरूप्यते । तत्र

> साङ्गैर्मुखप्रतिमुखगर्भमर्शोपसंहृतैः ।
> पूर्वं प्रकृतिरन्येषामाधिकारिकवृत्तवत् ॥ ३२ ॥

---

बाह्य आभ्यन्तरो वा मुख्यार्थो यत्र सा तथोक्ता । अत एव अन्तर्लापा बहिर्लापा चेति द्विविधा प्रहेलिका । तदुक्तं विदग्धमुखमण्डने ।

> 'व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् ।
> यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका ॥'

इति । प्रलाप इति रसस्वप्नोन्मादशैशवादिप्रयुक्त इति शेषः । अत एव नायमसंगतिर्नाम वाक्यदोषः । अन्यार्थमित्यर्थान्तरोद्देशेन हास्यप्रलोभकारीत्यर्थः । दोषाणामिति । वैपरीत्यस्याप्युपलक्षणमेतत् । तदुक्तम्

> 'दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् '

इति । एतेषामङ्गानां कार्त्स्न्येन प्रयोगनिर्बन्धो नास्तीत्याह । एतेषामिति ।

रूपकोपोद्घातरूपां प्रस्तावनां निरूप्य संप्रति रूपकस्वरूपनिरूपणं प्रतिजानीते । अथेति । तत्र सर्वप्रकृतित्वेन प्रधानस्य नाटकस्य स्वरूपमाह । साङ्गैरिति । यत्रेत्थमिदं कर्तव्यमिति कृत्स्नाङ्गसमेतप्रधानोपदेशः सा प्रकृतिः । यथा दर्शपूर्णमासादिः । कृत्स्नाङ्गोपदेशाभावेऽन्यतः सिद्धाङ्गाकाङ्क्षायां तद्वदिदं कर्तव्यमिति अतिदेशेन यत्रानुपदिष्टाङ्गपरिपूरणं सा विकृतिः । यथैन्द्राग्नादिः । तद्वदत्रापि संधिपञ्चकाङ्गादिकृत्स्नोपदेशेन परिपूर्णत्वादातिदेशिकाङ्गयोगेन विकृतिभूतानां प्रकरणादीनां नाटकं प्रकृतिः । तदेतदाह । प्रकृतिरन्येषामिति । फलस्वाम्यमधिकारः । तद्वानधिकारी । अधिकारेणाधिकारिणा वा निर्वृत्तमाधि-

---

१ अन्यार्थंहास्य° $M_a$, $M_b$; अन्यार्थस्य $M_c$. २ °कारणवचनं M., $M_{b,j}$; °कारणं वचनं $M_f$. ३ मृदुत्वम् P. ४ एषां $M_c$. ५ कतिचन T'. ६ अत्र P. ७ T' and $M_f$ drop दश. ८ स्वस्वरूपं $M_f$. ९ °गर्भामर्शों° P. १० °स्वरूपं L.

वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते।
प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ॥ ३३ ॥

तत्र नान्दीस्वरूपं निरूप्यते।

अर्थतः शब्दतो वापि मनाक् काव्यार्थसूचनम्।
यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा ॥
द्वाविंशत्या पदैर्वापि सा नान्दी परिकीर्त्यते ॥ ३४ ॥

---

कारिकं प्रधानम्। वृत्तशब्देनात्र प्रख्यातमुचितं चेति वृत्तं विवक्षितं तदुक्तमित्यर्थः। प्रधानमित्यनेन रसान्तराणामङ्गत्वेनानुप्रवेशः सूच्यते। प्रख्यातो रामायणादिप्रसिद्धः नायको धीरोदात्तो राजर्षिर्दिव्यो वा। तदुपेतं नाटकम्। एवमेवोक्तं दशरूपके।

'अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान्।
कीर्त्तिकामो महोत्साहस्त्रय्यास्त्राता महीपतिः ॥
प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः।
तत् प्रख्यातं विधातव्यं वृत्तमत्राधिकारिकम् ॥
यत्तत्रानुचितं किंचिन्नायकस्य रसस्य वा।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत् ॥'

इति।

पूर्वरङ्गो नाम नाटकादौ कर्त्तव्यः प्रत्यूहपरिपन्थी कर्मविशेषः। तदुक्तम्।

'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्त्तितः ॥'

इति। तस्य प्रत्याहारादीनि द्वाविंशतिरङ्गानि तन्मध्येऽवश्यं कर्त्तव्या नान्दी। तदुक्तं बादरायणेन

"यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके।
तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये ॥"

---

१ नान्दि' M. २ मनागर्थस्य सूचनम् M,. ३ परिकीर्तिता T., T'. ४ तदुक्तम् is dropped in p. ५ प्रकीर्तितः m. ६ विघ्नप्रशान्तये m.

नाटकादिरूपकाणामादौ [1]विहितं पद्यं नान्दीत्युच्यते । वेणीसंहारेऽष्टादशपदा नान्दी । [2]अनर्घराघवे द्वादशपदा । बालरामायणे द्वाविंशतिपदा । केश्चिन्नान्द्यां पदनियमो [3]नाभ्युपगतः । नान्द्यनन्तरं प्रविष्टेन सूत्रधारेण रङ्गप्रसाधनपुरःसरं [4]भारतीवृत्त्याश्रयणेन श्लोकैः काव्यार्थः सूचनीयः । तथोक्तं दशरूपके

> ' रङ्गं प्रसाध्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
> ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥'

[5]इति ।

एषा प्रक्रिया नाटकस्यैव मुख्या ।

---

इति । अतस्तत्स्वरूपं निरूप्यत इत्याह । तत्र नान्दीति

> ' चन्द्रनामाङ्किता प्रायो मङ्गलार्थपदोज्ज्वला ।
> आशीर्नमस्क्रिया वस्तुनिर्देशो वा प्रकल्प्यते ॥'

इत्यादि विशेषोऽप्यत्र द्रष्टव्यः । असाधारणत्वमस्या निवारयन् व्याचष्टे । नाटकादीति । स्पष्टमन्यत् ।

अनन्तरकर्तव्यमाह । नान्द्यनन्तरमिति । सूत्रधारेण द्वितीयेन । रङ्गप्रसाधनं नाम सभापतावुपविष्टे रङ्गप्रविष्टसाम्प्रदायिकसंपादितो यवनिकापगमाविर्भूतपात्रविशेषप्रकीर्णपुष्पाञ्जलिपरिष्कृतो नृत्तगीतवाद्यविशेषप्रयोगः केवलगीतवाद्यविशेषप्रयोगो गीतादेरेकैकशः प्रयोगो वा । एतच्च

> ' संगीतज्ञैर्बुधैः सार्धं नायके प्रेक्षके स्थिते ।
> प्रविश्य रङ्गभूमिं ते तिष्ठन्तः सांप्रदायिकाः ॥'

इत्यादिना संगीतरत्नाकरे [6]प्रपञ्चितम् । तदपेक्षायां तत्रैव द्रष्टव्यम् । भारत्या लक्षणमुक्तम् । अत्रार्थे संवादमाह । [7]रङ्गमिति । अत्र स्वोक्तिसंवादवाक्यगतयोः काव्यार्थसूचनभारतीवृत्त्याश्रयणयोरुद्देश्यविधेयभाववैरूप्यं फलभेदाभावान्न दोषायेति द्रष्टव्यम् ।

> ' नाटकेऽङ्का न कर्तव्याः पञ्चन्यूना दशाधिकाः ।'

इति । अस्याः सामग्र्या असाधारणत्वमाह । एषेति । मुख्या नियतेत्यर्थः ।

---

१ पद्यं विहितं P. २ °ष्टपदा नान्दी T. ३ अनर्घ्यराघवे P. ४ नापेक्षितः M, M₂. ५ भारतीप्रत्याश्रयेण M. ६ P. omits इति. ७ प्रतिपादितम् t. ८ रङ्गमिति is dropped in t. and m.

अथ प्रकरणम् ।

उत्पाद्येनेतिवृत्तेन धीरशान्तप्रधानकम् ।
शेषं नाटकतुल्याङ्गं भवेत् प्रकरणं हि तत् ॥ ३५ ॥

अथ भाणः ।

भारतीवृत्तिभूयिष्ठं[1] शौर्यसौभाग्यसंस्तवैः ।
सूच्येते वीरशृङ्गारौ विटेन निपुणोक्तिना ॥ ३६ ॥

कल्पितेनेतिवृत्तेन धूर्तचारित्रवर्णनम् ।
एकोऽङ्को मुखनिर्वाहौ यत्र भाणः स संमतः ॥ ३७ ॥

---

प्रकरणं लक्षयति । उत्पाद्येनेति । इति वृत्तेनोपलक्षितं [2]शेषं वस्तु । नाटकतुल्यान्यङ्गान्यामुखादीनि यत्र तत् तथोक्तम् । अयमतिदेशो यथायोगमुत्तरत्राप्यनुषञ्जनीयः । धीरशान्तप्रधानकमित्यत्र प्रधानग्रहणमुद्देष्टव्यधर्मान्तरसूचकम् । तानि च दशरूपके

'अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम् ।
अमात्यविप्रवणिजामेकं कुर्याच्च नायकम् ॥
धीरप्रशान्तं सापायं धर्मकामार्थतत्परम् ।
शेषं नाटकवत् संधिप्रवेशकरसादिकम् ।'

विपदन्तरितार्थसिद्धिः सापायः । किं च

'त्रेधात्र नायिका ज्ञेया कुलस्त्रीगणिकोभयम् ।
तद्वशाद्रूपकं त्रेधा तृतीयं धूर्तसंकुलम् ॥
गणिका प्राकृतं ब्रूते कुलस्त्री संस्कृतं तथा ।'

इति । विकृत्यन्तरापेक्षया संध्यादीनां प्रकर्षेण करणात् प्रकरणम् ॥

भाणं लक्षयति । भारतीति । शौर्यसौभाग्ययोः संस्तवैः धूर्ता द्यूतकारादयस्तेषां चारित्रं स्वेनान्येन वानुभूतमिति शेषः । स्पष्टमन्यत् ।

---

१ °भूयस्त्वं M; °भूयिष्ठे M₁, M₂. २ विशेषं k.

अथ प्रहसनम् ।

यत्र सन्ध्यङ्गवृत्त्यङ्गवर्णनं भाणवन्मतम् ।
हास्यो रसः प्रधानं स्याद्भवेत् प्रहसनं हि तत् ॥ ३८ ॥

तत् त्रिविधम् । शुद्धं वैकृतं संकीर्णं चेति । तत्र शुद्धम् ।

पाषण्डविप्रप्रभृतिचेटीचेटसमाकुलम् ।
वेषभाषादिसहितं शुद्धं हास्यवचोऽन्वितम् ॥ ३९ ॥

---

' एकपात्रप्रयोज्येऽस्मिन्कुर्यादाकाशभाषितम् ।
अन्येनानुक्तमप्यन्यो वचः श्रुत्वेव यद्वदेत् ॥
इति किं भणसीत्येतद् भवेदाकाशभाषितम् ।
लास्याङ्गदशकं चात्र योज्यं गेयपदादिकम् ॥
भावप्रकाशिकाद्येषु तत्प्रपञ्चः परीक्ष्यताम् ।
अत्रोपरम्यतेऽस्माभिरतिविस्तरभीरुभिः ॥

यत्रैक एव विटः स्वकृतं परकृतं वा भारतीवृत्तिभूयिष्ठं भणति स भाणः ।

प्रहसनं लक्षयेति । यत्रेति । हास्यवचःप्रचुरत्वादिदं प्रहसनमुच्यते । तत्र शाक्यश्रोत्रियादिवेषभाषाविशिष्टं शुद्धम् । विटकामुकवृद्धकञ्चुकिप्रमुखवचोवेषानुकारि वैकृतम् । वीथ्यङ्गविशिष्टं धूर्तचेष्टितसंकुलं संकीर्णम् । तदेतत् त्रिविधं विभज्य क्रमेण लक्षयति । तत्रेत्यादिना । तत्र शुद्धमाह । पाषण्डेति । पाषण्डाः शाक्यादयः । विप्रा जातिमात्रोपजीविनोऽत्यन्तमृजवो वा । प्रभृतिपदेन तादृशा एव वैश्यादयो गृह्यन्ते । चेट्यादयो लक्षितचराः प्रधानभूतहास्यरसविभावभूतैरेतैः समाकुलम् । वेषभाषादिसहितमिति । अर्थादेतेषामेवेति गम्यते । विकृ-

---

१ 'लास्याङ्ग' M. ( M. notices 'वृत्त्यङ्ग' also ). २ विकृतं $M_1$. ३ ततः M. ४ पाखण्ड P. ५ नटचेटविटाकुलम् P.; चेटचेटीविटाकुलम् M.; नटचेटीविटाकुलम् $M_1$. ६ श्रुत्वैव t. m. ७ प्रतीक्ष्यताम् t. m. ८ °भीतिभिः t. ९ t. drops शाक्य. १० पाखण्ड° p. ११ पाखण्डाः p.

अथ वैकृतम्[1] ।

कामुकादिवचोवेषैः[2] षण्डकञ्चुकितापसैः ।
प्रहासाभिनयप्रायं वैकृतं[3] तत् प्रकीर्त्यते ॥ ४० ॥

अथ संकीर्णम् ।

यद्वीथ्यङ्गैः समाकीर्णैः[4] संकीर्णं[5] धूर्त्तसंकुलम् ॥ ४१ ॥

अथ डिमः ।

यत्र वृत्तं[6] प्रसिद्धं स्याद्वृत्तयः कैशिकीं विना ।
नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः ॥ ४२ ॥
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ।
हास्यशृङ्गाररहिता रसा रौद्र[7]प्रधानकाः ॥ ४३ ॥
चत्वारोऽङ्का संधयश्च चत्वारो मर्शवर्जिताः ।
माये[8]न्द्रजालसंग्रामसूर्यचन्द्रग्रहोदयः[9] ॥
शेषं नाटकवत् सर्वं स[10] डिमः परिकीर्त्यते ॥ ४४ ॥

---

तमाह । अथेति । कामुकादयो भुजङ्गाद्याः । तेषां वचोवेषौ येषां तैस्तथोक्तैः । तथा पाषण्डकञ्चुकितापसैस्तद्वेषभाषायुक्तैरेषान्वितमिति शेषः । संकीर्णमाह । यदिति । वीथ्यङ्गैरुद्धात्यकादिभिः । धूर्त्ताश्चोरद्यूतकरादयः ।

डिमं लक्षयति । यत्रेति । प्रसिद्धं वस्तु त्रिपुरदाहादयः । वृत्तयः कैशिकी-वर्जास्तिस्रः रसादीप्ता एव । अत एवोक्तम् ।

'शृङ्गारहास्यविधुरैं रसैर्दीप्तैर्निरन्तरः'

इति । अतः शान्तरसस्य प्रसक्तिरेव नास्तीति भावः । रौद्रः स्थायित्वेन प्रधानं येषां ते रौद्रप्रधानकाः । मर्शो विमर्शः । मायादयोऽनुभावाः । तत्र मायेन्द्रजा-लयोर्लक्षणं भावप्रकाशे

---

१ विकृतम् $M_{f}$.  २ कामकोकवचोवेषैः P.; कामुकानां वचोवेषैः M., $M_{g}$.  ३ विकृतं $M_{f}$.
४ समाकीर्णं M., $M_{f}$, $M_{g}$, $M_{e}$, T.  ५ संकीर्णैः P.  ६ वस्तु T., M., $M_{f}$, $M_{g}$, $M_{e}$.
७ नाट्य for रौद्र $M_{g}$.  ८ महेन्द्र° P., M.  ९ °ग्रहोदयाः M.  १० डिमः स R.

अथ व्यायोगः ।

> यत्र ख्यातेतिवृत्तं स्यादुद्धतो नायको मतः ।
> गर्भविमर्शराहित्यं डिमवद्रसपोषणम् ॥
> एकवासरकार्यं च स व्यायोगो महारणः ॥ ४५ ॥

अथ समवकारः ।

> यथामुखं नाटकवत् संधयो मर्शवर्जिताः ।
> नेतारो द्वादश पृथक्फला देवासुरादयः ॥ ४६ ॥

---

> ' सद्रूपोद्भावना माया स्वत एवासतः पुरा ।
> अथवान्यपदार्थानामन्यथा कृतिरेव वा ॥
> अदेशकालपारोक्ष्यं परोक्षस्यैव वस्तुनः ।
> मन्त्रौषधादिभिः सोऽयमिन्द्रजाल इतीरितः ॥'

इति । चन्द्रग्रहादय इत्यत्रादिशब्देनोल्कानिर्घातादयो गृह्यन्ते । गतमन्यत् । डिमः सङ्घात इति नायकसंघातव्यापारात्मकत्वात् डिम इति धनिकः ।

व्यायोगं लक्षयति । यत्रेति । शान्तशृङ्गारहास्यरहिता रौद्रप्रधानकाः षड् रसाः कैशिकीवर्जमितरवृत्तयश्चेत्येतड्डिमवद्रसपोषणमित्यतिदेशेन लभ्यते । अस्त्री-निमित्तोऽत्र महारणः । तदुक्तम् ।

> ' अस्त्रीनिमित्तसंग्रामो जामदग्न्यजयोर्यथा ।

इति । व्यायुज्यतेऽस्मिन् बहवः पुरुषा इति व्यायोगः ।

समवकारं लक्षयति । यत्रेति । शेषं नाटकतुल्याङ्गमित्यतिदेशानुषङ्गादेवानुपदिष्टा मुखाद्यखिलाङ्गलाभेऽप्यत्रामुखं नाटकवदित्यतिदेशो रूपकाणामिदमावश्यकमिति सूचनायेति द्रष्टव्यम् । एककार्याणामपि नायकानां पयोधिमथने सुधालक्ष्मीप्रमुखफलभेदं दर्शयाह । नेतार इति । वीरप्रधाना इत्यनेन शृङ्गारादी-

---

१ व्याख्यातमितिवृत्तं स्यादुद्धतो नाम नायकः ] M. २ समवाकारः T', M.
३ समवाकारं L. ४ प्रमुखं फल° f., m.

वीरप्रधानाश्च रसास्त्रयोऽङ्कास्तेषु च क्रमात् ।
वस्तुस्वभावदैवादिकृताः स्युः कपटास्त्रयः ॥ ४७ ॥
पुररोधरणाग्न्यादिनिमित्ता विद्रवास्त्रयः ।
धर्मार्थकामानुगुणास्तिस्रः शृङ्गाररीतयः ॥ ४८ ॥
प्रथमेऽङ्के निवद्धव्या कथायामत्रयावधिः ।
यामावधिर्द्वितीयेऽङ्के तृतीयेऽङ्केऽर्धयामिका ॥
असौ समवकारः स्याद्वीथ्यङ्गैः कैश्चिदन्वितः ॥ ४९ ॥

---

नामकत्वेनानुप्रवेशः । अत एवात्र मन्दकैशिक्यो वृत्तयश्चेति गम्यते । त्रयोऽङ्का इति । प्रथमेऽङ्के मुखप्रतिमुखयोर्द्वितीये गर्भस्य तृतीये निर्वहणस्य च निबन्धो द्रष्टव्यः । अङ्कत्रये कपटविद्रवशृङ्गारत्रिकाणां त्रयाणां क्रमेण निबन्ध इत्याह । तेषु च क्रमादिति । कपटो नाम मोहः । तदुक्तं भावप्रकाशे

'कपटस्य स्वरूपं तु भ्रमो मोहात्मकः स्मृतः'

इति । स च निमित्तानुरोधेन त्रिविध इत्याह । वस्तुस्वभावेति ।

'वस्तुस्वभावकपटः क्रूरसत्त्वादिसंभवः ।
दैविकः कपटो वह्निवर्षवातादिसंभवः ॥
शत्रुजः कपटस्तत्र संग्रामादिसमुद्भवः ॥

कपटजन्यं पलायनं विद्रवः । सोऽपि कपटवत् त्रिविध इत्याह । पुररोधेति । पुररोधरणादिनिमित्तोऽरिकृतो विद्रवः । अग्न्यादिनिमित्तो दैविको विद्रवः । व्यालव्याघ्रादिनिमित्तो वस्तुस्वभावकृतो विद्रवः । व्रतादिजनितः कामो धर्मशृङ्गारः । महाराज्याद्यर्थप्राप्तिहेतुरर्थशृङ्गारः । परदारसुरापानादिसुखलालितः कामशृङ्गारः । अङ्कत्रयवर्तिनो वस्तुनः कालनियममाह । प्रथमेऽङ्के इत्यादि । यथालाभमुद्घात्यकादीनामनुप्रवेश इत्याह । वीथ्यङ्गैरिति । समन्तादवकीर्यन्तेऽस्मिन्नर्था इति समवकारः । शेषं स्पष्टम् ॥

---

१ °द्वितीयाङ्के P.

अथ वीथी ।

यत्र भाणवदङ्गानां क्लृप्ति[1]र्वृत्तिस्तु कैशिकी ।
[2]शृङ्गारः परिपूर्णत्वात् सूचनीयोऽतिभूयसा ॥
[3]उद्घात्यकादीन्यङ्गानि सा वीथी वीथिवन्मता ॥ ५० ॥

अथाङ्कः ।

यत्रेतिवृत्तं प्रख्यातं प्रधानं करुणो रसः ।
स्त्रीणां विलासो वाग्युद्धं नेतारः प्राकृता नराः ॥
भाणवत् संधिवृत्त्यादि स [4]उत्सृष्टोऽङ्कसंज्ञितः ॥ ५१ ॥

---

वीथीं लक्षयति । यत्रेति । एकोऽङ्को मुखनिर्वाहावित्यादिको भाणवदित्यतिदेशलभ्यः । विशेषमाह । वृत्तिरित्यादिना । शृङ्गारोऽतिभूयसा सूचनीय इत्यनेन रसान्तराणामत्यल्पशः सूचनं गम्यते । उद्घात्यकादीनि प्रस्तावनायामुक्तानि । यत्रैवं सामग्री सा वीथी । [5]वीथिवदङ्गानां मार्गवत् पङ्क्तिवद्धा मता । एकपात्रेण पात्रद्वयेन वा योगोऽस्यान्यतोऽवगन्तव्यः । इदमप्यत्रानुसंधेयम् ।

'अस्यां प्रायेण लास्याङ्गदशकं योजयेन्न वा ।
सामान्या परकीया वा नायिकात्रानुरागिणी ॥
वीथ्यङ्गप्रायवस्तुत्वान्नोचिता कुलपालिका ।
लक्ष्यमस्यास्तु विज्ञेयं माधवीवीथिकादिकम् ।'

इति ।

अङ्कं लक्षयति । [7]यत्रेति । इतिवृत्तं प्रख्यातमुत्पाद्यं वेति केचित् । प्राकृता दिव्यतिरिक्ताः अत एव शारदातनयेनोक्तम् ।

'दिव्यैरयुक्तः पुरुषैः शेषैरन्यैः समन्वितः'

इति । सुगममन्यत् । य एवंविधः सोऽयं पुत्रादीनामिव प्राकृतनायकादीनामाश्रयत्वादङ्क इति संज्ञितः । अयमङ्को नानाप्रकारेति लक्षणमुल्लङ्घ्य सृष्टत्वादुत्सृष्ट इत्युच्यते । अत एवोत्सृष्टिकाङ्क इति नाटकान्तर्गताङ्कव्यवच्छेदार्थमिति धनिको व्याचष्ट ।

---

१ कृप्त्यं वृत्तिस्तु P. २ शृङ्गारोऽपरि° P. ३ उद्घात्यादीनि चाङ्गानि R., M.
४ उत्सृष्टाङ्क° M. ५ °लक्ष्य: L, m. ६ वीथी° P. ७ अत्रेति L.

अथेहामृगः ।

> मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिकम् ॥
> मर्त्यदिव्यौ च नियमान्नायकप्रतिनायकौ ॥ ९२ ॥
> धीरोद्धतौ स्त्रियं दिव्यां हर्तृकामौ च कामुकौ ।
> अवधं युद्धमन्योन्यमाभासरसयोस्तयोः ॥ ९३ ॥

एषा प्रक्रिया दशरूपकोक्तरीत्यनुसारेण ।

तत्र साङ्गं नाटकमुदाहियते ।

> भद्रां कौतुकवेदिमागतवतोरन्योन्यमासेदुषोः
> शैलैर्मेरुहिमाचलप्रभृतिभिर्देवैर्हरीन्द्रादिभिः ।
> व्योमां पार्श्वयुगे पुरोऽम्बुजभुवा पश्चाच्च मेनादिभिः
> साध्वीभिः शिवयोरपाङ्गसरणिर्वैवाहिकी पातु वः ॥ १ ॥

---

ईहामृगं लक्षयति । मिश्रमिति । गर्भावमर्शरहितास्त्रयः संधयो यस्मिंस्तत् त्रिसन्धिकम् । आभासरसयोरनुरागशून्यनायिकानुरक्तत्वादिति भावः । अत एवोक्तं दशरूपके

‘ दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ’

इति ।

अवधं युद्धमजायुद्धकल्पमित्यर्थः । गतमन्यत् । मृगवदलभ्यां नायिकां नायकोऽस्मिन् ईहते इति ईहामृगः । अस्या रूपकसामग्र्याः स्वोन्मेषमूलत्वं वारयति । एषेति ॥

केवलोद्देशलक्षणाभ्यां रूपकसामग्र्या दुर्ग्रहत्वाद्रूपकान्तराणामेतदुदाहरणेनोदाहृतकल्पत्वं हृदि निधाय जिज्ञासुजनानुग्रहार्थं नाटकमात्रमत्रोदाह्रियत इति प्रतिजानीते । तत्रेति ।

अथ साङ्गं नाटकमुदाहर्तुमारभमाणो विद्यानाथस्तत्प्रत्यूहपरिपन्थिनः पूर्वरङ्गस्य प्रधानाङ्गभूतामाशीरूपमङ्गलान्वितां नान्दीमादावुदाहरति । भद्रामिति । भद्रां

---

१ चतुरङ्कत्रिसन्धिकम् T′. २ त्रिसन्ध्यकम् M. ३ मेत्यौ $M_p$. ४ हर्तृकामौ $M_p$. ५ कामुकीम् $M_p$. ६ प्रक्रियानुसारेण कथिता $M_p$. * T and T′ have नाटकोदाहरणप्रारम्भः before this. ८ साङ्गनाटक° M. ९ वामाम् $M_a$; व्याता R. १० नः $M_p$, $M_t$. ११ सामग्र्या स्वोन्मेष° p. १२ Dropped in p′. १३ Dropped in t.

एषा द्वाविंशति[1]पदा नान्दी । अस्यां वि[2]वाहप्र[3]वृत्तयोः शिवयोः वर्णनया सकलनरेन्द्रप[4]रिवृतस्य प्रतापरुद्रस्य काक[5]तीयलक्ष्मीप्राप्तिर्नाटकप्रयोजनरूपा किंचिदर्थशक्त्या सू[6]च्यते ।

[7]देयात् सिद्धिं महालक्ष्मीर्जगद्रक्षाधुरन्धरा ।
विष्णुवक्षःस्फुरन्मालाविहितालयतोरणा ॥ २ ॥

एषा च नान्दी प्रतापरुद्रराज्यलक्ष्मीमङ्गलविधिलक्षणा ।

नान्द्यन्ते सूत्रधारः । ( समन्ताद[8]वलोक्य सहर्षम् ) ।
कथमासूत्रित एव समन्ततो रङ्गमङ्गलविधिः ।

---

विचित्रवितानमणितोरणादिपरिष्कारेण मङ्गलाम् । पार्श्वयुगे वधूवरप्रत्यासत्तैर्मैरुहरिप्रभृतिभिर्व्याप्ताम् । पुरोभागेऽम्बुजभुवा याज्ञिकेन ब्रह्मणा । तदुक्तं श्रीकण्ठलीलायां कल्याणकाण्डे

‘ दाता महीभृतां नाथो होता देवश्चतुर्मुखः ।
वरः प[9]शुपतिः साक्षात् कन्या विश्वारणिस्तथा ॥’

इति । मेना हिमाचलमहिषी । तदादिभिः साध्वीभिः पुरन्ध्रीभिः पश्चाद्भागे व्याप्तां कौतुकवेदिं विवाहोत्सववितर्दिकामागतवतोः प्राप्तयोरन्योन्यमासेदुषोर्यथा मिथः संस्पर्शस्तथासीनयोरित्यर्थः । यथास्थानमुपविश्यान्वारब्धायामित्यापस्तम्बस्मरणात् । शिवयोः पार्वतीपरमेश्वरयोः । ‘ पुमान् स्त्रिया ’ इत्येकशेषः । विवाहे भवा वैवाहिकी । अपाङ्गसरणिरन्योन्यदर्शनमित्यर्थः । इदमपि तत्रैवोक्तम् ।

‘ देवोऽपि देवीमालोक्य सलज्जां हिमशैलजाम् ।
न तृप्यति नतापाङ्गी सा च देवं वृषध्वजम् ॥’

इति । स वः पात्विति संबन्धः । लक्ष्येण लक्षणं योजयत्येषेति ।

नान्द्यन्त इति । नान्दीं प्रयुज्य पूर्वसूत्रधारे विनिर्गत इत्यर्थः । सूत्रधार इति द्वितीयो नटाख्य इत्यर्थः । रङ्गप्रविष्ट इति शेषः । इदमनुपदमेव रङ्गं प्रसाध्येत्यादिना तत्कृत्यमुक्तं तदाह । समन्तादिति । सहर्षं सूचनमात्रादेव सांप्र-

---

१ °पदी R. २ M. drops विवाह. ३ °प्रवृत्ताशिवयोः $M_{1}$. ४ °परिकरस्य T., T′. ५ काकतीयराज्यलक्ष्मी° T. ६ सूचिता M., $M_{1}$. ७ The portion from देयात् to लक्षणा is dropped in R., $M_{1}$, $M_{2}$, $M_{3}$; M has दीयात्. ८ समन्तात् $M_{1}$. ९ प्रभुपतिः P′.

तथाहि

आविष्कुर्वन्ति मुरजाः सर्वतः शब्दमाधुरीम् ।
सङ्गीतोपनिषद्विद्यां वीणाः प्रस्तावयन्त्यमूः ॥ ३ ॥

एतद्रङ्गप्रसाधनम्[2] ।

संप्रार्थनम्[3]—

भूभृत्सुतामहादेवौ पितरौ यस्य विश्रुतौ ।
नरनागाकृतिः श्रीमान् स देवः श्रेयसेऽस्तु वः ॥ ४ ॥

---

दायिकैः सबद्धमानद्धादिकमिति सप्रसादमित्यर्थः । त्रिविधं रङ्गप्रसाधनमुक्तम् । तत्र द्वितीयमुदाहरति । आविरिति । शब्दानां वाद्यविशेषाणां माधुरीं श्रोत्रप्रियत्वम् । माधुर्यशब्दात् ष्यञन्तात् ङीष्प्रत्यये 'यस्य' इति यलोपे माधुरीति सिद्धम् । अत एवाह वामनः । 'ष्यञः[4] पित्करणादीकारो बहुलम्' इति । सङ्गीतोपनिषत् संगीतरहस्यम् । तामेव विद्याम् । उभयत्र मौरजिका वैणिकाश्च लक्ष्यन्ते ।

अथ श्लोकैः काव्यार्थसूचकैरित्यादिना भारतीवृत्त्याश्रयणमुक्तम् । तदुदाहरति । भूभृदिति । यस्य देवस्य भूभृत्सुतामहादेवौ पार्वतीपरमेश्वरौ पितरौ मातापितराविति विश्रुतौ । 'पिता मात्रा' इत्येकशेषः । कदाचिल्लीलया गौरीगिरीशौ गजाकारेण विहरमाणौ गजाननमजीजनताम् । तदुक्तं स्कन्दपुराणे ।

'प्रशस्तमत्तमातङ्गवपुर्भूत्वाथ भूतपः ।
भ्रममाणो वने तस्मिन् क्रीडां स्वीकृतवान् विभुः ॥
तामालोक्य महादेवी महेशेच्छानुवर्तिनी ।
करिणीरूपमास्थाय तेन सा विचचार ह ॥'

इत्यादिना । एकस्मिन्नर्धे नरस्येतरस्मिन् करिणश्चाकृतिर्यस्य सोऽयं नरनागाकृतिः । तथापि श्रीमान् रमणीयः । स देवो गणेशो वः सामाजिकानां श्रेयसेऽस्त्विति वाच्यार्थः[5] । सूच्यार्थस्तु[6] यस्य[7] कथानायकस्य भूभृत्सुता राजपुत्री मुम्मडम्बा महादेवस्तन्नामको महाराजः पितराविति विश्रुतौ नरनागा नरश्रेष्ठाः । 'सिंह-

---

१ द्विधा R., M., M₁. २ °प्रसाधनसमर्पणम् R. ३ Dropped in R.; P. has सम्पर्षणम्; M. and T. have सम्प्रहर्षणम्. ४ ष्यञि पित्क° P. ५ वाच्योऽर्थः P., m. ६ व्यङ्ग्यस्तु P. ७ मुम्मडीपा. P. T. M.

( ऊर्ध्वमवलोक्य )—चिरादनुकूलेन कालेनापगतदुर्दिनानि दिङ्मुखानि । यतः ।

> विहरद्राजहंसश्रीर्विलसन्मित्रमण्डलः ।
> प्रसाधयति सन्मार्गं प्रसन्नः शरदागमः ॥ ५ ॥

काव्यार्थसूचकाभ्यां श्लोकाभ्यामृतुसमाश्रयणेन संस्कृतप्रायनराश्रितवाग्व्यवहाररूपा भारती वृत्तिः कथिता ।

---

शार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यभिधानात् । उपमितसमासः । तदाकृतिः नलनहुषदिलीपादिसदृशः इत्यर्थः । स देवो राजा । 'देवः सुरे घने राज्ञि' इति विश्वः । अत्र द्वयोरप्यर्थयोर्वाच्यत्वाभावान्न श्लेषः । नापि शब्दशक्तिमूल उपमालंकारध्वनिः । संबन्धान्तरे संभवति सादृश्यमूलकत्वकल्पनानपेक्षणात् । किं तु सूचकत्वसंबन्धाच्छब्दशक्तिमूलो वस्तुध्वनिः । अत एवोक्तमलंकारसर्वस्वे श्लेषालंकारप्रस्तावे । 'यत्र सूचनव्यापारोऽस्ति तत्र शब्दशक्तिमूलो वस्तुध्वनिर्बोद्धव्यः' इति ।

ऋतुं कंचिदुपादायेतीममंशमुदाहरत्यूर्ध्वमित्यादिना । विहरन्ती राज्ञश्चन्द्रस्य हंसानां च श्रीर्यत्र स तथोक्तः । अन्यत्र राजहंसा राजश्रेष्ठास्तल्लक्ष्मीविहारभूमिरित्यर्थः । विलसत् प्रकाशमानं मित्रमण्डलं सूर्यमण्डलमन्यत्र सुहृत्समूहो यत्र स तथोक्तः । प्रसन्नः एकत्र मेघापगमादन्यत्र स्वभावाच्चेति भावः । सन्मार्गं नक्षत्रमार्गमन्यत्र साधुमार्गम् । प्रसाधयति भूषयति । अत्र प्रस्तुतशरद्विशेषणसाम्येनाप्रस्तुतराजसूचनात् समासोक्तिः । अत एवेदं गुणीभूतव्यङ्ग्यं न पुनः पूर्ववद् ध्वनिरिति बोद्धव्यम् । लक्ष्ये लक्षणं योजयति । काव्यार्थेति ।

---

१ प्रसादयति R. २ शब्दव्यापार' M₁. ३ Dropped in M. ४ दिलीप is dropped in t. ५ सुरेश्वरे t. ६ °नपेक्षमाणत्वात् t. ७ °यस्य p.

सविनयमुपसृत्य सभाभिमुखमञ्जलिं बद्ध्वा।

भो भो मध्यमभुवनभागधेयविवर्तस्यैकशिलानगरपुण्यराशेः काकतीयकुलदेवतायाः स्वयंभूदेवस्य सेवार्थं सततमहोत्सवमासेदिवांसो विद्वांसः कलार्णवनाट्यवेदाचार्यस्य पुत्रमभिनयदर्पणं मामभिमतरूपकप्रयोगानुज्ञया परमनुगृह्णीत।

( आकाशे कर्णं दत्त्वा ) किं ब्रूथ।

यस्मिञ्जगन्मङ्गलमस्ति वस्तु
यस्मै स्वयंभूः स्पृहयत्यजस्रम्।
तच्छ्रोत्रयोर्लोचनयोः पथान्नः
शृङ्गाटकं नाटकमाविरस्तु ॥ ६ ॥

इति।

( सहर्षम् ) अस्मन्मनोरथसंवाद्येव परिषदादेशः। यत् प्रतापरुद्रच-

अथ सामाजिकानुग्रहमाशास्ते। सविनयमित्यादिना। भागधेयविवर्तस्य भाग्यपरिपाकस्य। कलार्णवो नाम नाट्यवेदाचार्यः।

आकाशभाषितेन तदीयमुत्तरमाह। आकाश इति। तल्लक्षणं तु

'किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्।
श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम् ॥'

इति। यस्मिन्निति। स्वयंभूरीश्वरो यस्मै वस्तुने अजस्रं स्पृहयति। 'स्पृहेरीप्सितः' इति संप्रदानत्वाच्चतुर्थी। जगन्मङ्गलं तद्वस्तु यस्मिन्नाटकेऽस्तीति योजना। वाचिकाभिनयेन श्राव्यत्वादितराभिनयेन दृश्यत्वाच्चाह। श्रोत्रयोरित्यादि। शृङ्गाटकं चतुष्पथं तन्नाटकमाविरस्तु। इतिशब्द उत्तरसमाप्तौ।

संवादेन संतुष्यन्नुत्तरार्धमुद्घाटयति। सहर्षमित्यादि। अघटमानघटकं दैवा-

१ भो मध्यम° R. २ 'विवर्तनस्यै° P. ३ 'देवस्य साम्बस्य सततमहोत्सवसेवार्थं समासेदिवांसो M., $M_{\beta}$, $M_{\gamma}$; $M_{\delta}$ follows the same except साम्बस्य which is omitted. ४ T' and $M_{\gamma}$ omit सेवार्थं. ५ कलार्णव° P.; कलार्णवस्य नाट्य° M. ६ 'वेदाचार्याचार्यस्य M. ७ अस्मिन् M., $M_{\beta}$, $M_{\gamma}$. ८ यस्मिन् स्वयंभूः R. ९ प्रथान्नः $M_{\gamma}$. १० P. and R. omit इति. ११ 'विवर्तनस्य m.

रितानुबन्धः[1] सामाजिकानां मनसि वर्तते । अहो सर्वं सुघटितमनुविधात्रा विधात्रा । यतः

> सभा स्वयंभूपरमेश्वरस्य
> प्रतापरुद्रस्य गुणा महार्घाः ।
> अहं च नाट्यश्रुतिपारदृश्वा
> सुधामुचस्तस्य कवेश्च वाचः ॥ ७ ॥

प्रशंसया[4]भिमुखीकरणरूपा[6] भारतीवृत्तेरङ्गं प्ररोचना[7] ।

( सविमर्शम्[8] ) कथमस्मत्प्रेयसी संगीतशारिका[9] चिरयति[10] ।

प्रविश्य नटी—( पुरोऽवलोक्य[11] ) सस्पृहम्—

किं भारईए[12] सुव्वइ[13] मंजीररवो[14] सहाए[15] विहरंतीए । अह[16] संगीअसुइ व्वा विण्णादं[17] णट्टप्पमुहतूरणिणादो[18][19] ।

---

तुकूल्यं जातमित्याह । अहो इति । सभा गुणग्राहिणीति भावः । महार्घा महामूल्याः । नटानामाम्नायो नाट्यम् । 'छन्दोगौक्थिक°' इति ञ्यप्रत्ययः । तस्य श्रुतिशब्देन चूतवृक्षादिवत् समानाधिकरणसमासः । तस्याः पारं दृष्टवान् नाट्यश्रुतिपारदृश्वा । दृशेः क्वनिप् । सुधामुचोऽमृतवर्षिण्यः । प्ररोचनामुदाहरणे योजयति । प्रशंसयेति । प्रस्तुतार्थस्येति शेषः । अभिमुखीकरणरूपेति । सामाजिकानामिति शेषः ।

> 'प्रेक्षकाद्युन्मुखीकारः प्रस्तुतार्थप्रशंसया[21] प्ररोचना[22]'

इति लक्षणात् ।

किमिति । भारईए इत्यत्र एकारस्य 'एदोतोः क्वचित् स्वरूपेण ह्रस्वः' इति ह्रस्वः । एवमन्यत्रापि वृत्तानुसारेण द्रष्टव्यम् । लक्ष्ये लक्षणं योजयति । एतदिति । प्रस्तावनाङ्गमित्यनेन पूर्वरङ्गाङ्गत्रिगतव्यवच्छेदः ।

---

छाया ।

किं भारत्याः श्रूयते मंजीररवः सभायां विहरन्त्याः । अथ संगीतश्रुतिर्वा । विज्ञातम् । नाट्यप्रमुखतूर्यनिनादः ।

१ °बन्धः प्रबन्धः R., T', M.; °बन्धश्च प्रबन्धः M. २ संघटितं P. ३ धात्रा P.; R. ४ एषा प्रशं° P., M., T'. ५ °सनाभिमुखी° P. °साया अभि° M. ६ रूपया M., M. ७ प्ररोचना कथिता M. ८ सविमर्षम् R.; सविस्मयम् P. ९ °शारिका P. १० नायाति T'., M. ११ पुरावलोक्य M. १२ भारदीए P. १३ सुव्वइ P. १४ °रवो T'. १५ सभाए M. १६ अहवा M. १७ ण विण्णादं M. १८ तुज्झ° M., तुंज° R.; तुंम° M. १९ °रवो P. २० व्वइ T' २१ प्रशंसयो P. २२ प्ररोचना is dropped in P.

एतत्साम्यादनेकार्थयोजनरूपं त्रिगतं प्रस्तावनाङ्गम् ।

( उपसृत्य)—[1]अज्ज इअंम्हि [2]आणवेदु को णिओओ [3]अणुचिट्ठिअदु त्ति।

सूत्रधारः—आर्ये

> यद्गेहे [4]कलकण्ठनाद[5]मधुरं गास्यामि गीतिं ध्रुवां
> लास्यं चारुभिरङ्गहारललितैराविष्करिष्यामि यत् ।
> [6]नाट्यं यत् किल रङ्गमङ्गलविधिं संपादयिष्याम्यहं
> प्रागित्युक्तवती तदद्य निपुणे निर्व्यूढ[7]मेवं त्वया ॥ ९ ॥

एतत् प्रियर्[8]सहृदौरप्रियैर्वाक्यै[9]रुपालम्भनाच्छ[10]लनम् ।

नटी—( सभयम् ) [2]णट्टसामग्गिं [11]समग्गीकादुं विलंबिअं। सज्जीकिआ [12]क्खु एसा केण उण [13]रूवएण पओओ [14]उअक्कमीअदु ।

---

इयमस्मि आज्ञापयतु को नियोगोऽनुष्ठीयतामिति ।

सूत्रधारो विलम्बवर्तीं नटीमुपालभते । यदिति । ध्रुवालक्षणं वक्ष्यामः । माधुर्यं गायनीविशेषगुणः । तदुक्तं शार्ङ्गदेवेन ।

> ' रूपयौवनशालिन्यो गायन्यो गातृवन्मताः ।
> माधुर्यधुर्यध्वनयश्चतुराश्चतुरप्रियाः ॥

इति । चारुभिः प्रियदर्शनैः अङ्गहारेषु ललितैः ललितादिसुकुमाराङ्गहारैरित्यर्थः । ' सप्तमी शौण्डैः ' इति बहुवचनेनाद्यर्थलाभः । लास्यं मृदुनर्त्तनम् । ' लास्यं तु सुकुमाराङ्गं मकरध्वजवर्धकम् ' इति लक्षणात् । गास्यामीत्यादीनां स्थानिनोऽ-

---

छाया ।

1 आर्य इयमस्मि आज्ञापयतु को नियोगोऽनुष्ठीयतामिति ।

2 नाट्यसामग्रीं समग्रीकर्तुं विलम्बितम् । सज्जीकृता खलु एषा केन पुना रूपकेण प्रयोग उपक्रम्यताम् ।

१ °प्रयोजन° $M_1$. २ आणवेदु अज्जो P.; R. drops आणवेदु. ३ अणुचिट्ठीयदु त्ति M., P. ४ कलहंस° R., $M_4$. ५ °मधुरां M. ६ रम्यं R., M., T. ७ °मेव P. ८ °सहृदौ· वाक्यैरप्रियै° M., $M_1$. R. drops अप्रियैः. ९ °रुपालम्भाच्छ° M.; °लम्भनं छ° $M_1$. १० °च्छलम् T'., $M_1$, T. ११ सज्जीकाइं P., M.; समङ्गीकारम् $M_1$. १२ खु T'., M. १३ रूवएण T., M. १४ उव° M.; उप° T'., $M_1$.

सूत्रः—नन्विदमेव रूपयत्विति पत्रिकां ददाति।

नटी—( गृहीत्वा संस्कृतमाश्रित्य वाचयति )।

तेजःपर्यायहरयोः किं किं संबोधनं मतम्।
किमाशीर्वादविषयो विद्यानाथकृतिश्च का॥ १०॥

---

सदोऽहमिति विशेषणं ध्रुवागानादीनामविलम्बसूचनार्थम्। अत्र ध्रुवागानादिकं सर्वं निर्वहामीति प्रागुक्तवत्या भवत्या सर्वमेवं निर्व्यूढमिति विपरीतलक्षणया न निर्व्यूढमिति लभ्यते। अत्र नर्तनोपयोगिकरपादादिकर्मविशेषः करणं पुष्पपटादि। तदुक्तं संगीतरत्नाकरे।

'स्यात् क्रिया करपादादेर्विलासेनात्रुटद्रसा।
करणं नृत्तकरणं भीमवद्भीमसेनवत्॥'

इति। तत्समुदायसाध्यो नर्तनप्रयोगविशेषः। अङ्गानामुचितदेशप्रापणेन हरणिषाङ्गप्रयोगत्वेन वाङ्गहार इत्युच्यते। तदुक्तम्।

'अङ्गानामुचिते देशे हरणं सविलासकम्।
अनेककरणोत्पाद्यमङ्गहारोऽभिधीयते॥
यद्वा हारो हरस्यायं प्रयोगोऽङ्गैरिति स्मृतः॥'

इति।

ललितादिलक्षणं बह्वपेक्षमिह विस्तरभयान्न लिख्यत इत्यन्यतो द्रष्टव्यम्।

नाट्यसामग्रीं समग्रीकर्तुं विलम्बितम्। सज्जीकृता खल्वेषा। केन पुना रूपकेण प्रयोग उपक्रम्यताम्।

संस्कृतमाश्रित्येति। पत्रिकागतस्य स्वभाषितत्वाभावात्। वाचयति पठति। वचिरयं चौरादिकः। नालिकाख्यमङ्गं वक्तुं बहिर्लापां प्रहेलिकामाह। तेज

---

१ नन्विषमेव M., T., T'. २ करणं तु T., m.; करणमलिपुष्पं° t. ३ योगोऽङ्गैरिति संस्मृतः m. ४ ददाति t.

नटी—( समन्दस्मितम् )—[1]णिगूढत्थं खु एदं छेआणं वअणं पैडिभादि कीरिसं उँत्तरं णिरूवेदु अज्जो ।

सूत्र०—अयि सुव्यक्तमेतत् । प्रतापरुद्रकल्याणमिति प्रतीयत एव ।

एषा निगूढार्था नालिका ।

नटी—[2]कहं कहाणाअअणामहेआणुबंधमॆणोहरं क्खु णाडअम् । पआवोवॆंवदंकिअं तॅस्स रण्णो णाम कहं जाअंति पुच्छीअदि ।

सूत्र०—प्रिये श्रूयताम् ।

> तं सुजातं समुद्वीक्ष्य क्षोण्यां रविमिवोदितम् ।
> प्रतापरुद्र इत्याख्यामकरोत् काकतीश्वरः ॥ ११ ॥

अन्यच्च ।

> विष्णोर्विश्वैकवीरस्य काकतीयकुले स्थितम् ।
> अवतारममुं ज्ञात्वा वीररुद्रं प्रचक्षते ॥ १२ ॥

---

इति । नालिकालक्षणे सोपहासेलॆक्षणं कृताकृतमिति हृदयम् । अत एवोक्तम् । एषा निगूढार्था नालिकेति ।

णिगूढत्थमिति । छेका विदग्धाः ।

कथं कथानायकनामधेयानुबन्धमनोहरं खलु नाटकम् । अत्र कथमित्याश्चर्ये । प्रतापोपपदाङ्कितं तस्य राज्ञो नाम कथं जातमिति पृच्छ्यते । अत्र कथंशब्दः कारणवाची । 'कारणेऽपि कथं तर्के विस्मये संप्रदुच्यते' इति भावप्रकाशवचनात् । सूर्यसदृशत्वात् प्रतापरुद्र इति संज्ञा संजातेत्युत्तरमाह । तमिति ।

वीरावतारत्वात् वीररुद्रसंज्ञापि समभूदित्याह । विष्णोरिति ।

---

छाया ।

1 निगूढार्थं खल्वेतच्छेकस्य वचनं प्रतिभाति कीदृशमुत्तरं निरूपयत्वार्यः ।

2 कथं कथानायकनामधेयानुबन्धमनोहरं खलु नाटकम् । प्रतापोपपदाङ्कितं तस्य राज्ञः कथं नामधेयं जातमिति पृच्छ्यते ।

१ णिगूढं खु P. २ छेआणं R.; com. ३ पडिहाइ T₂'; पडिभाइ M. ४ संबोधणउत्तरं P. ५ °मणुहरं P. ६ णाडअम् M. ७ °पपदं T', R., T. ८ कहं तस्स रण्णो णाम जाअं M. ९ पुंछीअदि T'.; पुछीअदि P. १० °विशेषणं t.

नटी—¹लोआणं कण्णजुअलस्स भाअहेएण एदं णामजुअलं सुणीअदि। चिरस्स णट्टविज्जाणुवट्टणं फलिअं जेण लोअमंगलं काकइणरिंदचरिअं अभिणिज्जइ।

एतन्नाट्यप्रसङ्गेन प्रकृतकार्यालिंगनादवलगितम्।

सूत्र०—अहो प्रज्ञासंवादोऽयमायुष्मत्याः यदियं कवीनां प्रश्नोत्तरमालिका। यथा किल

> किं लोकश्रवसोर्भाग्यं मंगलश्रवणं मुहुः।
> किं मंगलं प्रतापाङ्करुद्रस्य चरिताद्भुतम्॥ १३॥

एतत्प्रश्नोत्तरमालारूपमुद्धात्यकम्।

नटी—²अज्जपरिवट्टणेण सव्वं संघटिअदि।

सूत्र०—आर्ये

> त्वया दारैरुदारश्रीर्नाट्यसंपदियं मम।
> प्रबन्धलक्ष्मीरीत्येव विदर्भभणितिस्पृशा॥ १४॥

---

लोकानां कर्णयुगलस्य भागधेयेनैतन्नामयुगलं श्रूयते। अथावलगितस्य द्वितीयं भेदमुदाहरति। चिरस्सेति। प्रकृतकार्यं नाटकप्रयोगरूपम्।

अहो इति। प्रतापोऽङ्कश्चिह्नं यस्य रुद्रस्य तथोक्तस्य द्वितीय उद्धात्यकभेदोऽयमित्याह। एतदिति।

मिथः स्तोत्रमात्रमपि प्रपञ्चलक्षणं मत्वाह। आर्येत्यादिना। आर्यपरिवर्तनेन सर्वं संघट्यते। त्वयेति। दारैः कलत्रेण 'भार्या जायाथ पुंभूम्नि दाराः' इत्यमरः। विदर्भकविप्रिया भणितिर्विदर्भभणितिः तत्स्पृशा रीत्या वैदर्भ्या।

---

छाया।

1 लोकानां कर्णयुगलस्य भागधेयेन एतन्नामयुगलं श्रूयते। चिरस्य नाट्यविद्यानुवर्तनं फलितं येन लोकमङ्गलं काकतिनरेन्द्रचरितमभिनीयते।

2 आर्यपरिवर्तनेन सर्वं संघट्यते।

१ भाअहेआदो P.; भाअधेएण M. २ अभिणिदज्जइ P.; अहिणिज्जइ T. ३ R. omits एतन्नाट्य—गितम्. ४ °लम्बनाद° P. ५ °लगितं द्वितीयम् T., T². ६ लोके श्रवसोर्भाग्यं M., R. ७ प्रतापार्करुद्रस्य M. ८ चरितं शुभम् M. ९ °मालकारूप° M., १० परिअत्तेण M.; पवत्तणेण P. ११ संघडीअदि P. १२ P. omits आर्ये. १३ दाराः पुंसि च भूम्न्येव T. १४ T² has प्रबन्धलक्ष्मीरिव after °भणितिः.

एष मिथःस्तोत्ररूपः प्रपञ्चः ।

नटी—एआरिसगुणमहग्घपआवरुद्दचारिअं अहिकरिअंतो तस्स कइणो संपुण्णो सरस्सईपसादो ।

सूत्र०—आर्ये एवमेव नन्वेषा कविभारत्योर्वाक्केलिः । यथा किल

मातर्भारति वत्स किं तव कृपां याचेऽद्य किं प्रस्तुतं
जिह्वा काकतिवीररुद्रनृपतेः स्तोत्राय सन्नह्यति ।
ज्ञातं ते विहरन्तु वाग्लहरयः संध्यानटद्धूर्जटि-
त्वङ्गन्मौलितरङ्गिणीकलकलारम्भप्रियंभावुकाः ॥ १५ ॥

---

एतादृशगुणमहार्घप्रतापरुद्रचरितमधिकुर्वतस्तस्य कवेः संपूर्णः सरस्वतीप्रसादः ।

कविभारत्योरुक्तिप्रत्युक्त्योश्चिरावृत्तिरूपां वाक्केलिमाह । मातरिति । अत्र मातृशब्देन कवेर्भारत्यां भक्तिविशेषो वत्सशब्देन तस्यास्तस्मिन् वात्सल्यातिशयश्च सूच्यते । कविराह । तवेति । भारती प्रयोजनं पृच्छति । अद्येति । कविस्तदाह । जिह्वेति । भारतीस्मरणमभिनीयैवाह । ज्ञातं ते इति । प्रार्थनानिमित्तमिति शेषः । संध्यानटद्धूर्जटित्वंगन्मौलितरङ्गिणीकलकलारम्भस्य संध्याताण्डवप्रवृत्तखण्डपरशुदोधूयमानजटाजूटविजृम्भमाणजाह्नवीकल्लोलकोलाहलस्य प्रियाभवन्तीति प्रियंभावुकाः । तत्कल्पा इत्यर्थः । 'कर्तरि भुवः' इति खुकञ्प्रत्यये मुमागमः । वाग्लहरयो वाग्विस्तर्यः । विहरन्तु प्रवर्तन्ताम् । यदि ज्ञातमित्येकं वाक्यं तदा 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति नियमाद् वाक्यान्तरवर्तिपदस्य निमित्तत्वायोगात् पदात् परस्य युष्मदो विधीयमानः 'तेमयावेकवचनस्य' इति तवादेशो न स्यात् ।

---

छाया ।

एतादृशगुणमहार्घप्रतापरुद्रचरितमधिकुर्वतस्तस्य कवेः संपूर्णः सरस्वतीप्रसादः ।

१ एष कविमिथः° R. २ °महग्घे P., R. ३ °चरिअ P., R. ४ अहिरत्तस्स P., R; अभिरत्तस्स M. ५ °धूर्जटेरिङ्ग° P. ६ वात्सल्य t. ७ वाग्विस्तराः P.

एषान्योन्यसंलापरूपा वाक्केलिः ।

नटी—[1]अम्हाणं एआरिसणरिंदचरिआणुऊलो णट्टाडंबरो होइ[2] ण वेत्ति सेज्झसेण वेवइ मे हिअअम् ।

सूत्र०—( किंचित्[4] सासूयम् ) आः किमुच्यते । निरवद्या ननु म-न्नाट्यविद्यासामग्री[5] । कीदृशी पुनस्तव गीतयोग्यतया[6] भविष्यति[7] ।

नटी—[2]संगीअसारस्स महण्णवो[8] उव्वेलिज्जइ[9] । अवहाणजाणवत्तं[10] ओरोहदु[11] अज्जो ।

एतदन्योन्यवाक्याधिक्यादधिबलम् ।

सूत्र०—चिरमवहित एवास्मि[12] । नन्वियमुपक्रम्यते ध्रुवा ।

[13]नटीकर्तृक ध्रुवागानप्रतिज्ञावचनं संभ्रमोदितमिति गण्डम्[14] ।

---

अम्हाणमिति ।[15]

सूत्रधारः स्वसामर्थ्यमाविष्कुर्वन्नाह । किंचिदित्यादि । आः कोपे । ननुरव-धारणे । योग्यतया सामर्थ्येन कर्त्र्या ।

नटी स्वसामर्थ्याधिक्यमाविष्करोति । संगीतेति । संगीतसारस्य महार्णव उद्वेल्यते प्रवर्ध्यते । अवधानयानपात्रमारोहत्वार्यः । अवहितो भवेत्यर्थः । अत एवाधिबलमिदमित्याह । एतदिति ।

[16]चिरमित्यादि गण्डान्तं स्पष्टम् ।

सूत्रधारवाक्यं विडम्बयति सस्मितमिति । कथमार्यो ध्रुवां गायति ।

---

छाया ।

1 अस्माकमेतादृशनरेन्द्रचरितानुकूलो नृत्याडम्बरो भवति न वेति साध्वसेन वेपते मे हृदयम् ।

2 संगीतसारस्य महार्णव उद्वेल्यते । अवधानयानपात्रमारोहत्वार्यः ।

१ ईरिसणरेंद T., T'. २ होई P. ३ ससझसं P.; संदेहेण M. ४ P. omits किंचित्. ५ मे ननु नाट्य° M ; ननु मम नाट्य° R.; P. drops विद्या. ६ गीतियोग्यतया P. ७ भविष्यते R.; M. ८ महण्णओ P. ९ उव्वेलइ T., M. १० अहुआजाणवत्तं P. ११ आरोहेदु P. १२ एवाहमस्मि R. १३ नटकृत° P. १४ क्रिया R. १५ t. has after it अस्माकमीदृशनरेन्द्रचरितानुकूलो नाट्याडम्बरो भवति न वेति साध्वसेन वेपते हृदयम् । १६ चिरतरामित्यादि t.

नटी—( सस्मितम् ) [1]कहं अज्जो धुंअं गाअइ ।

सूत्र०—अयि कथमर्धोक्त एव त्वरा[2] नाट्यविद्येति शेषं न जिघ्रति ।

एतदुक्तस्यान्यथायोजनरूपमवस्यन्दितम्[3] ।

आर्ये नूनं ध्रुवागानोत्सुकं तव चेतस्तदारभ्यतां गीतिः[4] ।

नटी—( तथा करोति )

[2]लच्छी सरस्सई[5] अ धवलिअभुवणंतरा विराअंती[6] ।

विलसंतकुवलअसिरी[7] राअस्स पसाहणं कुणइ[8] ॥

---

ध्रुवा नाट्यविद्येति मे विवक्षितम् । तदर्धोक्तमेव[9] त्वमन्यथा मन्यस इत्याह । अयीति । त्वरा कर्त्री । ध्रुवागानोत्सुकमिति । अन्यथा तन्मयि नारोपयेरिति भावः ।

नटी राज्यलक्ष्मीं शरत्कालसरसीं च प्रस्तुत्य प्रवृत्तां ध्रुवां गायति । लच्छीति[10] । इमा इयं लक्ष्मीः । शौक्ल्यनिमित्त[11]त्वनिबन्धनेन यशसा धवलितानि भुवनान्तराणि लोकान्तराणि यस्याः सा तथोक्ता । विलसत्कुवलयश्रीः उल्लसद्भूमण्डलशोभा च राज्ञो नृपस्य प्रसाधनं करोति । अन्यत्र इयं सरसी धवलितं कालुष्यापगमेन निर्मलीकृतं भुवनान्तरमुदकमध्यं यस्याः सा तथोक्ता । विलसत्कुवलयश्रीरुल्लसन्नीलोत्पलसंपत्तिश्च । राज्ञश्चन्द्रस्य प्रसाधनं करोति । रूपकेषु तावन्मार्गाभिनयेन प्रावेशिकीप्रभृतयः पञ्च ध्रुवाः प्रयोक्तव्याः । तदुक्तम् ।

'ध्रुवाः पञ्च प्रयोक्तव्या रसाभिनयसिद्धये'

इति । तत्रेयमन्तरा नाम ध्रुवा । तल्लक्षणं तु भावप्रकाशे ।

'सर्वासामन्तरा वस्तुरसादिवशकल्पिता ।

अन्तरा सा ध्रुवा ज्ञेया नाट्याभिनयरञ्जिनी ॥'

इति ।

---

छाया ।

1 कथमार्या ध्रुवां गायति ।

2 लक्ष्मीः सरस्वती च धवलितभुवनान्तरा विराजन्ती ।

विलसत्कुवलयश्री राज्ञः प्रसाधनं कुरुते ॥

१ धुवं T., T'. २ त्वरता M. ३ °मवस्कन्दितम् M. ४ संगीतिः R. ५ सरसी च इअ M. ६ विरायन्ती M. ७ विलसिअ° M. ८ कुणए M. ९ तदर्धोक्त एव ६. १० इच्छीति ६. ११ सौकर्य for शौक्ल्य ६.

सूत्र०—( आकर्ण्य सरसावेशम् )

गाढालिङ्गनसंमर्दप्रत्यक्षरगलत्सुधाम् ।
भुवां करोमि सर्वाङ्गे श्रोत्रैकामृतवर्षिणीम् ॥ १७ ॥

एष रसवशादसंगतार्थव्याहाररूपोऽसत्प्रलापः ।

नटी—( सोपहासम् ) 'सुउमारा क्खु एसा अज्जस्स णिद्दआलिंगण-वेल्लणं ण सहइ ।

एष हास्यलोभकरो व्याहारः ।

सूत्र०—( सव्रीडम् )

रसास्वादेन तरला ये माद्यन्ति विपश्चितः ।
त एव भावुका लोके भवन्ति हृदयालवः ॥

एतद्दोषस्य गुणत्वारोपान्मृदवम् ।

नटी—'अज्जो अणंतरकरणिज्जं णिरूवेदु ।

---

विशेषान्तराणि तत्रैव द्रष्टव्यानि । विस्तरभयादत्र न लिख्यन्ते ।

रसप्रयुक्तं प्रलापमुदाहरति । गाढेति । पूर्वं श्रोत्रयोरेकं मुख्यममृतं वर्षति ताच्छील्येन तां तथोक्ताम् । संप्रति गाढालिङ्गनसंमर्देन प्रत्यक्षरं द्राक्षासदृक्षादशेषादपि वर्णात् गलत्सुधां सतीं भुवां सर्वाङ्गे करोमि ।

सूत्रिणोऽसत्प्रलापमुद्घाटयितुमाह । सोपहासमिति । सुकुमारा खल्वेषार्यस्य कर्तुर्निर्दयालिङ्गनस्य वेल्लनं क्षेपणं प्रेरणं प्रयोगमिति यावत् । न सहते । क्षिप प्रेरणे इत्यस्य धातोः 'क्षिपेर्वेल्लः' इत्यादिना वेल्लादेशः ।

दोषं गुणीकरोति । रसेति । तरला रसलोला ये विपश्चितो विदग्धा रसास्वादेन माद्यन्ति परवशा भवन्ति त एव लोके भावुकाश्चर्वणनिपुणाः सन्तो हृदयालवः सहृदया भवन्ति । 'हृदयादालुरन्यतरस्याम्' इत्यालुच्प्रत्ययः ।

---

छाया ।

1 सुकुमारा खल्वेषार्यस्य निर्दयालिङ्गनवेल्लनं न सहते ।

2 आर्य अनन्तरकरणीयं निरूपयतु ।

१ 'व्यवहार' M. २ 'पीडिअं P.; 'पेल्लणं M. ३ व्यवहारः M. ४ णिरुपेदु P. ५ दिह t. ६ वेल्लणं t. ७ omitted in t[1]. ८ अत t.

सूत्र०—नन्वयमिदानीं सभापतिर्देवः स्वयंभूरुपश्लोक्यते।

> सर्वाङ्गविलसत्सर्वमङ्गलालंकृताकृतेः।
> रुद्रस्य महिमा भाति विश्वानुग्रहकारिणः॥ १९॥

(नेपथ्ये)। भोः सत्यं सत्यम्। सर्वाङ्गविलसत्सर्वमङ्गलालंकृतिरेवायं रुद्र इति।

सूत्र०—(सहर्षम्) कथमुपक्रान्तमेवास्मद्वाक्यानुगुण्येन प्रस्तुतस्यानुगुणं कुशलैः कुशीलवैः यतः काकतीश्वरगुणवर्णनयोग्यतया वचनमिवोपक्षिप्यते।

अयं कथोद्घातः। इदमेव गुणवर्णनात् प्रवर्त्तकम्।

(पुरोऽवलोक्य) कथमेतौ वैतालिकावित एवाभिवर्तेते।

---

येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता अत एव हृदयसंवादभाजः सहृदया इत्यभिनवगुप्ताचार्याः।

आर्योऽनन्तरकरणीयं निरूपयतु।

सूत्रधारोऽनन्तरकर्त्तव्यं प्रतिज्ञापूर्वकमाचरति। नन्वित्यादिना। सर्वाङ्गे विलसन्त्या सर्वमङ्गलया पार्वत्या अलंकृताकृतेरर्धाङ्गजानेरित्यर्थः। अत्र सर्वाङ्गव्यापिसमस्तमङ्गलालंकृतत्वलक्षणस्य वीररुद्रविषयार्थान्तरस्यानुगुणं सूत्रधारवाक्यमवलम्ब्य वचनमुपक्षिप्यते। नेपथ्य इति।

वक्ष्यमर्थमुद्घाटयति। कथमिति। कुशीलवा नटविशेषाः।

> 'भूमिकाभिरनेकाभिः कर्मवागङ्गचेष्टितैः।
> यथाप्रकृतिसंधानकुशलास्ते कुशीलवाः॥'

इति लक्षणात्। अत एवायं कथोद्घातभेद इत्याह। अयमिति।

एतच्छन्दोपक्षेपेण प्रयोगातिशयमुदाहरति। कथमेताविति।

वैतालिकलक्षणं तु भावप्रकाशे

---

१ M. omits देवः. २ सर्वाङ्गीणसर्वमङ्गला° R., M., $M_2$, $M_4$. ३ वीररुद्र M. ४ आगम्य सहर्षम् $M_4$. ५ अतः R. ६ काकतीयनरेश्वरगुण° R.; काकतीयगुण° M. ७ °वर्णने योग्य° R.; °वर्णनायोग्यितयोर्वैतालिकयोर्वचनमिवोपक्षिप्यते P. ८ R. drops from इदमेव—प्रवर्त्तकम्. ९ प्रवृत्तकम् P.; प्रवर्तकं च M. १० तन्मय $t_1$. ११ सहृदय $t_1$. १२ यत्र $t_1$.

एषोऽयमित्युपक्षेपात् प्रयोगातिशयः प्रस्तावनाङ्गम् ।

तदेहि । आवामप्यनन्तरकरणीयाय सज्जीभवावः (इति निष्क्रान्तौ )

इति समग्राङ्गा प्रस्तावना ।

( ततः प्रविशतः कांपिल्यकल्लूतकौ वैतालिकौ ) ।

प्रथमः—( सहर्षम् )

योऽयं जातस्त्रिलोकीप्रथितसुचरिते काकतीयान्ववाये
यस्मै श्रेयांस्यजस्रं वितरति भगवान् देवदेवः स्वयंभूः ।
यस्याज्ञा सर्वपृथ्वीपतिमुकुटमणिश्रेणिकेलीवयस्या
सोऽयं भूपालमौलिर्जयति गुणमहान् रुद्रदेवो नरेन्द्रः ॥ २० ॥

स्वयंभूदेवश्रेयोवितरणरूपबीजन्यासादुपक्षेपोऽङ्गम् ।

---

'तत्तत्प्रहरकयोग्यै रागैस्तत्कालवाचिभिः श्लोकैः ।
सरभसमेव वितालं गायन् वैतालिको भवति ॥'

इति । इति प्रस्तावना ।

कथादौ विष्कम्भं कुर्यादिति मतमवलम्ब्य प्रस्तावना । वृत्तस्य वर्तिष्यमाणस्य च वीररुद्रचरितस्य निदर्शकं मध्यपात्रद्वयप्रयोजितं शुद्धविष्कम्भमुदाहरति ततः प्रविशत इत्यादिना । इतः स्वप्नोपदेशपर्यन्तो वृत्तकथाभागः । तत्रोपक्षेपमुदाहरति । योऽयमिति । मणिमुकुटश्रेण्याः केलीवयस्या क्रीडासखी । सर्वैरपि भूपालैरस्याज्ञा शिरसा धार्यत इति भावः । योऽयमित्यत्रेदंशब्दः प्रसिद्धिमात्रपरो न तु यदच्छापेक्षितार्थबोधकः । अन्यथोत्तरवाक्ये तच्छब्दप्रयोगानुपपत्तेः । यतोऽनुवाद्यवाक्यगतयच्छब्दसंनिहितानां तदेतदिदमदसां प्रसिद्धिपरत्वम् । एवं विधेयवाक्यगततच्छब्दसन्निहितानामेतदिदमदसामपि । तथैव लोकेवेदयोः प्रयोगदर्शनादित्यादि बहुधा प्रपञ्चितमस्मन्महोपाध्यायमल्लिनाथसूरिणैकावलीतरले । अतः सोऽयमित्यत्राप्येवमेव द्रष्टव्यम् ।

---

१ एताभिरुप° M. २ आवामनन्तर° T; अनन्तर° M. ३ समग्रा P.; साङ्गम् M. ४ °विदित° $M_1$. ५ काकतीयान्वयेऽस्मिन् P. ६ °यस्याः R., M. ७ °न्यास उपक्षेपोऽङ्गी R. ८ रागैः omitted in $t_1$. ९ पात्रद्वययोजितं $t_1$. १० Omitted in $t_1$. ११ केवल° $t_1$

द्वितीयः—

यो रुद्रो रजताचले स्थितिमगादर्धाङ्गनारिः पुरा
सोऽयं संप्रति काकतीश्वरकुले सर्वाङ्गनारिः स्थितः।
स्थाने यद्विषमावलोकनकलामात्रेण भस्मीकृता-
न्यासन्वैरिपुराणि चित्रमधुना खड्गे विषं धार्यते ॥ २१ ॥

प्रथमः—सखे साधु समर्थितम्। अन्यथा कथमस्मै महाराजाय स्वप्ने कुलगुरुर्सदृशः स्वयंभूदेवस्तादृशीं श्रेयःसंग्रहकारिकामुपदिष्टवान्।

स्वयंभूदेवप्रसादरूपस्य बीजस्य बहूपकरणात् परिकरः।

---

पुरा किल काकतिकुलसंभूते गणपतिनाम्नि महाराजे दुहितृमात्रसंताने कदाचिद् दैवयोगेन कालपरिपाकमुपेयुषि तन्महिषी रुद्रदेवी नाम राज्ञी बहूनि वर्षाणि तद्राज्यमकण्टकं परिपाल्य परिणता सती दौहित्रे प्रतापरुद्रे राज्यधुरां निदधे। तामिमां कथां मनसि निधायाह। यो रुद्र इति। अर्धाङ्गं नारी यस्यासावर्धाङ्गनारिः। समासान्तविधेरनित्यत्वज्ञापनाद् 'नद्यृतश्च' इति कबभावपक्षे 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः। सर्वाङ्गेण नारी सर्वाङ्गनारी रुद्रदेवीरूपेण स्थित इत्यर्थः। तत्पुरुषत्वात् परवल्लिङ्गता। अथवात्रापि बहुव्रीहिः। प्रक्रियापि पूर्ववदेव। अवतारभेदादाकारभेदेऽपि तास्मन् रुद्रे पौरुषभेदाभावो नाश्चर्यावह इत्याह। स्थाने इति। यस्यतः विषमावलोकनं तृतीयदृष्टिः। अन्यत्र क्रोधदृष्टिः। तस्य कलामात्रेणांशमात्रेण वैरिपुराण्यसुरनगराणि 'स तिस्रः पुरो भित्त्वैभ्यो लोकेभ्योऽसुरान् प्राणुदत' इति श्रुतेरिति भावः। अन्यत्र शत्रुनगराणि। स्थाने युक्तमित्यर्थेऽव्ययम्। कैलासवासिनो रुद्रस्य कण्ठे विषं काकतिकुलवासिनस्तु स्त्रीरूपस्य खड्गे विषमिति महदेतदद्भुतमित्याह। चित्रमिति। 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः' इति भावः। अथ वर्तिष्यमाणकथाभागे परिकरमुदाहरति। सखे इत्यादिना। संग्रहकारिका संग्रहश्लोकः।

---

१ सखे किमुच्यते before the verse P., M. २ काकतीन्द्रभवने R. ३ °नारी $M_{J}$. ४ महिष° R. ५ धीयते P. ६ सदृशं noticed by M. ७ प्रियः P. ८ °मुपादिष्टवान् $M_{J}$. ९ बहुलीकरणात् P.; बहूकरणात् $M_{J}$. १० तस्याः $t_{J}$. ११ °श्लोकम् $t_{.}$, $t_{J}$.

द्वितीयः—( सविमर्शाश्चर्यम् ) कथमवगतं राजरहस्यं वयस्येन ।

प्रथमः—सखे कस्य वा न विदितम्[1] । यत् सर्वस्मिन्नपि[2] निजनगरे महोत्सवमादिशता रुद्रनरेश्वरेण[3] कुलदेवतायाः स्वप्नोपदिष्टाः प्रसादविशेषाः[4] प्रख्याप्यन्त एव ।

कुलदेवताप्रसादरूपस्य[5] बीजस्य प्रख्यापनेन परिनिष्पत्तेः[6] परिन्यासः ।

द्वितीयः—अहो निरन्तरप्रसादोन्मुखता देवस्य । यथा काकतीयप्रसवेषु श्रेयांस्युत्तरोत्तरमनुबध्यन्ते ।

बीजस्य श्रेयोनुबन्धरूपगुणख्यापनाद्[7] विलोभनम् ।

तदस्मिन्नेव महीयसि महे[8] महीमण्डलाखण्डलं[9] चलमर्त्तिगण्डमुपश्लोकयितुमावयोः[10] अयमेवावसरः । तदेहि राजकुलं प्रविशावः ।

प्रथमः—वयस्य सांप्रतं पुरोधःप्रमुखानमात्यवृद्धानपि[11] पुरस्कृत्य कल्याणस्वप्नकर्म[12] मीमांसमानो नृपतिः[13] अभ्यन्तरास्थानीमधितिष्ठति । तदावामपि तावदितो गत्वा यथावसरं प्रतीक्षावहे[14] ।

( इति निष्क्रान्तौ ) ।

अयं शुद्धविष्कम्भकः ।

---

रुद्रनरेश्वरेण रुद्रदेव्या स्त्रीव्यक्तावपि पुंस्त्वेन निर्देशे स्वयमेवोपपत्तिं वक्ष्यति । काकतीयप्रसवेषु काकतीयसन्तानेषु । अनुबध्यन्ते अविच्छेदेन संबध्यन्ते । महीयसि महे महोत्सवे । उद्दण्डपुरुषखण्डको वीरप्रकाण्डकश्चलमर्त्तिगण्ड इति विरुदशब्देनोच्यते ।

वयस्येति । मीमांसमानो विचारयन् ।

इति शुद्धविष्कम्भः ।

---

१ विदितमिदम् T. २ अपि is dropped in P. ३ °नरेन्द्रेण M. ४ प्रसादनविशेषाः R. ५ °रूपबीजस्य M. ६ निष्पत्तेः M., R. ७ °गुणाख्यानात् R., M. ८ महामहे P. ९ मर्त्यमण्डल° M. १० M. drops आवयोः. ११ R. drops अपि. १२ °कर्ममीमांसमानो M. १३ नरपति° M. १४ प्रतीक्षावः P.; प्रपतिष्यावः R.; प्रपतिष्यावहे M.; प्रतीक्ष्यावहे M₁. १५ P. drops प्रथम.

( [1]ततः प्रविशति य[2]थानिर्दिष्टवेषो राजा चामरग्राहिणी च ) ।

राजा—( सहर्षातिशयम् ) अहो प्रसादातिशयः परमेश्वरस्य ।

सोमार्काभिजनं त[3]मद्य जयति श्रीकाकतीयान्वयः
पातिव्रत्यमुपैति सांप्रतममीष्वस्मासु विश्वंभरा ।
अस्माभिर्निजदोःप्रसूतिमधुना धन्यामजो मन्यते
यत्कर्त्तव्यमुपादिशत् कुलपतिर्देवः स्वयंभूः स्वयम् ॥ २२ ॥

पुरोधसः—महाराज भवादृशा एव परमर्हन्ति तादृश[4]महिम्नो देवस्य [5]हितोपदेशान् । अथवा । किमत्राभिनवम् । पुत्राणां हि[6]तोपदेशाधिकारः पितुरेव । यदित्थं कथयन्ति त[7]द्विदः ।

सैवोमा चेति निर्दिष्टा सोमा चेति प्रथामगात् ।
तव माता शिवा साक्षाद्देवो गणपतिः पिता ॥ २३ ॥

मन्त्रिणः—एवमेवैतत् । अन्यथा कथमीश्वरप्रसादादृते निरङ्कुशं स्त्री-व्यक्तिविशेषस्य लोकाधिपत्यम् । एवं मानुषशंभुना गणपतिमहाराजे-नाभ्यन्तरस्यानुभ[8]वमहिम्नः सदृशमत्र पुत्र इति व्यवहारः कृतः । तदनु-गुणा च रुद्र इ[9]त्याख्या ।

---

अङ्कमारभते । तत इति । हर्षानुभावं प्रियभाषणमाह । सोमेति । अभि-जनो वंशः । तं प्रसिद्धम् । अमीष्वेवमनुग्रहपात्रेष्विति भावः । अजो ब्रह्मा । निजदोःप्रसूतिं क्षत्रजातिम् । राजन्यो मनुष्याणामिति तस्या बाहुजत्वश्रवणात् । कुत इत्यत आह । यदिति ।

रुद्राम्बायाः पितरौ सोमाम्बागणपतिदेवौ तयोरुमामहेश्वरात्मकत्वं लोकवि-दितं ततः स्वयंभूमहाराजयोः पितापुत्रभावोऽस्ति अतो हितोपदेशो युज्यत एव इत्याह । अथवेत्यादिना । सैवेति । सैव तव माता उमा चेति निर्दिष्टा सती लोकैरिति शेषः । सोमा चेति प्रथां प्रसिद्धिमगात् । परस्परसमुच्चयार्थौ चकारौ । पिता गणपतिस्तु साक्षात् प्रमथाधिपः शिवो देव इति तत्पित्रोः शिवयोश्च तादात्म्यमिति भावः ।

अथामुष्या भविष्यति निरङ्कुशः प्रभाव इति वि[10]भाव्य महाराजो दुहितरं पुत्र इति व्या[11]हृतवान् इत्याह । एवमिति । अभ्यन्तरस्यानुभवमहिम्नः दुहितृभावि-

---

१ $T^{P}$ has अंकारम्भः before ततः प्रविशति. २ यथानिर्दिष्टो R., M., $M_P$, $M_S$ ३ तदद्य P., M. ४ °महामहिम्नो R. ५ हितोपदेशाय M. ६ हितोपदेशः P. ७ तत्त्वविदः P., R. ८ °भावस्य P. ९ इति समाख्या R., M. १० संभाव्य t. ११ व्यवहृतवान् t.

पुरो०—( सकौतुकम् ) कीदृशी देवस्य स्वप्नोपदेशपरिपाटी।

राजा—( सादरम् ) इदं निवेद्यते।

कदाचित् कल्याणे रजनिसमये स्मेरवदनं
पुरः प्रादुर्भूतं सयुवतिवपुः साक्षनिटिलम्।
स्रवन्तीचन्द्राभ्यां महितमुकुटं प्रेक्ष्य किमपि
स्वयंभूर्देवोऽसावहमिति हठोत्थानमभजम्॥ २४॥

---

माहात्म्यगोचराया अन्तःकरणवृत्तेरित्यर्थः। अत एवाह तत्रभवान् कविकुलशिरोमणिः कालिदासः। 'सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः।' इति। अत्र दुहितरि। तदनुगुणा व्यवहारानुगुणा। रुद्र इति पुंस्त्वेन समाख्येत्यर्थः। प्राचामियं शैली यदयं व्यत्यासेन निर्देश इति। यथा स्त्रीव्यक्तौ शिखण्डीति पुंस्त्वेन व्यवहारः। यथा चैन्द्रं पुमांसमपि श्रुतिरेव सुब्रह्मण्येति स्त्रीत्वेन निर्दिशति। तथा च षड्विंशब्राह्मणम्। 'सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्योमिति स्त्रियमिव त्रिराह' इति। एवमुत्तरत्रापि द्रष्टव्यम्।

स्वप्नोपदेशक्रममादरवशात् प्रतिज्ञापूर्वकं निवेदयति। राजेति। कदाचिदिति। कल्याणे शुभग्रहयोगादिना मङ्गले रजनिसमये स्मेरवदनं प्रसादोन्मुखत्वात्। स युवतिवपुरर्धाङ्गजानिरित्यर्थः। साक्षनिटिलं भाललोचनसहितमित्यर्थः। उभयत्र बहुव्रीहिगर्भो बहुव्रीहिः। 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षजन्तः साक्षशब्दः। स्रवन्ती मन्दाकिनी। किमपि वक्तुमशक्यं वस्तु प्रेक्ष्य हठशब्देन चिरन्तनतटाकोदकाच्छादितहरितद्रव्यमुच्यते तदुत्सार्यमाणमपि स्वच्छन्दतो मुहुरुदकमाच्छादयतीति स्वच्छन्दव्यवहारो लक्ष्यत इत्युक्तमाचार्यैरुद्भिदधिकरणे। एवमत्र संभ्रमेणाप्याच्छादनसंभवात् संभ्रमो लक्ष्यत इति वदामः तेन हठोत्थानं संभ्रमोत्थानमिति वेदितव्यम्। स्वप्ने देवतादिदर्शने फलं दैवज्ञवल्लभे।

---

१ अवलोक्य सकौतुक R. २ इदानीं T'. ३ साक्षि° R. ४ °निटलं T'. ५ °वयामिति T'. ६ लिङ्गव्यत्यासेन t. ७ चेन्द्रं p. ८ रजनिसमये गोसर्गादौ t.; रजनिसमये गोसर्गादौ t. ९ °जानीत्यर्थः t. १० हठ इत्यनेन t., t..

अनन्तरं स्वप्न एव

वपुषा तं नमस्कृत्य स्तुवन् सूनृतया गिरा ।
स्वामिने काकतीयानां रत्नासनमुपाहरम् ॥ २५ ॥

चामरग्राहिणी—अहो देवस्स अणुसंधाणं जं [2]सिविणे वि कुलसामिणो समाराहणम् ।

पुरो०—किमुच्यते । आविष्टभक्तयः खलु स्वयंभूदेवे काकतीयनरदेवाः । ततस्ततः ।

---

'सुगन्धपुष्पाक्षतपूर्णकुम्भ-
शक्रध्वजच्छत्रमहीपतीनाम् ।
उद्यद्दिनेशेन्दुसुहृत्सुराणां
सितद्विजादर्शसुवासिनीनाम् ॥
सुवर्णधान्याब्जफलेभहीणां
भक्ष्यान्नरत्नाम्बरवाहनानाम् ।
संदर्शनं श्रेष्ठमुशन्ति सन्तः
स्वप्ने सुतानां च सुचेष्टितानाम् ॥'

इति । अभजमित्यनद्यतने लङ् । तेन चतुर्थयामादर्वाचीनः स्वप्न इति सूच्यते तत्फलस्य राज्यलक्ष्मीप्राप्तिरूपस्य विजययात्रया द्वित्रमासविलम्बसंभवात् । तदुक्तं बृहस्पतिमते स्वप्नाध्याये ।

'स्वप्नस्तु प्रथमे याने वत्सरेण विपच्यते ।
द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्तृतीयके ॥
अरुणोदयवेलायां दशाहेन फलं भवेत्
गोविसर्जनवेलायां सद्यः स्वप्नफलं भवेत् ॥'

इति । वपुषा नमस्कृत्य साष्टाङ्गं प्रणम्येत्यर्थः । 'सत्यं प्रियं च वचनं यत् तत् सूनृतमुच्यते ।' नूतेर्मूलविभुजादित्वात् कप्रत्ययः । 'अन्येषामपि' इति सोर्दीर्घः ।

आविष्टं भक्तिर्येषामिति लिङ्गसामान्ये नपुंसकपूर्वपदो बहुव्रीहिः । स्त्रीपूर्वप-

---

छाया ।

अहो देवस्यानुसंधानं यत् स्वप्नेऽपि कुलस्वामिनः समाराधनम् ।

१ काकतीयानां $M_1$. २ सण्णे वि P. ३ स्वयंभूनरदेवे $M_2$. ४ सादरेण k.

राजा—

शय्याशिरःस्थानकृतस्य पूर्ण-
कुम्भस्य तोयैः परिकल्प्य पाद्यम् ।
अतीन्दुसारैर्मणिभिः किलाह-
मपूजयं दैवतमस्मदीयम् ॥ २६ ॥

अथ च

विभुः स्वयंभूरवदच्छुचिस्मितां
गिरं स्ववामार्धवधूपलालिताम् ।

---

त्वे भक्तिशब्दस्य प्रियादिपाठाद् 'अप्रियादिषु' इति निषेधेन 'स्त्रियाः पुंवद्–' इत्यादिना पुंवद्भावप्रतिषेधप्रसङ्गात् । अत एवाह वृत्तिकारः । 'दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदत्वस्याविवक्षितत्वात् समाधेयम्' इति । भोजराजस्तु 'कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिपाठो न भावसाधनस्य । दृढभक्तिरित्यादौ तु भावसाधनत्वान्न कश्चिद्विरोधः' इत्याह । प्रपञ्चितं चैतत्तातपादैः संजीविन्यादौ तत्र तत्रेत्यस्माभिरुपरम्यते । तस्मादत्रापि स्त्रीपूर्वपदो वा बहुव्रीहिरनुसंधेयः ।

शय्याशिरःस्थाने पूर्णकुम्भस्थापनं मङ्गलार्थम् । तदुक्तं स्मृतिरत्नावल्याम् ।

'माङ्गल्यं पूर्णकुम्भं तु शिरःस्थाने निधाय च ।
वैदिकैर्गारुडैर्मन्त्रै रक्षां कृत्वा स्वपेन्निशि ॥'

इति । अतीन्दुसारैरत्युज्ज्वलैः । स्वप्ने देवतार्चने 'सुरपूजोत्सवसेवा नैवेद्यं नृत्तगीतवाद्यं च' इत्यादिना दैवज्ञवल्लभोक्तं महाफलं द्रष्टव्यम् । मणिपूजाफलं च पुष्पसारसुधानिधौ ।

'सुवर्णकुसुमैर्दिव्यैर्मणिविद्रुमविस्तृतैः ।
राजतै रत्नसंभूतैरथवा चित्रवस्त्रकैः ॥
येऽर्चयन्ति हरं भक्त्या नरास्ते स्युर्महेश्वराः ॥'

इति ।

पूजानन्तरं वृत्तमाह । विभुरिति । स्ववामार्धवधूपलालितां पार्वत्यानुमोदिताम् । अभयदानशालिना प्रसादसूचकेनेत्यर्थः ।

---

१ अपि च $M_4$. २ Omitted in t. ३ गिरं t. ४ तत्र omitted in t.

स्पृशन् करेणाभयदानशालिना
कृताञ्जलिं मां विनयानताननम् ॥ २७ ॥

येत् किल

उन्मस्तकैर्मध्यमलोकभाग्यै-
स्तपोविशेषैरनघैः पृथिव्याः ।
सम्यक्फलैः सच्चरितैः प्रजानां
प्रतापरुद्रोऽयमिहावतीर्णः ॥ २८ ॥

वत्स काकतीयकुलप्रदीप

स्वीकृते पुत्रभावेन दौहित्रे प्राङ् ममाज्ञया ।
अस्मिन्निधेहि धौरेये गुर्वीमुर्वीधुरामिति ॥ २९ ॥

पुरो०—( सप्रमोदम् ) महाराज काकतीयकुलयोगक्षेमविधानदक्षेण दाक्षायणीपतिना साक्षादेवमादिष्टम् । तवाप्ययमेव मनोरथः । प्रियंकरश्चायं महोत्सवः प्रजानाम् । तदारोहतु प्रागतिसृष्टयौवराज्यस्य प्रतापरुद्रस्य भुजशिखरं सागरमेखला ।

---

उन्मस्तकैरुल्लङ्घितशिरस्कैरतिप्रभूतैरित्यर्थः । मध्यमलोकस्य भाग्यैरदृष्टपरिपाकैस्तपोविशेषैः कृच्छ्रचान्द्रायणादिभिः । सच्चरितैः स्वस्ववर्णाश्रमोचितव्यापारैः । अत्र भाग्यादिनिमित्तभेदात् विच्छित्तिविशेषं वक्तुं मध्यमलोक एव समष्टिव्यष्टिभ्यामाश्रितः । प्रजापृथिवीव्यतिरिक्तमध्यलोकासंभवादिति द्रष्टव्यम् । एवं चास्मिन् राज्यं शासति सस्याकरादिसंपत्तिः प्रजासमृद्धिश्च प्रभवतीति फलितम् ।

वत्सेति रुद्राम्बायाः पुंस्त्वेन संबोधनम् । प्राग् जन्मकाले । धुरं वहतीति धौरेयो धुरन्धरः । 'धुरो यड्ढकौ' इति ढक् । 'ऋक्पू—' इत्यादिना समासान्तोऽप्रत्ययस्ततष्टाप् ।

सप्रमोदमिति । अस्मिन्नर्थे विप्रतिपत्तेरभावादिति भावः । तदुक्तं बृहस्पतिमते ।

---

१ तत् किल $M_2$. २ पृथिव्याम् M. ३ °धुरामिमाम् M. ४ °दक्षिणेन P. ५ सर्वप्रकृतीनाम् B.; महोत्सवश्चायं स्वप्रकृतीनाम् M. ६ मध्यम° ६.

इयं प्रयोजननिर्धारणरूपा युक्तिः ।

ततस्ततः ।

राजा—तद्वचनमाकर्णयन्ती निर्भरहर्षविकस्वरलोचना मेदिन्यपि[1] देवस्य पार्श्वे दृष्टा ।

चामर०—महाराअस्स हिअअमणुवट्टमाणाए वसुंधराए उइदो[2] क्खु हरिसाविब्भावो[3] ।

एषा स्वयंभूदेवस्य वचनाकर्णनेन मेदिन्याः सुखागमेन[4] प्राप्तिः ।

राजा—काकतीयकुलश्रेयसां[5] देव एव प्रमाणमिति तस्याज्ञा मया शिरसि धृता[6] । देवोऽपि सप्रसादातिशयमवलोक्यान्तर्हितोऽभूत् ।

इदं मेदिनीप्राप्तिहेतोर्बीजस्य[7] स्वयंभूदेवस्योपदेशाङ्गीकरणात् समाधानम्[8] ।

मन्त्रिणः—विश्वप्रियंकरः स्वप्नप्रत्ययः । किं तु काकतीयनरेन्द्रवृद्धो[9]चितमाचारमनुवर्त्तमानस्य देवस्य नगरनिवासवैमुख्यं तथा[10] कुलधुरं-

---

'देवताश्च द्विजा गावः पितरो लिङ्गिनस्तथा ।
यद्वदन्ति नरं स्वप्ने तत्तथैव विनिर्दिशेत् ॥

इति । प्रियं करोतीति प्रियंकरः । 'क्षेमप्रियमद्रेऽण् च' इति खश्प्रत्ययः । अतिसृष्टं दत्तम् ।

स्वप्नशेषमाह । तद्वचनमिति । महाराजस्य हृदयमनुवर्त्तमानाया वसुंधराया उचितः खलु हर्षाविर्भावः ।

स्वप्ननिवेदनं निगमयति । काकतीयेति ।

विश्वेति[11] । प्रियंकरादिशब्दा अनुपदमेवोक्ताः । धुरंधरशब्दस्तु नायकप्रकरणे । कुलामात्यमुख्येनैव पार्वतीवल्लभेनैवमुपदिष्टम् ।

---

छाया ।

महाराजस्य हृदयमनुवर्त्तमानाया वसुन्धराया उचितः खलु हर्षाविर्भावः ।

१ मेदन्यपि P. २ उचिओ P. ३ ˚विब्भाओ P. ४ सुखागमनेन R.; सुखागमनप्राप्तिः T²; सुखागमात् प्राप्तः M₄. ५ ˚श्रेयसि P. ६ शिरसि मया R. ७ ˚हेतुबीजस्य M. ८ प्रधानम् M. ९ ˚नरेश्वर˚ M. १० ˚वैमुख्यं च तथा˚ M ; P. drops तथा. ११ I and I₁ drop विश्वेति.

धरस्य [1]वीररुद्रस्य विश्वरक्षा[2]क्षमबाहुपरिघे राज्यधुराविश्रान्तिरिति विषादहर्षयोः सीमानं स्पृश[3]त्यस्माकं मनः।

एतत्सुखदुःखहे[4]तुभूतं विधानम्।

चामर॰—अच्चरिअं अच्चरिअं कुलामच्चमुहे[5]णेव्व पव्वईवल्लहेण एव्वमुवदिट्ठम्।

इयं बीजविषयाश्चर्यरूपा परिभावना।

राजा—( [6]सहर्षातिशयम् ) ( अमात्यान् प्रति )।

अयं काकतीयकुलश्रेयःकल्पलताप्ररोहः स्वयंभूदेवानुग्रहः सर्वेषामपि श्रवणमहोत्सवः क्रि[7]यताम्।

एष बीजप्रकाशनादुद्भेदः।

मन्त्रिणः—यदाज्ञापयति [8]परमेश्वरः।

राजा—किमिदानीं कर्त्तव्यम्।

पुरो॰—[9]महाराज किमन्यत्। सज्जीक्रियतां [10-11]प्रतापरुद्रदेवस्य राज्याभिषेकसंभारः।

एष बीजानुगुणप्रोत्साहनरूपो भेदः।

मन्त्रिणः—दिग्विजययात्रावशीकृतानां [12]सर्वपार्थिवानां वर्गेणानीतैः

---

अयं काकतीयेत्यादि। स्पष्टम्।

षड्विधानि मौलादिरूपाणि बलानि। ‘मौलं [13]भूतं सुहृच्छ्रेणी द्विषदाटविकं बलम्’ इत्यमरकोशाभिधानात्। अत्र विष्कम्भादौ वैतालिकवाक्योपक्षिप्तस्याङ्ग-

---

छाया।

आश्चर्यमाश्चर्यम्। कुलामात्यमुखेनैव पार्वतीवल्लभेनैवमुपदिष्टम्।

१ प्रतापरुद्रस्य M. २ क्षमे P. ३ °त्यस्माकीनं M. ४ °हेतुर्विधानम् P.; °हेतुभूतनिधानम् M. ५ मुखेणेव्व. ६ सहर्षातिशयः M. ७ क्रियतामिति P. ८ काकतीयपरमेश्वरः R.; काकतीयकुलेश्वरः M. ९ P. and R. omit महाराज. १० Omitted in M. ११ प्रतापरुद्रस्य R., M. १२ राज्ञां for सर्वपार्थिवानां M. १३ मौलभृतं t., t.

सकलतीर्थसलिलैः प्रकाशितं स्वयंभूदेवप्रसादं महाभिषेकमनुभवतु राजपुत्रः।

पुरो०—उचितमनुमन्त्रितं मन्त्रिभिः।

राजा—तर्हि जैत्रयात्रासाधनानि सज्जीक्रियन्तां षड्विधानि बलानि। अहमपि सज्जो भवामि।

एष आरम्भः। इदं बीजानुगुणारम्भरूपं करणम्। एवमारम्भबीजसंबन्धरूपः साङ्गो मुखसंधिः।

( नेपथ्ये ) वैतालिकौ—सुखाय माध्यन्दिनी संध्या भवतु देवस्य। यदिदानीं

लोकालोकगिरीन्द्रकन्दरतमःसंदोहदर्पापहं
त्वत्तेजःपटलं कियन्ति भुवनान्याक्रम्य संक्रीडते।
इत्यालोकनकौतुकीव शिथिलस्वीयाधिकारश्रमो
भास्वानेष समग्रदीप्तिरधुना व्योमाग्रमारोहति ॥ ३० ॥

अपि च।

उद्गायन्ति शरन्निशाकरकरस्तोमत्विषस्त्वद्गुणान्
क्रीडन्त्यो मलयाद्रिचन्दनलताकुञ्जे भुजङ्गाङ्गनाः।

---

वशादनुवर्तमानस्य बीजस्य नायकव्यापारस्य स्वरूपात् किंचिदुच्छूनत्वलक्षणारम्भसंबन्धान्मुखसंधिरित्याह। एवमिति।

मध्याह्नवर्णनमारभते। सुखायेति। लोके यत् किंचन विप्रकृष्टं वस्तु दिदृक्षवो वृक्षाग्रमद्रिशृङ्गं वारोहन्ति तत्समाधिमावर्तनविकर्तनस्याह। लोकालोकेति। संक्रीडते। 'क्रीडोऽनुसंपरिभ्यश्च' इत्यात्मनेपदम्। स्वीयाधिकारस्तमोपहतत्वलक्षणस्तन्निमित्तः श्रमः शिथिलो यस्य स तथोक्तः। एतच्च राजतेजस एव तद्भारोद्वहनादिति वेदितव्यम्। अत एवालोकनकौतुकीवेत्युत्प्रेक्ष्यते। तत्र निमित्तमुपादत्ते। अधुनेति।

उद्गायन्तीति। मलयाद्रिचन्दनलताकुञ्जे दिवा विहारदेशे इत्यर्थः। तदुक्तं भावप्रकाशे

---

१ प्रकाशित° M.; प्रसादितः R. २ सज्जीभवामि R. ३ इदं is omitted in M₁. ४ °गुणानुरूपं R. ५ साङ्गो is omitted in R. ६ T' omits यदिदानीम्. ७ °श्रमो M.

पीत्वा तत्तदुदीर्णवर्णगलितां प्रत्यग्रधारां सुधां
वाताहारतया प्रभूतमयशः प्रक्षालयन्त्यो निजम् ॥ ३१ ॥

इदानीं खलु

आघ्राय किरणान् भानोर्यजुरामोदमेदुरान् ।
यतन्ते कृतिनः सर्वे कर्त्तुं माध्याह्निकीः क्रियाः ॥ ३२ ॥

राजा—( आकर्ण्य सर्वान् प्रति ) साधयत यूयमभिमताचरणाय । अहमपि तावदभ्यन्तरं प्रविशामि ।

( यथोचितमुत्थाय परिक्रम्य निष्कान्ताः सर्वे ) ।

इति कल्याणस्वप्नो नाम प्रथमोऽङ्कः ।

---

'सरितं पुलिनं वेला कान्ताराराममूधराः ।
लतागृहाणि चित्राणि शय्या किसलयाञ्चिता ॥
दिवा विहारदेशाः स्युः ।' इति ।

क्रीडन्त्यः निजरमणैरिति शेषः । तत्तदिति वीप्सायां द्विर्भावः । उदीर्णवर्णादुच्चारिताक्षरात् । गलितां गलन्तीमित्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्च' इत्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वात् । अत एवाह वृत्तिकारः । 'सुप्तशयितेत्येवमादयो वर्त्तमाने द्रष्टव्याः' इति । इदमेव कवेर्विवक्षितम् । यदन्यत्र प्रत्यक्षरगलत्सुधामित्यवोचत् । अत एव प्रत्यग्रधारामतिरसामित्यर्थः ।

आघ्रायेति । यजुरेवामोदः परिमलविशेषः तेन मेदुरांस्तन्मयानित्यर्थः । 'यजुर्वेदे तिष्ठति मध्येऽह्नः' इति श्रुतेः । 'भजभासमिदो घुरच्' । एतेन भानुकिरणानां पुष्पसमाधिसिद्धे ज्ञात्वेत्यस्मिन्नर्थे आघ्राय इति पदं बोद्धव्यम् । मध्याह्ने कर्त्तव्या माध्याह्निकी । 'कालाट्ठञ्' इति शैषिकठञ्प्रत्ययः ।

इति नाटकप्रकरणे प्रथमोऽङ्कः ।

---

१ यदिदानीं खलु $M_{1}$. २ M. omits it ३ माध्यन्दिनीं क्रियाम् P., $M_{3}$. माध्याह्निकीं क्रियाम् M. ४ प्रविशामीति P., $M_{1}$. ५ सर्वे यथोचितमुत्थाय परिक्रम्य निष्कान्ताः R., M. ६ इति is dropped in P., T'. ७ °सिद्धेः $t$, $t_{1}$. ८ $t$, and $t_{1}$ drop इति नाटकप्रकरणे.

( नेपथ्ये ) इदो इदो अज्जो ।

( ततः प्रविशति वृद्धकञ्चुकी )

कञ्चुकी—( सहर्षम् ) चिराय यौवनमतिशयानया चरितार्थया जरयानया [1]संचरे । यया दीर्घायुषा प्रतापरुद्रम[2]हाभिषेकमहोत्सवमनुभवितास्मि ।

एष मध्याह्नवर्णनया विच्छिन्नस्य प्रकृतार्थस्य पुनरवमर्शाद्विन्दुः ।

अपि च

पदे पदे स्खलन्तं मां वाचा ग[3]त्याथ चेष्टया ।
अवलोक्य हसन्नास्ते स्वामी रुद्रनरेश्वरः ॥ १ ॥

( स[4]विमर्शाश्चर्यम् )

काकतीयन[5]रेन्द्रस्य राज्यश्रीमूलवेश्मनः ।
युवराजगृहानद्य गवाक्षैः स्वैरमीक्षते ॥ २ ॥

एष रा[6]जलक्ष्म्याः प्रतापरुद्रगताभिलाषाद्विलासः ।

( पुरोऽवलोक्य )

कथमयं राजपुत्रपरिचारको दारकः ससंभ्रमं मा[7]मभिवर्त्तते ।

---

चूलिकामुदाहरति । नेपथ्य इत्यादिना । ई[8]त इत आर्यः । ततः प्रविशतीति । नेपथ्यमेव न रङ्गमन्यथा चूलिकालक्षणभङ्गप्रसङ्गात् । यौवनमतिशयानयेति । अत्रैव पुरुषार्थलाभादिति भावः । जरया संचर इति । 'समस्तृतीयायुक्तात्' इत्यात्मनेपदम् । पुरुषार्थमाह । ययेति । [9]अनुभवितास्मि । अनद्यतने लुट् । बिन्दुं योजयति । एष इति । इतोऽपि जरायाः श्लाघ्यत्वमेवेत्याह । पदे पद इति ।

आर्य प्रणमामि । कथं कथमप्यनुमतम् ।

---

छाया ।

इत इत आर्यः ।

१ संचरे M. २ 'महाभिषेकोत्सव' M. ३ गत्या च R. ४ सविमर्शम् M. ५ 'कुलेन्द्रस्य M. ६ लक्ष्म्या P. ७ माम् is omitted in **M.** and T'. ८ There is one इतः in $t_{\prime}$. ९ अनुभावितास्मि $t_{\prime}$.

( प्रविश्य ) दारकः—[1]अज्ज पणमामि ।

कञ्चुकी—भद्र कल्याणास्पदं भूयाः । किमनुमतं राजपुत्रस्य दिग्विजयप्रस्थानं रुद्रनरेश्वरेण ।

दारकः—[2]कहं कहं वि अणुमदम् ।

कञ्चुकी—स्वनामानुगुणमिदं राजपुत्रस्य यत् सज्जीकृतसाधनं महाराजं सपादोपग्रहणं निवार्य स्वयमेव जैत्रयात्रायामुत्तिष्ठते ।

दारकः—[3]अज्ज अणणुहूदजुझ्झपरिस्समो जुवराओ । दुक्करो खु दिअंतजओ कहं भविस्सदि ।

कञ्चुकी—भद्र निरङ्कुशाः स्वयंभूदेवस्य प्रवृत्तयः । विष्णोरवतारः खल्वयं वीररुद्रोऽप्यचिन्तितमहिमा ।

एष दृष्टनष्टबीजानुसरणरूपः परिसर्पः ।

अत्र स्वप्नवृत्तान्तख्यापनाल्लक्ष्यस्य दिग्विजययात्रोद्यमेनालक्ष्यस्य बीजस्योद्भेद इति प्रतिमुखसंधिरयम् ।

---

सपादोपग्रहमिति । सव्यदक्षिणपाणिभ्यां सव्यदक्षिणपादोपस्पर्शरूपो गुरुनमस्कारः पादोपग्रहः । तदुक्तं मनुना ।

'व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥'

इति । उत्तिष्ठते उद्युङ्क्ते । 'उदोऽनूर्ध्वकर्मणि' इत्यात्मनेपदम् ।

आर्य अनतुभूतयुद्धपरिश्रमो युवराजः । दुष्करः खलु दिगन्तजयः कथं भविष्यति ।

भद्रेति । अत्र पूर्वाङ्के स्वप्नदृष्टस्य मध्याह्नवर्णनया नष्टस्य च बीजस्य स्वयंभूदेवप्रसादरूपस्य भद्र निरङ्कुशा इत्यनेनानुसर्पणात् परिसर्प इत्यर्थः । अत एवायं प्रतिमुखसंधिरित्याह । अत्रेति । उद्भेदः प्रकाशनम् । भद्रेत्यादिवाक्येनेति भावः ।

---

छाया ।

1 आर्य प्रणमामि ।

2 कथं कथमपि अनुमतम् ।

3 आर्य अननुभूतयुद्धपरिश्रमो युवराजः । दुष्करः खलु दिगन्तजयः कथं भविष्यति ।

१ संपदोपग्रहणं M, २ 'मुपातिष्ठते P. ३ अणणुभूद' M. ४ भविस्सइ T' ५ 'देवप्रवृत्तयः T'. ६ प्रसन्नयः M., T'. ७ खल्वेष M. ८ 'प्यचिन्त्य' T', M₁. ९ 'ज्ञापना' M. १० बीजस्योत्पादनाद्भेद P., बीजस्य व्यक्ति M₃.

दारकः—[1]एव्वं [2]एदम् । [2]अमाणुसो खु सो [3]पहावो ।

कञ्चुकी—कुत्रेदानीं राजपुत्रः ।

दारकः—[4]काअईअकुल[5]दुग्गादेवीसमाराहणेण विअअ[6]पत्थाणमंगलं काऊण तत्थ [7]हणुमदअलपेरंतबहि[8]रुज्जाणे [9]णिवेसिअखंधावारो अमच्च-[10]परिखुदो [11]जुवराओ चिट्ठइ तो [12]अणुजाणीहि मम [13]तत्थ [14]पत्थाणम् ।

कञ्चुकी । भद्र साधय । अहमपि राजकुलं प्रविशामि ।

( इति यथोचितं परिक्रम्य निष्क्रान्तौ )

[15]इयं चूलिका ।

[16]प्रवेशकः ।

( ततः प्रविशति यथानिर्दिष्टः [17]प्रतापरुद्रो मन्त्रिणः परिजनश्च ) ।

प्रता०—

किं राज्येन शमोन्मुखं रचयता तातं [18]कुलालम्बनं
किं चास्मिन् समुदाहरन्ति महतो दोषान् बहून् सूरयः ।

---

एवमेतत् । अमानुषः खलु स प्रभावः । काकतिकुलदुर्गादेवीसमाराधनेन विजयप्रस्थानमङ्गलं कृत्वा तत्र हनूमदचलपर्यन्तबहिरुद्याने विनिवेशितस्कन्धावारोऽमात्यपरिवृतो युवराजस्तिष्ठति । तदनुजानीहि मम तत्र प्रस्थानम् । एवमेतदित्यादि स्पष्टम् । इयं चूलिका ।

किमिति । तातं शमोन्मुखं विरक्तं रचयता राज्येन मय्यर्पितेन [19]सतेति शेषः । किं न मे किंचित् [20]सौख्यमस्तीति भावः । न केवलमस्मिन् राज्ये पितृवियोगादिष्टहानिरनेकमहादोषसंभवादनर्थप्राप्तिश्चेत्याह । किं चेति । अत एवोक्तं महाभारते शान्तिपर्वणि भीमं प्रति युधिष्ठिरेण ।

---

छाया ।

1 एवमेतत् । अमानुषः खलु स प्रभावः ।

2 काकतीयकुलदुर्गादेवीसमाराधनेन विजयप्रस्थानमङ्गलं कृत्वा तत्र हनुमदचलपर्यन्तबहिरुद्याने निवेशितस्कन्धावारः अमात्यपरिवृतो युवराजस्तिष्ठति तदनुजानीहि मम तत्र प्रस्थानम् ।

१ एवं णेदं P. २ अमाणसो M. ३ पहाओ P. ४ काकइकुल° M. ५ °दुग्गादेइ° P. °दुग्गादेवीए M. ६ °पट्ठाण° P. ७ °हणुमन्तालय° M.; हणुमन्ताअल° P. ८ °रुज्जाणे P. ९ णीवेसिअ M. १० परिवुअ P. ११ जुवराअ P. १२ ताणुजाणीहि P. १३ तत्थ M., T'. १४ पत्थाणम् M., T. १५ P. drops इयं चूलिका. १६ R., and M. drop प्रवेशकः. १७ राजा M. १८ कुलालम्बिनं M. १९ t. drops सता. २० साम्यमिति t.

धर्माध्वा च खिलीकृतोऽयमधुना कः संचरेदस्खलं-
स्तन्नेष्टं किल यौवराज्यमपि मे बाल्योत्सवे क्रीडतः ॥ ३ ॥

तद्वयं महाराजभुजपरिघमसृणितेषु दिगन्तेषु विजययात्राविनोदेन विहरामहे।

---

'असंतोषोऽप्रमोदश्च मदो रागोऽप्रशान्तता।
बलमोजोऽभिमानश्च समुद्वेगश्च सर्वतः ॥
एभिः पाप्मभिराविष्टं राज्यं त्वमभिकाङ्क्षसि ॥'

इति। नन्वेवं सति

'यदह्ना कुरुते कर्म प्रजा धर्मेण पालयन्।
दशवर्षसहस्राणि तस्य भुङ्क्ते महत् फलम् ॥'

इत्यादिना राज्ये महाफलप्रतिपादकमन्वादिवचनविरोधः स्यादित्याशङ्क्य तस्य गुणान्तरविषयत्वान्न विरोध इत्याशयेनाह। धर्माध्वेति। अयं यज्ञदानतपोज्ञानलक्षणः खिलीकृतः संप्रति पादमात्रावशिष्टत्वादिति भावः। अत एवोक्तं सूर्यसिद्धान्ते।

'कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया।'

इति। आदिपुराणेऽप्युक्तम्।

'न विद्वत्ता न शुद्धोऽर्थो न शुद्धिर्मनसः कलौ'

इति। अधुना कलिकाले अस्खलन्नप्रमत्तः कः संचरेत्। न कोऽपि संचरितुं शक्नुयादित्यर्थः। 'शकि लिङ् च' इति लिङ्। तृतीयाभावान्नात्मनेपदम्। तद्यौवराज्यमपि नेष्टं किल किमुत दुष्टं राज्यमिति भावः। मसृणितेषु निष्कण्टकीकृतेषु अत एव स्वस्य न प्रयास इति विनयोक्तिः।

---

१ मसृणेषु $M_{f}$. २ °यात्राविनोदे M. ३ पतेः $t_{r}$. ४ आदित्यपुराणे $t_{\prime\prime}$.

एतद्राज्येऽनिच्छाभिधानाद्विधूतम्[1][2] ।

मन्त्रिणः—राजपुत्र सर्वपथीनया[3] काकतीयान्वयभाग्यसंपदा[4] त्वां धुरंधुरं लब्ध्वा नरेन्द्रश्चिरमासक्तां धुरं शिथिलयितुमध्यवस्यति[5] । आचारश्चायं काकतीश्वराणां[6] यद्धौरेये पुत्रे शमोन्मुखत्वम् । कुलस्वामिना स्वयंभुवाप्येवमेवानुशिष्टम्[7] । अनतिक्रमणीया राजपुत्रेण गुर्वोर्गरीयसी खल्वाज्ञा[8] । कलिकालदोषशिथिलधर्मप्रतिष्ठां[9][10] निर्वोढुं वोढुं च महतीं महीधुरमवतीर्णस्य काकतीयविष्णोस्तवासाम्प्रतं[11][12] प्रत्याख्यातुम् ।

प्रताप०—स्वयंभूस्तात इत्येतावीश्वरौ दिव्यमानुषौ ।
तयोरन्यतरो राजा युवराजोऽस्मि सर्वथा[13] ॥ ४ ॥

मन्त्रिणः—राजपुत्र साधारणोऽयं[14] विनयः काकतीश्वराणां स्वयंभुवि[15] महाराजे ।

---

राजपुत्रेति[16] । सर्वान् पथो व्याप्नुवन्त्या सर्वपथीनया । 'तत्सर्वादेः' इति खप्रत्ययः । आचारश्चेति ।

'धर्म्ये वर्त्मनि संस्थाप्य प्रजा वर्त्तेत धर्मवित् ।
पुत्रसंक्रामितश्रीश्च वने वन्येन वर्त्तयेत् ।'

इति व्यासस्मरणात् । गुर्वोर्दिव्यमानुषयोर्गरीयसी गुरुतरा पूज्यतमेति यावत् । 'प्रियस्थिर—' इत्यादिना गुरोर्गरादेशः । किं च धर्मसंस्थापनार्थमेवावतीर्णस्य विष्णुमूर्तेस्तवेदं दुष्परिहरमित्याह । कलिकालेति । प्रत्याख्यातुं परिहर्त्तुम् ।

तर्हि तावत् स्वयंभूदेव एव महाराजोऽस्तु पूर्ववदेवाहं युवराज एवेति वचनभङ्ग्या राज्यमङ्गीकरोति । स्वयंभूरिति । अरत्युपशमाद् विषयद्वेषनिवृत्तेः । काकतिकुलवीरस्तत्रभवान् स्वयंभूदेवो धुरं धारयतु राजपुत्रः पुना राज्यश्रियमङ्क

---

१ °द्राज्येऽनभिलाषा° R., M. २ °द्विधूननम् $M_1$, $M_2$. ३ सार्वपथीनायाः M. ४ °संपदः M. ५ °यितुं व्यवस्यति $M_1$; °यितुं व्यवस्यते T' ६ काकतिनृपाणां $M_1$; काकतीयानां $M_2$. ७ °मेवोपदिष्टं R. ८ P. drops खलु. ९ °शिथिला R. १० °नर्म° $M_2$. ११ काकतीयस्य P. १२ °स्तव न सांप्रतं P.; °स्तव साम्प्रतं M १३ सर्वदा R., M. १४ नियमः M. १५ स्वयंभुवि च M. १६ t. and $t_1$ drop राजपुत्रेति.

एष प्रकृतविपयारत्युपशमाच्छमः ।

परिजनः[1]—[1]काकइअकुलत्थविरो[3] तत्तभवन्तो[4] सअंभूदेवो धुरं धारेदु[5] राअउत्तो उण रज्जसिरिं अंके आरोवेदु ।

प्रताप॰[6]—( समन्दस्मितं[7] परिजनमवलोकयति )

एतत् परिहासवचोरूपं[8] नर्म ।

परि॰—[2]चिरेण चरिअत्था[9] मेइणी संवुत्ता । गोत्तगिरि[10]सिहरणिट्ठुरवि-अडसिलावसइबब्बरंगीए[11] खोणीए होदु[12] वासो बाहुम्मि पआवरुद्दस्य । जह हरिचंदस्स भुए जह रहुणाहस्स बाहुफलअम्मि काअइलच्छीपे[13]-इणो बाहुम्मि तह[14] मही रमेदु[15] ।

प्रता॰—( सबाहुस्फुरणमधोमुखस्तिष्ठति )

एषा परिजनवचोत्था[16] प्रीतिर्नर्मद्युतिः ।

मन्त्रिणः—राजपुत्रकाकतीयपुरुषोत्तमस्य तव[17] पाणिग्रहणाय स्पृहयन्ती राजलक्ष्मीर्विलम्बनं[18] न सहते ।

आरोपयतु । चिरेण चरितार्था मेदिनी संवृत्ता । गोत्रगिरिशिखरनिष्ठुरविकटशिलावसतिबर्बराङ्ग्याः क्षोण्या भवतु वासो बाहौ प्रतापरुद्रस्य । यथा हरिश्चन्द्रस्य भुजे यथा रघुनाथस्य बाहुफलके काकतिलक्ष्मीपतेर्बाहौ तथा मही रमताम् । एष समः ।

सबाहुस्फुरणमिति । पुंसो दक्षिणबाहुस्फुरणं शुभनिमित्तमिति वक्ष्यते । नर्मवचनमनुरागबीजोद्घाटनम् ।

छाया ।

1 काकतीयकुलस्थविरस्तत्रभवान् स्वयंभूदेवो धुरं धारयतु राजपुत्रः पुना राज्यश्रियमङ्के आरोपयतु ।

2 चिरेण चरितार्था मेदिनी संवृत्ता । गोत्रगिरिशिखरनिष्ठुरविकटशिलावसतिबर्बराङ्ग्याः क्षोण्या भवतु वासो बाहौ प्रतापरुद्रस्य । यथा हरिश्चन्द्रस्य भुजे यथा रघुनाथस्य बाहुफलके काकतिलक्ष्मीपतेर्बाहौ तथा मही रमताम् ।

१ परिचारकाः M. २ काअइकुल° R., M. ३ °कुलट्ठेरो तत्त° P. ४ °हवन्तो M. ५धारेदु T.; धरइ M. ६ रुद्रः M. ७ मन्दस्मितं M. ८ R. drops रूपम्. ९ चरिइथ्था R.; चरिअथ्था M. १० M. omits गिरि. ११ विअल R.; विदल M. ( विपुल)· १२ होउ R. १३ °वइणो M. १४ तह M. १५ रमइ M. ( रमते )· १६ °नर्मवचनोत्था M. १७ P. drops तव. १८ °विलम्बं M., R. न विलम्बं M.

परि०—[1]विज्जावहूणं अहिअं दट्ठूण पंइम्मि पणअविस्संभं ।
खोणी लच्छी अ कहं विलंबिअं सहउ जुवराए ।

मन्त्रिणः—इत्थमेव ।

स्वतेजसा परिष्कृत्य प्रधानागारमुत्सुका ।
प्रतीक्षतेऽद्य राज्यश्रीर्युवराजसमागमम् ॥ ७ ॥

एतस्मिन् मन्त्रिणां परिजनस्य च वाक्यैर्बीजानुरागप्रकाशनात् प्रगमः ।

परि०—[2]कहं अंतरिओ खु एसो महूसओ दिसाविजअजत्ताए ।

एतद्दिगन्तयात्रया प्रकृतकार्यविलम्बनान्निरोधः ।

मन्त्रिणः—( सावज्ञम् ) कथं चिरयन्त्यन्यचमूपतयः । अथवा किं तैः । वयमपि न केवलं मन्त्रशस्त्राः किं तु बहुशः समरादाराधितस्वामिन एव ।

---

विज्जेति । विद्यावध्वा अधिकं दृष्ट्वा पत्यौ प्रणयविस्रम्भम् । क्षोणी लक्ष्मीश्च कथं विलम्बितं सहतां युवराजे ॥ वधूनां भर्तृवाहुल्यमवलोक्य सपत्न्यः समुत्सुका भवन्तीति भावः ।

राज्यश्रियो वासकसज्जिकासमाधिमाह । स्वतेजसेति । गतार्थमेतत् ।

कहमिति । कथमन्तरितः खल्वेष महोत्सवो दिग्विजययात्रया । निरोधनलक्षणे छन्नेत्युक्तं तत् कारणमात्रोपलक्षणमिति द्रष्टव्यम् ।

सावज्ञमिति । समरमेवापदानमद्भुतकर्म तेनाराधितः स्वामिनः प्रसादिते-

---

छाया ।

1 विद्यावध्वा अधिकं दृष्ट्वा पत्यौ प्रणयविस्रम्भम् ।
क्षोणी लक्ष्मीश्च कथं विलम्बितं सहतां युवराजे ॥

2 कथमन्तरितः खल्वेष महोत्सवो दिग्विजययात्रया ॥

१ पइम्मि M. २ सहदु M. ३ जुअराए P. ४ °मुत्कया M. ५ Omitted in T'. ६ °बीजानुगुण° M. ७ °प्रकाशात् M₁. T'. ८ अंतरिअ P.; अंतरीओ M.; अंदरिओ T'. अंतरितो क्खु M₁. ९ महामहूसअ P.; महूसवो M. १० मन्त्रशास्त्राः R., M. ११ समरापदानाराधित° T'. १२ t. and t₁ omit सावज्ञमिति.

एतन्निष्ठुरवचनरूपं वज्रम् ।

( प्रविश्य ) दौवारिकः । [1]जेदु जेदु जुअराओ। एदे खु चमूपैइणो पडिहारभूमिभाअम्मि सज्जीकिअचउरंगबला वट्टन्ति ।

मन्त्रिणः—अचिरं भोः प्रवेशय ।

दौवा०—तथा ( इति निष्क्रम्य सेनाधिपतिभिः पुनः प्रविष्टः ) ।

सेना०—( यथोचितं प्रणम्य ) स्वामिन् काकतीयकुलतिलक सर्वतोमुखाटोपा वाहिन्यः शौर्योदन्वन्तं भवन्तमनुप्राप्ता एव तदनुग्रहयालुना कटाक्षेण निरीक्ष्यन्ताम् ।

एतदनुनयवचनरूपं पर्युपासनम् ।

मन्त्रिणः—राजपुत्र तर्हि समारुह्यतां प्रतिपक्षनिवारणो वारणः ।

---

त्तराः । वज्रलक्षणे प्रत्यक्षग्रहणं केवलस्याप्युपलक्षणमित्याशयेनाह । एतन्निष्ठुरेति ।

द्वारे नियुक्तो दौवारिको वेत्रधरः । 'तत्र नियुक्तः' इति ठक् । 'द्वारादीनां च' इत्यैजागमः ।

स्वामिन्निति । जयतु जयतु युवराजः । एते खलु चमूपतयः प्रतिहारभूमिभागे सज्जीकृतचतुरङ्गबला वर्तन्ते । सर्वतोमुखाटोपाः सर्वतोदिक्संभ्रमा वाहिन्यः सेनाः । शौर्योदन्वन्तमिति । रूपकबलादुदकसंभ्रमवत्यो नद्यश्चेति लभ्यते । अनुग्रहयालुनानुग्रहीत्रा कटाक्षेण अनुग्रहदृष्ट्येत्यर्थः । ग्रह ग्रहणे इत्यस्माद्धातोरदन्ताच्चुरादिणिचि 'स्पृहिग्रहि—' इत्यादिनालुच्प्रत्ययः । अतो लोपस्य स्थानिवत्त्वान्न लघूपधगुणः ।

राजपुत्रेति । परिपन्थिप्रमाथिन्यः शत्रुघातिन्यः वरूथिन्यः सेनाः । प्रस्तूयतामिति प्रस्थानारम्भ एव नासीरैः सामन्तनगराण्याक्रम्यन्त इति सेनाबाहुल्यं सूच्यते ।

---

छाया ।

1 जयतु जयतु युवराजः । एते खलु चमूपतयः प्रतीहारभूमिभागे सज्जीकृतचतुरङ्गबला वर्तन्ते ।

१ पम्त्रिणः T. २ जुअराअ P. ३ °वइणो R., M. ४ °भाए M₄. ५ °पतिभिः सह M, ६ P. drops पुनः. ७ एतदनुवचनरूपं M₄. ८ M. drops राजपुत्र. ९ प्रतिपक्षवारणो M. १० प्रतिप्रस्थाना° L; प्रतिप्रस्थानमारम्भ L₂.

आलोकयन्तां निरन्तरपरिपन्थिप्रमाथिन्यो वरूथिन्यः । प्रस्तूयन्तां सेनापुरःसराक्रान्तसकलसामन्तनिजस्थानं प्रस्थानम् ।

प्रताप०—यथाभिरुचितममात्येभ्यः। (इति गन्धगजाभिरोहणं नाटयति)।

मन्त्रिणः—

करोदग्रेण महसा विष्वगाक्रमितुं दिशः ।
आरोहति गजं वीररुद्रो भास्वानिवोदयम् ॥ ८ ॥

एतत् प्रकृतानुगुण्येन विशेषसंबन्धवचनं पुष्पम् ।

सर्वे युवराजहस्तिनं पुरस्कृत्य ससंबाधं किंचित् परिक्रामन्ति ।

सेना०—( सोत्साहप्रणामम् ) स्वामिन्नितो दीयतां दृष्टिः ।

---

यथेति । गन्धोपलक्षितो गजो गन्धगजः । यद्यपि गजशास्त्रे त्रैवर्णिकजाति गजेषु गन्ध उक्तस्तथाप्यौचित्यादत्र क्षत्रियजातिरुच्यते । तदुक्तं

'भद्रश्रीहरितालगुग्गुलुशिलागन्धोऽतिशूरो रणे
नानाशस्त्रनिपातवेगसहनः स्तम्बेरमः क्षत्रियः ॥'

इति । अत्र शुभाशुभगन्धविभागस्तदभिव्यक्तिस्थानं च तत्रैवोक्तम् ।

'स्वेदे द्वारमले शुभाशुभकरं गन्धं सुधीर्लक्षयेत्
सेव्यो भूरुहलाजपाटलघृतप्रख्यः प्रशस्ताह्वयः ।
एतस्मादपरः शुभोऽयमुदितः सत्त्वेन रूपेण यो
युक्तः सोऽपि मतङ्गजः समुचितः कल्याण इत्युच्यते ॥'

इति ।

करेति । करेणोदग्रेणोद्धतेन महसा तेजसा भुजबलेनेत्यर्थः । अन्यत्र करैः किरणैः । उदयं पूर्वपर्वतम् । अत्र मन्त्रिणां वीररुद्रं प्रति रागप्रकाशविशिष्टवचनात् पुष्पं नामाङ्गमित्याह । एतदिति । प्रकृतानुगुण्येन बीजानुकूल्येनेत्यर्थः । विशेषबन्धो रागविशेषबन्ध इत्यर्थः ।

---

१ निरीक्ष्यन्तां M. २ परिपन्थिन्यो वरूथिन्यः M₁. ३ °पुरःसरसंक्रान्त° M. ४ M, omits प्रस्थानम्. ५ रुद्र M. ६ °गाक्रमितुन्दिशः M. ७ रुद्रदेवो M. ८ विषबहुवचनं R.; विशेषबन्धवचनं M. ९ प्रशस्तस्तथा t₁. १० °दपरो शुभो t.

धावत्पादातपादाहतिदलितमहीरन्ध्रनीरन्ध्रनिर्यद्-
धूलीजालाम्बुदान्तर्विलसदसिलताविद्युदुद्दामदीप्ताः ।
उद्यन्निस्साणरांणस्तनितपटपटद्दिक्तटाः प्रारभन्ते
प्रावृड्लक्ष्मीं ध्वजिन्यः करिकरटतटस्यन्दिदानाम्बुधाराः ॥९॥

अन्यतो निरूप्य)

बले चलति संभ्रमं प्रतिभये विजेतुं दिशः
पुरन्दरहरिज्जयव्यवसिताः सहायोद्धताः ।
चलन्ति चिरमत्सराः शिखरिणो यथा दन्तिनो
भरावनमदुन्नमद्भुजगराजफैकत्फणाः ॥ १० ॥

परि०—( विलोक्य साश्चर्यम् ) महंतो खु एसो तिलिंगसुभडाण-
मुच्छाहो ।

( संस्कृतमाश्रित्यै )

धावदिति । पदातीनां समूहः पादातम् । भिक्षादित्वादण्प्रत्ययः । निस्साणराणो निस्साणध्वनिः । राण इति । यद्यपि 'वशिरण्योरुपसंख्यानम्' इति कर्तृभावे घञ् बाधितः अत एवोक्तममरकोशे 'रणकणः' इति तथापि स्तोवादिवत् बाहुलको घञ् द्रष्टव्यः । पटशब्दादव्यक्तानुकरणात् 'नित्यवीप्सयोः' इति द्विर्भावे 'सर्वप्रातिपदिकेभ्यः—' इत्याचारे क्विप् कथंचित् कल्पनीयः । ततो लटः शत्रादेशः । पटदित्यस्यैवानुकरणत्वे पूर्वावयवस्य तकाराभावश्चिन्त्यः । करटतटं गण्डस्थलम् ।

सेनाङ्गेषु मतङ्गजसंरंभमाह । बल इति । चिरमत्सराः पक्षच्छेदात् प्रभृति प्ररूढवैराः अत एव पुरन्दरहरिज्जयव्यवसिताः प्राचीविजयोद्युक्ता इत्यर्थः । इयन्तं कालं तूष्णीं स्थित्वेदानीं वैरनिर्यातने हेतुमाह । सहायोद्धता इति । यथा कस्यचिद्वस्तुनो भाराक्रान्तः कश्चन भागो नमति भागान्तरं तु न नमति ।

छाया ।

1 महान् खल्वेष त्रिलिङ्गसुभटानामुत्साहः ।

१ °साण° P. २ सहायोद्धुराः P. ३ °भास्वत्फणाः M. ४ तेलंग° P. ५ °सुहडाणं T. ६ °मुस्साहो. ७ M. has वाचयति after संस्कृतमाश्रित्य. ८ अपाभावे t. ९ स्तावादित्वात् p. १० Dropped in t₁. ११ सामग्रीमाह t.

उद्यत्तोमरडामराः प्रतिपदप्रोत्क्षिप्तकौक्षेयकाः
स्वैरोद्गीर्णमुसुण्ढयः पटुतराकृष्टध्वनत्कार्मुकाः ।
भ्राम्यद्भीमगदाः समग्रविहरत्प्रासाः स्फुरत्पट्टसाः
खेलन्त्यन्ध्रचमूभटाः सवपुषो रौद्रप्रकारा इव ॥ ११ ॥

मन्त्रिणः—अहो तुरङ्गतरङ्गास्त्रिलिङ्गाधिपतेः ।

उत्क्षिप्योत्क्षिप्य पादौ रवितुरगशिरस्ताडनायैव पूर्वौ
पाश्चात्याभ्यां पदाभ्यामपि धरणिमवष्टभ्य संरम्भतुङ्गाः ।

---

तद्दन्तिभाराक्रान्तभूतलद्वारा भुजगराजस्य केषांचित् फणानामवनमनमितरेषामुन्नमनं द्रष्टव्यम् । फणनमत्र संकोचः । फक्क नीचैर्गताविस्यस्माद्धातोर्लटः शत्रादेशः । अत्र यथा शब्दमाहात्म्यायद्यप्युपमा प्रतीयते तथाप्युपमानभूतानां विशिष्टशिखरिणामुपमेयदन्तिरूपतयाध्यवसानादुत्प्रेक्षायां पर्यवस्यतीत्युपमोपक्रमोत्प्रेक्षेयम् ॥

महान् खल्वेष त्रिलिङ्गसुभटानामुत्साहः ।

पंक्तिसंपत्तिमाह । उद्यदिति । तोमरा दण्डविशेषास्तैर्डामरा भयंकराः कौक्षेयकाः खड्गाः । 'कुलकुक्षि—' इत्यादिना ढकञ्प्रत्ययः । स्वैरोद्गीर्णमुसुण्ढयः स्वेच्छोद्यतदारुमयायुधविशेषाः । कर्मणे प्रभवतीति कार्मुकं धनुस्तद्विशेषो वा । गदाः प्रसिद्धाः । प्रासाः कुन्तापरपर्यायाः क्षेपणीया आयुधविशेषाः । तदुक्तं वृत्तिकारेण । 'अकर्तरि च कारके संज्ञायामित्यत्र प्रास्यत इति प्रासः' इति । रौद्रप्रकारा रौद्रभेदाः । तोमरादीनामभिधानं वैजयन्त्याम् ।

'तोमरोऽस्त्री लोहहुलदण्डः कासूश्च सबला ।'

'हुलं द्विफलपत्राग्रम् ।' 'मुसुण्ढी स्याद् दारुमयी वृत्तायःकीलसंचिता ।' 'कार्मुकं तु चतुर्हस्तम् ।' 'पट्टसो लोहदण्डो यस्तीक्ष्णधारः क्षुरोपमः' इति ।

तुरङ्गसामग्रीमाह । उत्क्षिप्येति । पश्चिमपादाभ्यां भुवि स्थित्वा मुहुरग्रपादोत्क्षेपणमश्वानां पुरुषाख्यस्थानभेदः । तदुक्तम् ।

'मुहुः पश्चिमपादाभ्यां भुवि स्थित्वाग्रपादयोः ।
ऊर्ध्वं प्रेरणया स्थानमश्वानां पुरुषः स्मृतः ॥'

इति । अत्र पूर्वपादोत्क्षेपणस्य सूर्याश्वशिरस्ताडनफलकत्वमुत्प्रेक्ष्यते । उत्क्षिप्येति । 'नित्यवीप्सयोः' इति द्विर्भावः । पश्चाद्भवौ पाश्चात्यौ । 'दक्षिणाप-

---

१ स्वैरोद्गर्ण॰ M. २ स्तनत् M, P. ३ ॰मुशुंडयः P. ४ ॰पट्टिशाः P. ५ तुरङ्गमातङ्गा॰ M. ६ संरब्धतुङ्गाः T. ७ ॰भरा॰ t. ८ t. has गजस्य for भुजगराजस्य. ९ ॰मपरेषा॰ t, P. १० च द्रष्टव्यम् t. ११ ॰रूपतयाध्यवसानाद्॰ P. १२ ऋतिसंपत्ति॰ P. १३ ढञ् t. १४ ॰हुल॰ t. १५ मुसुण्डी t.

वालैर्व्याधूयमानैः प्रतिनृपतिहयोत्साहमुन्मार्जयन्तः
क्रामन्त्यश्वाः सहेलक्रमणपरिणमत्पञ्चधाराप्रपञ्चाः ॥ १२ ॥

मन्त्रिणः ( विलोक्य )—अहो विदलितपरबलमनोरथानां रथानां संभ्रमः । तथाहि

रथाः सरभसभ्रमद्विविडहेमनेमिक्षत—
क्ष्मातलसमुच्चलद्बहलधूलिजालाम्बुदैः ।
तिरोहितमसूयया सपदि भानवीयं रथं
विधाय मुखरीभवन्त्यनिभृताक्षधूर्निस्वनाः ॥ १३ ॥

---

भ्रातृपुरसस्त्यक' । संरब्धा संरम्भविषयीभूता सती नुद्यत्यसंबन्धे संबन्धरूपातिशयोक्तिः । तां धरणिमवष्टभ्यालम्ब्यावलम्ब्य तत्र स्थित्वेत्यर्थः । सहेलक्रमणेन विनोदगत्या परिणमन्तः प्रयत्नं विना प्रवर्तमाना इत्यर्थः । धारा नामास्कन्दितादयो गतिविशेषाः पञ्च । तदुक्तं वैजयन्त्याम् ।

'अश्वानां तु गतिर्धारा विभिन्ना सा च पञ्चधा ।

इति । 'आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्च धाराः इत्यमरश्च । एतासामेवाश्वशास्त्रे संज्ञान्तरेणोक्तानां प्रत्येकं त्रैविध्ये पञ्चदशविधत्वम् । तदुक्तम् ।

'गतिः पुला चतुष्का च तद्वन्मध्यजवा परा ।
पूर्णवेगा तथा चान्या पञ्च धाराः प्रकीर्त्तिताः ॥
एकैका त्रिविधा धारा हयशिक्षाविधौ मता ।
लघ्वी मध्या तथा दीर्घा ज्ञात्वैता योजयेत् क्रमात् ॥'

इति । तदेतन्मनसि निधायाह । पञ्चधाराप्रपञ्चा इति ॥

लोके कश्चिद्वीरभटः प्रतिभटमभिभूय गर्जति तत्समाधिमत्र भानुरथाभिभाविनां वीररुद्ररथानामाह । रथा इति । असूयया स्पर्धयेवेत्यर्थः । अक्षाणां

---

१ सहेलं R., M.; सलीलं M. २ 'परिनमत्' P. ३ M. omits अहो. ४ 'त्रिशित' M. ५ 'द्रुद्रुल' M. ६ 'जालाम्बुधैः R., M. ७ 'निस्तनः M. ८ 'गतिभेदाः t.

प्रताप०—( सर्वतोऽवलोक्य सप्रमोदम् ) कथं समग्रसाधनानि सैन्यानि ।

बृंहमाणगजाकीर्णा ह्रेषमाणहयाकुलाः ।
संक्रीडत्स्यन्दनाः क्ष्वेडाः सुभटाः सैन्यसंपदः ॥ १४ ॥

मन्त्रिणः—युवराजावलोकनादुद्वेलः सैन्यसागरो वर्त्तते ।

अभ्यापतन्तीरभितो महीभृद्वाहिनीर्बह्वः ।
काकतीयकुलाम्भोधिरेष स्वैरं ग्रसिष्यते ॥ १५ ॥

---

चक्राधारकाष्ठानां धुरोऽग्राणि अक्षधुरः । ‘ अक्षं रथाङ्ग आधारे ’ इति वैजयन्ती । अनक्ष इति निषेधात् ‘ ऋक्पुर—’ इत्यादिना न समासान्तः । निभृतो निश्चलो न भवतीत्यनिभृतो नित्यप्रवृत्त इत्यर्थः । तथाभूतोऽक्षधूर्निस्वनो येषां ते तथोक्ताः ।

बृंहमाणेति । बृंहमाणा बृंहणशीलाः । ताच्छील्ये चानश् प्रत्ययः । न तु शानच् । बृहि शब्द इत्यस्य धातोः परस्मैपदित्वात् । अत एव भट्टमल्लः ।

‘ हेषते ह्रेषतेऽश्वानां हस्तिनां बृंहतीति च ’

इति । संक्रीडत्स्यन्दनाः कूजद्रथाः । ‘ क्रीडोऽनुसंपरिभ्यश्च ’ इत्यत्र ‘ समोऽकूजने ’ इति नियमात् परस्मैपदम् । अत एवोक्तम् । ‘ उत्सर्जति संक्रीडत्येतौ शकटकूजने ’ इति । क्ष्वेडन्ते सिंहनादं कुर्वन्तीति क्ष्वेडाः । ञिक्ष्विदा स्नेहनमोचनयोरित्यस्माद्धातोः पचाद्यच् । पृषोदरादित्वाद्दकारस्य डकारः । कविकल्पद्रुमकारस्तु डान्त एवायं धातुरित्याह । धातूनामनेकार्थत्वादुक्तार्थलाभः । अत एव ‘ क्ष्वेडा तु सिंहनादः स्यात् ’ इत्यमरः । क्ष्वेडदिति काचित्कः शत्रन्तपाठोऽस्य धातोरनुदात्तत्वादुपेक्षणीयः ।

अभ्यापतन्तीरिति । महीभृद्वाहिनीः शत्रुभूपालसेनाः । अन्यत्र पर्वतप्रभवा नदीः । तदुक्तं मानसोल्लासे ।

---

१ रुद्र R. २ सर्वतो विलोक्य B. ३ हेषमाण R., M. ४ क्ष्वेडत्° P.; क्ष्वेलत्सुभटाः M. ५ °दुद्वेगः M. ६ °कुलाम्भोधि° P. ७ ग्रहिष्यते P. ८ P. omits the portion from अत एव to अमरः.

सेनापतयः—[1]यदादिशन्त्यमात्याः इति। (सप्रणामं) विजययात्राकुतूहलिन्यो ध्वजिन्यः सांप्रतं युवराजस्याज्ञां [2]प्रतिपालयन्ति।

[3]प्रताप॰—([4]सप्रसादममात्यानालोकयति)।

मन्त्रिणः—(सोत्साहम्) [5]प्रतिष्ठन्तां प्राचीं प्रति सैन्यानि।

सेना॰—[6]यथादिशन्त्यमात्याः। (इति प्रस्थाननाटितकेन समन्तादवलोक्य सहर्षातिशयम्)

> पवनेनानुकूलेन प्रसारितपटाञ्चलाः।
> उद्युञ्जन्त इवाक्रष्टुं ध्वजाः [7]सौत्रामणीं दिशम्॥ १६॥

([8]सर्वे [9]सुशकुनमभिनन्दन्ति)।

एष [10]प्रस्थानानुगुण[11]शकुनकथनादुपन्यासः।

---

> 'व्रजेदब्धिरिवो[12]क्षोभ्यो निगिरे[13]न्नरिवाहिनीः।
> शूराणां सिंहनादैश्च हेषारावैश्च वाजिनाम्।
> महारथमहाध्वानैर्मातङ्गघनगर्जितैः।'

इति।

सूत्राम्ण इन्द्रस्येमां सौत्रामणीं दिशं प्राचीं सुशकुनं शुभनिमित्तम्। 'शकुनस्तु शुभाशंसिनिमित्ते शकुनः खगः।' इति विश्वः। अनुकूलवायोः शुभनिमित्तत्वं च तत्रैव।

> 'दक्षिणाक्षिपरिस्पन्दात् दक्षिणस्य भुजस्य च।
> मनसश्च प्रसादेन स्वानुकूलानिलेन च॥
> एवं निमित्तैर्निश्चित्य विजयं भूपतिर्व्रजेत्॥' इति।

उपन्यासाख्यमङ्गं लक्ष्ये योजयति। एष इति। उपन्यासलक्षणेऽपि प्रकृतानुगुण्येनेत्येतदनुषज्यत इत्याशयेनाह। प्रस्थानानु[14]गुणेति। बीजोपयोगित्वात्

---

१ R. and M. drop यदादिशन्त्यमात्याः इति. २ परिपालयन्ति P.; पालयन्ति $M_{1}$. ३ रुद्रः M., T', $M_{1}$, R. ४ °प्रमोद° P. ५ प्रेक्ष्यन्तां P. ६ यदा° R., P. ७ सौत्रामणि M.; सौत्रामणी दिशः R. ८ सर्वा R. ९ शकुन° P. १० प्रस्थानाङ्ग° P. ११ °सुशकुन° M. °सुशकुनगुण° T'. १२ °वाक्षुभ्यो t., $t_{1}$. १३ निगिरत्यरिवाहिनीम् t., $t_{1}$. १४ °गुण इति p.

प्रताप०—( पुरोऽवलोक्य ) कथं कराभ्यामुत्क्षिप्तसाक्षतकनकपात्रः समागत एव विप्रवरः ।

विप्रः[1]—( सविनयमग्रतः[2] स्थित्वा प्राध्वं दक्षिणभुजमुद्यम्य ) विजयतां[3] विजयतां वीररुद्रः । राजपुत्र स्वयंभूदेवमहोत्सवाद्यनन्तरमहीसुरवराशीर्वादवासिताः काकतीयमहाराजेन प्रेषिताः खल्विमे मङ्गलाक्षताः ।

प्रताप०[6]—( सप्रणामादरं गृहीत्वा तान्[7] निजोत्तमाङ्गे गजमूर्धनि[8] च निधाय )

---

प्रस्थानस्य प्रकृतत्वम् । तदनुगुणस्य शकुनस्यानुरागहेतुभूतस्य कथनादुपन्यास इत्यर्थः ।

विप्रविशेषप्रवेशं[9] सूचयति कथमिति ।

सविनयमिति । प्राध्वमाशीर्वादानुकूल्येनोद्यम्य 'आनुकूल्यार्थकं प्राध्वम्' इत्यमरः । मकारान्तमव्ययं चैतत् । ननु यात्रायां कनकपात्रादिमङ्गलद्रव्यदर्शनं कार्यसिद्धिकरमस्तु । किं त्वेकस्मिन् ब्राह्मणे दृष्टे कार्यहानिरिति किंवदन्त्याः का गतिरिति चेन्नैष दोषः । तस्याः कृपणब्राह्मणविषयत्वात् । विशिष्टब्राह्मणदर्शने[10] महाफलस्मरणात् । इदमपि तत्रैवोक्तम् ।

' पूर्णकुम्भे तथादर्शे दध्नि मद्ये तथामिषे ।
मीने शङ्खे ध्वजे छत्रे चामरे चारुयोषिति ॥

चापे मृगे भरद्वाजे फलपुष्पाक्षतेषु च ।
वृषभे समदे नागे सितेवाहे[11] द्विजोत्तमे ॥

सुवर्णे दिव्यरत्ने च वीणायां पटहेऽपि च ।
बद्धे चैकपशौ दृष्टे यात्रा भवति सिद्धिदा ॥'

इति ।

---

१ वृद्धः M. २ प्रविश्य विप्रः R., T'. ३ °ग्रे P. ४ जयता $M_1$. ५ °महीसुराशीर्वाद° $M_1$. ६ M. has for this राजपुत्रः स्वयं सप्रणामा°. ७ तान्युत्तमाङ्गे $M_1$. ८ मूर्ध्नि M. ९ °विदूषक° for °विशेष° in t. १० शिष्ट° for विशिष्ट° t. ११ सिते वाहे $t_1$, $t_2$.

आमूलात् फलिता प्रसक्तिलतिका पत्युः स्वयंभूप्रभो-
राज्ञा क्षत्रियमौलिमण्डनमणेस्तातस्य सानुग्रहा।
विप्राशीर्वचनानि मन्त्रसुरभीण्याकाङ्क्षितान्यन्वहं
पौराणां च जयोत्तराणि तदमूरीषज्जयाः स्युर्दिशः॥ १७॥

एष ब्राह्मणक्षत्रियादिवर्णकीर्तनाद्वर्णसंहारः।

मन्त्रिणः—राजपुत्र स्वभावनिरर्गलस्य तव भुजार्गलयोरोजायितस्य कियती भूतलविजयविडम्बना।

परि०—[1]विअअलच्छीपाणिग्गहणसमअदिण्णा विअ मङ्गळक्खदा जुअराअस्स सीसे दीसंदि।

---

वसन्तराजीयेऽप्युक्तम्।

'धृतातपत्रः शुभशुक्लवासाः
पुष्पार्चितश्चन्दनचर्चिताङ्गः।
विप्रः शिखावान् कृतभोजनश्च
ददाति दृष्टः पथि सर्वसिद्धिम्॥'

इति। महोत्सवादीत्यादिशब्देन धेन्वादिदानं गृह्यते। तदुक्तं मानसोल्लासे।

'ततः कृत्वा महापूजामुद्दिश्य कुलदेवताम्।
धेनुं भूमिं हिरण्यं च विप्रेभ्यो विधिनार्पयेत्।
तदाशिषः समादाय नीराजितहयद्विपः॥'

इति।

आमूलादिति। संपूर्णः स्वयंभूप्रसाद इत्यर्थः। पौराणामाकाङ्क्षितानि मनोरथाः। नपुंसके भावे क्तः। जयोत्तराणि जयप्रधानानि। तत्तस्मादमूश्चतस्र एव दिशः ईषज्जयाः सुलभजया इत्यर्थः। 'ईषद्दुर्—' इत्यादिना खलप्रत्ययः। दिग्विजये देवताप्रसादादिकं बृहतीफलभञ्जने महोपलप्रयोगमनुकरोतीति भावः। अङ्गं योजयति। एष इति।

---

छाया।

1 विजयलक्ष्मीपाणिग्रहणसमयदत्ता इव मङ्गलाक्षता युवराजस्य शीर्षे दृश्यन्ते।

१ प्रसक्ति° R., M. २ क्षत्रियादिकीर्तनाद् P; क्षत्रियवर्णकीर्तनाद् M.; क्षत्रियादिवर्णसंकीर्तनाद् $M_{I}$. ३ राजपुत्रस्य P., R. ४ निसर्ग $M_{4}$. ५ इविअ M. ६ जुअराजस्स P. ७ दीसन्ति R., M. ८ धेनुभूमिं t., $t_{I}$. ९ इत्यादिना t., $t_{I}$. १० °मनुभवती° $t_{I}$.

विप्रः—राजपुत्र तत्तद्दिग्विजययात्रावार्त्ताहारिणः पुरुषा नातिचिरादेव प्रेषणीया इति महाराजस्याज्ञा ।

प्रताप॰—शिरसि कृतस्तातस्य नियोगः । ( अमात्यान् प्रति ) कतिचन यूयं काकतीश्वरसेवार्थं निवर्त्तध्वम् । कतिपये विजययात्रापराः प्रवर्त्तध्वम् ।

अमात्याः—( सप्रणामम् ) यदाज्ञापयति युवराजः ।

विप्रः—स्वस्ति विजयाय शिवाः पन्थानः सन्तु राजपुत्राय ।

प्रताप॰—( सप्रश्रयम् ) भगवन्ननुजानीहि । वयमितः प्रतिष्ठामहे । ( इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे ) ।

इति विजययात्राविलासो नाम द्वितीयोऽङ्कः ।

---

राजपुत्रस्येति । ओजःशब्दो वृत्तिविषये तद्वति वर्त्तते इति पदमञ्जरीकारः । अतस्तद्वतः सिंहशार्दूलादेरिवाचरितमोजायितं बलमित्यर्थः । 'कर्तुः क्यङ् सलोपश्चेति क्यङन्ताद् भावे क्तः । 'ओजसोऽप्सरसो नित्यम्' इति नित्यः सलोपः ।

स्वस्तीति । विजयलक्ष्मीपाणिग्रहणसमयदत्ता इव मङ्गलक्षता युवराजस्य शीर्षे दृश्यन्ते । विजयायेति क्रियाग्रहणाच्चतुर्थी । राजपुत्रायेति स्वस्तियोगे ।

सप्रश्रयमिति । प्रतिष्ठामह इति । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ।

इति नाटकप्रकरणे द्वितीयोऽङ्कः ।

---

१ प्रेषयितव्या R. २ वद्रः M.; राजा M₁. ३ काकतिनाथ° P. ४ कतिचन M₁. ५ इति is dropped in P. T' adds नाटकप्रकरणे after इति. ६ द्वितीयोऽङ्कः in and t₁.

(ततः प्रविशतो लेखहस्तौ[1] जाङ्घिकौ)।

एतत्पूर्वाङ्कान्तेन[2] पात्रेण विप्रेण निर्दिष्टयोः पात्रयोरुत्तराङ्के प्रवेशादङ्कास्यम्।

प्रथमः—(सानुबन्धाश्चर्यम्[3]) अहो प्रतापरुद्रस्य महिमानुभावः। यस्य विजयमात्रासंभ्रमेणैव व्याकुलीकृतानि द्वयानामपि[4] भूभृतां[5] कटकानि[6]।

द्वितीयः—वयस्य किमुच्यते

काकतीयप्रदीपोऽयमंशश्चातुर्भुजः स्वयम्।
यद्वज्रकवचायन्ते[7] प्रसादाश्च स्वयंभुवः॥ १॥

एष स्वयंभूदेव[8]प्रसादरूपस्य बीजस्यान्वेषणाद् गर्भसंधिः।

प्रथमः—(अध्वक्रममभिनीय पुरोऽवलोक्य[9]) प्राप्तेयमान्ध्र[10]नगरी। (किंचित्प्रवेशनाटितकेन समन्ततो[11] निरूप्य) अहो निरतिशयमौदार्यं रुद्रनरेश्वरस्य। यदेते वैतालिकाः सर्वे भोगावलीप्रमुखांश्चाटुप्रबन्धान् पठन्तः[12] स्वभावरमणीयाः[13] प्रतिरवेण पाठयन्तीव[14] ककुभः।

---

तत इति। जङ्घया चरत इति जाङ्घिकौ वार्ताहरौ। अङ्कास्यं योजयति। एतदिति। महिमानुभावो महिमातिशयः। द्वयानां पर्वतानां राज्ञां च। कटकानि पर्वतनितम्बप्रदेशा राजधान्यश्च। 'कटकं वलये सानौ राजधानीनितम्बयोः' इति विश्वः।

काकतीयेति। चातुर्भुजो वैष्णवः। वज्रकवचायन्ते वज्रकवचवदाचरन्ति। 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्प्रत्ययः। ङित्त्वादात्मनेपदम्। गर्भसंधिं योजयति। एष इति। बीजस्येति। प्रतिमुखसंधौ लक्ष्यालक्ष्यतया दृष्टनष्टस्येति शेषः। एतच्चान्वेषणादित्यनेन लक्ष्यते[15]।

वैतालिकभोगावलीप्रमुखा उक्तलक्षणाः। पाठयन्तीति प्रतिदिशं प्रतिध्वनिरुत्पद्यत इत्यर्थः।

---

१ मन्त्रहस्तौ R. २ पूर्वाङ्कान्ते P; पूर्वाङ्कान्तपात्रेण M. ३ सानुसंधानाश्चर्यम् T'. ४ द्वयेषामपि R. ५ महीभृताम् M. ६ कटकान्यपि M. ७ °कवचायन्ति P. ८ °देवस्य R., M. ९ °वलोक्य च R. १० °मान्ध्र° M. ११ नाटितकेनासमन्ततो R. १२ पठन्ति तैः R. १३ स्वभावतो P., T. १४ पाठयन्ति च R; पाठयन्ति M. १५ लक्ष्यते p.

द्वितीयः—( [1]सम्यङ्निर्वर्ण्य [2]सप्रत्यभिज्ञाश्चर्यम[3]पवार्य ) सखे [4]पश्य पश्य ।

सम्यङ्मागधवेषधारणतिरोभूता अपि क्ष्माभुजः
सूच्यन्ते प्रभुतारहस्यपिशुनैराविष्कृतैर्लक्षणैः ।
हस्ताग्रैर्ध्वजचक्रलाञ्छिततलैर्वक्षःस्थलैर्विस्तृतै-
राकारैरमनुष्यमात्रसुलभैर्[5]वृत्तैरनीचैरपि ॥ २ ॥

---

अपवार्येति । रहस्यकथनार्थमिति भावः । सम्यगिति । [6]मागधलक्षणमुक्तम् ।

'राज्ञः पुरजनस्यापि मङ्गलाचारशंसिनः ।
मान्यैर्मागधिकागीतैर्मागधा इत्युदीरिताः ॥' इति ।

प्रभुतैव रहस्यं गूढं वस्तु मागधवेषतिरोहितत्वात् तेषामिति भावः । ध्वजचक्रग्रहणं राज्यसूचकरेखो[7]पलक्षणार्थम् । तदुक्तं वराहसंहितायाम् ।

'चक्रासिपरशुतोरणशक्तिधनुःकुम्भसन्निभा रेखाः ।
कुर्वन्ति चमूनाथं मकरध्वजसन्निभा महीपालम् ॥'

इति । वक्षोविस्तारफलमपि तत्रैव ।

'उरो ललाटं वदनं च पुंसां
विस्तीर्णमेव त्रितयं प्रशस्तम् ।'

इति । वृत्तैर्जङ्घादाविति शेषः । 'वृत्तजङ्घो भवेद् भूपो वृत्तलिङ्गो भवेद्धनी ।' इति वचनात् । अनीचैरुन्नतैः वक्षःप्रभृतिषु दीर्घैर्बाहुप्रभृतिषु । तदपि तत्रैवोक्तम् ।

'वक्षोऽथ कक्षौ नखनासिकास्यं
कृकाटिका चेति षडुन्नतानि ॥
हनुलोचनबाहुनासिकं
स्तनयोरन्तरमत्र पञ्चमम् ।
अतिदीर्घमिदं तु पञ्चकं
न भवत्येव नृणामभूभृताम् ॥'

इति । अत एवामनुष्यमात्रसुलभैः भूपतिव्यतिरिक्तदुर्लभैरित्यर्थः ॥

---

१ सर्वे सम्यङ्° T'. २ सप्रतिज्ञाश्चर्यं R. ३ अपवार्य is omitted in P. ४ पश्य for पश्य पश्य T'. ५ स्नायुतः R. ६ मागध is omitted in t. and $t_1$. ७ °पलक्षणाद्यर्थम् P.

प्रथमः—नूनमेते [1]प्रतापरुद्रसमरपराङ्मुखा वक्षःस्थलवि[2]रचितवराहलक्ष्माणः प्राणत्राणार्थमनया रीत्या काकतीयमहाराजं [3]प्रसादयितुमध्यवस्यन्तीति [4]तर्कयामि।

एतत् प्रस्तुतोपयोगिमतिराजच्छद्माचरणादद्भूताहरणम् । जाङ्गिकेन पुने[5]स्तैर्लक्षणैर्नरेश्वराभ्यूहनादनुमानं च।

द्वितीयः—अहो विजययात्राश्रवणवि[6]शेषकुतूहलिता पौराणाम्। [7]यदा वामनुसरन्ति पुनः पुनः [8]प्रश्नमालाविधेयास्तत् सखे प्रकाश्यतां [9]प्रतापरुद्रस्य भुजयोर्विजयोदाहरणम्।

प्रथमः—( किंचिदुच्चैः ) भो भोः श्रूयतां [10]काकतीयकुलश्लाघाकामधेनुः [11]प्रियोदन्तः।

जैत्रा काकतिवीररुद्रविभुना सर्वा दिशो निर्जिताः
क्ष्मापालाः करदीकृताः कृतमिदं निर्वीरमुर्वीतलम्।
यस्योद्यद्भुजवैभवं सं[12]रम्भसारोहद्रिपत्[13]कामिनीमञ्जीरध्वनिपूर्णकन्दरमु[14]खैर्व्याकुर्वते पर्वताः ॥ २ ॥

---

सूचितमर्थं द्रढयति । नूनमिति । अस्या अपि रीतेर्दास्याबान्तरभेदत्वादिति भावः । यदाहुः—

'पद्यमङ्गुलिविच्छेदमुरोविन्यस्तमक्षरम् ।
तन्नामकरणं चेति दास्यमेतच्चतुष्टयम् ॥'

इति । शिष्टं स्पष्टम् । प्रियोदन्तः प्रियवार्त्ता । जैत्रेति । करदीकृताः बलिप्रदाः कृताः । अभूततद्भावे च्विप्रत्ययेनेयन्तं कालमजय्या अपि जिता इति लभ्यते । निर्वीरं प्रतिवीररहितम् । ये करं न प्रयच्छन्ति ते प्राणैरेव वियोजिता इत्यर्थः । ततः किं जातमत आह । यस्येति । व्याकुर्वते व्याचक्षते ।

---

१ प्रतापरुद्रदेवस्य P. २ °लिखित° M. ३ प्रसादयितुं is dropped in P. ४ वितर्कयामि M. ५ °स्तैस्तैर्लक्षणै° R. ६ विशेष is omitted in P. ७ यथायामनुपतन्ति R.; यतोऽनुसरन्ति M. ८ प्रश्नमालया T; प्रश्नोत्तरमालया R. ९ प्रतापरुद्रभुजयो° P. १० प्रतापरुद्रश्लाघा° R. ११ प्रियोदात्तः M. १२ संरम्भसारोहं M. १३ मामिनी for कामिनी M. १४ °मुखा M.

एष तत्त्वानुकीर्त्तनरूपो मार्गः ।

द्वितीयः—सखे नूनमेषु दिवसेषु काकतीयमहाराजो निरन्तरं पुरस्कृतपुरोधःप्रवरामात्यवृन्दो युवराजविजयमाशंसमानो गमयति वासराणि ।

प्रथमः—उचितमाचिन्तितं वयस्येन ।

द्वितीयः—( पुरोऽवलोक्य सहर्षम् ) । कथमस्मदीयं वचनमाकर्ण्य नूनं महाराजाय निवेदयितुममात्यपुत्रः सहर्षसंभ्रमं राजकुलाभ्यन्तरं प्रविशति । तदावामपि प्रतीहारभूमिमध्यास्य काकतीश्वरावसरं प्रतिपालयिष्यावः । ( इति परिक्रामतः )

एतद् वितर्कप्रतिपादनाद्रूपम् ।

( ततः प्रविशत्यमात्यपुत्रः । )

अमा०—( सप्रमोदम् ) अहो मम धन्यता यदीदृशानां महोत्सवानां निवेदयितास्मि संवृत्तः । यन्मया विज्ञापितैः श्रवणप्रियंकरैर्वार्त्तामृतैः स्वप्नसाक्षात्कृतादपि स्वयंभूदेवप्रसादात् प्रमोदयिष्यते काकतीयनृपः ।

ऐषोत्कर्षरूपोदाहृतिः ।

( पुरोऽवलोक्य ) कथमयं महाराजः पुरोहितैरमात्यैरन्येन परिजनेन च परिवृतो महास्थानमधिरोहति । तदहमुपसर्पामि । ( इति परिक्रामति )

( ततः प्रविशति यथानिर्दिष्टो राजा मन्त्रिणश्च पुरोधसश्च ) ।

राजा—( सविमर्शाश्चर्यम् ) ( अमात्यान् प्रति )—अहो शैशवेऽप्यु-

---

अप्रियाणि प्रियाणि क्रियन्त एभिरिति प्रियंकराणि । 'आढ्यसुभग—' इत्यादिना ख्युन्प्रत्यये मुमागमः । काकतीयनृपः काकतीन्द्रः ।

---

१ तत्त्वानुकीर्तनो M. २ °वर्गो M₁. ३ मन्त्रैचिन्तित° M. ४ अत्रैषोत्कर्ष° T'. ५ महास्थानमण्डपमाधितिष्ठति T'. ६ P. drops मन्त्रिणश्च पुरोधसश्च. ७ परिजनश्च R. ८ °विमर्श° R.

चितकारित्वं वत्सवीररुद्रस्य । यदस्मदनुरोधार्थमिमानमात्यान् नि-
वर्त्य स्वयमेव प्रस्थितः ।

मन्त्रिणः—( सबहुमानम् ) महाराज भवता खलु पितृमान् स
कुमारः ।

पुरो०—विजयप्रस्थानात् प्रभृति नक्तन्दिवमुन्मिषन्ति कल्याणानि
निमित्तानि । तद्विजिता एव दिशो राजपुत्रेण ।

राजा—भवदाशिष एव काकतीयकुलश्रेयांसि स्वयं प्रदुहते ।

परि०—'काअइअकुलस्स किं णु ण संपुण्णं पुण्णेण जस्सि अवइण्णो
भुवणेक्कभद्दो पआवरुद्दो ।

राजा—( सौत्सुक्यम् ) कथं चिरयति वत्सस्य विजयश्रवणम-
होत्सवः ।

अमात्यपुत्रः( सविनयं ससंभ्रममुपसृत्य सप्रणामम् )—देव मध्यम-
लोकपाल युवराजप्रेषितौ विजयवार्त्ताहारिणौ प्रघाणप्राङ्गणमधिवसतः ।

---

भवता खलु पितृमानिति कारणगुणानां कार्ये संक्रान्तिरुचितैवेति भावः ।

नक्तं च दिवा च नक्तन्दिवम् । 'अचतुर—' इत्यादिना सहम्यर्थवृत्त्योरव्य-
ययोर्द्वन्द्वसमासो निपात्यते । कल्याणानि शुभनिमित्तानि उन्मिषन्त्युद्भवन्ति ।

प्रदुहते । दुहतेः कर्मकर्त्तरि तङ् । 'न दुह—' इति यक्प्रतिषेधः । काकति-
कुलस्य किंनु न संपूर्णं पुण्येन यस्मिन्नवतीर्णो भुवनैकभद्रः प्रतापरुद्रः ।

प्रघाणो बहिर्द्वारप्रकोष्ठकः । अगारैकदेशे प्रघणः प्रघाणश्च निपातितः । तत्
प्राङ्गणमधिवसतः । 'उपान्वध्याङ्वसः' इति सकर्मकत्वम् ।

---

छाया ।

1 काकतीयकुलस्य किं नु न संपूर्णं पुण्येन यस्मिन्नवतीर्णो भुवनैकभद्रः प्रतापरुद्रः ।

१ वत्सस्य वीर° M. २ M. omits अमात्यान्. ३ विगीषुः प्रस्थितः T'. ४ स is dropped in P. and T'. ५ कल्याणनिमित्तानि P. ६ भवतामाशिष° P. ७ T'. ७ प्रादुर्भवन्ति M. ८ काअइकुलस्स M. ९ अवइणो P. १० भुवने° P. ११ °भद्दो P. १२ विजययात्रा° P., T'. १३ सविनयसंभ्रमं M. १४ विजययात्रावार्त्ता° P. १५ °प्रान्त° M.

एष संचिन्त्यमानार्थप्राप्तिरूपः क्रमः ।

( सर्वे सहर्षातिशयं रूपयन्ति ) ।

मन्त्रिणः—भद्र शीघ्रं प्रवेशय ।

अमात्य०—यदादिशन्ति महामन्त्रिणः ( इति निष्क्रम्य सह ताभ्यां पुनः प्रविष्टः )

पुरुषौ ( प्रणमन्तावुपसृत्य )—देव विश्वैकविजयिना पुत्रेण वर्धसे बाढमप्रमेयमहिमा प्रतापरुद्रभुजस्थेमा यच्छैशवेऽप्यतिशयिततरुणकाकतीयपराक्रमस्तस्य विक्रमः ।

राजा—( सहर्षातिशयममात्यानवलोक्य ) मनोरथाभ्यामविचिन्तितोपगताभ्यां महार्घ्यं पारितोषिकं प्रतिपाद्यताम् । द्विगुणीकृतहर्षयोरनयोर्मुखाह्लस्य विजयलक्ष्मीपाणिग्रहणवृत्तान्तश्रवणमहोत्सवेन चरितार्थयामः श्रोत्रवृत्तिम् ।

मन्त्रिणः—यदाज्ञापयति देवः ( इति भौरिकमुखात् तथा कुर्वन्ति )

एष सामदानाचरणः संग्रहः ।

( पुरुषौ सप्रणामं गृहीत्वा मूर्ध्नि निधाय महाराजप्रसादमभिनन्दतः । )

---

भूरि सुवर्णं तत्र नियुक्तो भौरिकः कनकाध्यक्षः ।

नीराजना नाम राष्ट्रसमृद्ध्यै शरत्कालकर्तव्यः शान्तिकर्मविशेषः । स च गजप्राधान्येनाश्वप्राधान्येन च द्विविधः । तदुक्तं शौनकेन—

> ' नवम्यामाश्वयुङ्मासे कार्त्तिकायामथापि वा ।
> हस्तिनीराजनं कुर्याद्राजा जनसमृद्धये ॥
> अश्वनीराजनं कुर्यादश्वानां हितकाम्यया ।
> तद्वच्चैवाश्वयुङ्मासे पूर्वपक्षे नृपोत्तमः ॥'

---

१ चिन्त्यमाना° P. २ °रूपकमः R. ३ सर्वे सहर्षातिशयं रूपयन्ति is omitted in M.; सर्वे हर्षातिशयम् R. ४ निरूपयन्ति T'. ५ यथादिशन्ति M. ६ मन्त्रिणः R. ७ ताभ्यां सह प्रविष्टः P. ८ प्रतापरुद्रस्य M. ९ °पुराण° M₁; तरुणकाकतीय is dropped in M. १० P. drops सहर्षातिशयम्. ११ महार्घम् R., M.; महार्घम् T'. १२ द्विगुणित° R. १३ प्रहर्षयो° M. १४ °परिग्रह° M. १५ सामदानरूपः M.; सामदानाचरणरूपः T'; समाधानाचरणरूपः M₁. १६ °न वाजि° L. १७ शौनके L.

मन्त्रिणः—भद्रावित पल्य युवराजविजयविहृतयः पराक्रमपल्लविता महाराजसदसः कर्णपुरीक्रियन्ताम्।

पुरुषौ—सावधानमवधारयतु महाराजः।

प्रथमः—देवे देवस्य प्रसादेन वाजिनीराजनासमिध्यमानस्य वीतिहोत्रस्य विजयप्रदानेन द्विगुणीकृतोदग्रप्रतापे प्रतापरुद्रे प्रतिष्ठमाने

यात्रारम्भमहेष्वहंप्रथमिकानिर्यच्चमूडम्बर-
क्षुण्णक्षोणितलोत्थितेतिबहुले पांसौ वियद्व्यापिनि।
जेतव्याः सकला दिशः स्वविभुतामन्तः पिधायाधिक-
त्रासात् क्वापि पलायिता इव दृशां नैवाभवन् गोचराः ॥ ४ ॥

अनन्तरं च।

उद्वेलच्चतुरर्णवीकलकलो नायं चमूडम्बरो
नेदं दुन्दुभिगर्जितं त्रिपुरजित्कल्पान्तढक्कारवः।
इत्याटोपपटीयसीषु पुरतो धाटीषु भारानम-
च्छेषाशेषफणासु विस्मितमथ त्रस्तं दिगीशैरपि ॥ ५ ॥

---

इति। तत्र द्वितीयं प्रत्याह। वाजिनीराजनेति। वीतिहोत्रस्य हुतभुजः।

यात्रेति। महेषूत्सवेषु। अहं प्रथमोऽहं प्रथम इति यस्यां क्रियायामसावहंप्रथमिका। मयूरव्यंसकादित्वात् समासः। स्वार्थे कप्रत्ययः। स्वविभुतां निजव्यापकत्वम्। अत्रानुपहितदिग्गतं विभुत्वं चोपहितास्वपि प्राच्यादिषूपचर्यते। अत्र सेनारजोव्याप्तिनिमित्तस्य दिशामदर्शनस्य भयनिमित्तपलायनहेतुकत्वोत्प्रेक्षणादुत्प्रेक्षालंकारः।

उद्वेलदिति। परितो धाटीषु

'शत्रुदेशावमर्दाय सद्यः सुभटघोटकैः।
विजिगीषोः प्रवृत्तिर्या सा धाटीति निगद्यते ॥'

इत्युक्तलक्षणासु। आटोपपटीयसीषु संरम्भपटुतरासु सर्वतोमुखसंभ्रमास्वित्यर्थः। इति विस्मितमित्यन्वयः। उद्वेलार्णवकोलाहलकल्पान्तपटहप्रणादकल्पयोश्चमूसं-

---

१ °विभूतयः M.; °व्याहृतयः R. २ R. has यथोचितमुपविश्य after प्रथमः—३ विजययात्राप्रदानेन R.; विजयप्रसादेन M.; विजयप्रदानात् M. ४ द्विगुणितदानप्रतापे R. ५ जगद्व्यापिनि R. ६ त्रासाः M. ७ ढक्का° M.

पुरोधसः—अहो निरङ्कुशमोजायितमन्ध्रचमूपतीनाम् ।

द्वितीयः—अथ युवराजाज्ञया प्रथमं माघवनीं दिशं प्रचलितानि सैन्यानि ।

रथेनाभिमुखं यान्तं वीररुद्रो विलोक्य माम् ।
मृष्यते नायमित्यर्कः सैन्यरेणौ तिरोहितः ॥ ६ ॥

मन्त्रिणः—ततस्ततः ।

द्वितीयः—अनन्तरं सेनाग्रगैरेव पौरस्त्यान् क्षुद्रक्षत्रियान् निर्जित्य सर्वपथीनेनाटोपेन पटीयसि तस्मिन् महति बले प्रचलति

युद्धाय समनह्यन्त कलिङ्गाः स्फुटपौरुषाः ।
मत्तद्विपघटोद्दामसंभ्रमाडम्बरोद्धताः ॥ ७ ॥

तैः सार्धमन्ध्रचमूपतीनां पराक्रमघने महत्यायोधने

पीत्वा मांसोपदंशं द्विरदगलगलद्रक्तमैरेयधारां
मत्तो मस्तिष्कलग्नैर्दलितनृपवपुःकीकसैः स्पष्टदंष्ट्रः ।
बिभ्रद्रौद्रान्त्रमालां जनितजनभयो भैरवाकारघोरः
संग्रामोर्व्यां कलिङ्गैर्बलिविधिमकरोद्वीररुद्रस्य खड्गः ॥ ८ ॥

---

भ्रमदुन्दुभिगर्जितयोरभूतपूर्वयोरनुभवादद्भुतमभूदित्यर्थः । अथ सैनिकाभिनिवेशदर्शनानन्तरं दिगीशैरिन्द्रादिभिरपि त्रस्तं किमुतान्यैरन्तरालवर्तिभिरिति भावः । उभयत्र भावे क्तः ।

मघोन इन्द्रस्येमां मघवनीं दिशं प्राचीम् । सैन्यरजसा सूर्ये तिरोहिते सत्युत्प्रेक्ष्यते । रथेनेति । मामर्कमयं वीररुद्रो न मृष्यते न सहते परिपन्थिबुद्ध्येति भावः ।

पौरस्त्यान् प्राच्यान् सर्वान् पथो व्याप्नुवता सर्वपथीनेन ।

युद्धायेति । मत्तद्विपानां घटाः संग्रामादौ सैञ्जनानि । 'करिणां घटना घटा' इत्यमरः । तासामुद्दामसंभ्रमेणाधिकाटोपेन डम्बरेण संग्रामपटहप्रणादेनोद्धताः ।

युद्धे वीररुद्रस्य खड्गस्य कालभैरवसमाधिमाह । पीत्वेति । मांसेनोपदंश्य

---

१ पुरोहितः R. २ निरन्तर° M. ३ °मन्ध्रचमूपतीनामोजायितम् M., R. ४ विजित्य R., विच्छिद्य M. ५ P. drops पटीयसि. ६ चलति P.; प्रचलिते R. ७ °मान्ध्र° M. ८ °घनमहत्या° R. ९ मृष्ट° T. १० °रनुभावाद° t. ११ माघवतीं t₁. १२ सज्जानि P. १३ वीररुद्रखड्गस्य t , t₁. १४ t₁ drops काल°.

पुरो०—मानुषवेषतिरोहितेनापि काकतीयविष्णुना किंचिदाविष्कृतो निजप्रभावः ।

मन्त्रिणः—(सहर्षातिशयाद्भुतम्) अहो पराक्रमातिभूमिः प्रतापरुद्रस्य ।

परि०—'सरिसं खु एदं जं महाराअरुद्दणरेसरणंदणेण किदव्वं जं काअइकुलप्पसवाणं खमं जं कुलदेवदाए सअंभूदेवस्स प्पसत्तिविसेसाणं जुत्तं तं खु किअं जुवराएण ।

राजा—(संप्रमोदगद्गदम्) ततस्ततः ।

प्रथमः—अनन्तरं

छिन्नोद्यद्वैरिवीरप्रतिभटमुकुटाटोपसंजातराहु-
भ्रान्तिभ्रश्यत्पतङ्गाभयकरपृतनारेणुबद्धान्धकारा ।

---

मांसोपदंशं मांसमुपदंशं कृत्वेत्यर्थः । 'उपदंशस्तृतीयायाम्' इति णमुल्प्रत्ययः । मांसस्य दंशनक्रियाकर्मत्वेऽपि पानक्रियाकरणत्वात् तृतीयोपपदत्वम् । 'तृतीयाप्रभृत्यन्यतरस्याम्' इति विकल्पादुपपदसमासः । मस्तिष्कं नाम मस्तकस्थितो गोर्दापरपर्यायो मेदोविशेषः । तद्वद्भिः कीकसैरस्थिभिः सुदृढः ।

सदृशं खल्वेतत् यन्महाराजरुद्रनरेश्वरनन्दनेन कर्तव्यं यत् काकतिकुलप्रसक्तिविशेषाणां युक्तं तत्खलु कृतं युवराजेन ।

छिन्नेति । प्रतिभयेन भयंकरेण मुकुटाटोपेन संजातया राहुभ्रान्त्या भ्रश्यतः क्षिश्यमानस्य पतङ्गस्य सूर्यस्याभयकरणेनाभयसाधनेन । मुकुटाच्छादकतया राहुभ्रान्तिनिवर्तकत्वेनेति भावः । चमूरेणुना बद्धान्धकारा अत एव संग्रामवेलाया रात्रित्वं प्रतीयते । तत्रेभकुम्भनिर्गता मुक्ता एव ताराः । अप्सरोमुखमेव चन्द्रोऽभूदित्याह । विहरदिति ।

---

छाया ।

1 सदृशं खल्वेतत् यन्महाराजरुद्रनरेश्वरनन्दनेन कर्तव्यं यत् काकतिकुलप्रसवानां क्षमं यत् कुलदेवतायाः स्वयंभूदेवस्य प्रसक्तिविशेषाणां युक्तं तत् खलु कृतं युवराजेन ।

१ तिरोभूतेनापि M. २ सहर्षाद्भुतम् P.; सहर्षातिशयम् M.; सहर्षातिशयाद्भुतः R. ३ °भरेभ° P., R. ४ कादम्बम् M. ५ समोदगद्गदम् M. ६ °वीरभूप° M. ७ °मकुटाटोप° M. ८ भ्रान्त्या P. ९ °भ्रस्यत्° M.

आसीत् संग्रामवेला विहरदसिलतोद्भिन्नमत्तेभकुम्भ-
प्रोद्यन्मुक्तौघतारानिकरपरिवृतखर्वधूवक्रचन्द्रा ॥ ९ ॥

अनन्तरं युवराजाज्ञया

वृत्रारातिदिगन्तरालविजयप्रख्यातविक्रान्तयः
पारेपूर्वपयोधिकल्पितजयस्तम्भाः स्फुरत्तेजसः ।
वेलाकाननवासिगीतविभवं देवस्य दोर्विक्रमं
शृण्वन्तो मुहुरन्ध्रसैन्यपतयः प्राप्ता दिशं दक्षिणाम् ॥ १० ॥

तत्र च

मुनौ लोपामुद्रासुहृदि निकटस्थेऽपि महता
भवन्त्येता नद्यः कलुषपयसः सैन्यरजसा ।
इतीव व्योमाग्रे मलयपवनान्दोलितशिखाः
पताकाः सोत्प्रासाः प्रतिपदमनृत्यन्नतितराम् ॥ ११ ॥

अनन्तरं पाण्ड्यप्रमुखान् दाक्षिणात्यान् क्षितीश्वरान् काकतीयवीरः स्वचमूपतिनिर्विशेषं संभाव्य तैः सह प्रतीचीं दिशं प्रचलितः ।

---

वृत्रेति । वृत्रारातिरिन्द्रः । तस्य दिक् प्राची । पारं पूर्वपयोधेः पारेपूर्वपयोधि । 'पारेमध्ये षष्ठ्या वा' इत्यव्ययीभावः ।

मुनाविति । लोपामुद्रासुहृदि मुनावगस्त्ये निकटस्थे समीपस्थेऽपि अगस्त्योदये नद्यो निर्मला भवन्ति । तदुक्तं वराहसंहितायाम् ।

'उदये च मुनेरगस्त्यनाम्नः
कुसुमायोगमलप्रदूषितानि ।
हृदयानि सतामिव स्वभावात्
पुनरम्बूनि भवन्ति निर्मलानि ॥'

इति । कालुष्यमिति । विरोधद्योतकोऽपिशब्दः । सोत्प्रासाः सोपहासाः । लोके कश्चित् प्रबलं कंचन विजित्य सोपहासमुन्नतस्थले चलच्छिखो नरीनर्ति । तद्वदिति भावः ।

---

१ °दसिलतोद्भिन्न° P. २ °प्रकर° P. ३ °स्तम्भा स्फुरत्° M. ४ तत्रापि च T'. ५ वहन्त्येता P.; वहन्त्येता M. ६ पृषत्काः R. ७ सोल्लासाः M. ८ काकतीयवीरः for क्षितीश्वरान् R. ९ P. and R. have शरणमुपगतान् before काकतीयवीरः. १० °वीररुद्रः M. ११ प्रतिचलितः P.

मन्त्रिणः—साधु समाचरितमात्मनीनं पाण्ड्यैर्यत् पूर्वमेव देवस्य चरणमूलं प्राप्ताः । ततस्ततः ।

द्वितीयः—तत्र च

पाश्चात्यानां ध्वजेषु स्थितमधिकभरैरस्त्रैस्तदण्डेषु गृध्र-
व्रातैर्यच्चण्डतुण्डाहतिविहतपटेष्वोहतक्षिप्तपक्षैः ।
अस्त्रं गारुत्मतं तत् समजनि विजयप्रार्थिनामन्ध्रसैन्य-
प्रेष्ठानां जन्यमैन्यन्निजनिबिडभुजादण्डकण्डूविडम्बः ॥ १२ ॥

अनन्तरं

जित्वा प्रतीचीमथ वीररुद्रः
प्रत्यर्थिनारीनयनाम्बुपूर्णाम् ।
रेवां समुत्तीर्य गजानुबन्ध-
सेतुं विजेतुं गतवानुदीचीम् ॥ १३ ॥

तत्राङ्गवङ्गकलिङ्गमालवप्रभृतयः सर्वे भूपाला मिलित्वा युद्धाय बद्धादराः पुरतः प्रादुरभवन् ।

---

साध्विति । आत्मने हितमात्मनीनम् । 'आत्मन्विश्वजन—' इत्यादिना खप्रत्ययः ।

पाश्चात्यानामिति । पश्चाद्भवाः पाश्चात्याः । 'दक्षिणापश्चात्पुरसस्त्यक्' । तेषां ध्वजेषु गृध्रव्रातैः स्थितमिति यत्तदेव गारुत्मतमस्त्रं समजनि । युद्धात् पूर्वं गृध्रैरेव तत्फलं कृतमिति भावः । तदुक्तं वराहसंहितायाम् ।

'क्रव्यादकौशिककपोतककाककङ्काः
केतुस्थितैर्महदुशन्ति भयं नृपस्य ।'

इति । अत्र क्रव्यादा गृध्रादय इति तद्व्याख्यातोत्पलपरिमलकारः । तर्हि पुनर्युद्धस्य किं फलमत आह । विजयेति । प्रष्ठानामग्रगामिनाम् । 'प्रष्ठोऽग्रगामिनि' इति निपात्यते । जन्यं युद्धम् । कण्डूविडम्बः कण्ड्वापनयनम् ।

जित्वेति । क्त्वाप्रत्ययेनैवानन्तर्ये सिद्धे अथशब्दो विलम्बाभावसूचनार्थः । नयनाम्बुपूर्णां दुस्तरामित्यर्थः । तेरणोपायमाह । गजानुबद्धसेतुमिति । रेवां नर्मदाम् ।

---

१ साधु साधु P. २ प्राप्तम् P. ३ °भय° M. ४ °अस्त्र° P. ५ °व्यातत° T'. ६ प्रेष्ठानां P. ७ °मन्यं निज° M. ८ °पूर्णाः M. ९ गजानुबद्ध° R.; गजानुबन्धं M. १० P. drops कलिङ्ग. ११ सर्वेऽपि R., M. १२ भूपा P. १३ प्रादुरभूवन् R. १४ युद्धे तत्पूर्वं I. १५ तारणो° I.

मन्त्रिणः—अहो परमनात्मवेदितोदीच्यानां यत्प्रतापरुद्रस्यापि परि-पन्थिनो भवन्ति ।

राजा—ततस्ततः ।

प्रथमः—अनन्तरं सममनीकिनीभिरापतन्तीभी राजकानि विलोक्य सगर्वमेवमुक्तं सेनापतिभिः

'रे रे गुर्जर जर्जरोऽसि समरे लम्पाक किं कम्पसे
वङ्ग त्वङ्गसि किं मुधा बलरजःकाणोऽसि किं कोङ्कण ।
हूण प्राणपरायणो भव महाराष्ट्रापराष्ट्रोऽस्यमी
योद्धारो वयमित्यरीनभिभवन्त्यन्ध्रक्षमाभृद्भटाः ॥ १४ ॥

एतद्रोषसंरब्धवचनरूपं तोटकम् ।

परि०—'साहु साहु चमूवईणं वअणं । एदं भणिअ उण कीरिसं उव-क्कंदं तेहिं ।

प्रथमः—किं कथ्यते । सैनिकानां निरुपमः पराक्रमः ।

यस्तत्राभवदाहवस्तमखिलं जानाति भागीरथी
यात्याक्षीत्सुरभूयकारणनिजाहंकारमुच्छृङ्खलम् ।
आराद्वीक्ष्य समग्रमन्ध्रसुभटप्रोद्धूर्णखड्गावली-
धारातीर्थमुपेत्य दिव्यनगरीमारोहतो भूपतीन् ॥ १५ ॥

---

सममनीकिनीभिः सेनाभिः सह । राजकानि राजसमूहान् । 'गोत्रोक्षा—' इत्यादिना वुञ्प्रत्ययः । रे रे इति । व्याख्यातं नायकप्रकरणे । रोषसंबन्धव-चनरूपमिति । रोषसंबन्धसंभ्रमवचनरूपमित्यर्थः ।

साधु चमूपतीनां वचनम् । एतद् भणित्वा कीदृशमुपक्रान्तं तैः ।

स्वात्मनि तत्तुल्यजामन्ते स्वयमेव दिव्यत्वं संपादयामीति स्वर्गङ्गाया योऽयं महानहंकारस्तन्निर्वारकोऽयं महाहवस्तदतिशायिमहिमेत्यनुपमः सैनिकपराक्रम इत्याह । यस्तत्रेति । सुराणां भावः सुरभूयम् । 'भुवो भावे' इति क्यप् । अत्याक्षीत् त्यक्तवती । आरात् समीपे ।

---

छाया ।

1 साधु साधु चमूपतीनां वचनम् । एतत् भणित्वा पुनः कीदृशमुपक्रान्तं तैः ।

१ °रुद्रस्य P. २ परिपन्थीभवन्ति R., M. ३ अनीकीभिः समापततो राजलोकान् M., M₄. ४ °रापतन्ति T'. ५ M. drops एवम्. ६ रे रे गुर्जर जर्जरोऽसीत्यादि R.; रे रे पुर्जरा वयमान्ध्रसैन्यसुभटाः प्रत्यर्थिदावानलाः M. ७ घूर्जर T'. ८ °संबन्धवचनम् T'. ९ M. omits रूपम्. १० भणि M. ११ उवक्कंतं M. १२ किमुच्यते R. १३ °मान्ध्र° M. १४ °निपातको t₁.

अनन्तरं तत्र तेत्र प्रलीनात्मनः प्रतिपक्षभूपालानन्वेष्टुकामाःक्षितिलिङ्गसैनि-कास्तत्तद्देशवेषभाषादिकमाविष्कुर्वाणाः सर्वतः पर्यटन्ति स्म । जीव-ग्राहं गृहीत्वा समानयन्ति स्म युवराजान्तिकम् ।

मन्त्रिणः—साधीयान् खलु सैनिकानामुद्यमः ।

एतत् प्रकृतोपयोगित्वेन वचनादधिबलम् ।

राजा—ततस्ततः ।

द्वितीयः—अनन्तरं नरपतयो निजपरिजनेष्वप्यकृतविश्वासाः प्रताप-रुद्रस्य पादमूलमेव शरणमुपगताः ।

परिजनः—'अहो णरवइणं जुज्झकाअरत्तणं ।

एष भयप्रतिपादनादुद्वेगः ।

---

भयेन प्रच्छन्नवृत्तीन् पार्थिवान् प्रच्छन्नमार्गेणैवासाधयन्नित्याह । अनन्तर-मिति । जीवग्राहं गृहीत्वेति । जीवतीति जीवः । इगुपधलक्षणः कप्रत्ययः । जीवन्तं गृहीत्वेत्यर्थः ।

> 'न च हन्यात् स्थलारूढं न क्लीबं न कृताञ्जलिम् ।
> न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥'

इति भीतवधे निषेधस्मरणादिति भावः । 'समूल—' इत्यादिना णमुल्प्रत्ययः । कषादित्वादनुप्रयोगः ।

इष्टजनातिसन्धानमधिबललक्षणम् । तदेवेदं प्रकृतोपयोगि । जनातिसंधानं वञ्चनमित्येवमर्थं मत्वा योजयति । एतदिति । प्रकृतोपयोगि छद्माचरणमात्रम-भूताहरणं तेन परवञ्चनमधिबलमित्यनयोर्भेद इति द्रष्टव्यम् ।

अहो नरपतीनां साध्वसकातरत्वम् ।

एष इति । भयप्रतिपादनादिति । अपकारिकृतभयप्रतिपादनादित्यर्थः ।

---

छाया ।

1 अहो नरपतीनां युद्धकातरत्वम् ।

१ P. drops it. २ °नन्वेष्टुं M. ३ °क्षितिलिङ्गाधिपतिसैनिकाः P. ४ °देशिकाः M. ५ R. omits पर्यटन्ति स्म. ६ ग्राहयित्वा p. ७ बलसैनिकानाम् R. ८ °परिजनेष्वकृत° T'. ९ अहह्रे M. १० णरपइस्सण्णस्स M. ११ सज्झस° M. १२ t. adds मनुना after भीतवधे. १३ धर्मं t.

प्रथमः—किमुच्यते कातर्यमिति ।

अङ्गाः संगरभीरवः समभवंश्चोलाः पलायाकुलाः
काश्मीराः स्मरणीयविक्रमकथा हूणा निरीणश्रियः ।
लम्पाका भयकम्पमानवपुषो वङ्गा निरङ्गीकृता
नेपालाः परिपालनव्यसनिनः सुंह्माश्च नीरंहसः ॥ १६ ॥

अपि च

काम्बोजाः क्षतकुम्भिनीपरिचयाः प्राप्तव्रणाः सेवणा
गौडाः पीडितविग्रहाः श्रितकुलग्रावाङ्कणाः कोङ्कणाः ।
लाटाः पाटितमूर्तयः परिलसद्भीविह्वलाः सिंहलाः
कर्णाटाः परिपूर्णवेपथुभृतस्तन्द्रालवो मालवाः ॥ १७ ॥

किं च

भोजा व्यर्थभुजायुधाः श्लथनिजश्रीकेलयः केरलाः
पाण्ड्याः खण्डितविक्रमाः प्रकटितह्रीजर्जरा गुर्जराः ।
पाञ्चालाः प्रणतिप्रपञ्चितभियश्चाटूत्कटाः कीकटाः
कांम्पिल्लाः श्रितपल्लयः कृतयशोभङ्गाः कलिङ्गा अपि ॥ १८ ॥

सर्वे हर्षातिशयं नाटयन्ति ।

---

कातर्यमेव राज्ञां श्लोकत्रयेणाह । अङ्गा इत्यादिना । पलायः पलायनम् । तत्राकुलाः । 'उपसर्गस्यायतौ' इति लत्वम् । निरीणश्रियो गतसंपदः । रीणा- तेर्लोदित्वान्निष्ठानत्वम् । निरङ्गीकृताः निरवयवीकृताः । नीरंहसो निर्वेगाः ।

काम्बोजा इति । कुम्भिनी भूमिः । तन्द्रालवोऽलसाः निरुद्योगा इत्यर्थः । 'स्पृहिगृहि—' इत्यादिना आलुच्प्रत्ययः ।

भोजा इति । चाटूनि त्रायस्वेत्यादीनि प्रियवाक्यानि तैरुत्कटाः । श्रितपल्लयः प्राप्ताल्पग्रामाः ।

---

१ प्रलापाकुलाः P. २ तनवो for वपुषो M. ३ सिंहाश्च T; सैंह्माश्च is noticed by M. which has सुंह्माश्च. ४ °गिरि° M. ५ °ग्रावाङ्कणाः P. ६ परिगलद्धी° M. ७ सिंहलाः P. ८ °विग्रहाः P. ९ °घूर्जराः T. १० °भियः R. ११ °श्चाटूत्कचः P., R. १२ काम्पीलाः M., काम्पिल्याः T. १३ श्रितवल्लयः P. १४ सहर्षातिशयं M.

परि०—[1]अहो वीररुद्दस्स अइसइदतिहुवणाइं जुद्धावदाणाइं ।

राजा—( सहर्षम् ) महतीं प्रतिष्ठामारोपितं खलु काकतीयकुलं विश्वैकविजयिना वत्सेन ।

पुरोहितः—आमूलचूडं फलिताः प्रसक्तयः काकतीयान्वयदेवतानाम् ।

राजा—ततस्ततः ।

प्रथमः—अनन्तरं सकलदिग्विजयसमुत्तेजिततेजोविलासः सर्वनरेश्वराणां तानि तान्युपायनानि स्वीकृत्य समग्रसैन्यैः सपक्षैर्महीभृद्गणैराश्रितेन महता बलार्णवेन न्यवर्त्तत विश्वैकवीरो वीररुद्रः ।

मन्त्रिणः—( सहर्षम् ) कुत्रेदानीं राजपुत्रः ।

द्वितीयः—संप्रति किंकुर्वाणराजलोकः सर्वानपि सेनापतीन् नगरं प्रस्थाप्य कतिपयमौलपरिवृतः काकतीयवीरः स्वैरं गोदावरीपरिसरारण्येषु मृगयाकुतूहली विहरते ।

मन्त्रिणः—( सविमर्शम् ) महाराज नूनं त्वय्येव शासति वसुमतीं यौवराज्यमेव बहुमन्यते राजपुत्रः ।

एषा प्राप्त्याशा । दिग्विजयाकृष्टनरेश्वरवृत्तान्तस्य व्यापित्वात् पताका निरूपिता ।

---

अहो वीररुद्रस्य अतिशयितत्रिभुवनानि युद्धावदानानि । आमूलचूडमामूलाग्रम् ।

किंकुर्वाणराजलोकः किङ्करीभवद्राजवर्गः । मौलं मूलबलम् ।

एषा प्राप्त्याशेति । राज्याभिषेकस्य मृगयालक्षणप्रतिबन्धकोपनिपातेन शङ्क्यमानत्वादिति भावः । पताकां योजयति । दिग्विजयेति ।

---

छाया ।

1 अहो वीररुद्रस्यातिशयितत्रिभुवनानि युद्धावदानानि ।

१ अहद्दे M. २ °हुवणाइ T, M. ३ R. omits सहर्षम्. ४ विश्वं विवेक° M ५ प्रसक्तयः P. ६ काकतीयान्वयकुलदेव° M.; काकतीयकुल° M. ७ समग्रपक्षैः P. ८ स्वैः R., सैः M. ९ पताकारूपः M.

राजा—तेदचिरमेव युष्माभिरेवानेतव्यो वत्सः अनुनेतव्यश्च राज्याभिषेकाय ।

मन्त्रिणः—यदाज्ञापयति देवः । ( इति निष्क्रान्ताः )

नेपथ्ये—( ससंभ्रमम् ) भो भो नोगरिकाः सत्वरमपसरत दूरम्। यदिदानीं

आलानं तरसा निपात्य निगलान्युच्छिद्य धूताङ्कुशो
वेगोत्पाटितधूर्गतः कटतटीनिर्यन्मदाम्बुस्रुतिः ।
भ्रश्यत्पण्यपथं चलद्गजहयं बिभ्यज्जनौघं पुरं
विष्वग्व्याकुलयत्यमन्दरभसः स्वैरं करिग्रामणीः ॥

एष शङ्कात्रासरूपः संभ्रमः ।

राजा—( आकर्ण्य सस्मितम् ) कथं व्याकुलयति कटकं करीन्द्रः ।

पुरुषः—महाराज नूनमिदानीं नगरं प्रविशतां नरेश्वरोपायनानां द्विपानां गन्धानिलेन संक्रुध्यन् निरर्गलो जातः प्रधानहस्ती ।

पुरो॰—

पित्रा स्वयंभूपतिनोपदिष्टं
प्रतापरुद्रस्य महाभिषेकम् ।

---

आलानमिति । आलानं बन्धस्तम्भः । निगलानि शृङ्खलानि । पातितधूर्गतः पातिताधोरणः करिग्रामणीः राजप्रियो गाणपतिर्नाम गजश्रेष्ठः । भ्रश्यत्पण्यपथमित्यादौ शङ्कात्रासयोर्निरूपणात् संभ्रम इत्याह । एष इति ।

कटकं नगरम् ।

पित्रेति । गजास्यो गणेशः । अत्रेष्टार्थस्य महाभिषेकस्य निर्विघ्नमित्यनेन गणे-

---

१ तदचिरादेव M. २ नागराः R. ३ दूरं दूरं M. ४ वेगात्पातितमार्गगः M. ५ चलद्र॰ M. ६ तरसा M. ७ गज॰ P. ८ प्रविशन्॰ M. ९ गन्धानिलाय क्रुध्यन् M

निर्विघ्नमापादयितुं गजास्यः
करेणुराजाकृतिरभ्युपैति ॥ २० ॥

एष गर्भ[1]बीजोद्भेदनादाक्षेपः।

राजा—( सहर्षम् ) तर्हि वयमपि प्र[2]मदवनद्वारप्रासादमा[3]रुह्य गजेन्द्रमवलोकयिष्यामः ( इत्युत्थाय प[4]रिक्रम्य निष्क्रान्ताः सर्वे )।

वी[5]ररुद्रविजयो नाम तृतीयोऽङ्कः।

---

शप्रसादरूपोपायानुसरणादाक्षेपः। इष्टार्थोपायानुसरणमाक्षेप इति लक्षणात्। अत एवात्र गर्भबीजोद्भेदनादित्याह। तस्य प्राप्त्याशासंबन्धित्वेनैवंविधत्वादिति।

अन्तःपुरोचितं राज्ञोपवनं प्रमदवनम्। 'ङ्यापोः—' इति ह्रस्वः।

इति तृतीयोऽङ्कः।

---

१ °बीजोत्पादना° P.; बीजाक्षेपः M. २ प्रमदावन° R. ३ °मधिरुह्य R. ४ परिक्रम्य is omitted in R. and M. ५ वीर is omitted in R. and M.

ततः प्रविशति धात्री चेटी च ।

धात्री—( सरोषम् ) हंजे एआरिससहस्सकज्जपज्जाउले राअउले महूसवे वि सअला वि रअणी केण समं तुए णीदा । ईरिसमहग्घाइं भूसणाइं [illegible] चोरिआइं । कहं ण जाणिअं तुए दासीए उत्तीए । सअला दिसा जऊण चउरंतसामंतपरिवारो पआवरुद्दो णअरं पविट्ठो कुलदेवदाए पसत्तीए महाराअस्स अण्णाए पुरोहिदाणं अणुरोहेण अमच्चाणं अणुवट्टणेण पआणं भाअहेएण खोणीए तवोविसेसेण अम्हारिसस्स परिअणस्स सुकअपरिपाएण अब्भुपगअमहाराअहिसेओ जुवराओ संजाओ । एव्वं वि एआइणी मं महूसवाउलिअं मोत्तुण कहं ठिदा ।

---

नीचपात्रद्वययुक्तं प्रवेशकं प्रारभते । तत इति । तत्र प्रतिहारप्रवेशात् पूर्वः कथाभागः पूर्वाङ्कशेषतया वृत्तः । उत्तरस्तूत्तराङ्कशेषतया वर्तिष्यमाण इति द्रष्टव्यम् । हंजे चेटि । 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति ।' इत्यमरः । ईरिसेति । महार्घाणि महामूल्यानि । दास्याः पुत्र्या । 'पुत्रेऽन्यतरस्याम्' इति विकल्पादलुक् । सकला दिशो जित्वा चतुरन्तसामन्तपरिवारः प्रतापरुद्रो नगरं प्रविष्टः कुलदेवतायाः प्रत्यासत्त्या महाराजस्याज्ञया पुरोहि-

---

छाया ।

1 हञ्जे एतादृशसहस्रकार्यपर्याकुले राजकुले महोत्सवेऽपि सकलापि रजनी केन समं त्वया नीता । ईदृशमहार्घाणि भूषणानि कुतश्चोरितानि । कथं न ज्ञातं त्वया दास्याः पुत्र्या । सकला दिशो जित्वा चतुरन्तसामन्तपरिवारः प्रतापरुद्रो नगरं प्रविष्टः कुलदेवतायाः प्रसत्त्या महाराजस्याज्ञया पुरोहितानामनुरोधेनामात्यानामनुवर्तनेन प्रजानां भागधेयेन क्षोण्यास्तपोविशेषेणास्मादृशस्य परिजनस्य सुकृतपरिपाकेनाभ्युपगतमहाराजाभिषेको युवराजः संजातः । एवमप्येकाकिनीं मां मधूत्सवाकुलितां मुक्त्वा कथं स्थिता ।

१ °कज्जसहस्स° M. २ °पज्जाउलराअउलमहू° T'. ३ राअकले वि M. ४ णिदा P. ५ महग्घाइं M., $M_1$., महग्घाइं P.; महग्घाइ T'. ६ भूसणाइ P.; भूसणाइ T'. ७ कत्तो P. ८ चोरिआइं P; चोरिआइ T. ९ मुणिअं M.; विण्णादं T'. १० दासिपुत्तीए $M_1$. ११ पुत्तीए M., $M_1$. १२ सअलाओ दिसाओ M., $M_1$. १३ सामंद M., $M_1$. १४ आणाए M. १५ अणुवट्टणेण P. १६ भाअधेएण M. १७ तपो° $M_1$. १८ सकिदपरिवएण T'.; सुअम्मपरिपाएण $M_1$. १९ °रज्जाहिसेअ P; रज्जाभिसेए M. २० जुवराअ P. २१ संजाअ P. २२ एआइणि P. २३ महुसवा° M. २४ मोत्तूण M. २५ कहिं M. २६ ठिआ M.; ण्णिदा $M_1$. २७ शेषकथा t. २८ शेषकथा t. २९ t. and $t_1$ have before हञ्जे हञ्जे चेटि. ३० t. and $t_1$ have before this ईदृशमहार्घाणि भूषणानि कुतश्चोरितानि । कथं न ज्ञातं त्वया ।

अनेन रोष[1]वशान्नियताप्तिप्र[2]दर्शनमुखेन बीजस्यावमर्शनाद्विमर्शसंधिः । चेटीगतदोषप्रख्यापनादपवादो[3]ऽङ्गम् ।

चेटी—[1]सामिणि अवराहं स[4]हस्स ( इति पादयोः पतति ) ।

धात्री—( सभ्रूभङ्गम् ) [2]दासीए उ[5]त्ति प[6]डंचलेण सप्पदंसणं प[7]डिमज्जेसि जं पणामेण ईरिसा[8]वराहं सि[9]ढिलेसि ।

एष [10]रोषसंभाषणरूपः [11]संफेटः ।

चेटी—[3]ईरिससं[12]हावेव्व तुमं । ता णिक्कारणको[13]विणीं [14]होदीं अ[15]णुवट्टिउं अहं ण[16] पज्जत्ता ।

धात्री—( सरोषशिरःक[17]म्पनम् ) [4]वक्कशी[18]लदुल्ललिए लूणकण्णणा[19]सं

---

तानामनुरोधेनामात्यानामनुवर्त्तनेन प्रजानां भागधेयेन क्षोण्यास्तपोविशेषेणास्मादृशस्य परिजनस्य सुकृतपरिपाकेनाभ्युपगतमहाराजाभिषेको युवराजः संजातः । एवमप्येकाकिनीं मां महोत्सवाकुलितां मुक्त्वा कुत्र स्थिता ।

विमर्शसंधिं योजयति । अनेनेति । अनेन ग्रन्थसंदर्भेणेत्यर्थः । प्रतिपक्षनिवृत्त्या कार्यनिश्चयो नियताप्तिः तस्याः प्रदर्शनमुखेन बीजस्य गर्भसंधौ प्रसिद्धस्यावमर्शनात् पर्यालोचनात् ।

स्वामिन्यपराधं सहस्वेति । दास्याः पुत्रि पटाञ्चलेन सर्पदंशनं परिमार्जयसि यत् प्रणामेनेदृशापराधं शिथिलयसि । ईदृशस्वभावैव त्वं तन्निष्कारणकोपिनीं

---

छाया ।

1 स्वामिनि अपराधं सहस्व ।

2 दास्याः पुत्रि पटाञ्चलेन सर्पदंशनं परिमार्जयसि यत् प्रणामेनेदृशापराधं शिथिलयसि ।

3 ईदृशस्वभावेव त्वम् । तत् निष्कारणकोपिनीं भवतीमनुवर्त्तितुमहं न पर्याप्ता ।

4 वक्रशीलदुर्ललिते लूनकर्णनासां त्वां बध्वा कारागृहभाजनं करोमि ।

१ रोषावेशात् M. २ °दर्शन° for प्रदर्शन° B., M. ३ °दपवादोऽयम् M. ४ सहेह्निमि P., M$_{1}$. ५ उत्ती T'. ६ पडंचलेण T'. ७ पडिमुज्जेसि M. ८ °सापराअं M. ९ सिढिलेसि P. १० सरोषभाषणरूपः M. ११ संभेदः M. १२ समावेव्व M. १३ कोइणी M. १४ भोदीं P. १५ अणुवट्टिदुं T'; अणुवेत्तिदुं M. १६ न T'. १७ °कम्पं T'. १८ शीले T'. १९ °णासिअं T'. २० °पाकेन गमित° ...

तुमं बन्धिऊण काराघरभाअणं करेमि। ( इति बाहुबन्धनं नाटयति )

एष बन्धनरूपो विद्रवः।

चेटी—( सभयकम्पम् ) [1]सामिणि रक्खेहि रक्खेहि असरणं णिरवराहं इमं जणं। तुह अत्तिआए हिडिंबास्समं गच्छंतीए अहं बलक्कारेण णीदा। तत्थ पडिऊलं देव्वं पसादअंतीए विलंबिदं किं करेमि।

धात्री—( सरोषहुङ्कारम् ) [2]एआरिसं राअउलमहूसअं उज्झिअ हिडिंबालअगंडसेलेसुं किंत्ति मत्तअं तांडिस्सइ मंदभाइणी।

एष गुरुतिरस्काररूपो द्रवः।

चेटी—[3]सामिणि सहेहि विलंबिअं। तुए कादव्वं मंगलोवआरं

---

भवतीमनुवर्त्तितुमहं न पर्याप्ता। वक्रशीलदुर्ललिते लूनकर्णनासां त्वां बध्वा कारागृहभाजनं करोमि। स्वामिनि रक्ष रक्ष अशरणं निरपराधमिमं जनम्। तव अत्तिकया ज्येष्ठभगिन्या। 'अत्तिका भगिनी ज्येष्ठा' इत्यमरः। हिडिम्बाश्रमं गच्छन्त्याहं बलात्कारेण नीता। तत्र प्रतिकूलं दैवं प्रसादयन्त्या विलम्बितं किं करोमि। एतादृशं राजकुलमहोत्सवमुज्झित्वा हिडिम्बालयगण्डशैलेषु किमिति मस्तकं ताड्यते मन्दभागिन्या। स्वामिनि सहस्व सहस्व विलम्बितं त्वया कर्त्तव्यं मङ्गलोपचारं शीघ्रं निवर्त्तयामि। हञ्जे तिष्ठ तिष्ठ।

---

छाया।

1 स्वामिनि रक्ष रक्ष अशरणं निरपराधमिमं जनम्। तवात्तिकया हिडिम्बाश्रमं गच्छन्त्याहं बलात्कारेण नीता। तत्र प्रतिकूलं दैवं प्रसादयन्त्या विलम्बितं किं करोमि।

2 एतादृशं राजकुलमहोत्सवमुज्झित्वा हिडिम्बालयगण्डशैलेषु किमिति मस्तकं ताडयिष्यति मन्दभागिनी।

3 स्वामिनि सहस्व विलंबितम्। तव कर्त्तव्यं मङ्गलोपचारं शीघ्रं निवर्त्तयामि।

१ बंधिऊण M. २ संबन्धन° P. ३ हिडिम्बस्समं T'. ४ णीलंविदं P. ५ मत्थअं P.; मत्थअं M. ६ ताडिस्सइ M. ७ मन्दभाअणी P.; मन्दभाइणीए M. ८ °तिरस्कृति P. ९ विद्रवः T. १० मंगलप्पआरं P.

सिग्घं णिवत्तेमि। (इति वपुषा प्रणमति)

धात्री—(सप्रसादम्) [1]हंजे उट्ठेहि।

एषा विरोधशमनरूपा शक्तिः।

चेटी—(सहर्षमुत्थाय हस्तावलम्बनं दत्त्वा) [2]इदो इदो तत्तहोदी।

धात्री—(किंचित् परिक्रम्य पुरोऽवलोक्य च) [3]कहं एसो पडिहारप्पवरो ससंभमं णिग्गओ तौ पच्चासण्णो विअ महाहिसेअसमओ। तेण राअउत्तस्स मंगलणीराअणदीवरिछोलिं णिवत्तिदुं अब्भंतरं पविसामो।

इति निष्क्रान्ते।

प्रवेशकः।

ततः प्रविशति प्रतीहारः।

प्रति॰—(साटोपं परिक्रम्य द्वारि नरपतिकुलकलकलमसहमानः सावमानं कैनकवेत्रलतामुद्यम्य)

---

इत इतस्तत्रभवती। कथमेष प्रतीहारप्रवरो वृद्धप्रतीहारः ससम्भ्रमं निर्गतस्तस्मात् प्रत्यासन्न इव महाभिषेकसमयः। तेन राजपुत्रस्य मङ्गलनीराजनदीपरिञ्छोलिं दीर्घपङ्क्तिं निवर्तयितुमभ्यन्तरं प्रविशामः।

---

छाया।

1 सखि उत्तिष्ठ।

2 इत इतस्तत्रभवती।

3 कथमेष प्रतीहारप्रवरः ससंभ्रमं निर्गतः तत् प्रत्यासन्न इव महाभिषेकसमयः। तेन राजपुत्रस्य मङ्गलनीराजनदीपरिञ्छोलिं निवर्तयितुमभ्यन्तरं प्रविशावः।

१ णिवदेमि T. २ ळट्ठेहि ळुट्ठेहि M. ३ °वलम्बं P., M. ४ तत्थहोदि M. ५ पवरो P. ६ णिग्गअ P., णिग्गइ M. ७ तं P. ८ महामि° M. ९ °समअ P. १० रिछोलिं P. ११ णिवुत्तेढुं M.; णिवट्टेढुं T. १२ पविसम्ह P. १३ कटकनक° M. १४ दीपपङ्क्तिं P.

रे रे नरेश्वराः[1][2]

दन्तिव्यूहमुपायनीकृतममुं कुर्वन्तु पुर्यां बहि-
र्यस्योद्यद्घनबृंहितैर्न घटिकाघण्टाध्वनिः[3][4] श्रूयते ।
दूरे चास्तु रथाश्वमेतदखिलं[5] यस्यातिसंमर्दतो
निष्क्रामत् प्रविशच्च नागरकुलं न स्वैरमाचेष्टते ॥ १ ॥

एषा तर्जनोद्वेजनरूपा द्युतिः ।

( किंचिदुच्चैः ) भो भो कुलामात्यवृद्धाः प्रधानाधिकारिणो परिजनाः[6] पौराश्च शृणुध्वम्[7] । एषा रुद्रदेवमहाराजस्याज्ञा[8] । यथा किल

पूर्वैः काकतिवंशजैर्नृपतिभिः सम्यग्धृता[9] या चिरं
यस्या मानुषशम्भुना गणपतिक्षोणीभुजाभूत् प्रथा ।
येयं मद्भुजया कुलाद्रिवसति विस्मारिता मेदिनी
सेयं संप्रति वीररुद्रभुजयोर्यातु प्रतिष्ठां स्थिराम्[10] ॥ २ ॥

एष स्ववंशजानां कीर्त्तनाद्गुरुकीर्त्तनरूपः प्रसङ्गः ।

( पुनः साटोपं परिक्रम्य ) अधिकृताः किमिदानीमारभध्वम्[11] । किमुपक्रान्तः स्वयंभूदेवसमाराधनविधिः । कच्चिद्दत्ताः पुरदेवताभ्यो बलयः । किमभ्यर्चिताः[12] सर्वे वर्णवृद्धाः[13] । कच्चित् प्रसाधिता[14] महाभिषेकवेदिः ।

---

तत इति । दन्तीति । रथाश्वमिति । सेनाङ्गत्वादेकवद्भावः । नागरकुलं पौरसमूहः । स्वैरमसंबाधेन ।

संशृणुध्वमिति । संपूर्वाच्छृणोतेरविवक्षितकर्मकात् 'समो गम्यृच्छि—' इत्यादिनात्मनेपदम् । काकतिभूपतीनां भूपरिपालनमुदितोदितं भवतीत्याह । पूर्वैरिति । विस्मारितेत्यत्र 'गतिबुद्धि—' इत्यादिनाणि कर्तुः कर्मत्वम् । तस्मिन्नभिधेये कर्मणि क्तः । 'ण्यन्ते कर्त्तुश्च कर्मणः' इति वचनात् ।

---

१ नरप्रवराः M. २ P. has शृणुध्वम् after this. ३ हस्ति° M. ४ घण्टारवः P. ५ °बलं M. ६ जनाः for परिजनाः P. ७ संशृणुध्वम् M. ८ रुद्रदेवस्याज्ञा T'; रुद्रनरेश्वरस्याज्ञा M. ९ सम्यग्भृता R. १० चिराम् M. ११ °मारभध्वे R., T'. १२ किमर्चिताः P. १३ M. omits वर्ण. १४ प्रसादिता R.

किं सज्जीकृतानि कनककलशेषु तीर्थ[1]सलिलानि । कच्चिदभ्यर्णमुपनीतान्युत्तमोपकरणानि । किं मङ्गलमुहूर्त्ते कृतावधाना ज्योतिर्विदः । कच्चिदलंकृताखिलिङ्गनगरी कुरङ्गीदृशश्च[2] । यदिदानीं वसुमतीपाणिग्र[3]हणोचितमङ्ग[4]लाचारवेषः प्रतापरुद्रः काकतीयमहाराज्यलक्ष्मी[5]महान्तःपुरे वर्त्तते । त[6]त्त्वरध्वम् । ( अन्यतो गत्वा सभ्रूक्षेपमवलोक्य ) कथं राजानो न विरमन्ति । ( किंचिदुपसृत्य ) भो भो भू[7]पाला य[8]थासुखमा[9]ध्वम् । सज्जीकुरुध्वमुपायनजातम् । न वृथा संमर्दं सहते मम वेत्रयष्टिः ।

एतदवमानरूपं छलनम् ।

( समन्तादवलोक्य सगर्वातिशयम् ) अहो तृणीकृतजगतां क्षिति[10]भृतामुद्वेलं संमर्दं निवारयतो म[11]म प्रभावः । अथवा काकतीयदौवारिकाणां लिखितप[12]ठितमेव राजनिवारणम् ।

एष स्वशक्त्याविष्करणरूपो व्य[13]वसायः ।

( प्रविश्य पटाक्षेपेण दौवारिकः )

दौवारिकः—( साक्षेपम् ) अ[14]रे केन खल्वसमयवि[15]दो भूपतयो निवारिताः । म[16]होत्सवदिदृक्षवः स[17]र्वे प्रविशन्तु ।

प्रथमः—( सरोषम् ) अरे काकतीयकुलवृद्धप्रतीहारं मामसमयवेदिनमुदाहरसि ।

---

उत्तमोपकरणानि छत्रचामरादीनि । अभ्यर्णमन्तिकम् । उपनीतानि समर्पितानि । लिखितपठितमाबाल्यादभ्यस्तं न नूतनं भवतीत्यर्थः । स्नातानुलिप्तादिवत् ‘ पूर्वकाल—’ इत्यादिना समासः ।

पटाक्षेपेण नेपथ्यापसरणेन सूचनं विनैव प्रविश्येत्यर्थः ।

---

१ पुण्यतीर्थ° P. २ मृगीदृशश्च P. ३ °परिग्रहणसमयोचित° M. ४ °मङ्गलाचरण° M., ५ लक्ष्म्या अन्तःपुरे M., R. ६ M. drops तत्त्वरध्वम् ७ भूपा M. ८ यथावकाशं T', M. ९ °मारभध्वम् T'. १० क्षितिक्षिताम् M. ११ M. drops मम. १२ °परिचितमेव M. १३ विलासः M. १४ अहो R.; रे रे P. १५ °विदुषा R. १६ महोत्सवं दिदृक्षमाणाः R., M. १७ सर्वेऽपि R.

द्वितीयः—भवतु यो वा को वा भवान् प्रवेष्टव्या नरपतय इति महा-[1]राजस्याज्ञा ।

एतत् प्रतीहारयोरन्योन्यरोषसंरब्धवचनरूपं[2] [3]विरोधनम् ।

प्रथमः—किमनेन समं शुष्ककलहेन । तावत् प्रधानागारद्वारवेदि-[4]कामध्यमध्यासीनं पुरोहितपुरस्कृतं युवराजमेवोपसर्पामि[5] । ( इति परि-क्रामति )

[6]द्वितीयः—अहमपि यथानिर्दिष्टमनुतिष्ठामि । ( इति परिक्रामति )

( ततः प्रविशति यथानिर्दिष्टः प्रतापरुद्रः पुरोधसो मन्त्रिणश्च )

पुरो०—काकतीयकुलतिलक युवराजेन भवता लीलयैव दिशो दश विजिताः सैत्यममी सम्यगद्य सत्याशिषो वयम् । किं च

[8]अद्यान्वयः काकतिभूपतीनां
प्राप्तस्त्रिलोकीप्रथितां प्रतिष्ठाम् ।
राजन्वती भूरियमद्य जाता
[11]वीतोपसर्गाः सकलाः प्रजाश्च ॥ ३ ॥

एषा सिद्धवद्भाविश्रेयःकथनात् प्ररोचना ।

मन्त्रिणः—

सूर्यसोमान्वयामात्यमहत्ताद्याधरीकृता ।
अस्माभिरधिकुर्वाणैः काकतीयकुलस्थितिम् ॥ ४ ॥

एतत् प्रकृतानुगुणप्रशंसनाद्विचलनम् ।

---

अभिषेकानन्तरकार्यं सिद्धवत् कृत्वाह । अद्येति । राजन्वती सुराज्ञी । ‘ राजन्वान् सौराज्ये ’ इति निपातनात् साधुः । वीतोपसर्गा निरुपद्रवाः ।

विचलनं नाम स्वगुणाविष्करणं तत् प्रकृतानुगुण्येन विशिष्यन् योजयति । एतदिति ।

---

१ महाराजाज्ञा R. २ रूपं is omitted in M. ३ निरोधनम् R. ४ °वेदिमध्यम-ध्यासीनपुरोहित° R. ५ युवराजं वा उप° M. ६ Omitted in M. ( The whole speech of द्वितीयः is dropped ). ७ सत्यमित्यमी सम्य° T'. ८ Dropped in M. ९ किं चा° M. १० °प्रथितप्रतिष्ठाम् M. ११ विलोपसर्गाः T'. १२ °रिति कुर्वाणैः P'. १३ प्रतापानुगुण° P. १४ विचलं नाम t.

पुरो०—राजपुत्र सज्जीकृतेयं महाभिषेकसामग्री काकतीयनरेश्वरा-[1]धिष्ठितं भद्रासनं भवदधिरोहणं प्रतीक्षते । तत् परिपालय स्वयंभूदे-[2]वानुगृहीतां महाराजस्याज्ञाम् ।

एतत् कार्यसंग्रहरूपमादानम्[3] ।

प्रताप०—तर्हि कुलदेवतां स्वयंभूदेवं नमस्कृत्य गुर्वाज्ञां[4] वोढुमि-च्छामि ।

पुरो०—सदृशोऽयमाचारः काकतीयकुलप्रदीपस्य भवतः । किं तु प्रत्यासीदति महाभिषेकसमयः । तदचिरेणैव [5]विहितकर्तव्येन राजपुत्रे-णागन्तव्यम् । वयमितः करणीयशेषं परिपालयामः ।

प्रताप०—[6]यथादिशन्ति काकतीयकुलप्रत्याययितारः[7] । ( इत्युत्थाय यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे )

[8]इति त्वरितमहोत्सवो नाम चतुर्थोऽङ्कः ।

---

राजपुत्रेति । भद्रासनमभिषेकोपयोगी पीठविशेषः । तदुक्तं वास्तुशास्त्रज्ञैः

'श्लक्ष्णं षडङ्गुलोत्सेधं षोडशाङ्गुलविस्तृतम् ।

द्वात्रिंशदङ्गुलायामं क्षीरदारुसमुद्भवम् ॥

पद्माङ्कितं भवेद् भद्रपीठं स्नपनकर्मणि ॥'

इति । एतत् सिंहासनमिति[10] वशिष्ठादयो व्यवहरन्ति ।

प्रत्याययितारो विश्वासयितारः स्वाधीनत्वसम्पादका वा । पक्षद्वयेऽपि ग्राह्यवाच इत्यर्थः । प्रतिपूर्वादिणो ण्यन्तात् तृच्प्रत्ययः । 'प्रत्ययोऽधीनशपथज्ञा-नविश्वासहेतुषु ' इत्यमरः । सर्वमन्यत् सुगमम् ।

इति नाटकप्रकरणे चतुर्थोऽङ्कः ।

---

१ °नरेश्वरकर्मा° P. २ °देवपरिगृहीताम् R. ३ °मादानम् P. ४ गुर्वाज्ञामेतुम् M. ५ M. drops विहितकर्तव्येन. ६ यदादिशन्ति P. ७ °प्रत्यायितारः P.; °कुलान्वयप्रत्यायि-यितारः T', M. ८ P. drops इति.; T'. adds नाटकप्रकरणे after it. ९ द्विदशाङ्गु° p. १० मित्यपि t, t.

तत: प्रविशन्ति ज्योतिर्विदः ।

ज्योतिर्विदः—(ससंभ्रमं परिक्रम्य) भो भो त्वरध्वम् । कुत्र पुरोधसः कुत्र वा मन्त्रिणः । समानीयतां स्वयंभूदेवसमाराधनासक्तचित्ततया विलम्बमानो राजपुत्रः । येन प्रत्यासन्नतरो वर्तते महाभिषेकमुहूर्त्तः ।

एतदुत्तराङ्कस्य पूर्वाङ्कार्थानुसंगतत्वादङ्कावतरणम् ।

(सविमर्शाश्चर्यम्) अहो विश्वातिशायिनी काकतीयकुलप्रतिष्ठा । यतः

> आदेष्टा कुलदेवता स भगवान् यस्य स्वयंभूः शिवो
> यं सज्जीकुरुते पराक्रमजितः क्षोणीपतीनां गणः ।
> यस्मै च स्पृहयत्यशेषजगती तं वीररुद्राकृते-
> र्विष्णोर्वीक्ष्य महाभिषेचनविधिं नन्दन्ति सर्वे जनाः ॥ १ ॥

एष स्वयंभूदेवोपदेशनरेश्वरविजयप्रमुखसंध्यादिबीजार्थानां महाप्रयोजनीभूतमहाभिषेकार्थतया योजनान्निर्वहणसंधिः ।

नूनमिदानीं

> स्वप्नेऽप्यासूत्रितामाज्ञां पालयन्तं कुलोद्वहम् ।
> न मान्त्यन्तर्मुदः शंभोर्विभोरप्यभिनन्दतः ॥ २ ॥

एष मुखसंधौ प्रसिद्धस्य स्वप्नोपदेशरूपस्य बीजस्योपगमसनात् संधिः ।

---

तत इति । ज्योतिर्विदो मौहूर्तिकाः । अत्र पूर्वाङ्कवर्तिभिर्मौहूर्त्तिकैरसूचितैरेवात्रानुप्रविष्टैरभिहितस्याङ्कार्थस्य पूर्वाङ्कार्थानुगतत्वादङ्कावतरणमित्याह । एतदुत्तरेति । आदेष्टेति । अत्र बीजयुक्तानां मुखसंध्याद्यर्थानां परमप्रयोजनसंबन्धलाभात् निर्वहणसंधिरित्याह । एष इति ।

स्वप्न इति । आसूत्रितां सूचितामप्याज्ञां पालयन्तमभिनन्दतोऽनुमोदमानस्य शंभोर्विभोर्व्यापकस्यान्तर्मुदो न मान्ति । अप्रमेयो विचित्रो हर्षोऽभूदित्यर्थः । संध्याख्यमङ्गं योजयति । एष इति । उपगमाद् पुनरुपगमनादित्यर्थः ।

---

१ P. drops चित्त. २ पूर्वाङ्कानुसंगत° P.; पूर्वार्थानुसंगत° M.; पूर्वार्थानुगत° M,; पूर्वाङ्कार्थसंगत° B. ३ देवनरेश्वर° R. ४ °प्रमुखमुख° M,. ५ M. drops योजनात्. ६ (सोत्प्रास) यदिदानीम् P,, M,. ७ °प्यभिनन्दिनः M. ८ बीजस्योपगमात् P., R. ९ t, drops अत्र.

( [1]किंचिदुच्चैः )

कल्याणी सकलापि भूतसरणिः क्षेमप्रदा देवताः
स्नेहप्रस्रवनिर्भरा द्विजनुषामाशीर्गिरो जाग्रति।
आरूढाः पदमुन्नतं ग्रहगणाः श्रेयान् [2]मुहूर्त्तः शुभो
नक्षत्राणि [3]शिवंकराणि शुभदाश्चान्ये निमित्तोदयाः ॥ ३ ॥
[4]तद्वयमेव राजपुत्रानयनाय प्रयतिष्यामहे।

---

कल्याणीति। भूतसरणिः पृथिव्यादिभूतसमूहः। कल्याण्यप्राप्तविकारतया शुभशंसिनीत्यर्थः। श्रेयःप्रस्रवेण श्रेयःसंपादनेन निर्भराः द्विजनुषां [5]द्विजानामाशीर्गिरो जाग्रति नित्यं प्रवर्त्तन्त इत्यर्थः। ग्रहगणाः सूर्यादयः। उन्नतं पद[6]मुच्चसंज्ञं स्थानम्। तदुक्तं [7]वराहमिहिराचार्यैः।

'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः।'

इति। आरूढाः प्राप्ताः। एतत्फलमुक्तं वृद्धवासिष्ठसंहितायाम्।

'बलाद्दोषादिविवर्जितेऽह्नि
नराधिपानामभिषेक इष्टः।
मूलत्रिकोणस्वगृहोच्चमित्र-
गृहस्थितैर्वाथ तदंशसंस्थैः ॥
शुभे विलग्ने सततं [8]ग्रहेन्द्रा
दिशन्ति लक्ष्मीं विपुलां च कीर्त्तिम् ॥'

इति। मुहूर्त्तशब्देनात्र षड्वर्गरूपः कालविशेषो विवक्षितः। स च क्रूरसौम्यग्रहसंबन्धवशाद् द्विविधः। तदुक्तम्।

'लग्नमर्धं तृतीयांशो नवांशो द्वादशांशकः।
त्रिंशांशश्चेति षड्वर्गः क्रूरसौम्यवशाद् द्विधा ॥'

इति। तत्रायं सौम्य इत्याह। श्रेयानिति। शुभैः सौम्यग्रहैः श्रेयानतिप्रशस्त इत्यर्थः। तदपि तत्रैवोक्तम्।

'षड्वर्गो भवति सदा शुभखचरसमुद्भवः शुभदः।
पापसमुत्थस्त्वशुभस्तस्माद्ग्राह्यस्तु सौम्यषड्वर्गः ॥'

इति। नक्षत्राणि रोहिण्यादीनि रोहिण्याद्यन्यतमनक्षत्रमित्यर्थः। एकदा बहूनामसंभवात्। शिवंकराणि क्षेमंकराणि। यद्यपि 'मेघत्रिभयेषु क्रूराः' इत्यत्र

---

१ T' omits किंचिदुच्चैः. २ मुहूर्त्तः शुभैः M. ३ शुभंकराणि R. ४ तत्सत्वरमेव T'. ५ द्विजन्मनामा° $t_1$, $t_2$. ६ °मुच्चकं स्थानम् $t_1$, $t_2$. ७ वराहसंहितायाम् $t_2$. ८ ग्रहेशाः $t_2$.

एष प्रकृतकार्यमार्गणाद्विरोधः ।

( सत्वरं परिक्रम्य पुरोऽवलोक्य च सहर्षसंभ्रमम् ) नन्वागत एव प्रतापरुद्रः ।

विप्रैर्मङ्गलसूक्तपाठमुखरैरालोकशब्दोद्यतै-
भूपालैः करसंभृतोपकरणैरामैरमात्यात्मजैः ।
श्लाघ्यैर्वन्दिजनैर्दिगन्तविजयश्लाघासमुद्घोषणैः
स्त्रीवर्गैश्च यथोचितं परिवृतो नीराजनोद्योगिभिः ॥ ४ ॥

तद्वयं चास्थानमेव गत्वा समुचितमाचरिष्यामः ( इति परिक्रामन्ति )
( ततः प्रविशति यथानिर्दिष्टः प्रतापरुद्रो मन्त्रिणश्च । )

मन्त्रिणः—( सविनयमग्रतो भूत्वा ) काकतीयकुलतिलक इत इतः । इदं राज्यलक्ष्मीशुद्धान्तं प्रधानागारं प्रविशतु स्वामी । न विलम्बार्हा कुलदेवताया मनोरथाः ।

---

शिवंकरशब्दश्छन्दस्येव न भाषायामित्याह पद्मञ्जरीकारः तथापि 'क्षेमं करोऽरिष्टतातिः शिवतातिः शिवंकरः' इत्यमरकोशमूलोऽयं प्रयोग इत्यनुसंधेयम् । निमित्तोदयाः दिक्प्रसादादयः ।

विप्रैरिति । मङ्गलसूक्तानि 'कनिक्रदज्जनुषं' 'ममाग्ने वर्चो विहवेषु' इत्येवमादीनि । आलोकशब्दा जयजयेत्येवमादयः । 'आलोको बन्दिभाषणम्' इति विश्वः । भूपा अपि बन्दिभ्रमभूमयो बभूवुरिति भावः । उपकरणानि छत्रचामरादीनि । बन्दिजनाः 'बन्यभूभृद्गुणोत्कर्षश्रावकाः बन्दिनः स्मृताः' इत्युक्तलक्षणाः ।

शुद्धान्तप्रधानागारमन्तःपुरप्रधानगृहम् ।

---

१ कृतकार्य° P.; कृतकार्यानुमार्गणात् R. २ R. and M. omit च. ३ पवायं वीरभद्रः M. ४ °शब्दोदितैः R. ५ सर्वैर्बन्दि° M. ६ विजयैः R. ७ M. drops मन्त्रिणश्च. ८ गत्वा M. ९ °शुद्धान्तद्वारम् M. १० प्रधानम् R. ११ इत्यामाणकमूलोऽयं t., t₁.

एतत् पट्टबन्धरूपकार्यस्योपक्षेपणाद्ग्रथनम् ।

ज्योति०—( किंचिदुच्चैः ) भो भो कुलामात्याः

सन्नह्यध्वमुपाहरध्वमुचितद्रव्याण्युपार्ध्वं सुरान्
संप्राप्तः सुमुहूर्त्त एष विजयी कल्याणसंपत्खनिः ।
यस्मिन् प्राप्य महाभिषेकविभवं क्षोणीं प्रलीनाखिल-
क्ष्मापालां चिरमन्वशाद्गणपतिर्भूभृत्कुलग्रामणीः ॥ ५ ॥

एष ज्योतिर्विद्भिरनुभूतार्थख्यापनान्निर्णयः ।

परि०—[1]कहं पच्चासण्णे वि मुहुत्ते किं विलंबिअदि महामच्चेहिं ।

मन्त्रिणः—( उपसृत्य ) नाथ किं विस्मृता गुर्वाज्ञा नायमवसरो नरेश्वरविज्ञापनाकर्णनस्य । महास्थान्यामेवानुगृह्यन्ताममी ।

प्रताप०—शिरसि धृतैव खलु तातस्याज्ञा । किं तु नोपदिश्यते पुनरनन्तरकरणीयम् ।

---

पुरा खलु गणपतिमहाराजो यस्मिन् मुहूर्त्तेऽभिषेकमनुभूय समस्तां भुवमेकातपत्रां बुभुजे एतादृशोऽयं मुहूर्त्तः संप्राप्तः । अतोऽवधानेन देवताराधनादिकं कर्त्तव्यमित्याह । सन्नह्यध्वमिति । सन्नह्यध्वं मुहूर्त्ते सावधाना भवतेत्यर्थः । उचितद्रव्याणि तीर्थकलशादीनि । सुरानुपार्ध्वमर्चयध्वम् । अत्रेदं पित्रादीनामप्युपलक्षणम् । यथाह वृद्धवसिष्ठः ।

'आशिषो वाचनं कृत्वा पूजयेच्च सुरान् पितॄन् ।
आयुधानि च पट्टं च विप्रान् गन्धादिनार्चयेत् ॥ '

इति । अन्वशात् । शास्तेर्लङ् । अनुभूतार्थख्यापनादिति । अनुभूतस्य दीक्षानुगुणस्यार्थस्य ख्यापनादित्यर्थः ।

---

छाया ।

1 कथं प्रत्यासन्नेऽपि मुहूर्त्ते किं विलम्ब्यते महामात्यैः ।

१ °कार्यस्य क्षेपणा° P.; °कार्यस्योत्क्षेपणा° M.; °कार्यप्रक्षेपणा° R. २ स्थाप्य R. ३ °निर्णीतार्थ° M. ४ °ज्ञापनात् P. ५ M. has पुनः before this as stage direction. ६ विलंबीअदि P. ७ किंचित् स्मृता P. ८ महास्थान्यामनु° $M_1$., P. ९ कृतैव M. १० P. drops खलु. ११ नायस्य $M_1$. १२ बुभोज t., $t_1$. १३ अनुभूतख्यापनादीति t., $t_1$.

एतत् प्रकृतानुगुण्येनान्योन्यपरिभाषणात् परिभाषणम् ।

पुरो०—( सविनयसंभ्रममुपसृत्य ) स्वीकृतमहाभिषेकवेषः कनकवेदिकामारोहतु प्रतापरुद्रः । देवं महाराजपर्यायेण भवद्भुजशिखरमारोहतु मेदिनी ।

प्रताप०—तथा भवतु ( इति वेदिकामारोहति )

नृपाः—( सप्रणामं मङ्गलवेदिकां परिवार्य ) विजयतां विजयतां काकतीयकुलस्वामी ।

एष नरेश्वरपर्युपासनात् प्रसादः ।

परि०—( विलोक्य सामोदकौतुकम् ) पुव्वपव्वअकणअसाणुं सहस्सरस्सि विअ सुमेरुकणअतडं महेंदो विअ पक्खिचक्कवट्टिणं चक्कधरो विअ कणअवेदिं आरूढो पआवरुद्दो ।

मन्त्रिणः—काकतीश्वर समारुह्यतां भद्रासनम् । अमी पुरोधसो महाभिषेकाय तीर्थसलिलपूर्णान् कनककलशान् धारयन्ति ।

प्रताप०—तथा भवतु ( इति स्वयंभूदेवं काकतीयकुलवृद्धांश्च प्रणमन् सिंहासने समुपविशति )

---

कथं प्रत्यासन्नेऽपि मुहूर्ते किं विलम्ब्यते महामात्यैः । पूर्वपर्वतकनकसानुं सहस्ररश्मिरिव सुमेरुकनकतटं महेन्द्र इव पक्षिचक्रवर्तिनं चक्रधर इव कनकवेदिकामारूढः प्रतापरुद्रः । त्रयीसमभिमन्त्रणसुरभीकृतसलिलान् वेदत्रयाभिमन्त्रितोदकानित्यर्थः । अभिषेकमुहूर्तसूचकं जयघण्टिकाध्वनिमाशीर्वादसाधुवादादिरूपतया संभावयति । प्रतापेत्यादि ।

---

छाया ।

1 पूर्वपर्वतकनकसानुं सहस्ररश्मिरिव सुमेरुकनकतटं महेन्द्र इव पक्षिचक्रवर्तिनं चक्रधर इव कनकवेदिमारूढः प्रतापरुद्रः ।

१ °गुणेन M. २ °कथनात् M. ३ °महाभिषेकोचितवेषः R. ४ रुद्रः R.; रुद्रदेवः M. ५ देव &c., is given in P. as the speech of नृपाः. ६ °पर्यायस्य M. ७ तद्भुज° M. ८ °मधिरोहतु P. ९ R. gives विजयताम् once. १० समोद° M. ११ °पव्वद° M. १२ °कडअ° P. १३ व्व P. १४ कणिअ M. १५ महिंदो व्व P.; महन्दो विअ M. १६ पक्खि° P. १७ °वट्टिणं T'; वट्टणं M. १८ चक्कहरं° P. १९ °पूर्णकनक° P., R. २० R. and M drop कुल.

पुरो०—( त्रयीसमभिमन्त्रणसुरभीकृतसलिलान् कनककलशानमात्यहस्तेष्वपि निधाय सादरम् )

प्रतापरुद्रनृपते काकतीयकुलोचितैः ।
प्रजानुरञ्जनैः क्षोणीं पालयाचन्द्रतारकम् ॥ ६ ॥

( इत्याशीर्वादसाधुवादायमानं पाणिग्रहणकौतुकत्वरमाणमहाराज्यलक्ष्मीमञ्जीरशिञ्जितानुमोदितं स्वयंभूदेवप्रमोदाट्टहासोपबृंहितं काकतीयकुलश्रेयःप्रस्तावनाडिण्डिमं चिरावलम्बितधरणीभारखिन्नानां फणिपतिप्रभृतीनां प्रहर्षक्ष्वेडाविडम्बनं धर्मप्रतिष्ठामङ्गलकाहलीकोलाहलमनोहरं महाभिषेकमुहूर्तप्रशंसिनं कनकजयघण्टिकानिनादमनुसन्दधानाः सत्वरं प्रतापरुद्रमभिषिञ्चन्ति )

एष वाञ्छितार्थप्राप्तिरानन्दः ।

एकतो वैतालिकाः—( सहर्षातिशयमुच्चैः )

हे लोकाः पिबत श्रवःप्रसृतिभिः कल्याणवार्तामृतं
जातः काकतिवीररुद्रनृपते राज्याभिषेकोत्सवः ।
अद्यारभ्य कलिः कृतः कृतयुगं राजन्वती मेदिनी
देवाः पूर्णहविर्भुजस्तदधुना यूयं कृतार्थीकृताः ॥ ७ ॥

---

अथ विश्वातिशायिमहिम्नो वीररुद्रस्य राज्याभिषेकमहोत्सवो विश्वप्रियंकर इत्याह । एकत इति । एकतः पुरत इत्यर्थः । श्रवःप्रसृतिभिः श्रवणचुलुकैः । कलिः कृतयुगं कृतः परिपूर्णधर्मत्वादिति भावः । कुतः । राजन्वती सुराज्ञी । 'राजन्वान् सौराज्ये' इति निपातनात् साधुः । मेदिनीति 'राजा कालस्य कारणमिति भावः' । पूर्णहविर्भुज इति । 'यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः' इति विहितोनुष्ठानादिति भावः ।

---

१ मन्त्रेण P., $M_{1}$, $M_{4}$. २ °सलिलान् R. ३ °हस्तेषु P.; हस्तेष्वेव M. ४ P. drops महा. ५ °शिञ्जिता° P., R. ६ °तामोदितम् P. °तानुमोदितं M. ७ °प्रमादाट्ट° T'.; °प्रमोदोपबृंहितम् M. ८ M. drops पति. ९ विडम्बिनम् M.; °विडम्बितम् T'. १० R. and M. drop कोलाहल. ११ श्रवप्र° P., M. १२ प्रभृतिभिः P., R. १३ कृतयुगो M. १४ कृतयुगः t., $t_{1}$. १५ विविधानुष्ठाना° t., $t_{1}$.

अन्यतो वैतालिकाः—

आरूढे वैरवीररुद्रनृपतौ सिंहासनं शासितुं
तस्याज्ञा क्षितिपालमौलिवलभीः स्वच्छन्दमारोहति ।
लोकांस्त्रीनधिरोहतो निरवधी कीर्त्तिप्रतापौ हठा-
दारोहन्ति च विन्ध्यभूधरतटान् प्रत्यर्थिनः पार्थिवाः ॥ ८ ॥

दक्षिणतो वैता॰—

गायन्तीरनुमोदते निजवधूः शेषः शिरःकम्पनै-
र्लक्ष्मीं प्रीणयतेऽथ कच्छपपतिर्वक्षस्थलीदर्शनात् ।
दिङ्नागाश्च करेणुकाशुचमपाकुर्वन्त्यनुव्रज्यया
दोष्णा काकतिवीररुद्रनृपतौ विश्वंभरां बिभ्रति ॥ ९ ॥

उत्तरतो वैतालिकाः—

प्रत्येभ्यः कुलभूभृतामपि हरिर्दन्तावलानां महा-
कुम्भेभ्योऽपि फणाभृतामधिपतेर्मूर्ध्नां सहस्रादपि ।
कूर्मेन्द्रस्य च कर्परादपि जगद्विख्यातसारोन्नतौ
बाहौ संप्रति वीररुद्रनृपतेः प्राप्तप्रतिष्ठा मही ॥ १० ॥

एष सर्वदुःखशमनात् समयः ।

---

अन्यत इति । पश्चादित्यर्थः । आरूढ इति । स्वच्छन्दमनर्गलम् । अनेनास्य राज्ञः प्रभुशक्तिरुक्ता । तदुक्तं मानसोल्लासे ।

'आज्ञारूपेण या शक्तिः सर्वेषां मूर्धनि स्थिता ।
प्रभुशक्तिर्हि सा ज्ञेया प्रभावमहितोदया ॥'

इति । निरवधीति । सूर्याचन्द्रमसोः सीमाचल इव कीर्तिप्रतापयोरवधिभूतः कोऽपि नास्तीत्यर्थः । हठशब्दो व्याख्यातः । वीररुद्रे सिंहासनमेकमारूढे सति तदाज्ञायास्तत्कीर्तिप्रतापयोस्तत्परिपन्थिनां च ततोऽप्युन्नतानि बहून्यारोहणस्थानानि बभूवुरिति महदेतदद्भुतमिति भावः ।

गायन्तीरिति । व्याख्यातमेतत् ।

---

१ सति M. २ शासितुमस्तस्या॰ P., M. ३ वलभिस्वच्छन्द॰ M. ४ ॰रनुमोदताम् R. ५ लक्ष्मीमथ विनोद्य R. ६ ॰दन्तावलीनाम् R. ७ कूर्परा॰ P. ८ ॰प्रतिष्ठाम् R. ९ M. drops सर्व. १० t. and $t_{,,}$ have before this न कश्चिदस्यविशेषो नृपतिरस्तीति भावः ।

मन्त्रिणः—अहो प्रभावः काकतीयान्वयस्य । यदिदानीं

प्रतापरुद्रस्य महाभिषेक-

पयःकणा ये निपतन्ति राज्ञाम् ।

प्रणामनम्रेषु शिरःसु तेषां

तैः कल्पितः स्वस्वपदाभिषेकः ॥ ११ ॥

पुरो॰—काकतीयकुलोत्तंस राज्यलक्ष्मीसंवरणस्रग्गियमुत्तंसीक्रियताम् ( इति पट्टबन्धमाचरन्ति )

सर्वे—( संप्रमोदातिशयम् ) प्रियं नः प्रियं नः ।

एषा प्रकृतकार्यस्थिरीकरणात् कृतिः ।

मन्त्रिणः—( सर्वतोऽवलोक्य ) कः कोऽत्र भोः । आनीयतां छत्रं चामरयुगलं च ।

( प्रविश्य प्रधानप्रतीहारः )

प्रती॰—यदाज्ञापयन्ति महामात्याः ( इति परिक्रम्य तान्युपानयन्ति । प्रान्तवर्त्तिनो नरपतयोऽभ्येत्य तानि सादरं गृहीत्वा यथोचितमाचरन्ति )

---

प्रस्थेभ्य इति । प्रस्थेभ्यः सानुभ्यः । कर्परात् पृष्ठास्थिकपालात् ।

प्रतापेति । शरणागता महीपतयः महाभिषेकसमये स्वस्वपदेषु स्थापिता इति भावः ।

उत्तंसीक्रियतां शिरोभूषणं क्रियताम् ।

'शुक्लमाल्याम्बरभृतः प्राङ्मुखस्य महीपतेः ।
पट्टं शिरसि बध्नीयात् सिंहासनगतस्य च ॥'

इति वसिष्ठस्मरणात् । पट्टस्तु ।

'राज्ञां नेत्राङ्गुलायामो मध्येऽष्टाङ्गुलविस्तृतः ।
चतुरङ्गुलविस्तारपार्श्वः स्वर्णमयः शुभः ॥
पट्टः पञ्चशिखो राज्यप्रजासौख्यसमृद्धये ।'

इत्याद्युक्तलक्षणो द्रष्टव्यः ।

कस्क इति । स्वन्तस्य किमो वीप्सायां द्विर्वचनम् । कस्कादित्वात् सत्वम् ।

---

१ कल्पिताः R. २ °पदाभिषेकाः R. ३ °वरण° P.; °स्वयंवरण° M. ४ °मुत्तंसीयताम् R. ५ °माचयन्ति R. ६ प्रमोदातिशयम् P. ७ R. gives प्रियं नः once. ८ तान्युपानयति P. ९ प्राङ्मुखस्तु P. १० नृपाङ्गु° t., $t_{r}$. ११ कर्णमयः t., $t_{r}$.

पुरो०—( सहर्षातिशयम् )

श्रूयन्ते बहवो महानृपतयः किं तैरनीदृक्क्रमै-
रीदृग्विश्वजनीनशौर्यगरिमा[1] जागर्त्ति कः क्ष्मातले ।
बाल्यक्रीडितदिग्जयस्त्रिभुवन[2]क्षेमंकरप्रक्रियः
किंकुर्वाणसमस्तभूपतिगणः श्रीवीररुद्रो यथा ॥ २ ॥

एतदखिलातिशायित्व[3]मुखेन प्रकृतकार्यानुमोदनादाभाषणम् ।

तदिदानीं खलु[4]

यत् काकतीयनृपराज्यविलासचिह्नं
यच्छायया वसुमती विजहाति तापम् ।
छत्रेण तेन कृतलक्ष्मणि वीररुद्रे
मुक्तातपत्रविभवाः सुहृदो द्विषश्च ॥ १२ ॥

---

श्रूयन्त इति । महानृपतयो नलनहुषादयः । ईदृक्क्रमो वीररुद्रसदृशप-रिपाटी तद्रहितैरनीदृक्क्रमैः । तत् कथमित्याशङ्क्य वीररुद्रे विशेषमाह । ईदृ-ग्गिति । विश्वस्मै जनाय हितो विश्वजनीनः शौर्यगरिमा यस्य स तथोक्तः नीति-पुरस्कृतपराक्रम इत्यर्थः । शौर्यगरिमाणमाह । बाल्येति । त्रिभुवनक्षेमंकरप्र-क्रियः सम्यक्परिपालनेन प्रजाहितस्वभाव इत्यर्थः । यथाह मनुः ।

‘ संग्रामेष्वनिवर्त्तित्वं प्रजानां चैव पालनम् ।
शुश्रूषा ब्राह्मणानां च राज्ञां श्रेयस्करं परम् ॥ ’

इति । न केवलं पराक्रमेण किं तु सामादिभिरपि त्रिभिरुपायैः सर्वोऽपि राज-लोको वशीकृत इत्याह । किंकुर्वाणेति । तदुक्तम् ।

‘ एवं विजयमानस्य यस्य स्युः परिपन्थिनः ।
तानानयेद्वशे सर्वान् सामादिभिरुपक्रमैः ॥ ’

इति ।

छत्रधारणं विशिनष्टि यदिति । यत् काकतीयकुलक्रमागतमित्यर्थः । यच्छा-ययेति । दुष्टनिग्रहशिष्टप्रतिष्ठापनयोरुपलक्षणम् । तेन सुहृदो मुक्तातपत्रविभवाः द्विषस्तु त्यक्तातपत्राश्चेत्युभयोपपादनम् ।

---

१ °महिमा M. २ °जयत्रिभुवन° T'. ३ एतत्सर्वातिशायित्व° M. ४ p. omits खलु.

एष राज्यप्राप्तिहेतुभूतच्छत्रारोपणरूपकार्यदर्शनात् पूर्वभावः ।

मन्त्रिणः—( सविनयमुपसृत्य ) नाथ काकतीयलक्ष्मीपते सनाथाः सर्वाः प्रकृतयः सुराजानं त्वां दिदृक्षन्ते । तत् सांप्रतं महास्थानीं प्रसाधयतु देवः ।

पुरो०—आचारोऽयं काकतीश्वराणां यन्महाभिषेकानन्तरं प्रजानां योगक्षेमपरीक्षणम् ।

राजा—यदाज्ञापयन्ति धर्मविदः ( इत्युत्तिष्ठति )

काकतीयकुलवृद्धाः—( ससंभ्रममुच्चैः )

> प्रक्रान्तमुर्वीपतिमौलिरत्नैः
> कुर्वन्तु नीराजनमम्बुजाक्ष्यः ।
> प्रतापरुद्रस्य जगत्प्रदीप-
> प्रतापनीराजितदिङ्मुखस्य ॥ १४ ॥

नृपतयः ( शिरस्यञ्जलिं बद्ध्वा ) अहो चरितार्था सांप्रतमास्माकी चक्षुष्मत्ता यया खल्वीदृगनुभूयते । यतः

---

नाथेति । सुराजानमिति । 'न पूजनात्' इति न समासान्तः ।

आचार इति । अलब्धलाभो योगः । लब्धपरिपालनं क्षेमः । तयोः । परीक्षणं विचारः ।

अभिषेकानन्तरकर्तव्यं नीराजनमाह । काकतीयकुलवृद्धा इति । अम्बुजाक्षीविशेषणमेतत् । उच्चैरुन्नतम् । 'अधः प्रवर्तयेद्रूपं दीपमूर्ध्वं प्रवर्तयेत्' इति वचनादिति भावः । उर्वीश्वरमौलिरत्नैः प्रक्रान्तमिति । राज्ञां प्रणामानन्तरमित्यर्थः । प्रताप एव प्रदीपः तेन नीराजितानि दिङ्मुखानि येन तथोक्तस्य अत एव तत्फलं नीराजनमिहैवानुभूयते इति भावः ।

---

१ °च्छत्रोपकरण° R, M. २ °कार्यरूपदर्शनात् M. ३ काकतीयेश्वराणाम् M. ४ परिरक्षणम् T. ५ इत्युपतिष्ठति R. ६ P. omits कुल. ७ °मुर्वीश्वर° R. ८ °मम्बुजाक्षाः R. ९ जगत्प्रतिष्ठ M.; P. has जगत्प्रतापप्रदीप°. १० P. has शिरस्यञ्जलिम्. ११ निबध्य M. १२ खल्विपमनु° M.

नीराजयन्त्यन्ध्रपुरीरमण्यः
प्रदीपजालैश्चलमर्तिगण्डम् ।
चन्द्राननाः गोत्रपतिं रजन्य-
स्तारागणैर्मेरुमिव स्फुरद्भिः ॥ १५ ॥

सर्वे जयशब्दं कुर्वन्ति ।

मन्त्रिणः—महाराज काकतीश्वर सज्जीकृतं सिंहासनं सर्वतः परिष्कृतमिदं महास्थानमण्डपं सनाथीक्रियताम् ।

प्रती०—( ससंभ्रमं पुरोभूत्वा ) देव इत इतः ।

( राजा सगौरवं परिक्रम्य महास्थान्यां सिंहासनमारोहति । सर्वे प्रणम्य यथार्हमुपविशन्ति )

प्रती०—( समयोचितं परिक्रम्य साभिमानं मूर्धाभिषिक्तान् कनकवेत्रलतया निर्दिशन् )

कालिङ्गात्र निषीद कोङ्कणपते दूरे भवाङ्गेश्वर
प्रान्तं संश्रय मालवेन्द्र शनकैः स्वोपायनं प्रापय ।
पाण्ड्याग्रे भव सेवणक्षितिपते पश्चाद्भवाद्यैव वः
स्वामी संप्रति वीररुद्रनृपतिः सर्वान् कैमादीक्षते ॥ १६ ॥

---

अस्माकमियमास्माकी । 'युष्मदस्मदोः' इत्यण्प्रत्यये 'तस्मिन्नणि च' इत्यस्माकादेशः । चन्द्राननाः चन्द्रसदृशाननाः । अन्यत्र चन्द्र एवाननं यासां तास्तथोक्ताः । गोत्रस्य कुलस्य पतिम् । अन्यत्र गोत्राणां पर्वतानां पतिम् ।

परिष्कृतं विचित्रवितानसुवर्णकलशादिना भूषितम् । सिंहासनलक्षणं मानसोल्लासे ।

'रुचिरेण सुवर्णेन निर्मितं रत्नराजितम् ।
अष्टभिः स्फाटिकैः सिंहैर्मूर्ध्नि तत् सुविराजितम् ॥
अधः काञ्चनविन्यस्तरत्नवेदित्रयान्वितम् ।
आस्थानमण्डपे राज्ञां सिंहासनमिदं परम् ॥' इति ।

---

१ °पुरो रमण्यः R. २ P. has प्रवालजालैर्वरवीररुद्रम्. ३ °वरवीररुद्रम् M,. ४ रजन्या तारा° P. ५ काकतीयेश्वर B. ६ °कृतमिदा° R. ७ R. has इतः once. ८ पश्चात्कमुप° R. ९ मूर्धाभिषिक्तान् साभिमानम् T'. १० पश्चाद्भवाद्येव वः M. ११ स्वामी काकतिवीररुद्र° R., M. १२ क्रमादीक्षते R., M.

नृपतयः प्रणम्य यथार्हमुपविशन्ति ।

पुरो०—स्वस्ति काकतीयकुलावतीर्णाय सुपर्णकेतनाय महामहिम्ने । अद्य सुप्रजसा काकतीयान्वयेन सनाथानि त्रीण्यपि जगन्ति ।

> शासितर्यविनीतानां नरेन्द्र त्वयि शासति ।
> मध्यस्थतास्य लोकस्य चिरेणान्वर्थतां गता ॥ १७ ॥

राजा—( सविनयम् ) स्वयंभूदेवं भोगाकुलानां भवदाशीर्वादानां फलमिदं काकतीयकुलं यद्वर्द्धते ।

मन्त्रिणः—राजन् प्रतापरुद्र

> पूर्वेषां काकतीयानां भागधेयविभूतयः ।
> एवंरूपा विवर्त्तन्ते यत्कुलालम्बनं भवान् ॥ १८ ॥

पुरो०—न केवलं काकतीयानामेव पुण्यपरिपाकः अपि तु सर्वासामपि प्रजानाम् ।

( प्रविश्य प्रतीहारः )

प्रती०—देव सर्वाः प्रकृतयो वर्णवृद्धान् पुरस्कृत्य प्रतीहारमध्यासते ।

मन्त्रिणः—शीघ्रं प्रवेशयन्ताम् ।

---

सौवर्णकेतनाय महिम्ने गरुडध्वजावतारायेत्यर्थः । सुप्रजसा शोभनसंतानेन । 'नित्यमसिच् प्रजामेधयोः' इत्यसिच्प्रत्ययः । शासितरीति । अविनीतानां दुष्टानां मित्राणाममित्राणां चेति भावः । अत एवेयन्तं कालं स्वर्गपातालमध्यवर्तित्वेन मध्यस्थस्य मध्यमलोकस्य । संप्रति पक्षपातराहित्येन माध्यस्थ्यमित्यन्वर्थतामित्यर्थः ।

सर्वेषामिति । भागधेयविभूतयो भाग्यसंपदः । एवंरूपाः वीररुद्ररूपाः । विवर्त्तन्ते परिणमन्ति ।

---

१ सौपर्ण° T'; सौवर्ण° M. २ राजाति M. ३ °देवानुकूलानाम् R.; °देवपरानुकूलानाम् T'. ४ यत्काकतीयमतिशयितं वर्द्धते T'; काकतीयपक्षेत्रं वर्धते R.; यत्काकतीयक्षात्रं वर्धते M.; काकतीयक्षात्रं यद्वर्धते M. ५ सर्वेषां R.; P. ६ निवर्त्तन्ते R. ७ सर्वासां प्रजानामपि P. ८ प्रविशन्ताम् R.

प्रती०—यदाज्ञापयन्त्यमात्याः ( इति निष्क्रम्य ताभिः सह प्रविशति )

( ततः प्रविशन्ति वर्णवृद्धाः । )

वर्णवृद्धाः—( सहर्षं राजानमवलोक्य )

वरः प्रतापरुद्रोऽयं वधूरेषा वसुंधरा ।
तयोर्घटयिता देवः स्वयंभूः सदृशक्रमः ॥

एष स्वयंभूस्स्वयंसंधातृत्वादद्भुतमाश्लेरूपगूहनम् ।

( सविनयमुपसृत्य ) स्वामिन् विश्वंभरावल्लभ प्रतापरुद्र

सर्वाशीःफलविक्रियैकवसतेः किं वा तवाशास्महे
यद्वा विश्वविभौ स्वयंभुवि शिवे नस्तन्वतामाशिषः ।
किं चित्रं स विभुर्भवानपि समौ गौरीश्रियोर्वल्लभा-
वाचन्द्रार्कमिमां क्षमां कृतयशोरक्षौ युवां रक्षतम् ॥

मन्त्रिणः—स्वामिन्नेते स्वायंभुवाः सुधियः ।

( राजा सादरं प्रणमति )

---

वर इति । अत्र वसुन्धरावीररुद्रयोर्वधूवरयोः स्वयंभूदेवः स्वयमेव संधातेति अनुरूपघटनाद्भुतमिति भावः ।

अथ स्वयंभूदेवे विदुषामाशीर्वादमाह । स्वामिन्निति । सर्वाशीःफलाना-मैश्वर्यादीनां विश्रमेण संकोचेनैकवसते मुख्याधारस्य सर्वाणि श्रेयांसि प्राप्तव-तस्तवाशास्यं नास्तीत्यर्थः । तथाप्यवाप्तसमस्तकामे स्वयंभुवि शिवेऽपि देवत्वान-न्तभोगोऽस्त्वित्येवमाशिषः प्रयुञ्जानानामस्माकं तादृशे त्वय्यपि नैतदाश्चर्यमि-त्याह । यद्वेति । आशीर्वादप्रकारमाह । स विभुरिति ।

---

१ यथाज्ञा° M. २ पुनः प्रविशति P. ३ वर्णवृद्धाः प्रमाख M. ४ सदृशः क्रमः M. ५ स्वयंभूदेवस्य R., M. ६ विधातृ° P. ७ °प्राप्तिरूप° R., P. ८ 'विश्रमैक' T, M. ९ विश्वभुवि T. १० समौ M. ११ P. and R. have भुवम्. १२ त्वत्ताम् P. १३ सुरपः M.

अन्ये—( सहर्षातिशयमग्रतः स्थित्वा ) महाराज काकतीश्वर

यस्त्वद्गोत्रमहत्तरस्य जगतां त्रातुः स्वयंभूविभो-
स्तत्तादृक्चरिताद्भुतैर्महिमभिः स्वीयैर्द्वितीयोऽभवत् ।
देवोऽसौ गणपेश्वरः प्रतिकलं स्फारप्रसादोन्मुखो
नप्तुस्ते कुलमण्डनस्य महतीं पुष्णातु राज्यश्रियम् ॥ २१ ॥

पुरो०—राजन्नेते गाणपतीश्वराः सूरयः ।

( राजा सादरं नमस्करोति । )

अपरे—( सप्रश्रयप्रमोदम् ) स्वामिंस्त्रिलिङ्गदेशपरमेश्वर

यैर्देशस्त्रिभिरेष याति महतीं ख्यातिं त्रिलिङ्गाख्यया
येषां काकतिराजकीर्तिविभवैः कैलासशैलाः कृताः ।
ते देवाः प्रसरत्प्रसादमधुराः श्रीशैलकालेश्वर-
द्राक्षारामनिवासिनः प्रतिदिनं त्वच्छ्रेयसे जाग्रतु ॥ २२ ॥

---

पुरा खलु काकतीयानां पूर्वो गणपतिमहाराजो स्वनामाङ्कितं गणपेश्वरं नाम महेश्वरं प्रतिष्ठाप्य तस्य स्वकुलदेवतया स्वयंभूदेवेन समं नानाविधवैभवं विधाय तत्र विद्वांसो बहवः स्थापिताः तेषामाशीर्वादमाह । महाराजेति । यो गणपेश्वरस्तत्तादृक्चरितैरभिलषितप्रदानादिभिरद्भुतैः स्वीयमहिमभिः सामर्थ्यैस्त्वद्गोत्रमहत्तरस्य त्वत्कुलदेवतायाः स्वयंभूदेवस्य द्वितीयोऽभवत् । द्वावपि देवौ काकतिकुलयोगक्षेमधुरीणावित्यर्थः । असौ देवः । प्रतिकलं प्रतिक्षणम् । स्फारस्य प्रभूतस्य प्रसादस्योन्मुखः सन् राज्ञो देवस्य चाभेदोपचाराद्वीररुद्रस्य नप्तृत्वव्यवहारः । तस्य ते राज्यश्रियं पुष्णात्विति संबन्धः ।

अथ नगरवासिनां विदुषामाशीर्वादमाह । यैरिति । त्रयो लिङ्गरूपाः श्रीशैलनाथादयो देवा यस्मिन् देशे स त्रिलिङ्गोऽन्ध्रदेश इत्यर्थः । द्राक्षारामेति । तत्रत्यानामारामाणां तद्भूयिष्ठत्वादिति प्रौढोक्तिः । वस्तुतस्तु दक्षसंबन्धित्वाद् द्राक्षाराम इति तन्नाम । तदुक्तं स्कन्दपुराणे भीमेश्वरखण्डे ' दक्षस्यारामभूमित्वाद् द्राक्षारामोऽभिधीयते ' इति ।

---

१ सहर्षादर° R. २ P. drops महाराज. ३ प्रतिकलस्फार° T. ४ °मण्डलस्य R. ५ राज्यश्रिये R. ६ °तीश्वरसूरयः T. गाणपेश्वराः R. ७ M. drops देश. ८ प्रतिदिशम् R., M. ९ Dropped in p. १० Dropped in p. ११ °माशीर्वादप्रकार° t., t. १२ स्कान्द° t., t.

पुरो०—राजन्नेकशिलानगरवासिनो महाद्विजास्त एते ।

( राजा यथोचितं वन्दते )

मन्त्रिणः—साधीयान् श्रीमतो वन्दनक्रमः ( इति सर्वानुपवेशयन्ति )

पुरो०—( सोल्लासम् ) राजन्नेकशिलानगरीवल्लभ

साहस्रांशवमैन्दवं च महती ये द्वे कुले विश्रुते
ते जाते लघुनी गुणैर्विजयिनि श्रीकाकतीयान्वये ।
भूपालेषु भवत्प्रतापयशसोः पूर्णाङ्कचन्द्रश्रियोः
प्राप्यानुग्रहमूर्जितेषु पुनरप्येते लभेते स्थितिम् ॥ २३ ॥

( राजा सर्वान् पश्यति ) ( पुरोहिता यथार्हं सर्वानुपवेशयन्ति )

प्रकृतयः—विजयतां विजयतां प्रतापरुद्रमहाराजः ।

भूपाः सन्तु चिराय संश्रृणुमहे भास्वत्कुलालंकृती
रामोऽयं न जगाम लोचनपथं तेनैव खिन्ना वयम् ।
अद्य त्वां वर वीररुद्रनृपते तस्यावतारान्तरं
वीक्ष्यैवं चरितार्थतां सुमहतीमह्नाय गाहामहे ॥ २४ ॥

---

साहस्रेति । निर्मिते ब्रह्मणेति शेषः । लघुनी जाते निःसारे अभूताम् । अधुना भवत्प्रतापयशसोः पूर्णांकचन्द्रश्रियोः सतोः भूपालेष्वनुग्रहं प्राप्य प्रबल-विरोधिजीवनस्य दुर्लभत्वं मत्वेति भावः । ऊर्जितेषु समृद्धेषु सत्सु । तत्सम-भिव्याहारादेते सोमसूर्यकुले पुनरपि स्थितिं प्रतिष्ठां लभेते । मदनुग्रहस्य किम-साध्यमिति भावः ।

भूपा इति । सन्तु नाम भूपाः किं तैरसर्वगुणाढ्यैरिति वाक्यशेषः । न चात्र-विप्रतिपत्तिरित्याह । चिराय संशृणुमहे इति । 'समो गम्यृच्छि—' इत्यादि-नात्मनेपदम् । सर्वगुणाढ्योऽपि रामो न लोचनगोचरं गत इति खेदो रामाव-तारस्य तव दर्शनान्निवृत्त इति धन्यतामनुभवाम इत्याह । भास्वदिति ।

अर्हणया पूजया ।

---

१ महाद्विजास्त्वेते T'. २ साधीयानार्यावंदनक्रमः R., T'. ३ पुरोधसः T'; मन्त्रिणः पुरोऽव-लोक्य M. ४ यथोचितम् R., M. ५ प्रतापरुद्रदेवमहा° M. ६ दीना M$_1$. ७ सुमहतीम° R., M. ८ °विरोधि t., t$_1$. ९ भूपाला इति t., t$_1$. १० भूपालाः t., t$_1$.

मन्त्रिणः—स्वामिन् सांप्रतं यथार्हमर्हणया माननीयाः पौराणां श्रेणयः ।

राजा—( सानन्दौदार्यम् )

जागर्त्तु राजशब्दोऽयं ममैवाज्ञाफलैकभूः ।
राज्योपभोगविभवः सर्वसाधारणो हि नः ॥ २५ ॥

सर्वे—( सप्रमोदम् ) सदृशोऽयं प्रसादः काकतीयकुलतिलकस्य भवतः ।

राजा—प्रसीदतु भगवान् स्वयंभूदेवः ( इति पुरोहितावर्जितकनककलशसलिलधारापुरःसरं सकलभोगसमग्रान् ग्रामान् सप्रश्रयादरसत्कारं विप्रसात् करोति । अन्येषामपि नगरवासिनां यथाप्रभावं संभावनामाचरति )

---

जागर्त्त्विति । आज्ञा प्रभुशक्तिः निग्रहानुग्रहादिसामर्थ्यमित्यर्थः । तत्फलस्यानुग्रहादेरेकभूर्मुख्यनिवासः राज्ञ एवाज्ञाश्रयत्वादिति भावः । तदुक्तं मानसोल्लासे

'अनुग्रहे निग्रहे च दाने चादानकर्मणि ।
प्रवृत्तौ च निवृत्तौ च ग्रहणे मोक्षणे तथा ॥
स्वयं समर्थो यः सोऽयं राजा साज्ञा निरर्गला ॥'

इति । एवशब्दो भिन्नक्रमः । ममायं राजशब्द एव जागर्त्त्विति संबन्धः । राज्ञः कर्म राज्यम् । पुरोहितादित्वाद्यत्प्रत्ययः । आज्ञामात्रमेव मे भूयादनुभवः पुनरस्माकं सर्वेषामिति वाक्यार्थः ।

अथ पृथिव्यादिदानमाह । राजेति । प्रसीदतु भगवानिति परमेश्वरप्रीणनार्थत्वाद्विमलं नाम चतुर्थमिदं दानमिति द्रष्टव्यम् । यथाह व्यासः

'ईश्वरप्रीणनार्थत्वात् ब्रह्मवित्सु प्रदीयते ।
चेतसा भक्तियुक्तेन दानं तद्विमलं शिवम् ॥'

इति । सलिलधारापुरःसरमित्यत्रापस्तम्बः 'सर्वाण्युदकपूर्वाणि दानानि' इति । सकलभोगेति । भोगोपकरणसमग्रानित्यर्थः । प्रश्रयो विनयः । आदरः सत्कारः । तत्सहितं सात्त्विकमित्यर्थः । तदुक्तं व्यासेन ।

---

१ T' drops सांप्रतम्. २ स्वयंभूनाथः T', M. ३ सर्वं° M. ४ °पुरःसरान P. ५ यथाप्रधानम् T; यथास्थानम् M. ६ एकशब्दो t. ७ t. and t, drop मे. ८ °प्रीणनार्थं यद्ब्रह्म° t., t,.

नृपतयः—( सामात्यानुरोधमुत्थाय महार्घाणि गजतुरगरथाभरणविशेषरूपाण्युपायनानि यथावकाशमुपनीय विरचिताञ्जलयः) स्वामिन् काकतीयमहाराज

त्रायस्वेत्यनुवाद एव भुवनत्राणैकबद्धव्रते
त्वद्भृत्या इति सिद्धसाधनमिदं विश्वैकनाथे त्वयि ।
त्वद्गर्भे वसतिं गताः स्म इति च स्पष्टार्थमंशे हरेः
कुक्षिस्थाखिलविष्टपस्य सदृशं किं वात्र विज्ञाप्यते ॥ २६ ॥

( राजा सप्रसादममात्यानवलोकयति )

मन्त्रिणः—राजन्नेते सोमार्कवंश्या नरपतयो महतीमर्हणामर्हन्ति तेन स्वेषु स्वेषु पदेषु प्रतिष्ठापनीयाः प्रस्थापनीयाश्च ।

राजा—तथा ( इति यथोचितं नरपतीन् संभाव्य प्रस्थानमादिशति )

( राजानः सहर्षातिशयं प्रणम्य काकतीश्वरकृपावलोकनानिर्वर्तितप्रयाणमङ्गला दिगन्तविहरणोद्यतया तदाज्ञया कृतसाहाय्या निष्क्रान्ताः )

प्रकृतयः—चिरमनुवर्त्तयितव्या काकतीयनरेश्वरपरिपालनपरिपाटी महाराजेन ( इति निष्क्रान्ताः )

---

'दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥'

इति । ग्रामान् विप्रसाद् ब्राह्मणाधीनान् करोति । 'देये त्रा च' इति सातिप्रत्ययः ॥

त्रायस्वेति । भुवनत्राणपरायणे त्वयि भुवनान्तःपातिनामस्माकं परित्राणप्रार्थनं पुनरुक्तमेवेत्यर्थः । त्वद्भृत्या इति । विश्वैकनाथे त्वयि विश्वान्तर्वर्तिनामस्माकं भृत्या इति वचनं चर्वितचर्वणमेवेत्यर्थः । त्वद्गर्भे इति स्पष्टार्थम् । व्युत्पन्नं प्रति स्फीतालोकमध्यवर्तिनः कलशस्य कलशोऽयमिति कथनवदिति भावः । सदृशमुचितम् ।

तदाज्ञया कृतसाहाय्या इति । तदाज्ञाकरा इत्यर्थः ।

---

१ °विशेषाण्युपायनानि R. २ °मंशो P. ३ °विष्टपस्य R. ४ नृपतीन् यथोचितं संभाव्य P., M. ५ °मङ्गलया R. ६ °साहाय्यका R. ७ °मनुमन्तव्या M., R. ८ काकतीश्वर° R. ९ P. drops परिपालन.

पुरो०—( साश्चर्यप्रत्यभिज्ञानम् )

> चिह्नान्यस्य पदाब्जयोः पिशुनयन्त्युर्वीश्वरोपास्यतां
> पाणी सूचयतः सचापकुलिशावुद्दाहलीलां भुवः ।
> नेत्रे शारदपुण्डरीकविशदे लीलावतारं हरे-
> राख्यातस्तदतीह सिद्धवचनं प्रत्यक्षमीक्षामहे ॥ २७ ॥

राजा—( सविनयव्रीडम् ) किमसाध्यं स्वयंभूदेवमूर्त्यन्तराणां भूदेवतानां भवतामनुग्रहस्य ।

पुरो०—( सादरम् ) महाराज काकतीश्वरकुलवासनावासितया भवदुपासनया परं प्रसेदिवान् परःसहस्रप्रदानप्रमोदोन्मुखः स्वयंभूनाथः किं ते भूयः प्रियमुपकरोतु ।

एषा वाक्यसमाप्तिरूपा संहृतिः ।

---

चिह्नानीति । पदाब्जयोश्चिह्नानि मांसलत्वादीनि । उर्वीश्वरोपास्यतां पिशुनयन्ति सूचयन्ति । तदुक्तं सोमेश्वरेण ।

> 'मांसलौ गूढगुल्फौ च कूर्मपृष्ठसमावपि ।
> भवेतां चरणौ यस्य स भवेत् पृथिवीपतिः ॥'

इति । पाणी सचापकुलिशौ धनुर्वज्ररेखासहिताविलर्थः । तदप्युक्तम् । 'चक्रासिचापवज्राभा रेखाः कुर्वन्ति भूपतिम् ।' इति । शारदपुण्डरीकरुचिनी नेत्रे पुण्डरीकाक्षावतारमाख्यातः कथयतः इति यत् पूर्वोक्तं सिद्धस्य कस्यचिदनागतविदः पुरुषस्य वचनमधुना प्रत्यक्षमीक्षामहे ।

काकतीश्वरकुलवासनया वासितया कुलधर्मत्वेन प्राप्तयेत्यर्थः । भवदुपासनया परं प्रसेदिवानतिप्रसन्नः । अत एव परे सहस्रात् परःसहस्राः । 'पञ्चमी—' इति योगविभागात् समासः । राजदन्तादित्वात् सहस्रशब्दस्य परनिपाते पार-

---

१ °रुचिनी R., M. २ °स्तदतीव P. ३ मानन्दम् R. ४ कुलवासनया परं प्रसे° R. ५ °प्रसादप्रदानोन्मुखः R.; T. omits प्रदान; °प्रमोदप्रसादोन्मुखः M.₁; °प्रसादनप्रदानोन्मुखः M.₂, M. has पुरो०—राजन् सविनयप्रसादोन्मुखः स्वयंभूनाथः किमपमतः परं प्रियमुपाहरतु. ६ °मुपहरतु R. ७ वाक्यार्थ° R. ८ सम्पूर्तिः. ९ °गुल्फौ I., I₂.

राजा—( सप्रणामादरम् ) काकतीयधुरायामवहितमेव स्वयंभूदेवेन।[1]

तथापीदमस्तु।[2]

> भूरस्तु संपन्नसमस्तसस्या
> भूदेवताः पूर्णमनोरथाश्च।
> भूपाश्च धर्मप्रवणैकचित्ताः
> सर्वे जनाः सन्तु निरामयाश्च॥

[4]एषा शुभशंसनरूपा प्रशस्तिः।

( इति निष्क्रान्ताः सर्वे )[5]

इति प्रतापरुद्रराज्याभिषेको नाम पञ्चमोऽङ्कः।

इति श्री[6]विद्यानाथकृतौ प्रतापरुद्रयशोभूषणे[7]ऽलंकारशास्त्रे नाटकप्रकरणं समाप्तम्।

---

स्करादित्वात् सुडागमः। तस्याविभक्तित्वात् विसर्जनीयाभावात् सत्वमेवेति दशटीकासर्वस्वकारः। 'परश्शताद्यास्ते येषां परा संख्याः शताधिकात्' इत्यमरः। तावतां प्रसादानामुन्मुखः स्वयंभूनाथः।

प्रशस्तिसंज्ञकं मङ्गलमाह। भूरस्त्विति। सर्वमन्यत् सुगमम्।

इति नाटकप्रकरणे पञ्चमोऽङ्कः।

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलचलमल्लिनाथसूरिसूनुना विश्वजनीनविद्यस्य विद्वन्मणेः पेद्दयार्यस्यानुजेन कुमारस्वामिसोमपीथिना विरचिते प्रतापरुद्रीयव्याख्याने रत्नापणाख्याने नाटकप्रकरणं[8] नाम तृतीयं प्रकरणम्[9]॥[10]

---

१ °राज्यधुरा° $M_1$; °राज्यधुरायामाहितमेव M. २ $M_1$ drops एव. ३ °मस्तु भरतवाक्यम् M. ४ P. has this before तथापीदमस्तु. ५ After this R. and M. have एवं साङ्गं नाटकमुदाहृतम्. ६ T' drops श्री. ७ मधणालंकारे B. ८ तृतीयम् R. ९ प्रकृतम् p. १० रूपकनिरूपणम् t., $t_1$.

## अथ रसप्रकरणम् ।

अथ सर्वेषां प्रबन्धानां जीवितभूतस्य रसस्य स्वरूपं निरूप्यते ।

**विभावानुभावसात्त्विकव्यभिचारिसामग्रीसमुल्लसितस्थायिभावो रसः ।**

तथा चोक्तं दशरूपके

' विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ।'

इति ।

---

दृश्यश्राव्यभेदेन द्विविधा अपि प्रबन्धा निरूपिताः । तेषामात्मभूतस्य रसस्य स्वरूपनिरूपणं प्रतिजानीते । अथेति । रससामान्यलक्षणमाह । विभावेति । वक्ष्यमाणलक्षणा विभावादय एव सामग्री तया सरसकाव्यसंगृहीतया निपुणनटप्रदर्शितया वा सामाजिकभाव्यमानया समुल्लासित आस्वाद्यमानो निर्भरानन्दः संविद्रूपतां नीयमानः सन्नित्यर्थः । तदुक्तं भावप्रकाशे ।

' प्रकाशानन्दचिद्रूपां रसतां प्रतिपद्यते ।
प्रकृष्यमाणो यो भावः स स्थायीति निगद्यते ॥'

इति । एवंविधः सामाजिकनिष्ठो रत्यादिस्थायिभावो रस्यते स्वाद्यत इति व्युत्पत्त्या रस इत्युच्यते । तदुक्तम् ।

' रसतेः स्वादनार्थत्वाद्रस्यन्त इति ते रसाः ।'

इति । उक्तार्थे वृद्धसंमतिमाह । विभावैरिति । व्यञ्जनादिसंबन्धादन्नस्येव विभावादिसमाश्रयणेन स्थायिभावस्यापि स्वादुत्वमित्यर्थः । तदुक्तम् ।

' व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत् ।
एवं नयन्ति रसतामितरे स्थायिनं श्रिताः ॥'

इति । अयं च रसोऽनुकार्ये रामादावुत्पन्नो रामाद्यभेदभावनया नटे प्रतीयत इत्युत्पत्तिवादिनो भट्टमल्लादयः । तादृशे नटे विभावादिभिरनुमितः सामाजिकैश्चर्व्यत इत्यनुमितिवादी श्रीशङ्कुकः । नटादिगतत्वपरिहारेण साधारणतयानुसंधीयमानः प्रकाशानन्दसंविद्रूपेण भोगापरनाम्ना भावकव्यापारेण भुज्यत इति भुक्तिवादी भट्टनायकः । वक्ष्यमाणप्रकारेण सामाजिकाश्रयोऽभिव्यज्यत इत्यभिनवगुप्तादयः । अयमेव पक्षो यथायोगं पक्षान्तरनिराकरणपूर्वकमुत्तरत्र सिद्धान्तीकरिष्यते ।

---

१ P. drops अथ रसप्रकरणम्. २ जीवभूतस्य $M_1$. ३ समुल्लासितः R. ४ °स्थायि° P. ५ °लक्षणविभावा° p. ६ एवंविधसामाजिक° t., $t_1$. ७ °स्थायी p. ८ भावव्यापारेण p.

**भावस्य स्थायित्वं नाम सजातीयविजातीयानभिभूततया यावद्नुभवमवस्थानम् ।**

अथ स्थायिभावस्य लक्षणमाह । भावस्येति । इदमत्रानुसंधेयम् । काव्येनाभिनयेन वा निवेद्यमानरामादिसुखदुःखाद्यनुभवजनितवासनारूपः संस्कारापरपर्यायः सामाजिकमनोविकारो भावः । तदुक्तम् ।

'सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्'

इति । तस्य भावकस्य भावश्चित्तं तस्य भावनं वासितत्वं तद्भावभावनम् । स तावद् द्विविधः । संनिहितो व्यवहितश्चेति । तत्राद्यः पटं प्रति तन्तुवद्रसं प्रति आकारमात्रव्यवहितः स्थायिभाव इत्युच्यते तस्य साक्षाद्रसभावप्रतिपादनात् । तदुक्तम् ।

'प्रकृष्यमाणो यो भावो रसतां प्रतिपद्यते ।
स एव भावः स्थायीति भरतादिभिरुच्यते ॥'

इति । द्वितीयस्तु कुविन्दादिवद्भावान्तरव्यवहितो विभावादिः । तस्य स्थायिद्वारा रसोल्लासकत्वसमर्थनात् । एतेन सामाजिकमनोविकारविशेषोपाधिको ब्रह्मानन्दसब्रह्मचारिणो रसस्य संनिहितपूर्वावस्थाविशेषः स्थायिभाव इति फलितम् । अत एवोक्तमभियुक्तैः । 'शृङ्गाराद्यनुभवयोग्यतया यदात्मनः सत्त्वं स भावः' इति । न च भेदमात्रशङ्काकलङ्करहितस्य निरुपाधिकस्य सन्मात्रस्यावस्थासंबन्धः कथमिति शङ्कनीयम् । गगनमध्यमध्यासीनस्य सुधानिधेरुदकाद्युपाधिसंबन्धनिबन्धनचाञ्चल्यादिवदुपपत्तेः । एवंविधस्य भावस्येत्यर्थः । कस्याचिन्नायिकायामनुरागस्य नायिकान्तरविषयानुरागः सजातीयः । अत्र बीभत्सादिर्विजातीयः । तैरनभिभूततयातिरस्कृतत्वेनाविरुद्धत्वेनेति यावत् । एतच्च बृहत्कथामालतीमाधवादौ द्रष्टव्यम् । यथा लवणोदः स्वानुप्रविष्टं मधुरमपि नादेयमुदकं लवणयत्येवमन्यानप्यात्मनैक्यं नयतः स्थायिभावस्य कुतस्तैः सह विरोधवर्तितेति भावः । तदुक्तम् ।

'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः ।
आत्मभावं नयत्यन्यान् स्थायीव लवणाकरः ॥'

इति । यावदनुभवमिति । संस्कारात्मनोऽस्य भावस्य संततं चिन्तादिवशेन

१ 'विजातीयरहिततया R. २ यावदनुभवावस्थानम् P. ३ संनिहितापूर्वावस्था' p. ४ न च वस्तुतो भेद' t. ५ t. drops अत्र. ६ विरोधवर्तितेति भावः t. ७ संस्कारात्मनास्य p. ८ संततचिन्ता' p.

तथा चोक्तं दशरूपके

'सजातीयैर्विजातीयैरतिरस्कृतमूर्त्तिमान् ।
यावद्रसं वर्त्तमानः स्थायीभाव उदाहृतः ॥'

अथ रसविशेषाः ।

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताश्च रसाः पूर्वैः प्रकीर्तिताः ॥

एषां स्थायिभावाः ।

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्साविस्मयशमाः स्थायिभावा नव क्रमात् ॥

---

प्रबोधादुत्पद्यमानो विजातीयप्रत्ययासंवलितः प्रियतमादिस्मृतिसंतानो विभावादिमहिम्ना यावत्तन्मयमिव करोति तावदवस्थानमित्यर्थः । तदुक्तम् ।

'अवस्थिताश्चिरं चित्ते संबन्धाद्यानुबन्धिभिः ।
वर्धिता ये रसात्मानस्ते स्मृताः स्थायिनो बुधैः ॥'

इति ।

'शृङ्गार एक एव रसः' इति शृङ्गारप्रकाशकारः । 'शान्तवर्जमष्टौ रसाः' इति धनिकादयः । 'शान्तवत्सलसहिता दश' इत्यन्ये । एवमादिविप्रतिपत्तिलब्धन्यूनाधिकसंख्यानिवारणाय रसविभागमाह । शृङ्गारेति । पूर्वैरभिनवगुप्ताचार्यादिभिः । अत्र चतुर्वर्गमध्ये सर्वप्राणिसुलभस्य कामस्य सर्वहृदयंगमत्वात् प्रथमं शृङ्गारः । ततस्तज्जन्यत्वेन हास्यः । ततस्तद्विरोधित्वात् करुणः । ततस्तन्निमित्तभूतोऽर्थप्रधानो रौद्रः । ततोऽर्थकामयोर्धर्ममूलत्वात् धर्मप्रधानो वीरः । तस्य भीताभयप्रदानसारत्वात्तदनन्तरं भयानकः । ततस्तत्कारणभूतो बीभत्सः । वीराक्षिप्तभयानकाद्यनन्तरं वीररसफलभूतोऽद्भुतः । त्रिवर्गफलकरसानन्तरं मोक्षफलकः शान्त इत्येवमुद्देशक्रमोपपत्तिः ।

---

१ तथोक्तम् R., M. तदुक्तम् M₁. २ R. has अथैते स्थायिभावाः । रतिर्हासश्च—स्थायिभावाः प्रकीर्तिताः । शृङ्गारहास्य°. ३ °करुणरौद्र° M. ४ पूर्वैरुदाहृताः P. ५ स्थायिभावा P. ६ स्थायीभावा P. ७ °रस° p. ८ °पक्ष° t. ९ शान्तरस p.

अथ विभावः[1] ।

विभावः कथ्यते तत्र रसोत्पादनकारणम्[2] ।
आलम्बनोद्दीपनात्मा स द्विधा परिकीर्त्यते ॥

रससमवायिकारणमालम्बनविभावः । इतरत्कारणजातमुद्दीपनविभावः । स[3] चतुर्विधः । तथा चोक्तं शृङ्गारतिलके ।

'आलम्बनगुणश्चैव तच्चेष्टा तदलंकृतिः ।
तटस्थश्चेति विज्ञेयश्चतुर्थोद्दीपनक्रमः[4] ॥
आलम्बनगुणो रूपयौवनादिरुदाहृतः ।
तच्चेष्टा यौवनोद्भूतहावभावादिका[5] मताः[6] ॥
नूपुराङ्गदहारादि तदलंकरणं मतम् ।
मलयानिलचन्द्राद्यास्तटस्थाः[7] परिकीर्तिताः ॥'[8]

अथानुभावः ।

कार्यभूतोऽनुभावः स्यात् कटाक्षादिः शरीरजः ।

---

अथ रससामग्र्यां विभावस्य विभागं दर्शयन् लक्षणमाह । विभाव इति । तत्र विभावादिचतुष्टयमध्य इत्यर्थः । तत्र रसशब्देनात्र लौकिको रत्यादिभावः ओदनं पचतीत्यादिवद् भाविनीं वृत्तिमाश्रित्य व्यवह्रियते । मुख्यरसस्योत्पत्त्यभावात् । एवमुत्तरत्रापि द्रष्टव्यम् । लोके नायकाद्यालम्बनकारणं विशिष्टदेशकालाद्युद्दीपनकारणं च काव्यनाटकव्यापारजनितेन भाव्यत ज्ञायत इति व्युत्पत्त्या लभ्यते । तदुक्तम् ।

'ज्ञायमानतया यत्र विभावो भावपोषकृत् ।'

इति । शिष्टमुदाहरणसमये स्पष्टं भविष्यति ।

अनुभावं लक्षयति । कार्येति । ननु कार्यत्वं नाम नियतोत्तरभावित्वं तच्चानुभावस्य किं रसापेक्षयोत स्थाय्यपेक्षया[9] । नाद्यः । विभावैरनुभावैश्चेति करणत्व-

---

१ M. drops विभावः. २ °कारकः P. ३ R. drops स चतुर्विधः. ४ °द्दीपनः क्रमात् M. ५ °हाव° M. ६ मता P. ७ °चन्द्रार्का° P. ८ इति विभाव इति L. ९ स्थायिभावा° L.

परगत[1]सु[2]खादुःखभा[3]वनया भा[4]वितान्तःक[5]रणं सत्त्वं ततो भवाः सात्त्विकाः ।

---

तीयया तस्य पूर्वभावित्वप्रतीतेः । नियतपूर्ववर्त्तित्वलक्षणकारणविशेषत्वात् करणस्य । न चात्र तृतीयायाः कर्त्रांद्यर्थान्तरं संभाव्यते । एवं चानुभावे सति रसो रसे सत्यनुभाव इत्यन्योन्याश्रयप्रसङ्गः स्यादिति । अत एव न द्वितीयः । न हि भावकमनोवस्थायिनः स्था[6]यिनः पूर्वभाविनां कामिनीकटाक्षभ्रूविक्षेपादीनां तत्कार्यत्वमिति । अतः स्थायित्वयोग्यस्य लौकिकस्य रत्यादेः कार्यभूतो योऽयं कटाक्षादिरभिनयादिद्वारा भावकमनःप्रतिबिम्बितः सहृदयहृदयास्थितं रत्यादिभावमनुभावयति सोऽनुभाव इत्युच्यत इत्यर्थः । तदुक्तम् ।

'भ्रूविक्षेपकटाक्षादिविकारो हृदयस्थितम् ।
भावं व्यनक्ति यः सोऽयमनुभाव इतीरितः ॥'

इति ।

अथ सात्त्विकानामपि कार्यभूतानां कटाक्षादिवत् भावसंसूचनात्मकत्वेनानुभावत्वे सिद्धेऽपि तेषां ब्राह्मणपरिव्राजकन्यायेन पृथगुपादानेऽसाधारणकारणमाह । परगतेति । अभिनयादिमुखेनान्यगतसुखदुःखादिभावनायामन्तःकरणस्यात्यन्तानुकूलत्वं सत्त्वमित्यर्थः । प्रत्ययार्थमाह । तत इति । सत्त्वेन निवृत्ता भावाः सात्त्विका इत्यर्थः । अनेनैवंविधेनैवान्तःकरणेन कटाक्षादयो भाव्यन्त इति तेषामनुभावतैव न सात्त्विकत्वमिति भावः । तदुक्तं भावप्रकाशे

'परस्य सुखदुःखादेरनुभावेन चेतसः ।
अत्यन्तेनानुकूल्येन येन तद्भावभावनम् ॥
तत् सत्त्वं तेन निर्वृत्ताः सात्त्विका इत्युदीरिताः ।
अनुभावत्वसामान्ये सत्यप्येषां पृथक्तया ॥
लक्षणं सत्त्वजत्वाद्धि ते च स्तम्भादयः स्मृताः ॥'

इति । अ[7]त्र तद्भावभावनं नाम तन्मयत्वेनावस्थानम् । तदुक्तम् ।

'रामाद्याश्रितदुःखादेरनुभूत[8]स्तदात्मनः ।
सामाजिकस्य मनसो भावस्तद्भावभावनम् ॥'

---

१ T' has अथ सात्त्विकभावाः before this. २ °सुखादि° P. ३ °भावना° P. ४ विभाविता° for भाविता° R. ५ °न्तःकरणत्वम् T'; M. ६ स्थायिभावात् t. ७ तत्र t. ८ °स्तदात्मना t.

स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू ।
अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥

---

इति । एवं च विभावादिदर्शनजन्या अनुरागनिर्वेदादिमनोवृत्तयो विभावादि-तन्मयीभवनरूपेण सत्त्वशब्दाभिधेयेन सामाजिकमनसोऽत्यन्तानुकूल्यजन्येनासाधारणकारणेनावस्थान्तरमापन्नाः स्तम्भादयो भावाः सात्त्विकभावा भवन्ति । ते च स्वकार्यभूतैरत एव सात्त्विकपदप्रतिपाद्यैर्बाह्यैर्जडैर्भौतिकैः शारीरैः स्तम्भादिभिरनुभावैः सूच्यन्ते । तथा च रतिनिर्वेदादिभावा एव सूचिता भवन्तीति फलितम् । तदुक्तमाचार्यहेमचन्द्रेण । 'बाह्यास्तु स्तम्भादयः शरीरधर्मा अनुभावास्ते चान्तरालिकान् भावान् गमयन्तः परमार्थतो रतिनिर्वेदादिगमका इति स्थितम्' इति । एवं च स्थायिसंचारिसहः एव जीवस्य मनोमयावस्थां प्राप्य कार्यकारणरूपेण द्विविधं बाह्यमान्तरं च सात्त्विकगणं संपादयतीति रहस्यम् ।

केचिदयं मनोमयवर्ती रत्यादिगणः पञ्चभूतात्मकान्नमयक्षोभकतया मनोमयतादात्म्यापन्नं सीदत्यस्मिन् मनोमय इति व्युत्पत्त्या सत्त्वगुणोत्कर्षात् साधुत्वाच्च सत्त्वशब्दाभिधेयं प्राणमयं प्रविष्टः सात्त्विकत्वमनुभवति । तत्र प्राणस्य भूभागानुग्रहे स्तम्भः जलभागानुग्रहे बाष्पः तीव्रतेजोनुग्रहे स्वेदः वैपरीत्ये वैवर्ण्यमाकाशानुग्रहे प्रलयः । अनिलानुग्रहस्य मन्दमध्यमोत्कृष्टतया त्रैविध्ये क्रमेण रोमाञ्चवेपथुवैस्वर्याणीति वदन्ति । केचित् भावान्तरनैरपेक्ष्येण रसापरोक्षीकरणत्वलक्षणो बलविशेषः सत्त्वं तज्जन्याः सात्त्विका इत्याहुः । अन्ये पुनरन्नमयप्राधान्येनाभिव्यक्तं च लक्षणसत्त्वजन्यत्वोपाधेः कटाक्षादिसाधारण्येऽपि पङ्कजादिवद् योगरूढत्वेन स्तम्भादय एव सात्त्विका इत्याहुः । केचित्तु कणादशास्त्रप्रसिद्ध्या द्रव्यादित्रयवाचकार्थशब्दवदलंकारशास्त्रप्रसिद्ध्या स्तम्भादिष्वेव सात्त्विकव्यवहार इति वर्णयन्ति । एवं प्राचामालंकारिकाणामनेकधा पारिप्लवं वर्तते । तद्यथा तथा वास्तु न तत्रास्माकमाग्रहः । किं तु स्तम्भादीनामनुभावान्तर्भावेऽपि केनचिद्विशेषेण पार्थक्यमित्येतदेवापश्यत इति । विशेषान्तराणि नरहरिसूरिविरचिते रसनिरूपणे द्रष्टव्यानि । विस्तारभीरुभिरस्माभिरुपरम्यते ।

---

१ °माभ्यन्तरं च t. २ °त्राम° t. ३ तस्य t. ४ °करणलक्षणो P. ५ °प्रसिद्धा P.
६ °त्येतदेवास्माभिरपेक्ष्यम् t.

अथ व्यभिचारिभावाः ।

निर्वेदग्लानिशङ्काख्यास्तथासूयामद[1]श्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृ[2]तिर्धृतिः ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥
सु[3]प्तिर्विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता[4] ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च[5] ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावा रसस्य सहकारिणः ॥

तथा चोक्तं काव्यप्रकाशे ।

'कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥
वि[6]भावाश्चानुभावाश्च कथ्यन्ते व्यभिचारिणः ॥'

इति ।

---

'विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः'

इत्युक्तदिशा व्यभिचारिशब्दव्युत्पत्त्यैव निर्वेदादीनां सामान्यलक्षणं सिद्धमिति मत्वा तेषां केवलं सामान्यतो विशेषतश्चोद्देशमाह । अथेति । रसस्य सहकारिण इति । कल्लोलाः सागरस्येव रत्यादेर्लौकिकस्य परिपोषकतया सहकारिणः सन्तो नाट्यादौ व्यभिचारिण इत्युच्यन्त इत्यर्थः । तदुक्तम् ।

'मज्जन्तश्च निमज्जन्तः कल्लोलास्ते यथार्णवे ।
तस्योत्कर्षं वितन्वन्ति यान्ति तद्रूपतामपि ॥
तथा स्थायिनि निर्मग्ना ह्युन्मग्ना व्यभिचारिणः ।
पुष्णन्ति स्थायिनं स्वांश्च तत्र यान्ति रसात्मताम् ॥'

इति । उक्तेऽर्थेऽभियुक्तसंवादमाह । कारणानीति । स्थायिनः स्थायित्वयोग्यस्येत्यर्थः । अनुभावा उभयेऽपि गृह्यन्ते । ननु चेष्टालक्षणोद्दीपनविभावानां

---

१ मदः श्रमः M. २ धृतिः स्मृतिः R. ३ स्वप्नप्रबोधौ R. ४ °ध्यवहित्था तथोग्रता M. ५ वा R. ६ विभावश्चानुभावश्च M.

लोके कार्यकारणसहकारिशब्दवाच्या नायिकानायककटाक्षभुजाक्षेपनिर्वेदादयः काव्यनाट्ययोस्तु विभावानुभावव्यभिचारिशब्दव्यप-

---

भावहावादीनां शृङ्गारकार्यतयानुभवत्वं प्रतीयते। कटाक्षभ्रूविक्षेपादीनामनुभावानामनुरागजनकत्वेन संभवत्येव विभावत्वम्। उक्तानामुभयेषां कल्लोलायमानतया रसपरिपोषणात् संचारितापि। समस्तसंचारिणामपि चिन्तादीनामनुरागकार्यत्वयानुभावत्वं। तद्दर्शनश्रवणाभ्यामनुरागातिशयजननाद्विभावत्वं चानुभूयते। तदुक्तं भावप्रकाशे।

'विभावोऽप्यनुभावः स्यादनुभावोऽपि भाववत्।
तौ पुनश्चारिणौ स्यातां ते च तौ स्युः परस्परम्॥'

इति। अत्र परस्परशब्देन संचारिणामेव मिथोऽनुभावत्वं चेत्यादि द्रष्टव्यम् अतः कथं पूर्वोक्ता विभावादिव्यवस्थेति चेत् सत्यम्। कस्याश्चिदनुरागव्यक्तेर्यानि कार्यकारणसहकारीणि तानि तां प्रति तथैव न किंचिदपि साङ्कर्यमस्ति। व्यक्त्यन्तरापेक्षया तस्या एवाकारभेदापेक्षया वान्यथाभावे को विरोधः। यथैकस्य पुत्रापेक्षया पितृत्वं पित्रपेक्षया पुत्रत्वं च व्यवतिष्ठते। अतो विभावादीनामपि प्रतियोगिभेदादिभिः कल्पिताकारान्तराणां सांकर्यशङ्कानवकाशाद्विभावादिरूपता नियतैवेति सिद्धम्। एवं च विभावादिसामग्रीसंकोचे सति रसाभासत्वमित्यनुसंधेयम्।

'ननून्मर्यादं प्रवृत्तेनाङ्गरसेन बाधितः प्रधानरसो रसाभासः। तदुक्तं रसार्णवे।

'अङ्गेनाङ्गी रसः स्वेच्छावृत्तिवर्द्धितसंपदा।
अमात्येनाविनीतेन स्वामीवाभासतां व्रजेत्॥'

इति। अङ्गरसस्य तृतीयांशानुप्रवेशो मर्यादोल्लङ्घनम्। तदुक्तं। भावप्रकाशे।

'भागद्वयं प्रविष्टस्य प्रधानस्यैकभागतः।
रसानां दृश्यते यत्र तत्स्यादाभासलक्षणम्॥'

इति। तत्र हास्यादिभूयिष्ठाः शृङ्गारादय आभासीभवन्ति। अत्रैतौ संग्रहश्लोकौ।

---

१ °वाच्यनायिका° M, २ ननून्मदमात्तेना° t.

देश्या भवन्ति । शृङ्गारवीररौद्राद्भुतानां लोकोत्तरनायकाश्रयत्वेन परिपोषातिशयः । अत एव शृङ्गारस्य म्लेच्छादिविषयत्वेनाभासत्वम् । तथा चोक्तम् ।

---

'हास्यो जुगुप्सा शृङ्गारहास्यौ शोकभयानकौ ।
भयानको रौद्रवीरौ तथा शृङ्गारविस्मयौ ॥
बीभत्सकरुणौ रौद्रशृङ्गारौ च यथाक्रमम् ।
शृङ्गारादीनाप्रविश्य रसाभासान् वितन्वते ॥'

इति । यद्यप्येवं नवानामपि रसानामाभासत्वं संभवति तथापि कंचिद्विशेषमभिव्यङ्क्तुमारभते । शृङ्गारेति । शान्तस्याप्युपलक्षणमेतत् । लोकोत्तरनायकाश्रयत्वेनेति । धीरोदात्तादिनायकोत्तमविषयत्वेनेत्यर्थः । अत एवोक्तं लोचने । 'धर्मयुद्धवीरप्रधानो धीरोदात्तः । वीररौद्रप्रधानो धीरोद्धतः । वीरशृङ्गारप्रधानो धीरललितः । दानधर्मवीरशान्तप्रधानो धीरशान्त इति चत्वारो नायकाः' इति । अत्र वीररससमानयोगक्षेमत्वादद्भुतोपादानम् । यदाह मुनिः ।

'वीरस्य चैव यत् कर्म सोऽद्भुतः परिकीर्तितः'

इति । विदग्धजनैकविषयो रसपरिपोषविशेष इति भावः ।

विपक्षे विरोधमाह । अत एवेति । इदमत्रानुसंधेयम् । यत्र विभावादिपरिपूर्तिस्तत्र मुख्यो रसः । तदुक्तं लोचने । 'रसस्तु स एव यो यत्र मुख्यतया विभावानुभावव्यभिचारिसंयोजनोचितस्थायिप्रतिपत्तिकस्य प्रतिपत्तुः स्थाय्यंशे चर्वणप्रयुक्त एवास्वादप्रकर्ष' इति । उदाहृतं च तत्रैव ।

कृच्छ्रादूरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निस्पन्दतामागता ।
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥

इति । अत्र हि नायिकाकारानुवर्ण्यमानस्वात्मप्रतिकृतिपविचित्रितचित्रफलकावलोकनाद् वत्सराजस्य परस्परास्थाबन्धरूपो रतिस्थायिभावो विभावानुभावसंचारिसंयोजनावशेन चर्वणारूढ इति । एवं च यत्र विभावादिपरिपूर्त्यभावस्तत्रारो-

---

१ °नायकाश्रितत्वेन M. २ परितोषातिशयः R. ३ °नायकोत्तर° p. ४ t. omits विशेष. ५ संयोजनावेशचर्वणा° t.

'एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा ।
योषितो बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥'

व्यभिचारिभावानामुदयप्रशाम्यदवस्थया परस्परविरुद्धरसाश्रितयोर्भावयोः स्पर्धया संबन्धेनान्योन्योपमर्दकतया बहूनां समावेशेन च चातुर्विध्यम् । तथा चोक्तं दशरूपके

'भावस्य शान्तिरुदयः संधिः शबलता तथा ।'

इति ।

---

पितो रसः । म्लेच्छादौ तथाभूतत्वाद्रसाभासत्वमिति भावः । उक्तार्थे संमतिमाह । एकत्रेति । अत्र एवेत्यवधारणेनान्यत्रानुरागात्यन्ताभावः सूच्यते । यथा रावणे सीतायाः । तेन स्त्रीपुंसयोरेकत्रानुरागे जातेऽन्यत्रानुरागप्रागभावे च विभावादिसंपूर्तिसंभावनया नैव रसाभासत्वमिति भावः । अन्यथा प्रथममजातानुरागे वत्सराजे जातानुरागाया रत्नावल्याः पूर्वानुरागस्याभासत्वप्रसङ्गात् । म्लेच्छास्तिरश्चामनाघ्रातवैदग्ध्यगन्धानामननुभूतविभावादिभावानामभिवदनव्यापारमात्रविलक्षणाः सहोदराः । अतस्तेषां द्वयानामपि समानयोगक्षेमत्वात् सहोपादानम् । अत एव शृङ्गाराभासस्य त्रैविध्योक्तिरपि । बहुसक्तिरनेकत्रानुरागः । अत्रापि मुखान्तरेण समानुरागफलाभावात् विभावाद्यपरिपूर्तिरिति भावः । पुंसोऽप्यनेकनायिकानुरागे रसाभासत्वमिति केचित् । तर्हि तन्मते दक्षिणनायकानुरागस्य सर्वसंप्रतिपन्नरसभावस्याभासत्वप्रसङ्ग इति चेन्नैवम् । तस्याप्येकस्यामेव गाढानुरागत्वात् । अन्यत्र तु कंचिन्मध्यत्वं कश्चिन्मन्दत्वमिति निश्चितम् । 'तुल्योऽनेकत्र दक्षिणः' इति लक्षणम् । पुनरनेकासु नायिकास्वनुवृत्तिमात्रपरत्वेन तुल्यत्वपरमिति द्रष्टव्यम् । अत्र पक्षद्वयेऽपि क्रमेण समानुरागाभावादविवेकादनेकानुरागाच्च रतेरारोपितत्वेन हास्यास्पदत्वात्तन्निबन्धनस्त्रिविधोऽयमाभास इति विवेकः । न चारोपितरसाभावात् तिर्यगादिषु कथं चमत्कार इति चेत् शुक्तिकारजतं गृहीत्वा प्रमोदमानं पृच्छ । पश्चात्कालीनबाधस्तु प्रपञ्चसत्यत्वाभिमानसमयसांसारिकव्यवहारस्येव तादात्विकचमत्कारस्य न विरोधीति रसाभासोऽप्युपादेय एवेत्यलं प्रपञ्चेन ।

विभावादिमध्ये व्यभिचारिभावानामुदयाद्युपाधिचतुष्टयजन्यचमत्कारविशेषनिबन्धनं चातुर्विध्यमाह । व्यभिचारीति । अन्योन्योपमर्दकतयेति । स-

---

१ °वानुरागश्च तिर्यङ् P. २ च P. ३ °मुदयेन R. ४ °श्रितभावयो° T. ५ शबलता R. ६ कश्चिदनन्यत्वम् P.

अथ यथाक्रमं स्थायिभावानां स्वरूपमुदाहरणं च।

तत्र संभोगविषय इच्छाविशेषो रतिः।

यथा

शृङ्गारैकरसः स्मरोऽस्तु जगदानन्दैकनिष्पन्दभू-
रिन्दुस्तिष्ठतु विभ्रमैकवसतिर्जागर्तु पुष्पाकरः।
सन्त्वन्येऽपि गुणप्रसादितदिशः किं तैरशेषोन्नतो
जातः काकतिवल्लभो मम पतिः कामस्य कामोत्सवः॥ १॥

---

स्वबाध्यानां बाधकत्वेनेत्यर्थो वक्ष्यमाणोदाहरणानुसारेण कल्पनीयः। रसाभासादीनामुदाहरणमुत्तरत्र भविष्यति।

अथ स्थायिभावेषूद्देशक्रमानुसारेण रतिं लक्षयति। तत्रेति। यूनोरन्योन्यानन्दजनकं दर्शनालिङ्गनादिकं कर्म संभोगः। तदुक्तं भावप्रकाशे।

'कामोपचारः संभोगः कामः स्त्रीपुंसयोः सुखम्।
सुखमानन्दसंभेदः परस्परविमर्दतः॥
उपचारस्तदानन्दकारकं कर्म कथ्यते॥'

इति। तद्विषय इच्छाविशेषः स्पृहाद्यपरपर्यायः प्रमोदात्मा मनोवृत्तिविशेषो रतिरित्यर्थः। तदुक्तम्।

'सम्पन्नैश्वर्यसुखयोरशेषगुणयुक्तयोः।
नवयौवनयोः श्लाघ्यप्रकृत्योः श्रेष्ठरूपयोः॥
नारीपुरुषयोस्तुल्या परस्परविभाविका।
स्पृहाह्वया चित्तवृत्ती रतिरित्यभिधीयते॥'

इति। स्पृहालक्षणमपि तत्रैवोक्तम्।

'आत्मोपभोगकरणं स्पृशन्ती प्रियवर्त्मना।
या जहातीतरान् योगान् सा स्पृहेत्यभिधीयते॥'

इति। उदाहरति। शृङ्गारेति। जगतामानन्दस्यानन्दहेतोरेकस्याद्वितीयस्य निष्पन्दस्य शुद्धांशस्य भूः स्थानं गुणैराभिरूप्यादिभिः प्रसादिताः प्रसन्नीकृताः दशो लोकदृष्टयो यैस्ते तथोक्ताः। गुणप्रसादितदिश इति पाठे गुणालंकृतदिशो दिगन्तविश्रान्तगुणा इत्यर्थः। अन्ये गन्धर्वगीर्वाणादयः। तैरेकैकगुणाश्रयैः। किं न

---

१ The heading before अथ given by T[2] is रत्यादिस्थायिभावलक्षणोदाहरणानि. २ स्थायीभावानाम् P. ३ M. drops च. ४ °विषयेच्छा R. ५ प्रसादितदशः R., प्रसाधितदिशः P. ६ °रशेषैर्यतो M. ७ तत्रैव I.

विकृतिदर्शनादिजन्यो मनोविकारो हासः।

यथा

विभ्राणान् कबरीं धृताञ्जनदृशः कृत्वा कुचौ कृत्रिमौ
स्त्रीवेषाश्रिशि काकतीन्द्रनगरे प्रच्छन्नरूपान् नृपान्।

---

किमपि साध्यमित्यर्थः। अशेषोऽनन्तः सर्वाधिकः। अत्र कामस्यापि कामोत्सवः काकतिवल्लभो मम प्रेयानभूदिति वागारम्भेण स्वानुरक्तप्रियलाभजनितहर्षानुभावेन कस्याश्चिन्नायिकाया आलम्बनविभावभूताया प्रमोदता रतिरभिव्यज्यते। इयं च निसर्गादिनिमित्तभेदात् सप्तविधा। तत्र मदनेन्दुवसन्तादिवैराग्येण प्रियविषयप्रेम्णा चेयमभिमानमूलेति वेदितव्यम्। इदमेव मम प्रियं नान्यदिति प्रत्यय एवाभिमान इत्याहुः। भेदान्तरोदाहरणप्रपञ्चस्तु रसार्णवे द्रष्टव्यः।

हासं लक्षयति। विकृतीति। आत्मनः परस्य वा ये वेषभाषाकारविकारविरुद्धालंकारास्पष्टभाषणकुत्सत्वादयः तद्दर्शनश्रवणजन्यो मनोविकारो हासः। 'स्वनहसोर्वा' इति विकल्पाद् घञ् प्रत्ययः। अयमेव बाष्पाद्यनुभावो निद्रालस्यादिसहकृतश्चर्व्यमाणो हासे साधुरिति व्युत्पत्त्या हास्यो भवति। स चोत्तमादिषु त्रिष्वेकैकयुगलक्रमेण षड्विधः। तदुक्तम्।

'विकृताकृतिवाग्वेषैरात्मनो वा परस्य वा।
हासः स्यात् परिपोषेऽस्य हास्यस्त्रिप्रकृतिः स्मृतः॥'

इति।

'स्मितमिह विकसन्नयनं किंचिल्लक्ष्यद्विजं हसितम्।
मधुरस्वनं विहसितं साङ्गशिरःकम्पमुपहसितम्॥
अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितम्।
द्वे द्वे हसिते चैषां ज्येष्ठे मध्येऽधमे क्रमशः॥'

इति।

उत्तमस्य स्वकीयपरकीयविकारदर्शनात् क्रमेण स्मितहसिते। मध्यमस्य विहसितोपहसिते। अधमस्यापहसितातिहसिते इति। तत्राधमाश्रयमन्यदीयवेषविकारजन्यं हासमुदाहरति। विभ्राणानिति। कबरीः स्त्रीजनोचितान् केशपाशान्। 'जानपदेषु—' इत्यादिना ङीष्। अत्र बन्दीग्राहं गृहीतानत एव पला-

---

१ विकृत° P. २ °विकासो M. ३ कबरीः T°. कबरीभृतो M. ४ इदमेवाप्रियं नान्यदिति t. ५ °चोत्तमादीन्षि° t. ६ विकासि नयनम् m.

दृष्ट्वा क्षौममपास्य वक्षसि कुचावाकृष्य नीवीस्पृशो
हो हा कष्टमिति त्यजन्ति विपणिश्रेणीषु धूर्ता विटाः ॥ २ ॥

इष्टजनवियोगादिर्नात्मनि दुःखातिभूमिः शोकः।

यथा

धातर्निष्करुणोऽसि शिक्षयसि किं वन्यां शरीरस्थितिं
तत्तादृग्विभवा गृहाः क नु गताः स्थानं मरुः कल्पितम्।
हा नाथाः पतिताः प्रतापनृपतिक्रोधार्चिषीति द्विषद्-
घोषाणां तदनूपमश्रुभिरहो जातं स्थलं मारवम् ॥ ३ ॥

शत्रुकृतापकारेण मनःप्रज्वलनं क्रोधः।

---

यनपरतया स्त्रीवेषधारिणो वैरिभूपतीन् नीवीप्रदेशादिस्पर्शनेन पुमांस इति जानतां धूर्तविटानामालम्बनविभावानां परुषस्वनस्य हासस्य हीहीत्यनुकरणम्।

शोकं लक्षयति। इष्टेति। आदिग्रहणादनिष्टप्राप्तिर्गृह्यते। दुःखातिभूमिः दुःखप्रकर्षः। आद्यं शोकमुदाहरति। धातरिति। निष्करुणो नृशंसः। वन्यां फलमूलादिरूपाम्। तत्तादृग्विभवा नानाविधभोगोपकरणपरिपूर्णा इत्यर्थः। स्थानं मरुरिति पिपासायां यत्रोदकमपि दुर्लभमित्यर्थः। महारण्ये वा भर्तृभिः सह मृगमिथुनादिवद्यथाकथंचिद्वर्तामह इति विचारितेऽपि कथं वा कियान् वा नो दैवदुर्विपाकः। ते भर्तारोऽपि तत्क्रोधवह्नौ शलभतामलभन्तेति परिदेवितं हेति शब्देन सूचयन् आह। हा नाथा इति। अनूपं जलप्रायम्। अत्र शत्रुस्त्रीणामालम्बनविभावानां भर्तृवियोगराज्यभ्रंशादिजनिता दुःखातिभूमिर्दैवोपालम्भसहितेन रोदनेन सूच्यते। अत्रोर्वीलुठनोरस्ताडनादयोऽनुभावाः। दैन्यमोहचिन्ताविषादादयो व्यभिचारिणश्च विशेषेणोपात्ताः करुणतामापादयन्ति।

क्रोधं लक्षयति। शत्रुकृतेति। शत्रुग्रहणं भृत्यादेरुपलक्षणार्थम्। तत्कृतेनापकारेण वधावज्ञादिना प्रज्वलिता मनोवृत्तिः क्रोध इत्यर्थः। स च त्रिविधः क्रोधः कोपो रोषश्चेति। तदुक्तं भावप्रकाशे।

---

१ ही ही P., T. २ श्रेणीष R. ३ दुःखादिरात्मनि R. ४ °नात्मदुःखाति° M. ५ °निष्करुणोऽप M. ६ कल्पितः M., T. ७ °नृपतेः क्रोधा° P. ८ °कृतापराधेन M.; °कृतापराध M₁. ९ हाशब्देन m.

यथा

रे रे शैवेण कस्तवायमनिदंपूर्वोऽद्य गर्वो महा-
नुत्तीर्णः किल येन गौतमनदीं प्राप्तोऽसि मृत्योर्मुखम् ।
एषा काकतिवीररुद्र इति किं नाम्नापि सप्ताक्षरी
प्रक्षुभ्यत्प्रतिपक्षपार्थिवमहाभूतग्रहोच्चाटनी ॥ ४ ॥

लोकोत्तरेषु कार्येषु स्थेयान् प्रयत्न उत्साहः ।

---

'क्रोधः कोपश्च रोषश्चेत्येष भेदस्त्रिधा मतः ।'

इति । तत्रारातिवधादिपर्यन्तः क्रूरजनाश्रयः क्रोधः । अभ्यर्थनावधिर्वीरजनाश्रय-कोपः । स्त्रीपुंसयोरन्योन्यविषयः पलायनपर्यन्तो रोषः । तत्रावज्ञामूलं क्रूरा-लम्बनं क्रोधमुदाहरति । रे रे इति । 'वाक्यादेः—' इत्यादिना कोपे द्विरुक्तिः । अयं पूर्वो यस्यासाविदंपूर्वः । स न भवतीत्यनिदंपूर्वः नूतन इत्यर्थः । अन्याधि-कारेणात्मोत्कर्षो गर्वः । कुतोऽयं ते महानिदानीमभूतपूर्वो गर्वः प्रादुरभूदित्यर्थः । येन गर्वेण गौतमनद्युत्तीर्णेत्यवज्ञाकथनम् । किलेत्यलीके । तेन वार्त्तामात्रमेत दिति भावः । तथापि तस्येदं कर्मणः फलमित्याह । प्राप्त इति । अवज्ञानिमि-त्तमाशङ्कते । एषेति । अन्यथा भूतमहादिकल्पानां वैरिभूपतीनां कल्पान्तकाल-रुद्रस्यास्मत्स्वामिनः काकतिवीररुद्रस्य नाममात्रमहामन्त्रं निशम्यैव कान्दिशी-कचरः कथमेवमुद्युङ्क्ते भवानिति भावः । क्रोधोऽयं विपक्षदर्शनादिविभावः कण्ठगर्जनदन्तघट्टनाद्यनुभावो गर्वामर्षादिव्यभिचारी चर्व्यमाणः सन् रौद्रो भवति ।

उत्साहं लक्षयति । लोकेति । स्थेयानतिस्थिरः । विवक्षितकार्यविषयमौत्सुक्य-मेवात्र स्थैर्यमिति भावः । 'अहमेवंविध इत्येवंप्राणत्वेनाभिमानात्मक उत्साहः' इति लोचनकारः । शारदातनयस्तु कार्यमात्रमङ्गीचकार । तदुक्तम् ।

'उत्साहः सर्वकृत्येषु सत्वरा मानसी क्रिया ।
सहजाहार्यभेदेन स द्विधा परिकीर्तितः ॥'

---

१ °स्तव T'. २ °नुत्तीर्णा T'. ३ नदी T'. ४ M. omits कार्येषु. ५ कोपस्तापश्च m. ६ तत्र वधादि° p. ७ °मनद्युत्तपूर्वा m. ८ गौतमी तीर्णं॰पवज्ञा° m.

यथा

> क्षुब्धेष्वब्धिषु संभ्रमात् त्रिभुवनग्रासेच्छया सर्वतः[1]
> सन्नद्धेष्वपि पर्वतेषु परितो गण्डोपलान् वर्षितुम्।
> शक्ता एव वयं निवारणविधौ क्षुद्रक्षमाभृज्जये
> श्लाघा[2] नः कियतीति काकतिविभोर्गर्जन्ति सैन्ये भटाः ॥ ५ ॥

रौद्रसंदर्शनादिभिरनर्थाशङ्कनं[3] भयम् ।

---

इति । उदाहरति । क्षुब्धेष्विति । त्रिभुवनग्रासेच्छया कल्पान्तवदिति भावः । क्षुब्धेषु क्षुभितेष्वित्यर्थः । अत्र यद्यपि 'क्षुब्धस्वान्त—' इत्यादिना निपातनान्मन्थमात्रवाची क्षुब्धशब्दः । तथा क्षुभितार्थत्वं कथंचित्सादृश्यात् कल्पनीयम् । समुद्राणां मन्थयोगवत् कालवैषम्येऽपि क्षोभसंभवात् । अत एवाह वृत्तिकारः । 'कथं क्षुब्धः समुद्रः क्षुब्धा नदीत्येवमादावुपमानाद् भविष्यति' इति । गण्डोपलान् गण्डशैलान् स्थूलोपलानित्यर्थः । अत्र वैरिभूपालविजयविषयः सहजोत्साहः समुद्रसंक्षोभपर्वतसंनाहनिवारणे वयमेव शक्ता इति वागारम्भेण व्यज्यते । अत्रात्मश्लाघान्यधिक्कारादिसंभवाद्धीरोद्धतोऽयं नायकः । तस्य वीररसेऽपि प्राधान्येनानुप्रवेशासंभवात् । तदुक्तं लोचने । 'वीररौद्रप्रधानो धीरोद्धतः' इति । अयमेव प्रतापविनयादिभिर्विभावितः करुणायुद्धादिभिरनुभावितो गर्वहर्षादिभिर्भावितो वीररसो भवति । स च त्रिविधः । यथाह मुनिः ।

> 'दानवीरं युद्धवीरं धर्मवीरं तथैव च ।
> रसं वीरमपि प्राह ब्रह्मा त्रिविधसंमतम् ॥'

इति । धर्मवीरस्थाने दयावीरमुक्त्वा त्रैविध्यमाह धनिकः । तत्र दानवीरो बलिजामदग्न्यादिः । युद्धवीरो रामादिः । धर्मवीरो युधिष्ठिरादिः । दयावीरो जीमूतवाहनादिः । तत्र प्रस्वेदरक्ताक्षत्वाद्यनुभावराहित्ये युद्धवीरः । तत्साहित्ये रौद्र इति विवेकः ।

भयं लक्षयति । रौद्रेति[4] । आदिग्रहणाद्रौद्रशब्दश्रवणादयो गृह्यन्ते । तज्जन्यमनर्थाशङ्कनमनर्थाग्रत्यरूपं भयमित्यर्थः । एतच्च स्त्रीनीचप्रभृतीनां स्वाभाविकमुत्तमानां कृतकमित्याहुर्हेमचन्द्रशारदातनयादयः । शिङ्गभूपालस्तु

---

१ सन्ततम् M., M2. २ नः श्लाघा M., R. ३ °रनर्थाशङ्कनम् P. ४ रौद्र इति P.

यथा

> दूरादाकर्ण्य विश्वप्रसृमरमहसो वीररुद्रस्य जैत्र-
> प्रस्थानारम्भभेरीनिनदमरिनृपाः पूर्णकर्णज्वरार्त्ताः ।
> आरुह्याद्रीन् विशन्तो गहनमतिमहत् कण्टकाकृष्टकेशा-
> स्त्रायध्वं मुञ्चतेति प्रतिनृपतिधिया पादपान् प्रार्थयन्ते ॥ ६ ॥

अर्थानां दोषसंदर्शनादिभिर्गर्हणा जुगुप्सा ।

यथा

---

सर्वत्र कृतकमेवेति प्रत्यवदत् । अनेकविधमित्यन्ये । तत्र रौद्रश्रवणजन्यं भयमुदाहरति । दूरादिति । विश्वप्रसृमरमहसो विश्वव्यापिप्रतापस्य । सरतेः 'सृघस्यदः' इत्यादिना क्मरच्प्रत्ययः । कर्णज्वरार्त्ताः कर्णव्याधिपीडिताः बधिरीकृतकर्णा इत्यर्थः । तत्राप्यतिमहत् दुष्प्रवेशं गहनमरण्यं विशन्तः खदिरादिकण्टकाकृष्टकेशाः सन्तः व्याकुलान्तःकरणाः प्रतिपक्षबुद्ध्या पादपान् त्रायध्वमित्यादिभिर्दीनोक्तिभिः प्रार्थयन्ते । अत्र वैरिभूपालसमवेतो भयस्थायिभावो व्यज्यते । अयं च स्वोचितसामग्रीको भयानको भवति । तदुक्तम् ।

> 'विकृतस्वरसत्त्वादेर्भयभावो भयानकः ।
> स्वराङ्गवेपथुस्वेदशोषवैवर्ण्यलक्षणः ॥
> दैन्यसंभ्रमसंमोहत्रासादिस्तत्सहोदरः ॥'

इति ।

जुगुप्सां लक्षयति । अर्थानामिति । रुधिरोद्वान्ताद्यहृद्यपदार्थश्रवणदर्शनादिजन्यो मनःसंकोचो जुगुप्सेत्यर्थः । अयमेव नासापिधाननिष्ठीवनाद्यनुभावो भयापस्मारादिसहकारी बीभत्सो भवति । स च विभावादिभेदात् क्षोभ उद्वेगश्चेति द्विधा । तदुक्तं भावप्रकाशे ।

> 'क्षोभात्मा रुधिरान्त्रादिदर्शनस्पर्शनादिजः ।
> उद्वेगात्मा कृमिच्छर्दिपूर्त्तिविष्ठादिजो भवेत् ॥'

---

१ दूरादाकर्ण्येत्यादि R. २ °धिया M₂. ३ दोषदर्शना° P. ४ °शोक° P. ५ °विष्ठादितो L.

विष्वङ्मस्तिष्कपङ्के महति निपतितोच्छूनमातङ्गदेह-
श्रेणीलब्धप्रचाराः प्रवहदुरुवसामांसरक्तप्रवाहाः ।
राशीभूतास्थिकूटस्थपुटितनिकटा निस्सरद्भिस्रगन्धाः
कुर्वन्त्यायोधनोर्व्यो भयमवनिभृतां वीररुद्रेण सृष्टाः ॥ ७ ॥

अपूर्वार्थसंदर्शनाच्चित्तविस्तारो विस्मयः ।

यथा

औन्नत्यं महदन्यदेव महितः कोऽप्येष गम्भीरिमा
काप्यन्या सरणिः प्रतापयशसोरन्यैव बाह्वोः प्रथा ।
सर्वं नूतनमेव रुद्रनृपतेर्जाने न तन्निर्मितौ
सामग्री चतुराननेन कियती कीदृक्क्रमा कल्पिता ॥ ८ ॥

---

इति । वैराग्यायुवतिगर्हासिद्धस्तृतीयो बीभत्स इत्याह धनिकः । तत्र क्षोभणं बीभत्समुदाहरति । विष्वङ्ङिति । महति विष्वङ्मस्तिष्कपङ्के सार्वत्रिकमेदः-कर्दमे पतिताः गन्तुमशक्त्या प्रहारैश्चेति भावः । तथा मृतत्वादुच्छूना विवृद्धाश्च तेषां मातङ्गानां देहश्रेणीषु लब्धः प्रचारो गोमायुप्रभृतीनां यासु तास्तथोक्ताः प्रवहन्तः प्रकर्षेण स्रवन्तः उरवोऽधिकाः वसादीनां वपादीनां प्रवाहाः स्रोतांसि यासु तास्तथोक्ताः । राशीभूतैरस्थिकूटैः कीकससमूहैः स्थपुटिता विकटीकृताः निकटाः प्रान्तदेशा येषु तास्तथोक्ताः । निःसरद्भिस्रगन्धाः उत्कटदामगन्धाः । वीररुद्रेण सृष्टा आयोधनोर्व्यो युद्धभूमयः सर्वेषां भयं कुर्वन्ति ।

विस्मयं लक्षयति । अपूर्वेति । लोकसीमातिवृत्तः पदार्थोऽपूर्वार्थः तद्दर्शनादिजन्यो मनोविस्तारो विस्मय इत्यर्थः । अयमेवाकस्मिकमनोरथलाभालौकिकदर्शनादिविभावो नयनविस्तारसाधुवादाद्यनुभावो हर्षावेगादिसहकृतोऽद्भुतः । उदाहरति । औन्नत्यमिति । व्याख्यातचरमेतत् । ( काव्यप्रकरणे संख्या १५ ) । अत्र किमन्यशब्दाभ्यामलौकिकत्वेन प्रतीयमानौन्नत्यादिविलोकनविभावो विस्मयः प्रतीयते ।

---

१ निपतितोद्धूर° M,. २ °बद्ध° M,. ३ प्रसरदुरु° P.; प्रसवदुरु° M, ४ °रक्तमज्जा° R. ५ °स्फुटितकरिकटा m. ६ °मवनिभृतो R. ७ विकारो R., M,. ८ औन्नत्यं महदि-त्यादि R. . ९ मनोविकारो p. १० °लौकिकवस्तु° t.

[1]शमो वैराग्यादिना निर्विकारचित्तत्वम् ।

यथा

किं लब्धं चतुराननेन महतीमायुःप्रथां गच्छता
लब्ध्वा संपदमप्यनन्य[2]सुगमामिन्द्रेण [3]किं वा कृतम् ।

---

शमं लक्षयति । शम इति । अत्रादिशब्देनेश्वरानुग्रहसत्सङ्गमादिकं गृह्यते । विकारा विषयाभिलाषादयः । तद्रहितचित्तत्वं वैराग्यादिजन्यतृष्णाक्षयाद्यपरपर्यायो निर्वेदाख्यो मनोविकारः शम इत्यर्थः । अयमेव यमनियमाद्यनुभावो धृतिनिर्वेदादिव्यभिचारी चर्व्यमाणः शान्तो भवति । उदाहरति । किमिति । महतीमायुःप्रथां चतुर्युगसहस्रमेकं दिनमित्यादिक्रमेण संवत्सरशतरूपामनन्यसुगमामसाधारणामित्यर्थः । अन्तान्तरुपप्लवा निरस्तकामक्रोधादयः । बाह्यं वातातपादिजन्यमित्यर्थः । उपप्लवं पीडाम् । अतिदीर्घमायुरत्युच्छ्रितमैश्वर्यं चेत्युभयमाशास्यं सर्वेषाम् । तत्सम्पादकेषु परमावधितया प्रसिद्धौ पितामहपुरुहूतावपि तृणाय मन्यमानानां वैराग्यातिभूमिलक्षणः शमः प्रतीयते । ननु 'अष्टौ नाट्ये रसाः स्मृताः' इति नियमाच्छमः शान्तरसो न भवतीति चेत् तर्हि त एवं प्रष्टव्याः । किं मुनिना शान्तस्थायिन एवानिरूपणात् तदभाव उत तत्सामग्रीवैधुर्यादाहोस्विदश्लाघ्यत्वादथवान्तर्भावाद्वा पुरुषार्थाभावात् । नाद्यः । निर्वेद एव शान्तस्य स्थायिभाव इति मुनिनाङ्गीकृतत्वात् । तथानेकरससाधारणस्य व्यभिचारिणः सतोऽप्यमङ्गलप्रायत्वेऽपि सजातीयाग्रगण्यत्वं प्राधान्येन कंचिद्रसविशेषं प्रत्यसाधारणं स्थायित्वं बोधयितुमिति [4]प्रतिपादनात् । तदुक्तं काव्यप्रकाशे । 'निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽपि उपादानं व्यभिचारित्वेऽपि स्थायित्वाभिधानार्थम् । तेन निर्वेदस्थायिभावः शान्तोऽपि नवमोऽस्ति रसः' इति । उक्तं च ध्वन्याचार्यैः । 'तृष्णाक्षयसुखस्य यः परिपोषस्तल्लक्षणो रसः प्रतीयत एव' इति । एतद्व्याख्यानव्याजेन लोचनेऽप्युक्तम् । 'तृष्णानां विषयाभिलाषाणां सिद्धो यः क्षयः सर्वतो निवृत्तिरूपो निर्वेदः स एव सुखं तस्य स्थायिभूतस्य यः परिपोषस्तस्य चर्व्यमाणताकृतः स एव लक्षणं यस्य स शान्तो रसः प्रतीयत एव' इति । न च निर्वेदस्तृष्णाक्षयात्मा शम-

---

१ शमो नाम $M_1$. २ °सुलभामि° R. ३ वा किम् $M_1$. ४ प्रसादनात् t.

इत्यास्तां तरुपल्लवाः सुकृतिनो नो जानते याचनम्-
प्येदोपप्लवमन्ध्रनाथतिलके विश्वंभरां बिभ्रति ॥ ९ ॥

---

पर्यायो न सुखरूप इति शङ्कनीयम्। वैयासिकानामविद्यानिवृत्तिवदस्यापि सुखरूपत्वसंभवात्। तदुक्तम्।

'यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥'

इति। न द्वितीयः। वैराग्यादिसामग्र्याः सुलभत्वात्। तथाहि वैराग्यपरमेश्वरानुग्रहप्राचीनकुशलपरिपाकसत्पुरुषसेवावेदान्तविचारादयो विभावाः। यमनियमादयोऽनुभावाः। राज्यधुरोद्वहनादयोऽपि शान्तस्य जनकादेरनुभावा इत्युक्तं लोचने। मतिस्मृतिचिन्ताधृतिवितर्कादयो व्यभिचारिण इति। न तृतीयः। रागद्वेषकलुषितान्तःकरणानामचर्वणीयत्वेनाश्लाघ्यत्वेऽपि वीतरागाणां तदभावात्। यदि कतिपयश्लाघ्यत्वमात्रेण रसत्वात् प्रच्यवेत तर्हि वीतरागाणामश्लाघ्य इति शृङ्गारोऽपि प्रच्यवताम्। न चतुर्थः। न तावच्छृङ्गारादावन्तर्भावः संभवति। अप्रसक्तत्वात्। ननु दानाद्युपाधिना त्रिविधो वीरः। तदुक्तं मुनिना।

'दानवीरं युद्धवीरं धर्मवीरं तथैव च॥
रसं वीरमपि प्राह ब्रह्मा त्रिविधसंमतम्॥'

इति। अयं च धर्मप्रधानो वीर एवेति तत्रैवान्तर्भावः शान्तस्य संभावित इति चेन्न। उत्साहस्याहमेवंविध इत्येवंप्राणत्वेनाभिमानमयो वीरः सर्वाहंकारप्रशमैकरूपः शान्तः। एवमनयोरत्यन्तवैजात्यात्। तर्हि दयावीरेऽन्तर्भाव इति चेन्न। तस्याप्येवंविधत्वे शान्तस्यैव नामान्तरकरणमनेवंविधत्वे वीरप्रभेद एवेति। एवमप्यन्तर्भावाङ्गीकारे सर्वत्रैकरसस्य प्रसङ्गः। नापि पञ्चमः। चतुर्थपुरुषार्थस्य मुक्तेरेतदेकसाध्यत्वात्। तदुक्तं भावप्रकाशे।

'सर्वप्रकारैः संपूर्णकामः संतुष्टमानसः।
प्राप्नोति मुक्तिं चरमे शान्तेनैव रसेन सः॥'

इति। लोचने चोक्तम्। 'मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठत्वात् सर्वरसेभ्यः प्रधानतमः स चायं शान्तरसः' इति। तस्मान्नवैव रसा इति सिद्धम्। वत्सलादिरसान्तराणामन्तर्भावादिकमन्यतो द्रष्टव्यम्।

---

१ °प्यधोपद्रव° R. २ p. drops भावप्रकाशे.

अथ शृङ्गारस्यालम्बनविभावो यथा ।

लावण्यैकनिधिर्विधातृरचनाशिल्पप्रतिज्ञावधिः
शृङ्गारप्रतिभूर्विलासविपणिः कन्दर्पघण्टापथः ।
नारीणामधिदेवता च तरुणी सेयं किमन्यैर्गुणै-
रस्या मन्मथमन्मथः प्रियतमः श्रीवीररुद्रो नृपः ॥ १० ॥

उद्दीपनविभावो यथा ।

उरोमात्रोत्सेधं भवदपि विलासैरभिनवै-
र्मृगाक्ष्यास्तारुण्यं त्रिभुवनमिदं व्याकुलयति ।

---

विभावानुभावादीनां प्रतिरसमसाधारणतया यथारसमुदाहर्तुमुचितत्वादादौ शृङ्गारमुदाहरिष्यमाणस्तदालम्बनमुदाहरति । लावण्येति ।

'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥'

इति तल्लक्षणः कान्तिविशेषो लावण्यम् । तस्यैकखनिः । कदाचिदपि तन्न क्षीयत इति भावः । रचनाशिल्पमङ्गोपाङ्गसौष्ठवनिर्माणं तद्विषयप्रतिज्ञाया अवधिः । इतः परं विधाता प्रतिज्ञातुमपि न शक्नोति किमुत विधातुमिति भावः । शृङ्गारस्य प्रतिभूः ।

'स्वामिभृत्याधमर्णानां व्यवस्थापरिकल्पने ।
अन्यो यः क्रियते शिष्टः प्रतिभूः स निगद्यते ॥'

इति सोमेश्वरोक्तलक्षणः । यथा प्रतिभूरधमर्णाद्धनमुद्धरति तथेयमपि वैराग्याच्छृङ्गारमिति भावः । विलासानां विपणिः पण्यवीथिकाविलासापेक्षायामत्रैव संपाद्या इति भावः । कन्दर्पस्य घण्टापथो विस्रम्भविहारभूमिरित्यर्थः । सेयं प्रसिद्धा । तरुणी युवतिः । नारीणामधिदेवता च सर्वगुणाश्रयत्वेनोपास्यत्वादिति भावः । यदाहुः । 'गुणाः पूजास्थानम्' इति । गुणसामग्रीफलस्य प्रेयसो लाभात् किं गुणान्तरकथनेनेत्याह । किमन्यैरिति । अत्र लावण्यादीनामालम्बनगुणानामुद्दीपनविभावत्वेऽप्यालम्बनोपस्कारार्थमेवोपादानान्न तत्प्राधान्यम् ।

उद्दीपनविभावमुदाहरति । उर इति । उरोमात्रे उत्सेध उच्छूनता यस्मिन् वयसि स्तनाल्पवालस्थले किंचिदुन्नतमुर इति प्रतीतिर्जायते तदित्यर्थः । स्तनयो-

---

१ लावण्यैकखनिः T[?]. २ घण्टारवः M. ३ परिकल्पकः L. ४ L. drops विहार.

...नाभोगस्फीतं यदि किल भवेत् का खलु कथा
भविष्ी किं चान्यद्विजितमखिलं पुष्पधनुषा ॥ ११ ॥

...भावो यथा ।

...स्मरस्मेरान् मन्दस्मितमधुरसौरभ्यसुभगान्
मनाक् व्रीडाजाड्यान् प्रणयरसकल्लोलभरितान् ।
कृतानेकस्कन्धान्मनसिजसहस्राणि सृजतः ।
कटाक्षान् वामाक्षी किरति परितो रुद्रनृपतिम् ॥ १२ ॥

स्तम्भः स्यान्निष्क्रियाङ्गत्वं रागभीत्यादिसंभवम् ।

यथा ।

[1]काअइपुरन्ध्रिओ [5]पेच्छंतीओ [6]णरिंदकंदप्पं ।

---

...आभोगो विस्तारः । स्फीतं समृद्धम् । 'स्फायः स्फी निष्ठायाम्' इति स्फीभावः । उदयदेव यौवनं जगन्मोहनं जायते । उदितं परिपूर्णं वा किमु वक्तव्यमिति भावः ।

अनुभावमुदाहरति । स्मरेति । व्याख्यातमेतत् प्रसङ्गेन काव्यप्रकरणे । एवं रसान्तरसंबन्धिनो विभावानुभावा यथायोगं स्वस्वरसप्रकरणे द्रष्टव्याः ।

सात्त्विकानां सामान्यलक्षणप्रस्तावे बाह्याभ्यन्तरभेदेन द्वैविध्यमुक्तम् । तत्र बाह्यानां स्तम्भादीनां स्वरूपोदाहरणे वक्तुं प्रतिजानीते । अथेति । वक्ति । स्तम्भ इति । विषादविस्मयादिजन्यो जाड्यनिष्कम्पत्वाद्यनुभावो विष्टब्धचेतनतया चेष्टाविघातः स्तम्भ इत्यर्थः । रागसंभवं स्तम्भमुदाहरति । काअईति । काकति पुरन्ध्र्यः पश्यन्त्यो नरेन्द्रकन्दर्पम् । मदनशरोत्कीर्णाः कामबाणकीलिता इति । अत्र पश्यन्त्यो निश्चलाङ्ग्य इत्यनेन सत्यपि चैतन्ये निश्चेष्टत्वकथनात् स्तम्भ इति भावः ।

---

छाया ।

1 काकतिपुरस्त्रियः पश्यन्त्यो नरेन्द्रकन्दर्पम् ।

१ वान्यद् T. २ स्मरस्मेरानन्दस्मित° M. ३ T' has before this—सात्त्विकानां स्वरूपोदाहरणानि । अथ सात्त्विकानां स्वरूपोदाहरणं च- ४ ह्निआ P.; ह्निओ M. ५ अपेच्छंतीअ P.; पेच्छंताओ R., M. ६ णरेंद R., T'. ७ बाष° t.

¹मअणसरुक्किण्णाओ विअ ट्ठिआ णिच्चलंगीओ ।

प्रलयः सुखदुःखाद्यैर्गाढमिन्द्रियमूर्च्छनम् ।

यथा ।

²जिअमअणरूवसारो सहि एसो वीररुद्दणिवचंदो ।
जं दट्ठूण णिमज्जइ मुच्छाअं इंदिअग्गामो ॥ १४ ॥

सुखाद्यतिशयाज्जाता रोमाञ्चो रोमविक्रिया ।
रागरोषभयादिभ्यो वेपथुर्गात्रवेपनम् ॥

---

प्रलयं लक्षयति । प्रलय इति । सुखमदनिद्राप्रहारादिजन्यं दुःखाभिषङ्गाद्यनुभावं निश्चेतनतया नष्टचेष्टत्वं प्रलय इत्यर्थः । तदुक्तम् ।

'वाक्कायमनसां प्रायः प्रलयो नष्टचेष्टता ।'

इति । सुखमूलं प्रलयमुदाहरति । जिएति । जितमदनरूपसारः सखि एष वीररुद्रनृपचन्द्रः । यं दृष्ट्वा निमज्जति मूर्च्छायामिन्द्रियग्रामः ॥ सर्वाणीन्द्रियाणि स्वस्वव्यापारेभ्य उपरतानीत्यर्थः । अत एव निश्चेतनतया नष्टचेष्टत्वमिति भावः ।

रोमाञ्चकम्पयोरुदाहरणलाघवार्थं युगपल्लक्षणमाह । सुखेत्यादि । सुखोल्लासहभयविस्मयादिजन्यो गात्रसंस्पर्शोल्लसनाद्यनुभावो रोमोद्गमो रोमाञ्च इत्यर्थः । भयज्वरजरादिजन्यः स्फुरणाद्यनुभावो गात्रकम्पो वेपथुरित्यर्थः । सुखजन्ययो

---

छाया ।

1 मदनशरोत्कीर्णा इव स्थिता निश्चलाङ्ग्यः ।

2 जितमदनरूपसारः सखि एष वीररुद्रनृपचन्द्रः ।
यं दृष्ट्वा निमज्जति मूर्च्छायामिन्द्रियग्रामः ॥

१ °सरुक्खिण्णाओ M.; °सरुकिण्णाओ T. २ °क्खिण्णाअ P. ३ ठ्ठिआअ P.; ठ्ठिआओ M. ४ °ढमिन्द्रियमूर्च्छितम् M. ५ °रुअ° P. ६ मुआए P. ७ °विक्रियाः M.; °विक्रमः M. ८ °कम्पनम् M.

द्वयोरुदाहरणं यथा ।

[2]दइआलिंगणणिब्भरकंपा बहू विओअजिण्णंगी ।
उग्गिरइ अंतरट्ठिदमअणसरे पुलअच्छम्मेण ॥ १५ ॥

वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः ।

यथा ।

शृण्वती प्रियसंदेशं प्रेयसः काकतीशितुः ।
स्मरराज्याभिषिक्तेव स्विन्नाङ्गी वामलोचना ॥ १६ ॥

विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता ।

यथा ।

[3]णरणाह चंदधवले तुज्झ गुणे साहु सम्हरंतीए ।
अंगाइ पांडुराइ दाणिं जाआइ सामलंगीए ॥ १७ ॥

---

रोमाञ्चकम्पयोरुदाहरणमाह । दइएति । दयितालिङ्गननिर्भरकम्पा च वधू-र्वियोगजीर्णाङ्गी । अत एव । उद्गिरत्यन्तरस्थितमदनशरान् पुलकच्छद्मना । सरेत्यत्र 'शस्येत्' इत्येवम् ।

स्वेदं लक्षयति । वपुरिति । निदाघश्रमहर्षव्यायामलज्जाभयक्रोधादिजन्यो वातेच्छाव्यजनग्रहणाद्यनुभावो वपुर्जलोद्गमः स्वेद इत्यर्थः । हर्षजन्यं स्वेदमुदाहरति । शृण्वतीति । प्रियसंदेशं स्वकुशलप्रेषणम् ।

वैवर्ण्यं लक्षयति । विषादेति । कोपातपशीतभयादिजन्यं कार्श्यसौन्दर्यविप्लवाद्यनुभावं भिन्नवर्णत्वं वैवर्ण्यमित्यर्थः । विरहजन्यविषादमूलं वैवर्ण्यमुदाहरति । णरणाहेति ।

---

छाया ।

2 दयितालिङ्गननिर्भरकम्पा वधूर्वियोगजीर्णाङ्गी ।
उद्गिरत्यन्तरस्थितमदनशरान् पुलकच्छद्मना ॥

3 नरनाथ चन्द्रधवलान् तव गुणान् साधु संस्मरन्त्याः ।
अङ्गानि पाण्डुराणि इदानीं जातानि श्यामलाङ्ग्याः ॥

१ कंपा वहूआ P.; वहूआ M.  २ विअअ P.  ३ जिण्णङ्गी M.  ४ अंतरि° P.  ५ °ट्ठिअ° M.; °ठ्ठिअ T'.  ६ °सरान् M.  ७ °श्रमादिजः T'.  ८ अंगाइँ P.; अंगाइं M.  ९ पांडुराइँ P; पांडुराइं M.  १० दाणिं M., T'.  ११ सामाए M., T'.

अश्रु नेत्रोद्भवं वारि दुःखरोषप्रहर्षजम् ।

यथा ।

वीररुद्रनृपाद् भीतं पाण्ड्यं मग्नं पयोनिधौ ।
अन्वेष्टुमिव तद्योषिदश्रुधारापगायते ॥ १८ ॥

[1]मत्तं गद्गदभाषित्वं वैस्वर्यं प्रमदादिजम् ।

यथा ।

[1]'विअणंमि पिएण समं [2]खोमक्खा[3]माक्खरं भणंतीए ।
एक्को [4]मुणइ अणंगो [5]अत्थं बहुआए भणिआणं ॥ १९ ॥

[6]अथ व्यभिचारिणां निर्वेदादीनां स्वरूपमुदाहरणं च ।

---

नरनाथ चन्द्रधवलांस्तव गुणान् साधु संस्मरन्त्याः ।
अंगानि पाण्डुराणि इदानीं जातानि श्यामायाः ॥

यण्हि इदानीम् । श्यामाया युवतेः श्यामवर्णायाश्च ।

अश्रूदाहरति । क्रोधहर्षभयजृम्भादिजन्यं नेत्रमार्जनाद्यनुभावं नेत्रजलमश्रित्यर्थः । दुःखमूलमश्रूदाहरति । वीरेति ।

वैस्वर्यं लक्षयति । मत्तमिति । हर्षशोकभयज्वरादिजन्यं स्वरवर्णस्खलित्याद्यनुभावं गद्गदभाषित्वं वैस्वर्यमित्यर्थः । हर्षमूलं वैस्वर्यमुदाहरति । विअणम्मीति । विजने सुरतसमये इत्यर्थः । प्रियेण समं क्षामक्षामाक्षरं भणन्त्याः सुखपारवश्यादिति भावः । एको जानात्यनङ्गोऽर्थं बध्वा भणितानाम् । त्रायस्व त्वं मे प्राणा अलमलं मा भेत्यादीनां दैन्यप्रेमालमर्थादिसमर्थानां वचनानामित्यर्थः । मुणइ इत्यत्र जानातेर्मुणादेशः । अत्र गद्गदवाक्यानां कामोद्दीपकत्वमतिमात्रमभूदिति परमो भावः ॥

संचारिणां स्वरूपोदाहरणे क्रमेणाह । अथेत्यादिना । निर्वेदं लक्षयति ।

---

छाया ।

1 विजने प्रियेण समं क्षामक्षामाक्षरं भणन्त्याः ।
एको जानात्यनङ्गोऽर्थं बध्वा भणितानाम् ॥

१ मदगद्गद T'. २ खामं T'. ३ क्खामाक्खरं M. ४ जाणइ P., R. ५ अद्दम् P. ६ T' has before this the following heading—व्यभिचारिभावानां स्वरूपोदाहरणे.

यथा ।

दुःखेर्ष्यातत्त्वबोधादेर्निर्वेदो निष्फलत्वधीः ।
तत्र चिन्ताश्रुनिश्वासदीनताः संभवन्ति च ॥[1]

यथा ।

[2]सहि कप्पूरेण किअं[2] किं कत्थूरिए[3] मलअअं[4] ठाउ ।
गुणसिसिरं जसमुरहिं आणेहि पआवरुद्दणिअचंदं ॥ २० ॥

अथ ग्लानिः ।

ग्लानिर्बलस्यापचयो वैवर्ण्यारतिकारणम् ।

यथा ।

[3]तेल्लोक्कं वहइ महीतं धरइ भुओ पआवरुद्दस्स ।
तं हिअएण धरंती सोहसिआ[5] दुब्बलंगेम्हि ॥ २१ ॥

---

दुःखेति । दुःखादिजनिता निष्फलत्वबुद्धिर्निर्वेद इत्यर्थः । अयं च विभावानुभावरसाङ्गत्वेन स्वातन्त्र्येण बहुधा संभवति । अतः तत्संग्रहार्थमादिशब्दः । अस्यानुभावानाह । तत्रेति । चशब्दाद्वैवर्ण्यादयो गृह्यन्ते । संचारिणामपि क्वचिदनुभावत्वं संभवतीत्युक्तम् । तत्र प्रियवियोगजन्यदुःखमूलं निर्वेदमुदाहरति । सहीति । प्रतापरुद्रं चेति । चशब्दोऽवधारणे । कर्पूराद्यतिरिच्यमानशैत्यसौरभ्ययोस्तत्रैव सुलभत्वादिति भावः ।

उदाहरणान्तराण्यन्यतो द्रष्टव्यानीत्युपेक्ष्य ग्लानिं लक्षयति । ग्लानिरिति । क्षुत्पिपासानिधुवनादिप्रयासजनितो बलापचयो ग्लानिरित्यर्थः । वैवर्ण्यारतिग्रहणं क्षामाङ्गवचनक्रियाद्युपलक्षणम् । सुरतश्रान्तायाः प्रियगौरवोद्वहनप्रयासापादनमुत्कर्षन्त्याः कस्याश्चिद्दौर्बल्यमुदाहरति । तेल्लोक्कमिति । त्रयो लोकास्त्रैलोक्यं विश्वमित्यर्थः । चातुर्वर्ण्यादित्वात् ष्यञ्प्रत्ययः । हृदयेन वक्षःस्थलेन साहसिकी

---

छाया ।

2 सखि कर्पूरेण कृतं किं कस्तुरिकया मलयजं तिष्ठतु ।
गुणशिशिरं यशःसुरभिमानय प्रतापरुद्रनृपचन्द्रम् ॥
3 त्रैलोक्यं वहति महीतां धरति भुजः प्रतापरुद्रस्य ।
तं हृदयेन धरन्ती साहसिकी दुर्बलाङ्ग्यस्मि ॥

१ °वैवर्ण्योच्छ्वासदीनताः M., R. २ किअं P.; किदं T'. ३ कप्पुरिआ P. ४ मलअजो T'. ५ साहसिई T'. ६ सहेति t. सहजकर्पूरेण कृतं किं कस्तूर्या मलयजं तिष्ठ गुणशिशिरमभिमानिनम् ।

अथ शङ्का।

अनिष्टाभ्यागमोत्प्रेक्षा शङ्का रोषादिकारणम्।

यथा।

[1]ण मुणदु[1] अण्णोत्ति मए हिअए परिचओ[2] पिअस्स किओ।
किं पअडंम्हि जणाणं सव्वंगीणेहिं[3] पुलएहिं ॥ २२ ॥

अथासूया।

परोत्कर्षासहिष्णुत्वमसूया परिकीर्त्तिता[4]।

यथा।

[2]अहिआईइ[5] गुणेहिं रूवेण अ मज्झ किं मही अहिआ।
जं तं[6] पआवरुद्दो बहुमण्णइ भाअहेअं[7] तं ॥ २३ ॥

स्वयं तन्वङ्गीति विदित्वापि प्रवृत्तत्वादिति भावः। सहसा बलेनाविमृश्य वर्त्तत इत्यस्मिन्नर्थे 'ओजःसहोम्भसा वर्त्तते' इति ठगन्तात् साहसिकशब्दात् कलोपे स्त्रियां नित्यईकारप्रत्यये प्राप्ते साहसिकीति रूपं गौरादौ तथाविधानात्। 'पुंसो जातिर्जव' इति विकल्पस्तु अप्राप्तनीलादिविषय इति साहसिकेत्याकारान्तपाठ उपेक्षणीयः।

शङ्कां लक्षयति। अनिष्टेति। परकीयादात्मदुर्णयाद्वानर्थप्राप्तेरभ्यूहनं शङ्केत्यर्थः। आदिग्रहणाद्वैवर्ण्यवैस्वर्यदिगवलोकनादयो गृह्यन्ते। उदाहरति। ण मुणद्विति। न जानात्वन्य इति मया हृदय एव परिचयःप्रियस्य कृतः। किं प्रकटास्मि जनानां सर्वाङ्गीणैः पुलकैः। मुग्धानां गूढानुरागस्य प्राकट्यमेवानर्थ इति भावः।

असूयां लक्षयति। परेति। गर्वदौर्जन्यमन्युजन्यं परोत्कर्षासहिष्णुत्वमसूयेत्यर्थः। निन्दावज्ञाभ्रुकुट्यादयोऽनुभावाः। उदाहरति। अहीति। अभिजात्या गुणै रूपेण च मत्तः किं मही अधिका। यत्तां प्रतापरुद्रो बहुमन्यते भागधेयं तत्। अभिजातिः कुलम्। गुणाः दाक्षिण्यादयः। यत्र चतुर्विधाभरणराहित्येऽपि तत्साहित्येनेवाभासनं तद्रूपम्।

छाया।

1 न जानात्वन्य इति मया हृदये परिचयः प्रियस्य कृतः।
किं प्रकटास्मि जनानां सर्वाङ्गीणैः पुलकैः॥

2 अभिजात्या गुणै रूपेण च मत्तः किं मही अधिका।
यत्तां प्रतापरुद्रो बहुमन्यते भागधेयं तत्॥

१ जणदु P. २ हिअम्मपरिचओ M. ३ °गीणेहि T'. ४ परिकीर्त्यते M.. ५ अभिजाए T'; आभिजाईए M. ६ जत्तं M. ७ भाअहेयं M. ८ जाते जवेति ६. ९ परीति ६. १० °मन्युजनम् ६.

अथ मदः ।

मदिरादिकृतो मोहहर्षव्यतिकरो मदः ।

यथा ।

'भणइ अ असंगदत्थं हसइ अमंदं अ राअभरिअंछि ।
पिअचिंतामइराए परवसा उवह सामंगी ॥ २४ ॥

अथ श्रमः ।

श्रमः खेदोऽध्वरत्यादेर्जातः स्वेदातिभूमिकृत् ।

यथा ।

'आअच्छइ एव्व पिए कीस करंती गआगआआसं ।
तंमसि सेअजलेहिं सुंदरि लुलिअंगराआसि ॥ २५ ॥

---

' आवेष्यारोप्यविक्षेप्यबन्धनीयैरभूषितम् ।
यद्भूषितमिवाभाति तद्रूपमिति कथ्यते ॥'

इति लक्षणात् । अधिका किं न भवतीत्यर्थः । तथापि बहुमाने भागधेयमेव निमित्तमित्याह । यदिति ।

मदं लक्षयति । मदिरेति । मोहो वैचित्त्यम् । हर्षः प्रसादः । मदिरादिजन्यो हर्षमोहसंकरो मद इत्यर्थः । अत्र वागङ्गस्खालित्यहसितरुदितादयो यथायोगमुत्तमादिष्वनुभावाः ।

' संमोहानन्दसंभेदो मदो मद्योपयोगजः ।
अमुना चोत्तमः शेते मध्यो हसति गायति ॥
अधमप्रकृतिश्चापि परुषं वक्ति रोदिति ।'

इति साहित्यदर्पणे । उदाहरति । भणईति ।

श्रमं लक्षयति । श्रम इति । अध्वसुरतादिजन्यः खेदः श्रम इत्यर्थः । स्वेद उपमर्दनादेरुपलक्षकः । उदाहरति । आअच्छईति ।

---

छाया ।

1 भणति चासंगतार्थं हसत्यमन्दं च रागभरिताक्षी ।
प्रियचिन्तामदिरया परवशा पश्यत श्यामाङ्गी ॥

2 आगच्छत्येव प्रिये कस्मात्कुर्वती गतागतायासं ।
ताम्यसि सेकजलैः सुन्दरि लुलिताङ्गरागासि ॥

१ दमः M., R. २ व्यतिकरो M. ३ दमः M., R. ४ असंगमत्थम् T.; असंगद-त्थम् M. ५ °अच्छी M. ६ मदिराए M. ७ परवहा $M_{2}$. ८ आगच्छइ P. ९ पिओ P. १० करंती M.

अथालस्यम्।

मन्दोद्यमत्वमालस्यं कर्तव्येषु प्रकीर्त्यते ।

यथा ।

> आस्तां मृगाक्ष्या गृहकृत्यवार्त्ता
> स्वाङ्गोपचारेष्वपि यत्नमान्द्यम् ।
> कर्त्तव्यमग्रे दयितस्य यत् स्या-
> त्तत्तं बलात्कारयति स्मरस्तत् ॥ २६ ॥

अथ दैन्यम्।

सत्त्वत्यागादनौद्धत्यं दैन्यं कार्पण्यसंभवम् ।

---

आलस्यं लक्षयति । मन्देति । गर्वश्रमादिना प्रयत्नमान्द्यमालस्यमित्यर्थः । अत्र जृम्भोपवेशनादयोऽनुभावाः । उदाहरति । आस्तामिति । गृहकृत्यवार्त्ता भूपवासनावितानसंविधानादिप्रसङ्गः स्वाङ्गोपचारेषु मृगमदानुलेपनमाल्यधारणमकरिकारचनादिषु यत्नमान्द्यं प्रयत्नशैथिल्यमुपचारकरणं पुनरतिदूरमिति भावः । अग्रे प्रियागमनसमये यत् कर्तव्यं प्रत्युद्गमनरभसाश्लेषप्रियभाषणादिकं तत् स्मरो बलात् बलमाश्रित्य कारयति । ल्यब्लोपे पञ्चमी । अत्र मन्दयत्न इति पाठे विधेयस्य मान्द्यस्य समासे गुणभूतत्वादविमृष्टविधेयांशं नाम दोषः स्यात् । अन्यैकं संधित्सतोऽपरं प्रच्यवत इति न्यायेनाविमृष्टविधेयांशं परिहरतोऽनुशासनविरोधः स्यात् । 'पूरणगुण—' इत्यादिना गुणेन षष्ठीसमासप्रतिषेधात् इति चेन्मैवं मंस्थाः । संज्ञाप्रमाणत्वात् तद्यत्नगौरवं प्रसज्येत चन्दनगन्ध इत्यादिसूत्रभाष्यकारादिमहापुरुषप्रयोगदर्शनात् तत्स्थगुणेषु प्रतिषेधाभावात् पूरणगुणेति प्रतिषेधस्य पटस्य शुक्ल इत्याद्यतत्स्थगुणाविषयत्वादिति । प्रपञ्चितं चैतदस्मदुपाध्यायैर्घण्टापथे 'न च न स्वीकृतमर्थगौरवम्' इत्येतद्व्याख्यानावसरे ।

दैन्यं लक्षयति । सत्त्व इति । सत्त्वत्यागो दौर्गत्यादेरुपलक्षकः । तेन सत्त्व-

यथा ।

[1]आणेउं णरणाहं [2]गओ क्खु [3]सहिणो जणो विलंबेइ ।
[4]मम्मह णमामि चंदं [5]सिक्खअ [6]चिरेहि [7]ईसिसि त्ति ॥ २७ ॥

अथ चिन्ता ।

[8]इष्टानभिगमाद् ध्यानं चिन्ता[9]शून्यत्वतापकृत् ।

यथा ।

[10]संण्णिहिअं [11]विअ गुरुअणं ण अ पेक्खइ पुच्छिआ वि णालवेइ[12] ।
एसा वि मग्गइ गइं हिअअस्स पिआणुबंधस्स ॥ २८ ॥

अथ मोहः ।

---

त्यागदौर्गत्यादिजन्यं मनसोऽनौद्धत्यं दैन्यमित्यर्थः । कापण्यवचनं देहवचनमालिन्याद्यनुभावानामुपलक्षकम् । उदाहरति । आणेदुमिति ।

आनेतुं नरनाथं गतः खलु सखीजनो विलम्बते । मन्मथ नमामि चन्द्रं शिक्षय चिरय ईर्षदिति । चिन्तां लक्षयति । इष्टेति । अपेक्षितानवाप्तिमूलं ध्यानं चिन्तेत्यर्थः । शून्यतानिःश्वासतापाद्योऽनुभावाः । उदाहरति । सण्णिहिअमिति ।

सन्निहितमपि गुरुजनं न च पश्यति पृष्टापि नालपति ।
एषापि मार्गति गतिं हृदयस्य प्रियानुबन्धस्य ॥

अत्र प्रथमार्धेन शून्यत्वं द्वितीयार्धेन प्रियानवाप्तिमूलं ध्यानं चोच्यते ।

---

छाया ।

1 आनेतुं नरनाथं गतः खलु सखीनां जनो विलम्बते ।
मन्मथ नमामि चन्द्रं शिक्षय चिरय ईर्षदिति ।

2 सन्निहितमपि गुरुजनं न च पश्यति पृष्टापि नालपति ।
एषापि मार्गति गतिं हृदयस्य प्रियानुबन्धस्य ॥

१ आणेदुं M. २ गदो क्खु T'; गओ क्खु M. ३ सहीजणो T'.; सहि क्खा जणो M. ४ वम्मह P. ५ सिक्खअ M. ६ चिर पहि P. ७ ईसरिस M. ८ इष्टमुद्दिश्य यद् ध्यानम् $M_2$. ९ °मानसशून्यकृत् R. १० सण्णिहिदं M. ११ पि P.; वि M. १२ °लवइ P.

मोहस्तु मूर्च्छनं भीतिदुःखावेशानुचिन्तनैः ।

यथा

> कथमपि गमयित्वा वासरं दीर्घदीर्घं
> विरचितनववेषा प्रेषयित्वाथ दूतीः ।
> चिरयति हृदयेशे प्रांशुभिश्चन्द्रपादै-
> रभिहतसेकलाङ्गी मूर्च्छिता कोमलाङ्गी ॥ २९ ॥

अथ स्मृतिः ।

पूर्वानुभूतविषयं ज्ञानं स्मृतिरुदाहृता ।

---

मोहं लक्षयति । मोह इति । भीत्यादिभिर्वैचित्यं मोह इत्यर्थः । 'मोहो विचित्तता भीतिदुःखवेगानुचिन्तनैः । घूर्णनागात्रपतनभ्रमणादर्शनादिकृत्' इति साहित्यदर्पणे । तत्राज्ञानभ्रमोत्पातघूर्णनादर्शनादयोऽनुभावाः । उदाहरति । कथमिति । दीर्घदीर्घं प्रियागमनार्थं कदा वा गभस्तिमानस्तमीयादिति प्रतीक्षणेनातिदीर्घमित्यर्थः । 'प्रकारे गुणवचनस्य' इति द्विर्भावः । वासरं कथमपि क्षणगणनया कथंचित् प्रयत्नगौरवेणेत्यर्थः ।

> 'ज्ञातहेतुविवक्षायामप्यादि कथमव्ययम् ।
> कथमादि तथाप्यन्तं यत्नगौरवबाढयोः ॥'

इत्यभिधानात् । गमयित्वा यापयित्वा । विरचितनववेषा विहितप्रियागमनसमयोचितशृङ्गारा सती । अथशब्दो विलम्बाभावसूचनार्थः । दूतीः पुङ्खानुपुङ्खतया प्रेषयित्वा हृदयेशे प्राणनाथे चिरयति विलम्बमाने सति कोमलाङ्गी अत एव प्रांशुभिरायतैश्चन्द्रपादैरिन्दुकिरणैः कशाकल्पैरभिहतसकलाङ्गी मूर्च्छिता । अनाथा पादैरभिहन्यमाना मूर्च्छन्तीति ध्वन्यते ।

स्मृतिं लक्षयति । पूर्वेति । सदृशादृष्टचिन्ताद्यैः संस्कारोद्बोधे सति पूर्वानुभूतार्थविषयज्ञानं स्मृतिरित्यर्थः । अत्र भ्रूसमुन्नमनशिरःकम्पादयोऽनुभावाः । स्पर्श-

---

१ °सकलाङ्गा R. २ °विषयज्ञानम् P, M.

यथा

> प्रतापरुद्रस्य भुजे वसन्त्या
> क्षोण्या तपः कीदृशमर्जितं स्यात्।
> स्पृष्टं सकृद्येन मदीयमङ्गं
> प्राप्नोति विष्वक् सुखवज्रलेपम्॥ ३०॥

अथ धृतिः।

धृतिश्चित्तस्य नैस्स्पृह्यं ज्ञानाभीष्टागमादिभिः।

यथा।

> वीररुद्रनृपतौ हृदय त्वं
> वल्लभे त्रिभुवनैकधुरीणे।
> साधु साधु कृतकृत्यमसि त्वं
> मन्यसे जगदशेषमसारम्॥ ३१॥

अथ व्रीडा।

चेतःसंकोचनं व्रीडानङ्गरागस्तवादिभिः।

---

सुखस्मरणमुदाहरति। प्रतापेति। [7]निबिडसुधालेपो वज्रलेपः। अत्र कस्यचिन्मदङ्गस्य कादाचित्कः प्रियकरस्पर्शः सर्वाङ्गीणमविच्छिन्नं च सुखं जनयति। वीररुद्रभुजे नित्यनिवासाया भूमेः किमु वक्तव्यमिति भावः।

धृतिं लक्षयति। धृतिरिति। आदिग्रहणात् शक्त्यादयो गृह्यन्ते। ज्ञानादिभिर्निःस्पृहत्वं धृतिरित्यर्थः।

> ज्ञानाभीष्टागमाद्यैस्तु संपूर्णस्पृहता धृतिः।
> सौहित्यवचनोल्लाससहासप्रतिभादिकृत्॥

[8]तैरेव संतोषो धृतिरित्यन्ये। अव्यग्रभावादयोऽनुभावाः। उदाहरति। वीरेति। हे हृदय त्रयाणां भुवनानां समाहारस्त्रिभुवनम्। पात्रादित्वान्न स्त्रीत्वम्। धुरं वहतीति धुरीणः। 'खः सर्वधुरात्' इत्यत्र योगविभागात् खप्रत्ययः। साधुसाध्वित्याभीक्ष्ण्ये द्विर्भावः। अत्राभीष्टागमाद् धृतिः।

व्रीडां लक्षयति। चेत इति। अनङ्गनिमित्तो रागोऽनङ्गरागः। स्तवः स्तोत्रम्। आदिग्रहणादाचारभ्रंशादयः। चेतःसंकोचनं धाष्टर्याभावः। मदनाभि-

---

१ °र्जितम् P. २ नाना° P., R. ३ °मादिषु P. ४ त्वम् M. ५ संकोचनम् T'. ६ °मद राग° R., M. ७ निबिडसुधा° t. ८ धृतें° t.

यथा ।

> तथासमालोकनकौतुकानां
> मनोरथैरन्ध्रपुराङ्गनानाम् ।
> विलोकिते रुद्रनृपे भवन्ति
> पर्यस्तपक्ष्माणि विलोचनानि ॥ ३२ ॥

अथ चैपलता ।

चापलं त्वनवस्थानं रागद्वेषादिसंभवम् ।

यथा ।

> दृष्ट्वा रुद्रनरेन्द्रं तरलतराक्षी विलासमृदुहासा ।
> कलयति मौक्तिकहारं स्पृशति च कर्णोत्पलं बाला ॥ ३३ ॥

अथ हर्षः ।

प्रैसक्तिरुत्सवादिभ्यो हर्षः स्वेदाश्रुकम्पकृत् ।

---

लज्जादिर्मनःसंकोचो व्रीडेत्यर्थः । अत्रान्तर्धानवैवर्ण्याधोमुखत्वादयोऽनुभावाः । उदाहरति । तथेति । अव्यासङ्गेनानिमिषेण च तृष्णानुगुणं दृष्ट्वा जन्मनो जीवितस्य नयनानां च साफल्यं संपादयाम इत्यादयोऽभिलाषा मनोरथाः । तैर्हेतुभिस्तथाभूतं गाढमालोकनकौतुकं दर्शनोत्कण्ठा यासां तासामन्ध्रपुराङ्गनानां विलोचनानि रुद्रनृपे विलोकिते सति पर्यस्तपक्ष्माणि सनिमेषाणि भवन्ति दृष्टिमपसारयन्तीत्यर्थः । अत्र नृपावलोकनानन्तरमेवानुरागोदयाल्लज्जाभूदिति भावः ।

चापलं लक्षयति । चापलमिति । रागद्वेषमात्सर्यादिमूलमनवस्थानं चापलमित्यर्थः । अत्रानुभावाः भर्त्सनपारुष्यस्वच्छन्दचरणादयः । अत्र रागमूलं चापलमुदाहरति । दृष्ट्वेति । बाला रुद्रनरेन्द्रं दृष्ट्वा तरलतराक्षी अतिलोलदृष्टिरित्यर्थः, विलासमृदुहासा विलासप्रधानमन्दस्मिता च । भवतीति शेषः । अत्र तरलदर्शनादिचेष्टाचतुष्टयमध्ये क्षणमप्येकत्र मनसोऽनवस्थानाच्चापलम् ।

हर्षं लक्षयति । प्रसक्तिरिति । प्रियागमनपुत्रजननाद्युत्सवादिजनितो मनः-

---

१ °रान्ध्र° M. २ चापलम् $M_2$. ३ R. drops च. ४ प्रसक्ति° M. ५ स्वेदादिकात् पृथक् $R_1$; स्वेदादिकम्पकृत् $M_2$, $M_4$. ६ °मान्ध्र° P.

यथा ।

यत् पूर्वं सरसीषु पद्ममुकुलव्याजात् तपः संचितं
वक्षोजौ युवयोस्तदद्य फलितं जातौ कृतार्थौ युवाम् ।
दत्ता काकतिवल्लभेन भवतोरेषा स्ववक्षःस्थली-
कस्तूरीद्विगुणीभवत्परिमला कल्हारमाला यतः ॥ ३४ ॥

अथावेगः ।

ईष्टानिष्टागमाज्जात आवेगश्चित्तसंभ्रमः ।

यथा ।

निस्साणध्वनिमाकलय्य सहसा हेलाविहारोद्यतं
द्रष्टुं काकतिवीररुद्रनृपतिं प्रत्यग्रकौतूहलाः ।
अर्धालम्बितमण्डनाः प्रतिपदं व्यत्यस्तभूषा जवा-
दारोहन्ति सुवर्णसौधवलभीशृङ्गाणि पौरस्त्रियः ॥ ३५ ॥

अथ जडता ।

जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टागमोद्भवा ।

---

प्रसादो हर्ष इत्यर्थः । स्वेदादयोऽनुभावाः । उदाहरति । यदिति । अत्र कामिनी कुचौ संबोध्य तयोः प्रियदत्तस्वयंधृतकल्हारमालालाभजन्यधन्यत्वकथनव्याजेन स्वकीयं हर्षमाविष्करोति ।

आवेगं लक्षयति । इष्टेति । प्रियादेरिष्टस्य राजविद्रवातवर्षादेरनिष्टस्य चागमात् जातश्चित्तसंभ्रम आवेग इत्यर्थः । अत्र हर्षशोकत्वरास्तम्भादयोऽनुभावाः । उदाहरति । निस्साणेति । अर्धालम्बितमण्डनाः एकस्मिन्नेव लोचनेऽञ्जनमेकस्मिन्नेव चरणे लाक्षाविलेपनमित्यादिक्रमेणेति भावः । प्रतिपदं प्रतिस्थानम् । व्यत्यस्तभूषा वैपरीत्येनामुक्ताभरणाः कण्ठादौ काञ्च्यादिकं कटितटादौ हारादिकं च धारयन्त्य इत्यर्थः ।

जाड्यं लक्षयति । जाड्यमिति । इष्टानिष्टागमोद्भूतमितिकर्तव्यतामूढत्वं जाड्यमित्यर्थः । अत्रानिमेषनयननिरीक्षणतूष्णींभावादयोऽनुभावाः । उदाहरति ।

---

१ इष्टाभिगमना॰ $M_4$. २ पौराङ्गनाः M., R.

यथा ।

समायाते नाथे प्रमनसि गृहान् रुद्रनृपतौ
वपुःसौन्दर्यश्रीविजितमदनोदारयशसि ।
वधूरन्तस्तोषव्यतिकरवशान्नोपचरितुं
पुरस्तादालीनां प्रचलति तथा नो विरमति ॥ ३६ ॥

अथ गर्वः ।

अन्यधिक्करणादात्मोत्कर्षो गर्वो बलादिजः ।

यथा ।

को वा शस्त्रग्रहणसमयो मादृशामीदृशानां
कीदृग्वैरं प्रतिधरणिभृत्खेटकीटेष्वमीषु ।
इत्यावेशप्रतिभयभुजाटोपदुर्वारगर्वाः
संक्रीडन्ते रणभुवि भटाः काकतीन्द्रस्य जेतुः ॥ ३७ ॥

---

समायात इति । सखीसंमक्षनिमित्तलज्जाभरेणाच्छादितानुभावो हर्षोऽन्तस्तोषः । तस्य व्यतिकरः संबन्धः । अत्र नोपचरितुमित्यत्र नञो न चलति नो विरमतीत्युभयत्राप्यनुषङ्गः । तेनोभयत्र नञ्द्वयेन लज्जासंभावितस्य चलननिषेधस्योत्कण्ठासंभावितस्य विरमणनिषेधस्य च निवृत्तिः सूच्यते । यथाह वामनः । 'संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति । अत्रोत्कण्ठाप्रतापाभ्यां प्रियोपचारं प्रति प्रवृत्तिनिवृत्त्योरुभयत आकर्षणान्नायिकायाः सर्वव्यापारप्रतिबन्धिनी सेयमुभयतः पाशा रज्जुरभूदिति भावः ॥

गर्वं लक्षयति । अन्येति । बलैश्वर्याभिजनलावण्यादिजन्योऽन्यधिकारावज्ञानसविलासाङ्गवीक्षणाद्यनुभाव आत्मोत्कर्षाभिमानो गर्व इत्यर्थः । बलमूलं गर्वमुदाहरति । क इति । मादृशामतिसूर्यप्रतापानामिति भावः । शस्त्रग्रहणसमयः को वा लक्ष्याभावादायुधग्रहणावसरो नास्तीति भावः । ये पुनः पुरो वर्तन्ते प्रतिभटमानिनस्तेषु खद्योतकल्पेषु वैरवर्णनमपि लज्जावहमेवेत्याह । कीदृगिति । आवेश आग्रहः । संक्रीडन्ते नैव प्रयासमनुभवन्तीति भावः । 'क्रीडोऽनुसंपरिभ्यश्च' इति तङ् ।

---

१ कान्ते $M_2$. २ प्रमदासि R. ३ मदनोद्दामयशसि M. ४ न चलति $M_1$. ५ °स्मादृशानां पुरस्तात् P. ६ इत्याटोप° $R_1$; इत्यावेशात् P. ७ प्रतिभट° P. ८ क्रीडन्ते ते P. ९ °समक्ष t. १० नद्वयेन t. ११ इति t.

अथ विषादः।

विषादश्चेतसो भङ्ग उपायाभावचिन्तनैः।

यथा।

'पेसेमि मणोत्ति मुद्धा तं मं मोत्तूण वल्लहे लग्गं।

मं उज्झिअ णो गच्छइ मअणो सहि किं णु कादव्वं॥ ३८॥

अथौत्सुक्यम्।

कालाक्षमत्वमौत्सुक्यं मनस्तापत्वरादिकृत्।

---

विषादं लक्षयति। विषाद इति। प्रारब्धकार्यभङ्गापराधपरिज्ञानविघ्नविषादादिभवः सत्त्वसंक्षयो विषाद इत्यर्थः। अयं चोपायान्वेषणवैमनस्यमुखशोषाद्यनुभावतारतम्यादुत्तमाद्याश्रयत्वेन त्रिविध इत्याहुः। तत्रोत्तमाश्रयं विषादमुदाहरति। पेसेमीति प्रेषयामि मन इति मुधा तन्मां मुक्त्वा वल्लभे लग्नम्। मामुज्झित्वा नो गच्छति मदनः सखि किं नु कर्त्तव्यम्। मन इति। नपुंसकत्वेनेदमन्यत्र रिरंसारहितमिति मत्वेति भावः। अत एवोक्तं पूर्वैः।

'नपुंसकमिति ज्ञात्वा तां प्रति प्रेषितं मनः।

तत्तु तत्रैव रमते हताः पाणिनिना वयम्॥'

इति। अत्र किं कर्त्तव्यमित्युपायगवेषणगोचरवागारम्भसूचितया चिन्तया विषादो व्यज्यते।

औत्सुक्यं लक्षयति। कालेति। इष्टविरहरम्यवस्तुदिदृक्षादिजन्यं मनस्तापत्व-

---

छाया।

1 प्रेषयामि मन इति मुधा तन्मां मुक्त्वा वल्लभे लग्नम्।

मामुज्झित्वा नो गच्छति मदनः सखि किं नु कर्त्तव्यम्॥

१ उपायापायचिन्तनैः M., P. २ मणोत्ति T.; मणात्ति M. ३ मुद्धातं P. ४ मोत्तूण M.

यथा ।

[1]अंघउेरभामिणिजणो अंगाइ पसाहिऊण तुवरंतो ।
रुद्दणरिंदागमणे विलंबिअं सहइ किंच्छेण ॥ ३९ ॥

अथ निद्रा ।

निद्रा चित्तनिमीलनम् ।

यथा

[2]सिविणे दिट्ठं दइअं वहुआ आलिंगिदुं कैउज्जोआ ।
उेवह दरमीलिअच्छी गअणम्मि करे पसारेइ ॥ ४० ॥

---

ग्लानिःश्वासनिद्राद्यनुभावं कालाक्षमत्वमौत्सुक्यमित्यर्थः । उदाहरति । अंधेति । अन्धपुरभामिनीजनोऽङ्गानि प्रसाध्य त्वरमाणः । रुद्रनरेन्द्रागमने विलम्बितं सहते कृच्छ्रेण ॥ भामयत्यवश्यं कुप्यतीति भामिनी । भाम क्रोध इत्यस्माद्धातोश्चौरादिकादावश्यको णिनिः । यद्वा स्त्रीणां ललितकोपो भाम इति भोजराजः । तद्वती भामिनी । अत्र कृच्छ्रशब्दसूचितैश्चिन्तानवस्थानगात्रगौरवशय्याभिलाषाद्यनुभावैः प्रियदिदृक्षाविषयमौत्सुक्यं व्यज्यते ।

निद्रां लक्षयति । निद्रेति । चित्तस्य निमीलनं बाह्येन्द्रियसंबन्धविरहः । चिन्तानैश्चिन्त्यव्यायामादिजन्यं जृम्भाङ्गभङ्गनेत्रनिमीलनाद्यनुभावं चित्तनिमीलनं निद्रेत्यर्थः । उदाहरति । सिविण इति । अत्रालीकप्रियालिङ्गनोद्योगादनवरतचिन्ताप्रतीतेस्तन्मूलेयं निद्रेति भावः । अत एवाहुः प्रशस्तपथवादाः । 'यमर्थमादतश्चिन्तयन् स्वपिति सैव चिन्तासन्ततिः प्रत्यक्षाकारा संजायते' इति ।

---

छाया ।

1 अन्धपुरभामिनीजनोऽङ्गानि प्रसाध्य त्वरमाणः ।
रुद्रनरेन्द्रागमने विलम्बितं सहते कृच्छ्रेण ॥
2 स्वप्ने दृष्टं दयितं वधूरालिङ्गितुं कृतोद्योगा ।
पश्यत दरमीलिताक्षी गगने करौ प्रसारयति ॥

१ °पुर° T'.; आन्धउर M. २ भामिणी M. ३ अंगाई P. ४ तुवेरन्तो T'. ५ °णरेंदा° T'. ६ सहइ T'. ७ किच्छेण T' ८ सिविणइ M. ९ वहूआ M. १० किउज्जोआ M.; किदोज्जोआ T' ११ उवहदनिमी° M. १२ भामिनि° ६. १३ जृम्भाङ्ग° ६.

अथापस्मारः ।

आवेशो[1] दुःखमोहाद्यैरपस्मारो[2]ऽङ्गतापकृत् ।

यथा ।

दृष्ट्वा स्वप्ने कुपितवदनं काकतीन्द्रक्षितीशं[3]
हा हा रक्षेत्यसकलगिरः संभ्रमोत्थानभाजः ।
धावन्त्यन्तर्वणभुवि[4] लुठन्त्याह्वयन्त्यात्मबन्धू-
नाराद्भूतानपि रिपुगणा व्यस्तनामग्रहेण ॥ ४१ ॥

अथ सुप्तिः ।

सुप्तिर्निद्रासमुद्रेकः ।

यथा ।

विश्वैकरक्षाजुषि काकतीन्द्रे[5]
निश्चिन्ततां प्राप्तवतो मुरारेः ।
तत्कीर्त्तिचन्द्रातपवर्धितोऽपि
दुग्धाम्बुधिर्नैव भिनत्ति निद्राम् ॥ ४२ ॥

---

अपस्मारं लक्षयति । आवेश इति । अशुचित्वधातुवैषम्यभूतावेशादिजन्यो भूपातभ्रमणभुजास्फोट[6]विकटोक्तिलालफेनाद्यनुभाव आवेशोऽपस्मार इत्यर्थः । उदाहरति । दृष्ट्वेति । कुपितवदनं भ्रुकुट्यादिना भयंकरमुखमित्यर्थः । अन्तर्वणभुवि वनमध्य इत्यर्थः । 'प्रनिरन्तर—' इत्यादिना णत्वम् । आराद्भूतान् समीपस्थानपि । अत्र भयकार्यमोहमूलोऽपस्मारो[7] दैन्यधावनप्रभृतिभिरनुभावैर्व्यज्यते ।

सुप्तिं[8] लक्षयति । सुप्तिरिति[9] । निश्वासोच्छ्वासनिश्चलत्वनेत्रनिमीलनाद्यनुभावो निद्रासमुद्रेकः सुप्तिरित्यर्थः[10] । उदाहरति । विश्वेति । काकतीन्द्रे विश्वैकरक्षाजुषि त्रिभुवनैकत्राणपरायणे सति । जुषेः क्विप् । निश्चिन्ततां प्राप्तवतः अवतीर्णभारत्वादिति भावः । अत एव मुरारेः पयोधिवृद्धावपि निद्राभङ्गाभावात् सुषुप्तिरित्याह । तदिति ।

---

१ आवेगो P. २ °पस्माराङ्ग° R. ३ क्षितीन्द्रम् T', M. ४ °स्यन्तर्वन° M. ५ वीरचन्द्रे M$_{p}$. ६ भुजास्फाट° t. ७ अत्र शत्रूणां भयकार्य° t. ८ सुप्तं लक्षयति t. ९ सुप्तमिति t. १० सुप्तमित्यर्थः t.

अथ विबोधः ।

विबोधश्चेतनावाप्तिर्जृम्भाक्षिपरिमार्गकृत् ।

यथा

प्रतापरुद्रे नृपमौलिरत्ने ।
विश्वंभरां रक्षति शिक्षितारौ ।
विजृम्भमाणाः परितः प्रजानां
भाग्यश्रियस्तत्क्षणमुन्मिषन्ति ॥ ४३ ॥

अथामर्षः ।

अमर्षः सापराधेषु चेतःप्रज्वलनं मतम् ।

यथा ।

अरे भूपाश्चापान् नमयत शिरांस्युन्नमयत
प्रवृत्ताः स्वःस्त्रीणामहमहमिका वीरवरणे ।
त्वरन्ते नः खड्गाः प्रतिदलनकेल्यामिति भटा
रणाग्रे गर्जन्ति प्रकटितरुषो रुद्रनृपतेः ॥ ४४ ॥

---

विबोधं लक्षयति । विबोध इति । शब्दास्पर्शाहारपरिणामादिजन्या भुजोत्क्षेपाङ्गुलिविस्फोटजृम्भणाक्षिविमर्दनाद्यनुभावा चेतनावाप्तिर्विनिद्रत्वं विबोध इत्यर्थः । उदाहरति । प्रतापेति । विजृम्भमाणाः विवर्धमानाः जृम्भां कुर्वाणाश्च । उन्मिषन्ति उद्भवन्ति नेत्राण्युन्मीलयन्ति च । अत्रेत्थमर्थद्वयस्याभेदाध्यवसायादारोपितचेतनधर्माणां भाग्यसंपदामुन्निद्रत्वप्रतीतेर्विबोध इति भावः ।

अमर्षं लक्षयति । अमर्ष इति । अधिक्षेपावमानादिना स्वापराधेषु मनःप्रज्वलनमभिनिविष्टत्वं प्रतिचिकीर्षेति यावत् । एवंविधेऽमर्षे स्वेदशिरःकम्पचिन्तोपायान्वेषणोत्साहतर्जनादयोऽनुभावा द्रष्टव्याः । उदाहरति । अरे इति । स्वःस्त्रीणामप्सरसामन्योन्यं श्रेष्ठाहमित्यभिमानोऽहमहमिका । 'अहमहमिका तु सा स्यात् परस्परं यो भवत्यहंकारः' इत्यमरः । अहमिति विभक्तिप्रतिरूपकमव्ययं निपातितम् । तस्य वीप्सायां द्विरुक्तिः । संज्ञायां कन् प्रत्ययः । प्रतिदलनकेल्यां खण्डनक्रीडायाम् ।

---

१ विबोधश्चे° R. २ °वाप्तिजृम्भा° M. ३ विभ्रति M₁. ४ त्वत्खड्गाः M. ५ प्रविदलन° T'. ६ स्फोट for विस्फोट t. ७ चेतनाप्राप्ति° t.

अथावहित्था ।

हर्षाद्याकारसंगुप्तिरवहित्थेति कथ्यते ।

यथा ।

[1]गोट्ठीए महिलाणं [2]सोऊण पआवरुद्दच[3]रिआइं ।
आलिहइ [4]ओणअमुही [5]मुद्धा चलणेण महि[6]पुट्ठं ॥ ४५ ॥

अथोग्रता ।

दृष्टेऽपराधे चण्डत्वमुग्रता तर्जनादिकृत् ।

यथा ।

प्रियमानीय मानिन्या विरहार्तिर्निवार्यताम् ।
यदेतस्याः कटाक्षोल्कापातै[7]रिन्दुर्मषीकृतः ॥ ४६ ॥

---

अवहित्थां लक्षयति । हर्षेति । भयव्रीडाकौटिल्यादिभिर्हर्षादिकार्याकारगोपनमवहित्थेत्यर्थः । अत्र शून्यस्मितान्यथाकथनमिथ्याधैर्यकथाभङ्गादयोऽनुभावा ऊह्याः । उदाहरति । गोट्ठीए इति । गोष्ठ्यां महिलानां श्रुत्वा प्रतापरुद्रचरितानि । आलिखत्यवनतमुखी मुग्धा चरणेन महीपृष्ठम् ॥ अत्र काचन सुन्दरी प्रसङ्गादात्मानुरागप्रधानानि प्रियचरितानि श्रुत्वा प्रहृष्यन्ती लज्जया मुखविकासादिसंगोपनार्थमधोमुखी महीमालिखतीत्यवहित्थेति भावः । महिपट्ठमिति । 'पृष्ठेऽनुत्तरपदे' इति नियमेनेत्वाभावाद् 'ऋतोऽत्' इत्यत्वम् । 'दिहो मिथस्स' इति महीकारस्य ह्रस्वः ।

उग्रतां लक्षयति । दृष्ट इति । अपराधे पुत्रमित्रकलत्रादिद्रोहरूपे दृष्टे सति तर्जनोद्वेजनताडनबन्धनाद्यनुभावं चण्डत्वं क्रौर्यमुग्रतेत्यर्थः । कस्याश्चिद्विरहिण्याः सखी प्रियं प्रति दूतिकां प्रेषयति । प्रियमिति । अत्र संतापजननेन स्वापराधस्येन्दोः कटाक्षज्वालाभिर्मषीकरणोद्योगादुग्रतेति भावः ।

---

छाया ।

1 गोष्ठ्यां महिलानां श्रुत्वा प्रतापरुद्रचरितानि ।
आलिखत्यवनतमुखी मुग्धा चरणेन महीपृष्ठम् ॥

१ गोठ्ठिए P. २ सोदूण M. ३ °चरिआइं P. ४ ओणअमुही M. ५ मुग्धा M. ६ °पट्ठम् T; °पिट्ठम् M. ७ °रिन्दो मषी कृता R.; °रिन्दुर्मषीकृतः M.

अथ मतिः ।

तत्त्वमार्गानुसंधानादर्थनिर्धारणं मतिः ।

यथा ।

'को संसओ महिअले चंदो एव्व वीररुद्दणरणाहो ।
जस्स करप्पस्सादो अंगाइ मिअंकरण्णंति ॥ ४७ ॥

अथ व्याधिः ।

मनस्तापाद्यभिभवाज्ज्वरादिर्व्याधिरिष्यते ।

यथा ।

प्रतापरुद्रस्य दिशां जिगीषोः
प्रत्यर्थिनारीजनदेहजन्मा ।
स्मरज्वरोष्मा हिमवत्प्रदेशान्
स्मर्तव्यनीहारकथान् करोति ॥ ४८ ॥

---

मतिं लक्षयति । तत्त्वेति । नानाविधशास्त्रचिन्तोहापोहादिभ्योऽर्थनिश्चयो मतिरित्यर्थः । अत्र शिष्योपदेशसंशयच्छेदविदग्धव्यवहारमनःसंतोषादयोऽनुभावाः द्रष्टव्याः । उदाहरति । को संस्सअ इति । कः संशयो महीतले चन्द्र एव वीररुद्रनरनाथः । यस्य करस्पर्शादङ्गानि मृगाङ्करत्नन्ति ॥ अत्र प्रियकरसंस्पर्शेऽङ्गानामिन्दुकिरणसंपर्के चन्द्रकान्तानामिव द्रवीभावादयं चन्द्र एवेत्यध्यवसायान्मतिः ।

व्याधिं लक्षयति । मन इति । मनस्तापदोषवैषम्याद्यभिभवजन्मा शीतोष्णज्वरादिश्शीतालुतोष्णालुताद्यनुभावो व्याधिरित्यर्थः । विरहजन्यं तापज्वरमुदाहरति । प्रतापेति । दिशामिति शेषे षष्ठी । 'न लोक—' इत्यादिना कारकषष्ठ्याः प्रतिषेधात् । अत्रोष्णालुतया हिमवत्प्रदेशवासिनोऽपि शत्रुस्त्रीजनस्य हिमापेक्षेति महीयानयं तापज्वर इति भावः ।

---

छाया ।

1 कः संशयो महीतले चन्द्र एव वीररुद्रनरनाथः ।
यस्य करस्पर्शादङ्गानि मृगाङ्करत्नन्ति ॥

१ °दर्थे निर्धा M. २ संसओ M. ३ चंद P. ४ मिअ M. ५ अंगाई P. ६ मिअंकरअणंति T. ७ °ज्ज्वरादि° M. ८ °संगजन्मा R. ९ हि वनप्रदेशान् M. १० °संस्पर्शे t. ११ शेषलक्षणा षष्ठी t.

अथोन्मादः ।

उन्मादस्तुल्यवर्तित्वं चेतनाचेतनेष्वपि ।

यथा ।

प्रतापरुद्रस्य जयप्रयाण-
भेरीध्वनौ मूर्च्छति दिङ्मुखेषु ।
त्रासाकुला भ्रान्तिमुपेत्य वृक्षान्
पृच्छन्ति मार्गं रिपुभूमिपालाः ॥ ४९ ॥

अथ मरणम् ।

मरणं मरणार्थस्तु प्रयत्नः परिकीर्तितः ।

यथा ।

[1]पिअविरहं असहंती बहुआ णिअजीविअं उवेक्खंती ।
सेव्वइ जोह्णं दक्खिणपवणस्स तणुं समप्पेइ ॥ ५० ॥

साक्षान्मरणस्यामङ्गलत्वान्नोदाहरणत्वमुचितम् ।

---

उन्मादं लक्षयति । उन्माद इति । भयसंनिपातेष्टवियोगधननाशादिभिश्चित्तविभ्रान्तिरुन्माद इत्यर्थः । अत्रानिमित्तस्मितासंबन्धप्रलापनिर्हेतुकधावनोपवेशनोत्थानरोदनादयोऽनुभावा भवन्ति । भयमूलमुन्मादमुदाहरति । प्रतापेति । स्पष्टमेतत् ।

मरणं लक्षयति । मरणमिति । व्याध्यभिघाताभ्यां देहान्मनसोऽपायो हिक्काश्वासाद्यनुभावो मरणमित्यर्थः । धनिकहेमचन्द्राद्यनुसारेण साक्षात्तदुदाहरणस्यामङ्गलत्वात् तदुद्योगोऽत्र विवक्षित इत्याह । मरणार्थ इति । शारदातनयस्तु मरणेऽभिनयो नास्तीत्येतत् काव्ये न पेक्ष्यत इत्याह । उदाहरति । पियेति । प्रियविरहमसहमाना वधूर्निजजीवितमुपेक्षमाणा । सेवते ज्योत्स्नां दक्षिणपवनस्य तनुं समर्पयति ॥ भस्मीकरणबुद्ध्येति भावः ।

---

छाया ।

1 प्रियविरहमसहमाना वधूर्निजजीवितमुपेक्षमाणा ।
सेवते ज्योत्स्नां दक्षिणपवनस्य तनुं समर्पयति ॥

१ °प्रयाणम् B. २ प्रयत्नस्तु प्रकीर्त्यते M.; प्रयत्नः परिकीर्त्यते M. ३ णिअ° P. ४ उवक्खंती M. ५ जोण्हं T'. ६ दाहिण° P. ७ समप्पेइ P.; समप्पेदि M. ८ मद° I. ९ तथा° I. १० कथ्यते I.

अथ त्रासः ।

आकस्मिकभयाच्चित्तक्षोभस्त्रासः प्रकीर्त्यते[1] ।

यथा ।

[1]पणअकुविआच्चिरेण वि वहुआ सोऊण[2] घणघणत्थणिअं[3] ।
दइअं सरअसवलिआ[4] आलिंगइ वेपमाणंगी[5] ॥ ५१ ॥

अथ वितर्कः ।

संदेहात् कल्पनानन्त्यं[6] वितर्कः परिकीर्तितः[7] ।

यथा ।

गुणैस्तत्रासक्तं मम हृदयमन्यत्र गणितं
सखीभिर्नालोचि[8] क्षितिपतिरसौ दुर्लभ[9] इति ।

---

त्रासं लक्षयति । आकस्मिक इति । अकस्मादेवाकस्मिकम् । विनयादित्वात् स्वार्थे ठक्प्रत्ययः । तकारान्तत्वात् 'इसुसुक्तान्तात् कः' इति कादेशः । अव्ययस्याटिलोपः । तस्मात् भयात् भयहेतोरित्यर्थः । विद्युद्गर्जितभूकम्पादिजन्यः कम्पगात्रसंकोचरोमाञ्चमोहाद्यनुभावश्चेतश्चमत्कारस्त्रास इत्यर्थः । गर्जितमूलं त्रासमुदाहरति । पणएत्ति । प्रणयकुपिताचिरेणापि वधूः श्रुत्वा घनघनस्तनितम् । दयितं सरभसवलिता आलिङ्गति वेपमानाङ्गी ॥

वितर्कं लक्षयति । संदेहादिति । उपलक्षणं चैतत् । तेन संदेहविमर्शादिजन्योऽनेकधासंभावनात्मा[10] भ्रूक्षेपशिरःकम्पाद्यनुभावो वितर्क इत्यर्थः । उदाहरति । गुणैरिति । गुणैर्महाकुलीनतादिभिः । तत्र क्षितिपतौ । अन्यद्दौर्लभ्यादिकं न गणितं मदीयहृदयस्य कामान्धत्वादिति भावः । सखीभिरिति विवेकवतीभिरपीति भावः । ननु किं गतोदकसेतुबन्धेन इतः परं वा प्रियप्राप्तावुपायं चिन्त-

---

छाया ।

1 प्रणयकुपिताचिरेणापि वधूः श्रुत्वा घनघनस्तनितम् ।
दयितं सरभसवलिता आलिङ्गति वेपमानाङ्गी ॥

१ प्रकीर्तितः $M_4$. २ सोदूण $M_4$. ३ °थ्थणिदं $M_1$; °थ्थणिअं T'. ४ सरहस° T'; सरभअ° $M_1$; सरभस° $M_4$. ५ वेवमाणंगी T'; वेपमाणांगि P. ६ कल्पनान्यत्वं P. ७ परिकीर्त्यते R. ८ °नारोचि T'. ९ दुर्लभ $M_2$. १० °संभावितात्मा L.

उपायः को वा स्यात्तदभिगमने मुह्यति मनः
किंयान् कोऽयं कीदृक् कियदवधिरन्तर्व्यतिकरः ॥ ५२ ॥

तत्र सात्त्विकानां व्यभिचारिणां चानेकरससाधारणत्वान्न विशेषमपेक्ष्योदाहरणं कृतम् । तथा हि शृङ्गारे सर्वेषामनुप्रवेशः संभवति । हास्ये ग्लानिश्रमचपलत्वहर्षावहित्थानां संभवः । करुणे मदधृतिव्रीडाहर्षगर्वौत्सुक्योग्रताभिर्विनान्ये संभवन्ति । रौद्रे ग्लानिशङ्कालस्यदैन्यचिन्ताव्रीडावेगजडताविषादसुप्तिनिद्रापस्मारावहित्थाव्याध्युन्मादशमाः न संभवन्ति । वीरे रौद्रान्निर्वेदोऽधिकः । भयानकेऽसूयामदधृतिव्रीडाहर्षगर्वनिद्रासुप्त्यमर्षावहित्थोग्रतामतिभिर्विनान्ये संभवन्ति । बीभत्सेऽद्भुते च चिन्तात्रासादयो यथासंभवमूह्याः । शान्ते निर्वेदधृती संभवतः ।

---

याम इत्युक्ते सोऽपि न प्रतीयत इत्याह । उपाय इति । तत्र हेतुमाह । मुह्यति मन इति । मोहापगमानन्तरमुपायश्चिन्त्यतामित्याशङ्क्य इयत्तयेदन्तयेदन्तया वा दुरवगमत्वेन दुश्चिकित्सस्य मोहमहाव्याधेरानन्तर्यमपि दुर्लभमेवेत्याशयेनाह । कियानिति । गच्छता कालेन स्वयमेव मोहशान्तेः किं तया चिन्तयेत्याशङ्क्य कालावधिरपि दुरवबोध एवेत्याह । कियदवधिरिति । व्यतिकरो व्यसनं विपत्तिर्मोह इति यावत् । एवमत्र संदेहेन कल्पनानन्त्याद्वितर्क इति भावः ।

ननु विभावादिवत् सात्त्विकसंचारिणामपि तत्तद्रसप्रस्ताव एव किमिति नोदाहरणं कृतमत आह । तत्रेति । व्यभिचारिणामनेकरससाधारणत्वमुपपादयति । तथाहीत्यादिना ।

भावाद्यश्चित्तारम्भाः । लीलादयो गात्रारम्भाः । उभयेऽप्यनुभावाः । तदुक्तम् ।

' अनुभावश्चतुर्धा स्यान्मनोवाक्कायबुद्धिभिः ।'

इति । एतेषां योषिदालम्बनचेष्टारूपाणां यौवनजन्यानामुद्दीपनविभावत्वमपि प्राचामाचार्याणां संमतम् । अतः संकीर्णस्वरूपाणामेतेषां प्रकरणनियमाभावेना-

---

१ यथा हि M. २ P. drops संभवति. ३ सुप्त° R.; सुषुप्ति° $M_4$. ४ M. omits निद्रा. ५ °शमत्रासा न संभवन्ति T'; °त्रासा न भवन्ति ( i. e. शम is dropped ) M. ६ रौद्राद्भुतनिर्वेदो M. ७ T' drops अमर्ष. ८ °धृतिसंभवः $M_3$.

अथ शृङ्गारचेष्टा निरूप्यन्ते ।

भावो हावश्च हेला च माधुर्यं धैर्यमित्यपि ।
लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ॥
मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा ।
कुतूहलं च चकितं विहृतं हास इत्यपि ॥
एवं शृङ्गारचेष्टाः स्युरष्टादशविधा मताः ॥

तत्रासां स्वरूपमुदाहरणं च ।

अथ भावः ।

रसाभिज्ञानयोग्यत्वं भाव इत्यभिधीयते ।

यथा ।

[1]रुद्दणरिंदस्स गुणे गाअइ बालत्तणम्मि सविस्संभं ।
लज्जेइ दरपुलइओ जुवइजणो जोव्वणे गाउं ॥ ५२ ॥

---

यत्रैव स्वरूपनिरूपणावसर इत्यभिप्रायेणाह । अथेति । परिगणनादेवाष्टादशविधत्वे जातेऽपि कण्ठोक्तिर्मतान्तरेष्वेतेषामुच्चावचत्वमस्तीति सूचयितुम् । तत्प्रपञ्चस्तु भोजराजीयादिग्रन्थेषु द्रष्टव्यः ।

तत्र भावं लक्षयति । रसेति । बाल्ययौवनसंधावुत्पन्नशृङ्गारविषयः प्रथमोऽन्तःकरणविकारो भावः इत्यर्थः । तदुक्तम्

'चित्तस्य विकृतिः सत्त्वं विकृते कारणे सति ।
ततोऽल्पा विकृतिर्भावो बीजस्यादिविकारवत् ॥'

इति । उदाहरति । रुद्देति । रुद्रनरेन्द्रस्य गुणान् गायति बालत्वे सविस्रब्धम् । लज्जते दरपुलकितो युवतिजनो यौवने गातुम् ॥ अत्र यद्यपि ईषदर्थे दरशब्दोऽव्ययमिति त्रिविक्रमः तथापीषत्तमत्वमत्र विवक्षितम् । तेन दरपुलकितो दुर्लक्षपुलक इत्यर्थः ।

---

छाया ।

1 रुद्रनरेन्द्रस्य गुणान् गायति बालत्वे सविस्रम्भम् ।
लज्जति दरपुलकितो युवतिजनो यौवने गातुम् ॥

१ किलकिञ्चितम् P. २ अत्रासाम् M.; आसाम् M.. ३ T' omits अथ. ४ बालत्तणम्मि M. ५ विस्सम्भं T'. ६ °पुलइओ T'. ७ गाइ M.

अथ हावः।

ईषद्दृष्टविकारः स्याद्भावो हावः प्रकीर्त्यते।

यथा।

अत्रैवेषत्पुलकित इति।

अथ हेला।

सुव्यक्तविक्रियो भावो हेलेति प्रतिपाद्यते।

यथा।

[1]मा होदु कस्स वि फुडं इइ मुध्धे कुणोसि वल्लहं हिअए।
घोसिज्जइ तुह भाओ सव्वंगीणेहि पुलएहि॥

अथ माधुर्यम्।

अभूषणेऽपि रम्यत्वं माधुर्यमिति कथ्यते।

यथा।

जितत्रैलोक्यलावण्या प्रकृत्या हरिणेक्षणा।
किं तु भूषयितुं धत्ते भूषणानीति मे मतिः॥ ५९॥

---

हावं लक्षयति। ईषदिति। दरशब्दस्य मुख्यार्थविवक्षायामिदमेवात्रोदाहरणमित्याह। अत्रैवेषदिति।

हेलां लक्षयति। सुव्यक्तेति। उदाहरति। मेति। मा भवतु कस्यापि स्फुटमिति मुग्धे करोषि वल्लभं हृदये। घोष्यते तव भावः सर्वाङ्गीणैः पुलकैः॥

माधुर्यं लक्षयति। अभूषण इति। अत एवोक्तं दशरूपके। 'सर्वास्वप्यवस्थास्वनुल्बणत्वं माधुर्यम्' इति। उदाहरति। जितेति। प्रकृत्या स्वभावेनैव न तु प्रयत्नेनेति भावः। जितं त्रैलोक्यं येन तत् तथाभूतं लावण्यं पूर्वोक्तः कान्तिविशेषो यस्याः सा तथोक्ता। अत्र स्वाभाविकसौन्दर्यस्य प्रसाधनविधिनिःस्पृहत्वान्माधुर्यमिति भावः।

---

छाया।

1 मा भवतु कस्यापि स्फुटमिति मुग्धे करोषि वल्लभं हृदये।
घोष्यते तव भावः सर्वाङ्गीणैः पुलकैः॥

१ विकारस्तु भावो M. २ इत्यादि R. ३ परिकीर्त्यते R. ४ फुडइ T.; फुडंम M. ५ कुणसि T'; कूणसि M. ६ हिइए P. ७ उघसिज्जइ P. ८ भाअ P.; भावो M. ९ °गीणेहिं P. १० °एहिं P.; M. ११ t. drops मुख्यार्थ.

अथ धैर्यम् ।

शीलाद्यलङ्घनं नाम धैर्यमित्यभिधीयते ।

यथा ।

[1]कुलवॅहुआणं ण जुज्जइ मॅज्जाआॅलंघनं खुॅ विसमे वि ।
रुद्दणरिंदगुणा उण हिअअहरा: किं णु कादव्वं ॥ ५६ ॥

अथ लीला ।

प्रियानुकरणं लीला वॉग्भिर्गत्याय चेष्टितैः ।

यथा ।

[2]पेॅच्छह सॅहिअ एसा लच्छी रण्णो पआवरुद्दस्स ।
चॅरिआइ अणुकुॅणंती रॅण्णीसु पइव्वआ जाआ ॥ ५७ ॥

---

धैर्यं लक्षयति । शीलेति । उदाहरति । कुलेति । कुलवधूनां न युज्यते मर्यादालङ्घनं खलु विषमेऽपि । रुद्रनरेन्द्रगुणाः पुनर्हृदयहराः किं नु कर्तव्यम् ॥ विषमे विपद्यपि ।

लीलां लक्षयति । प्रियेति । उदाहरति । पेच्छहेति । प्रेक्षय सख्य एषा लक्ष्मी राज्ञः प्रतापरुद्रस्य । चरितान्यनुकुर्वती राज्ञीषु पतिव्रता जाता ॥ अत्र लक्ष्मीर्नाम काचिन्नायिका प्रियचरितानुकरणाल्लीलावती जातेत्यर्थः । तस्याः पातिव्रत्ये हेतुत्वमुक्तं सर्वज्ञसोमेश्वरेण ।

'भुक्ते भुङ्क्ते या पत्यौ दुःखिते दुःखिता यदि ।
मुदिते मुदितात्यर्थं प्रोषिते मलिनाम्बरा ॥
सुप्ते पश्चात्तु या शेते पूर्वमेव प्रबुध्यते ।
नान्यं कामयते चित्ते सा विज्ञेया पतिव्रता ॥'

इति । राज्यलक्ष्मीरपि दानभोगादावत्यन्तमनुकूला राज्ञि निश्चलाभूदिति व्यज्यते ।

---

छाया ।

1 कुलवधूनां न युज्यते मर्यादालङ्घनं खलु विषमेऽपि ।
रुद्रनरेन्द्रगुणाः पुनर्हृदयहराः किं नु कर्तव्यम् ॥

2 प्रेक्षध्व सख्य एषा लक्ष्मी राज्ञः प्रतापरुद्रस्य ।
चरितान्यनुकुर्वती राज्ञीषु पतिव्रता जाता ॥

१ वहूआण M. २ लज्जाआ M. ३ °लंघणं M. ४ क्खु P. ५ वाग्भिर्गत्यादिचेष्टितैः P. ६ पेच्छ P. ७ सहिओ T, M. ८ चरिआई P. ९ °कूणंती M. १० रण्णी तु P.

अथ विच्छित्तिः ।

विच्छित्तिरतिरम्यत्वं स्वल्पैरपि विभूषणैः ।

यथा ।

[1]कस्स कए केण किअं काअइपुरंइंछिआणं सुंदेरं ।
साहारणभूसाए पिअसहि तेल्लोकरमणिज्जं ॥ ५८ ॥

अथ विलासः ।

तात्कालिको विकारः स्याद्विलासो दयितेक्षणे ।

यथा ।

सहेलं पश्यन्त्याः प्रकृतिसुभगं रुद्रनृपतिं
तदात्वप्रत्युद्यद्विविधललिताटोपमधुरम् ।
रसप्रादुर्भावायुगपदुदयत्सात्त्विकमहो
मृगाक्ष्यास्तारुण्ये कुसुमशरशिल्पं विजयते ॥

अथ विभ्रमः ।

विभ्रमस्त्वरया काले भूषास्थानविपर्ययः ।

---

[९]विलासं लक्षयति । तात्कालिक इति । विलासो नेत्रभ्रूवक्त्रकर्मणां विशेष इत्यर्थः । उदाहरति । सहेलमिति । व्याख्यातमेतन्नायकप्रकरणे ( ५१ ) प्रौढोदाहरणप्रस्तावे ।

विच्छित्तिं लक्षयति । विच्छित्तिरिति । उदाहरति । कस्सेति । कस्य कृते केन कृतं काकतिपुरन्ध्रीणां सौन्दर्यम् । साधारणभूषया यत्सखि त्रैलोक्यरमणीयम् ॥ साधारणभूषया स्रक्चन्दनताम्बूलादिनापि केन कृतमित्यनेन सौन्दर्यस्य विधातृशिल्पवैलक्षण्यं प्रतीयते । कस्य कृत इत्यनेन भोक्ता तदनुरूपो नोपलभ्यत इति ।

विभ्रमं लक्षयति । विभ्रम इति । काले प्रियसमागमादिसमये । त्वरया मदनावेशादिसंभ्रमेणेत्यर्थः । भूषाणां हाराङ्गदादीनां स्थानविपर्ययः स्थानव्यत्यास

---

छाया ।

1 कस्य कृते केन कृतं काकतिपुरस्त्रीणां सौन्दर्यम् ।
साधारणभूषया प्रियसखि त्रैलोक्यरमणीयम् ॥

१ °इल्धिआणसुन्देरं T'; °इन्धीआणं सुन्देरं M. २ साधारण° M. ३ °भूसाए वि M. ४ जं सहि T'; M. ५ तेलोक्क° T'. ६ सहासं M. ७ तदा तु प्रत्यु° R. ८ °स्ताकण्यं M. ९ In the commentary the order of treatment is विभ्रम, विच्छित्ति and विलास.

यथा ।

[1]सोऊण सहीमुहादो दि[2]वसो वि[3]रतोत्ति संभमेण वहू ।
ह[4]त्थेसु णे[5]उराइं च[6]रणेसु कुं[7]णइ वलआइ ॥ ५९ ॥

अथ कि[8]लकिञ्चितम् ।

[9]रोषाश्रुहर्षभीत्या[10]देः संकरः कि[11]लकिञ्चितम् ।

यथा ।

[12]गेण्[13]हइ ण[14]रणाहे विअणंमि पडंचलं मिअ[15]च्छीए ।
वेवइ तणू वि णे[16]च्चइ भु[17]उडी अ[18]वि गग्गआ वाआ ॥ ६० ॥

अथ मोट्टायितम्

मोट्टायितं स्यादिष्टस्य कथादौ [18]भावसूचनम् ।

---

इत्यर्थः । उदाहरति । सोऊणेति । श्रुत्वा सखीमुखाद्दिवसो विरत इति संभ्रमेण वधूः । हस्तयोर्नूपुरे चरणयोः करोति वलये ॥ श्रुत्वा सखीमुखाद्दिवसो विरत इति प्रियासक्तचित्ततया स्वयं दिवसावसानमपि न जानातीति भावः । ततः संभ्रमेण वधूर्हस्तयोर्नूपुरे चरणयोर्वलये [19]च करोति ।

किलकिञ्चितं लक्षयति । रोषेति । उदाहरति । गेण्ह इति । गृह्णति नरनाथे विजने पटाञ्चलं मृगाक्ष्याः । वेपते तनुर्विनृत्यति भ्रुकुट्यपि गद्गदा वाचः ॥ अत्र भयादिविकाराणां कम्पादीनां मेलनात् किलकिञ्चितम् ।

मोट्टायितं लक्षयति । मोट्टायितमिति । प्रियगुणक[20]थनादौ स्वाभिलाषप्रकटनं

---

छाया ।

1 श्रुत्वा सखीमुखाद्दिवसो विरत इति संभ्रमेण वधूः ।
हस्तयोर्नूपुराणि चरणयोः करोति वलयानि ॥
2 गृह्णति नरनाथे विजने पटाञ्चलं मृगाक्ष्याः ।
वेपते तनुरपि नृत्यति भ्रुकुट्यपि गद्गदा वाचः ॥

१ दिअहो M. २ विरओत्ति M. ३ हत्ते M. ४ णोउराइं M.; णपूराइं P. ५ चल-णेसु M. ६ कुणइ P.; कुणइ M. ७ वलआई P. ८ किलकिञ्चितम् P. ९ ओघाश्रु° T'. १० °भीत्यादिसंकरः R. ११ किलकिञ्चितम् P. १२ गेह्णति P.; गह्णन्ते M. १३ काकइणाहे T'.; णरणाहो P. १४ विणञ्चइ P. १५ भिअड्डी P. १६ विअ M. १७ वाचा P. १८ भावसूचितम् R. १९ वलयति t. २० °कथनादय p.

यथा ।

[1]मैहुराइ रुद्दणरवइचैरिआइ वहूँए सुणंतीए ।
तणुगोवणेण पॅअडो जह भाओ ण तहॅ पुलएहिँ ॥ ६१ ॥

अथ कुट्टमितम् ।

संमर्देऽपि सुखाधिक्यं रतौ कुट्टमितं मतम् ।

यथा ।

निर्मर्याद्मनोभवोत्सवकथाविस्रम्भकर्णेजपै-
रङ्कैर्विस्मितमानसां प्रियसखीमालोक्य जातत्रपा ।
वैयात्यं निजमात्मवल्लभकृतां रागान्धतां जानती
सद्यो नम्रमुखेन्दुरिन्दुवदना क्षोणीं लिखन्ती स्थिता ॥ ६२ ॥

---

मोट्टायितमित्यर्थः । उदाहरति । महुराइेति । मधुराणि रुद्रनरपतिचरितानि वध्वाः शृण्वत्याः । तनुगोपनेन प्रकटो यथा भावो न तथा पुलकैः ॥ पुलकानां प्रियगुणस्तुतिजनितमन्मथभावसूचकत्वं भावप्रकाशे ।

'गुणान् वर्णयति स्वैरं वीक्षते भावमन्थरम् ।
रोमाञ्चो गद्गदपदा वाक् स्वेदश्च कपोलयोः ॥
विस्रम्भकथनं दूत्या तत्समागमचिन्तनम् ।
एवंगुणस्तुतिभवा भावा मन्मथसूचकाः ॥'

इति ।

कुट्टमितं लक्षयति । संमर्द इति । केशाधरादिग्रहे सत्यपि बहिःप्रकोपजनकोऽन्तःसान्द्रानन्दत्वं कुट्टमितमित्यर्थः । उदाहरति । निर्मर्यादेति । निर्मर्यादो निर्दयप्रवृत्तो मनोभवोत्सवकेशाधरग्रहादिकामक्रीडैव कथावादस्तस्य विस्रम्भकर्णेजपैरुच्छृङ्खलत्वसूचकैर्नखदन्तपदादिद्वारेणेति भावः । 'स्तम्बकर्णयो रमिजपोः' इत्यच्प्रत्यये 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । वैयात्यं धाष्टर्यम् । आत्मवल्लभकृतां तत्संबन्धिनीमित्यर्थः । करोत्यर्थस्य धात्वर्थसामान्यत्वात् विशेषपर्यवसानम् । रागान्धतां विशृङ्खलविहारहेतुभूतामिति भावः ।

---

[1] छाया ।

1 मधुराणि रुद्रनरपतिचरितानि वध्वाः शृण्वत्याः ।
तनुगोपनेन प्रकटो यथा भावो न तथा पुलकैः ॥

१ महुराइं P. २ चरिआइं P. ३ वहू एणं ( वध्वाः ननु ) T. ४ पअडो P. ५ भावो M. ६ तहा P. ७ °मनोद्भव° P. ८ गुणान् न गणयति t. ९ कोपने for प्रकोपजनको t. १० °द्वारेति भावः t.

अथ विव्वोकः ।

मनाक् प्रियकथालापे विव्वोकोऽनादरक्रिया ।

यथा ।

लक्ष्मीः सद्मनि निर्भरं विहरतां क्षोणीभुजालम्बन-
क्रीडां नैव जहातु किं च सततं वाणी मुखे खेलतु ।
शीतं रुद्रनरेश्वरस्य बहुभिर्विज्ञातपूर्वैः प्रिय-
व्याहारैः कृतमेव दूति मदनश्चापाय संनह्यतु ॥ ६३ ॥

अथ ललितम् ।

सुकुमारोऽङ्गविन्यासो ललितं परिकीर्त्यते ।

यथा ।

पदन्यासक्रीडारणितमणिमञ्जीररशनं
सहेलं व्यावल्गत्करवलयनिक्वाणसुभगम् ।
स्मितज्योत्स्नावीचीतरलवचनं रुद्रनृपतेः
पुरन्ध्रीणामासद्दिनुरहासि सेवाविलसितम् ॥ ६४ ॥

---

अत्र लिखन्तीति वर्तमानापदेशेन तत्कारणभूताया लज्जाया अविरामः सूच्यते । अत्राभूतपूर्वसंभोगचिह्नसाक्षात्कारेण विस्मयमानां प्रियसखीं प्रेक्ष्याधुना मन्दाक्षमन्थरत्वेन ज्ञातचरकेशाधरादिग्रहदुःखतया तादात्म्यसुखातिभूमिसूचनात् कुट्टमितमिति भावः ।

विव्वोकं लक्षयति । मनागिति । उपलक्षणमेतत् । तेन गर्वाभिमानादिना दयितेऽप्यनादरकरणं विव्वोक इत्यर्थः । उदाहरति । लक्ष्मीरिति । अयि सखि त्वय्यविरलकोपायां लक्ष्म्यादिनायिकासु नानाविधविहारैः प्रेयसीपदं लभमानासु तव पुनर्नावकाशो लभ्यते । प्रियो हि प्रियाणि कथयतीत्येवं प्रियप्रेषितया दूत्या कथिते मानग्रन्थिग्रथितहृदयतया मरणेऽपि कृतसंकल्पाया अनादृतप्रियकथाया नायिकाया वचनमेतत् । अत एवायं विव्वोक इति भावः ।

ललितं लक्षयति । सुकुमारेति । उदाहरति । पदेति । अनुगतं रहोऽनुरहसमिति प्रादिसमासः । अनुगतं रहोऽस्मिन्निति बहुव्रीहिर्वेति पदमञ्जरीकारः । 'अन्ववतप्ताद्रहसः' इति समासान्तोऽच् प्रत्ययः । अत्रान्ध्रनायकपुरन्ध्रीणामे-

---

१ सादरम् $M_{1}$. २ तिष्ठतु P. ३ व्यातम् $M_{2}$. ४ °रसनम् P. ५ °निक्वाण° M. ६ °द्दनुरहससेवा° R. ७ °गृहीत° $L$.

अथ कुतूहलम्।

कुतूहलं रम्यदृष्टौ चापलं परि[1]कीर्त्यते।

यथा।

वीरुद्धमधिरूढसिन्धुरं द्रष्टुम[2]न्ध्रनगरीपुरन्ध्रयः।
कुर्वते रचितसं[3]क्रमत्व[4]रास्तुङ्गसद्मशिखराधिरोहणम्॥ ६५॥

अथ चकितम्।

चकितं भ[5]यसंभ्रमः।

यथा।

अविज्ञातायातं स्वमकथितमा[6]ल्यापि हसितुं
हठादुत्पश्यन्त्याश्चकितचकितोदञ्चितदृशः।

---

कान्तसेवायां म[7]णिमञ्जीरादिशिञ्जितमञ्जुलस्य करचरणविन्यासस्य क्रीडासहेल-पदाभ्यामालापानां मन्दहासमधुरत्वकथनेन च सौकुमार्यप्रतिपादनाल्ललित-मिति भावः।

कुतूहलं लक्षयति। कुतूहलमिति। उदाहरति। वीरेति। अधिरूढसिन्धुर-मारूढगजम्। रचितसंक्रमत्वराः कृतगतिवेगाः। उत्सृष्टलीलागतय इत्यर्थः। तुङ्ग-सद्मशिखराधिरोहणं हर्म्याग्रारोहणं कुतूहलात् कुर्वते।

चकितं लक्षयति। चकितमिति। उदाहरति। अविज्ञातेति। पश्चाद्भागे पादन्यासमान्द्येन अज्ञातं प्रियानवगतमायातं स्वस्यागमनं यस्य तं तथोक्तम्। हसितुं परिहसितुं परिहासार्थमित्यर्थः। आल्या सख्याप्यकथितं स्वमात्मानं हठा-द्यदृच्छया उत्पश्यन्त्याः। आसीनैस्तिष्ठन्त ऊर्ध्वमवलोकयन्त इति भावः। अत एव चकितचकिताश्चकितप्रकारा लज्जोत्कण्ठाभ्यामसकृदावृत्तनिमीलनोन्मीलिता इ-त्यर्थः। तथा उदञ्चिता ऊर्ध्वप्रसारि[8]तापाङ्गौ दृशौ यस्यास्तथोक्तायाः। तल्लक्षणं भावप्रकाशे।

'मीलनोन्मीलनावृत्तिर्यत्र तच्चकितं विदुः।
अपाङ्गयोरूर्ध्वभागावलोकनमुदञ्चितम्॥'

इति। विलासान् 'तत्कालिको विकारः स्याद्विलासो दयितेक्षणे' इत्युक्तलक्ष-

---

१ परिकीर्त्तितम् R. २ °मान्ध्र° M. ३ संभ्रम° P. ४ °त्वरा R. ५ भूयसंभ्रमः R.
६ °मल्यातिहसितम् R.; °मल्योपहसितम् R. ७ मणिमयमञ्जीर° t. ८ °तापाङ्गाव t.

विलासानुद्वेलानुदितमदनान् वीक्ष्य सुतनो-
स्तथैव प्रत्येतुं पुनरवनिपालः स्पृहयति ॥ ६६ ॥

अथ विहृतम् ।

विहृतं प्राप्तकालस्य वाक्यस्याकथनं ह्रिया ।

यथा ।

प्रतापरुद्रस्य भुजान्तरस्थां
कल्हारमालाममुना स्पृशेति ।
स्तनद्वये पत्रलिपिं लिखन्तीं
सखीं वधूः पश्यति साभिमानम् ॥

अथ हसितम् ।

आकस्मिकं तु हसितं यौवनादिविकारजम् ।

यथा

[1]जह जह हसइ मिअच्छी जौव्वणलच्छिसिक्खिआ महुरं ।
तह तह कुसुमेसुसरा विअसंति पिअस्स आसा अ ॥

---

णान् वीक्ष्य तथैवालिङ्गनादिसत्कारमनुभूयैवेत्यर्थः । पुनः प्रत्येतुं गत्वा पुनरागन्तु-मित्यर्थः । सर्वोऽपि मदनमहोत्सवप्रकितसुखस्य षोडशीं कलां नार्हतीति भावः ।

विहृतं लक्षयति । विहृतमिति । प्राप्तकालस्यावसरोचितस्येत्यर्थः । उदाहरति । प्रतापेति । भुजान्तरस्थितां वक्षःस्थिताम् । अमुना स्तनद्वयेन स्पृश आलिङ्गेत्यर्थः । इतीत्थमाशिषमुक्तेति शेषः । साभिमानं सखीवचनस्येष्टत्वात् सकृत्रिमकोपमित्यर्थः । पश्यति न पुनः किमपि ब्रूते लज्जयेति भावः ।

हसितं लक्षयति । आकस्मिकमिति । यौवनादिविकारजं न तु हास्यवद् द्वेषभावादिविकारजमित्यर्थः । अत एवाकस्मिकमहेतुकम् । व्याख्यातमेतत् । उदाहरति । जहेति ।

'यथा यथा हसति मृगाक्षी यौवनलक्ष्म्या शिक्षिता मधुरम् ।
तथा तथा कुसुमेषुशरा विकसन्ति प्रियस्य आशा च ॥

---

छाया ।

1 यथा यथा हसति मृगाक्षी यौवनलक्ष्मीशिक्षिता मधुरं ।
तथा तथा कुसुमेषुशरा विकसन्ति प्रियस्य आशा च ॥

१ हासः B. २ जोव्वणलच्छीए T' ( यौवनलक्ष्म्या ), जोव्वणलच्छीए M. ३ °सिक्खिमा P. ४ आ M.

अथ शृङ्गारस्याङ्कुरितत्वकुसुमितत्वफलितत्वहेतवो द्वादशावस्था नि-रूप्यन्ते।

चक्षुःप्रीतिर्मनःसङ्गः संकल्पोऽथ प्रलापिता।
जागरः कार्श्यमरतिर्लज्जात्यागोऽथ संज्वरः॥
उन्मादो मूर्च्छनं[2] चैव मरणं चरमं विदुः।
अवस्था द्वादश मताः कामशास्त्रानुसारतः[3]॥

[4]केचिद्दशावस्था इति कथयन्ति।

आसां स्वरूपमुदाहरणं[5] च।

आदरादर्शनं चक्षुःप्रीतिरित्यभिधीयते।

---

अत्र यौवनजन्येन मदनोद्दीपकेन मृगाक्षीहासितेन प्रियमनोरथः पृथुलीभव-तीति भावः।

इत्थं रससामग्रीं निरूप्य शृङ्गारास्पदक्रमनिमित्तभूता द्वादशावस्था निरूप-यति। अथेत्यादिना। शृङ्गारस्येति। सामर्थ्यादयोगाख्यविप्रलम्भशृङ्गारस्ये-त्यर्थः। कामशास्त्रानुसारत इत्यनेन अलंकारशास्त्रे संख्यासंज्ञादौ [6]विशेषोऽस्ती-ति सूच्यते। अत एवोक्तं भावप्रकाशे

'दशधा मन्मथावस्था भवेद् द्वादशधापि वा।
इच्छोत्कण्ठाभिलाषाश्च चिन्तास्मृतिगुणस्तुती॥
उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिरेव च।
जाड्यं मरणमित्याद्ये द्वे केश्चिद्वर्जिते बुधैः॥'

इति। अन्ये तु

'दृङ्मनःसङ्गसंकल्पा जागरः कृशता रतिः।
ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश॥'

इत्याहुः। तदेतदाह। केचिदिति।

आसां क्रमेण लक्षणोदाहरणे दर्शयति। आदरादित्यादिना। तत्र प्रत्यक्षचि-

---

१ °मीता R. २ मूर्च्छना R. ३ कामशास्त्रानुसारिभिः M. ४ केचित्तु दशा° P. ५ स्वरूपं निरूप्यते उदाहरणं च P. ६ विशेषो नास्तीति° P.

यथा ।

[1]सहि एसो रुद्दणिंओ णअणाणमंतक्किओत्सओ जाओ ।
मअणो वँ मुत्तिमंतो चंदो विअ मुकलंछणो पुण्णो ॥ ६९ ॥

अथ मनःसङ्गः ।

मनःसङ्गः प्रियतमे नित्यं चित्तस्य विश्रमः ।

यथा ।

[2]सई मह मणो विलग्गइ रुद्दणरेंदम्मि कीस कुविआओ ।
तेणाहं वि विमुक्का हेलाओ तुम्हेसु का वत्ता ॥ ७० ॥

---

त्स्वप्नादौ सादरं प्रियदर्शनं चक्षुःप्रीतिरित्यर्थः । उदाहरति । सहीति । सखि एष रुद्रनृपो नयनयोरतर्कितोत्सवो जातः । मदन इव मूर्तिमान् चन्द्र इव मुक्तलाञ्छनः पूर्णः ॥ अत्र राज्ञो नेत्रोत्सवत्वादिप्रतिपादनेन तद्दर्शनेऽत्यादरः प्रतीयते ।

मनःसङ्गं लक्षयति । मन इति । सर्वदा प्रियविश्रान्तचित्तत्वं मनःसङ्ग इत्यर्थः । उदाहरति । सईति । सदा मम मनो विलगति रुद्रनरेन्द्रे कस्मात् कुपिताः । तेनाहमपि विमुक्ता सख्यो युष्मासु का वार्त्ता ॥ सइ सदा । 'इत्सदादिषु' इति सूत्रेणात्राकारस्येकारादेशः । कस्मात् कुपिता यूयमिति शेषः । तेनाहमपि विमुक्ता संनिहितापीति भावः । सख्यो युष्मासु का वार्त्ता व्यवहितास्विति भावः । तस्माच्च मे युष्मदुपालम्भभाजनत्वमिति भावः ।

---

छाया ।

1 सखि एष रुद्रनृपो नयनयोरतर्कितोत्सवो जातः ।
मदन इव मूर्तिमान् चन्द्र इव मुक्तलाञ्छनः पूर्णः ॥

2 सदा मम मनो विलगति रुद्रनरेन्द्रे कस्मात् कुपिताः ।
तेनाहमपि विमुक्ता सख्यो युष्मासु का वार्त्ता ॥

१ णिवो M. २ णअणाणस्स M. ३ मतक्कि° M. ४ °ओस्सओ T; ऊसवो M. ५ संजाओ M. ६ व्व. P. ७ विभ्रमः R. ८ सहि P.; सई M. ९ मम P. १० मणं M. ११ विलग्गाइ M. १२ °णरिंदम्मि M. १३ कुविआसि P., M. १४ विमुत्ता M. १५ हलाओ M.; सहिओ P. १६ तुम्हसु M.

अथ संकल्पः।

संकल्पो नाथविषयो मनोरथ उदाहृतः।

यथा।

'दरहसिअगब्भिणआइं सिणेहसिणिद्धाइ राअभरिआइ।
रुदंणिवविलोइआइं कहं णु मइंमि णिवदंति'॥ ७१॥

अथ प्रलापः।

प्रलापः प्रियसंश्लिष्टगुणालाप उदाहृतः।

---

संकल्पं लक्षयति। संकल्प इति। उदाहरति। दरेति। दरहसितं मन्दस्मितं तद्गर्भितानि संभोगौत्सुक्यसूचकानीत्यर्थः। 'कटाक्षैर्हासगर्भैस्तु संभोगौत्सुक्यभावना' इति वचनात्। स्नेहस्निग्धानि रागभरितानि। स्नेहो नामार्द्रान्तःकरणत्वम्। तदुक्तम्।

'मनसो यद्द्रवीभावो विषयेषु ममत्वतः।
भयशङ्कावसानात्मा स एव स्नेह उच्यते॥'

इति। तत्प्रकर्षो रागः। तदुक्तम्।

'दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते।
येन स्नेहप्रकर्षेण स राग इति कथ्यते॥'

इति। रुदन्नृपविलोकितानि कदा मयि निपतन्ति।

प्रलापं लक्षयति। प्रलाप इति। प्रियगुणस्तुतिः प्रलाप इत्यर्थः। उदाह-

---

छाया।

1 दरहसितगर्भितानि स्नेहस्निग्धानि रागभरितानि।
रुदन्नृपविलोकितानि कथं नु मयि निपतन्ति॥

१ °हसिद° M. २ °गम्भिणाइं T'. ३ सिणह° M. ४ °सिणिधा° P. ५ °भरिआइं P. ६ रुदणिवलोइ° M. ७ °दाई M. ८ कइ आणु T' (कदा नु); का पणु M. ९ ममंमि T'. १० °दंदि M. ११ °संसृष्ट° M.

यथा ।

[1]तह णिउणो तह महुरो तह [2]सुहओ [3]तह सोम्मसंभाओ ।
एक्को रुद्दणिवो [4]च्चिअ इदि गोट्ठी पोढमहिलाणं ॥ ७२ ॥

अथ जागरः ।

जागरस्तु [5]विनिद्रत्वम् ।

यथा

[2]गमिअं [6]कहं वि दिणं चंदादवदूसहा णिसा [7]दीहा ।
मअणो वि पुंखिअसरो णिद्दा वि [8]णिओ वि णो [9]एइ ॥ ७३ ॥

---

रति । तहेति । तथा निपुणो विदग्धः कृत्यवस्तुषु चतुर इत्यर्थः । तथा मधुरः प्रियदर्शनः प्रियंवदो वा । तथा सुभगो गम्भीरगुणो नायकविशेषः । तल्लक्षणं वक्ष्यामः । तथा सौम्यस्वभावः सुशील एको रुद्रनृप एवेति गोष्ठी प्रौढमहिलानाम् । सर्वत्र तथाशब्दः पूर्वानुभवपरः । अत्र निपुणादिगुणयोगात् प्रतापरुद्र एवास्माकम[10]भिगम्य इति प्रौढाङ्गनाः प्रसङ्गं कुर्वन्तीति भावः । अत एवोक्तं भावप्रकाशे ।

'महोदयो महाभाग्यः कृतज्ञो रूपवान् युवा ।
मानी सुशीलः सुभगो विदग्धो वंशसंभवः ॥
अहर्निद्रो मधुरवागभिगम्यो भवेत् [11]स्त्रियैः ॥'

इति ।

तथा निपुणस्तथा मधुरस्तथा सुभगस्तथा च सौम्यस्वभावः ।
एको रुद्र नृप एवेति गोष्ठी प्रौढमहिलानाम् ॥

रुद्दणिवो विअ रुद्रनृप एव । विअवेअ अवधारणे इत्यवधारणार्थे विअवेअ इत्येतौ शब्दौ निपातितौ ।

जागरं लक्षयति । जागर इति । उदाहरति । गमिअमिति । गमितं कथंकथमपि दिनम् प्रियागमनप्रतीक्षणादिभिरिति भावः । चन्द्रातपदुःसहा निशा-

---

छाया ।

1 तथा निपुणस्तथा मधुरस्तथा सुभगस्तथा सौम्यस्वभावः ।
एको रुद्रनृप एवेति गोष्ठी प्रौढमहिलानाम् ॥
2 गमितं कथमपि दिनं चन्द्रातपदुःसहा निशा दीर्घा ।
मदनोऽपि पुङ्खितशरो निद्रापि नृपोऽपि नो एति ॥

१ सुहवो M. २ तम T. ३ °सम्भाओ P.; °सम्भावो M. ४ पत्त P. ५ विनिद्रत्वं विरहादिसमुद्भवम् T. ६ कह कह वि ( कथंकथमपि ) T.; किह किह M. ७ हीदा P. ८ णिवो M. ९ वेइ M. १० °मभिगम्यते t. ११ स्त्रिया t.

अथ कार्श्यम् ।

कार्श्यमङ्गस्य तानवम् ।

यथा ।

> चन्द्रास्ये कथमङ्गुलीयकमिदं केयूरितं ते सखि
> प्रेम्णा प्रेयसि वैभवैः स खलु को भूमेः सपत्नी यतः ।
> ज्ञातं मानिनि काकतीयनृपतौ सक्तासि सत्यं शुभे
> श्यामाङ्गी स खलु स्थिरां रमयते त्वां तां च शैलस्तनीम् ॥७४॥

अथारतिः ।

अन्यत्राप्रीतिररतिः ।

---

अत एव दीर्घा । मदनोऽपि पुङ्खितशरो नृपोऽपि निद्रापि नोपैति । स्वप्नसमागमस्यापि परिपन्थी जागरहतको जागर्तीति भावः ।

कार्श्यमाह । कार्श्यमिति । उदाहरति । चन्द्रास्य इति । अङ्गुलीयकमिति । 'जिह्वामूलाङ्गुलेश्छः' इति छप्रत्यये स्वार्थिकः कन्प्रत्ययः । केयूरितमङ्गदीकृतमित्यर्थः । नायिकाह । सखीति । प्रेम्णां प्रेमादीनां प्रियविषयरत्यवस्थाविशेषाणामित्यर्थः । तदुक्तम् ।

> 'प्रेमा मानः प्रणयः स्नेहो रागोऽनुरागश्च ।
> अङ्कुरपल्लवकलिकाकोरकफलभोगभागयं क्रमशः ॥'

इति । 'सप्तमी शौण्डैः' इति वदाद्यर्थलाभः । सखी प्रेमविषयं पृच्छति । स खलु कः इति । नायिकोत्तरमाह । भूमेरिति । यत इति । सार्वविभक्तिकस्तसिः । येनाहं भूमेः सपत्नी भवेयं स इत्यर्थः ।

सखी नायिकाभिप्रायमुद्घाटयति । ज्ञातमिति । नायिकाङ्गीकरोति । आलीति । भूकल्पायास्तवापि सर्वथा तद्वदेवोपभोगो भविष्यति किमेतेन कार्श्येनेति सखी नायिकामुपलालयति । शुभ इति । श्यामाङ्गीं यौवनयुक्ताङ्गीमन्यत्र कृष्णाङ्गीम् । शैलस्तनीं शैलसदृशस्तनीमन्यत्र स्तनायमानशैलामित्यर्थः ।

अरतिं लक्षयति । अन्यत्रेति । प्रियव्यतिरिक्तविषयवैराग्यमरतिरित्यर्थः ।

---

१ भूमिः M., भूमें P. २ तां त्वां च R., M.

यथा ।

[1]दूसेइ चंदसिंट्ठिं णिंदइ मॅलआणिलस्स मॉहाप्पं ।
ऊसवपॅरंमुही सा सुहअ तुमं किं णु मंतेसि ॥ ७५ ॥

अथ व्रीडात्यागः ।

यथा

[2]लंघिअमहिलासमहं तह भणिअं मअणदुव्विणीदाए ।
जह सोऊण गुरुअणो ओसरइ विलज्जिओ दूरं ॥ ७६ ॥

अथ ज्वरः ।

तापाधिक्यं ज्वरो मतः ।

यथा ।

[3]मोहसिसिरोवआरा वॅहुआ विरहज्जरेण गॅरुएण ।
इाणिं रुद्दणॅरेसर कॅंखइ तुह दॅसॅणामिअअं ॥ ७७ ॥

---

उदाहरति । दूसेईति । दूषयति चन्द्रसृष्टिं निन्दति मलयानिलस्य माहात्म्यम् । उत्सवपराङ्मुखी सा सुभग त्वं किं नु मन्त्रयसे । सुभग त्वमिति । सुभगो नाम नायकविशेषः । तदुक्तम् ।

'सपत्नीनखदन्तादिचिह्नं यत्र न दृश्यते ।
विस्मार्यमाणमानेर्ष्यः सुभगः सोऽभिधीयते ॥'

इति । अत एवात्र विषयान्तरवैराग्यलिङ्गाभावेन प्रेमास्पदत्वं द्रष्टव्यम् ।

लज्जात्यागमुदाहरति । लङ्घिएति । लङ्घितमहिलासमयं तथा भणितं मदनदुर्विनीतया । यथा श्रुत्वा गुरुजनोऽपसरति विलज्जितो दूरम् ॥ लङ्घितमहिलासमयं सुरतव्यतिरिक्तकाले लज्जा स्त्रीसमयः । किं विलम्ब्यते चुम्बनादिकमिदानीमेव कर्तव्यमित्यादिकं तथाशब्दार्थः ।

ज्वरं लक्षयति । तापेति । उदाहरति । मोहेति । मोघशिशिरोपचारा वधूर्विरहज्वरेण गुरुणा । इदानीं रुद्रनरेश्वर काङ्क्षति तव दर्शनामृतकम् ॥

---

छाया ।

1 दूषयति चन्द्रसृष्टिं निन्दति मलयानिलस्य माहात्म्यम् ।
उत्सवपराङ्मुखी सा सुभग त्वं किं नु मन्त्रयसि ॥

2 लङ्घितमहिलासमयं तथा भणितं मदनदुर्विनीतया ।
यथा श्रुत्वा गुरुजनोऽपसरति विलज्जितो दूरम् ॥

3 मोघशिशिरोपचारा वधूर्विरहज्वरेण गुरुणा ।
इदानीं रुद्रनरेश्वर काङ्क्षति तव दर्शनामृतम् ।

१ दूसअइ P. २ °दिट्ठि T'., P. ३ णिंदइ T'. ४ मलआ° P. ५ माहप्पं P.; माहप्पं M. ६ परम्मुहा M. ७ तुमं M ८ लज्जात्यागः T'. ९ °समअं M. १० वहुआ M. ११ गुरुएण M. १२ °नरेसर° P. १३ किंखइ M. १४ देसणामअअं T'. ( मृतकम् ). M.

उन्मादमरणयोः प्रागेवोदाहरणं दर्शितम् ।

अथ मूर्च्छा ।

मूर्च्छा त्वभ्यन्तरे वृत्तिर्बाह्येन्द्रियनिमीलनात् ।

यथा ।

[1]चिंतअंतिए णरेंदं दट्ठुं हिअअट्ठिअं मीअच्छीए ।
करणाइ बाहिराइं विसंति अब्भंतरं वि सुण्णाए ॥ ७८ ॥

अथ शृङ्गारः । स च द्विविधः । संभोगो विप्रलम्भश्च । 'संयुक्तयोस्तु संभोगो विप्रलम्भो वियुक्तयोः' इति शृङ्गारतिलके कथितम् । संभोगस्य परस्परावलोकनसंभाषणालिङ्गनचुम्बनाद्यनेकव्यापारमयत्वेनानन्त्यादेकविधत्वेन गणना कृता । यथा ।

---

अवस्थाद्वयं व्यभिचारिप्रस्ताव एवोदाहृतमित्याह । उन्मादेति । स्थायिभावसहकारित्वेनोपाधिना संचारित्वम् । रसास्वादनिमित्तत्वेनोपाधिना अवस्थात्वं चेति विवेकः ।

मूर्च्छां लक्षयति । मूर्च्छेति । बाह्येन्द्रियाणां चक्षुरादीनां निमीलनं स्वस्वविषयग्रहणाभावः । अत एवाभ्यन्तरे अवृत्तिः शून्यान्तःकरणत्वमित्यर्थः । उदाहरति । चिन्तन्तीए इति । शून्यायाश्चिन्तया शून्यान्तःकरणाया इत्यर्थः । अत्र मूर्च्छाया मोहाख्यसंचारिसमानयोगक्षेमत्वेनोन्मादादिवदुदाहरणातिदेशार्हत्वेऽपि पृथगुदाहरणं चमत्कारविशेषद्योतनायेति द्रष्टव्यम् ।

अथ रसविशेषानुद्दिष्टोद्देशक्रमानुसारेण विभागपूर्वकं लक्षणोदाहरणाभ्यां दर्शयति । अथेत्यादिना । तत्र संभोगस्यावान्तरविभागाभावे हेतुमाह । संभोगस्येति ।

---

छाया ।

1 चिन्तयन्त्या नरेन्द्रं द्रष्टुं हृदयस्थितं मृगाक्ष्याः ।
करणानि बधिराणि विशन्ति अभ्यन्तरमपि शून्यायाः ॥

१ कृतम् T'. २ त्वाभ्यन्तरे T. ३ चिंततीए M. ४ णरिंदं M. ५ °ट्ठिअं P. ६ करणाई P. ७ सुणाए T'. ८ P. drops कथितम्. ९ परस्परालोकन° M. १० कथिता for गणना कृता M. ११ t. drops तत्. १२ t. drops दिता.

रहःप्रत्यासन्ने हृदयदयिते रुद्रनृपतौ
निवृत्ता मानाज्ञा विरलमपि लज्जाविलसितम्।
किमन्यत्ते गोप्यं बहिरबहिरानन्दमसृणः
स्मरावेशः कोऽपि प्रियसखि नृपैकयति माम्॥ ७९॥

विप्रलम्भः पुनरभिलाषेर्ष्याविरहप्रवासहेतुकत्वेन चतुर्विधः।

अभिलाषो नाम संभोगात् प्रागनुरागः।

यथा।

अन्योन्यभाषणमनङ्गविलासगोष्ठी
शय्या च सार्धमपदानि मनोरथानाम्।

उदाहरति। रह इति। रहःप्रत्यासन्ने विजनमुपगते हृदयदयिते प्राणवल्लभे मानः कोपविशेषः। 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासंगिनि प्रिये' इति लक्षणात्। तस्याज्ञा तत्परवशत्वमित्यर्थः। लज्जाविलसितमपि विरलं निवृत्तमित्यर्थः। सुरतसमये स्त्रीणां प्रागल्भ्यभूषणत्वादिति भावः। अत्र विस्रम्भविहारविरोधिनोर्लज्जामानयोर्निवृत्तिकथनादुन्मर्यादो विमर्दः संवृत्त इति सूच्यते। तत्फलमाह। किमिति। अवक्तव्यं ते नास्तीत्यर्थः। बहिरबहिरानन्दमसृणः विगलितवेद्यान्तरत्वेनापरिच्छिन्नानन्दमय इत्यर्थः। अत एवालौकिकोऽयं स्मरावेशो दुर्निश्चयस्वरूप इत्याह। कोऽपीति। किं बहुना। तदानीमावयोः सामरस्यं समजनीत्याह। नृपेणेति। एकां करोति एकयति। एकशब्दात् 'तत्करोति' इति ण्यन्तात् 'वर्तमानसामीप्याद्वर्तमानवद्वा' इति वर्तमानप्रत्ययः। अत्र हृदयदयितपदोदितेनालम्बनविभावेन रहःशब्दसूचितैरुद्दीपनविभावैर्माननिवृत्तिव्यङ्ग्यैर्हर्षादिव्यभिचारिभिरनुक्तिसिद्धैःस्तम्भादिभिरनुभावैश्च परिपोषं प्राप्तः रत्याख्यः स्थायीभावः शृङ्गारतामङ्गीचकारेति वेदितव्यम्।

विप्रलम्भं विभजते। विप्रलम्भ इति।

तत्राद्यं लक्षयति। अभिलाष इति। अयोगपूर्वानुरागाद्यपरपर्यायो विप्रलम्भविशेषोऽभिलाष इत्यर्थः। उदाहरति। अन्योन्येति। अन्योन्यभाषणमिष्टालापरूपं ततोऽनङ्गविलासगोष्ठी नर्मकथाप्रसङ्ग इत्यर्थः। सार्धं शय्या सह शयनमित्यर्थः। 'संज्ञायां समजनि—' इत्यादिना क्यप् प्रत्ययः। अत्र यद्यपि नेत-

१ हृदयानीहेत T. २ पुनः पुनर॰ P. ३ ॰प्रवासादिहेतुकः T. ४ संभोगादनुरागः M. ५ सार्धमपराणि $M_4$. ६ रत्याख्यस्थायिभावः I.

प्रेमानुबन्धमुदयद्बहुलानुरागं
　　लभ्येत रुद्रनृपतेरवलोकितं[1] वा ॥ ८० ॥

ईर्ष्या[2] नाम नायकस्यान्यासक्तिभवा[3] चित्तविक्रिया ।

तया विप्रलम्भो यथा ।

---

तेऽत्रेति अधिकरणव्युत्पत्त्या शय्याशब्दः खट्वापरो न शयनपरस्तथापि भूत्यादिशब्दवदत्रापि भावानुवृत्त्या भावार्थत्वमभिमेने[4] कविरित्यनुसंधेयम् । मनोरथानामपदान्यस्थानानि अविषया इत्यर्थः । मनोरथविषयमाह । प्रेमेति ।

'स प्रेमा यन्मिथो यूनोर्निरूढं भावबन्धनम् ।'

इत्युक्तलक्षणेन प्रेम्णानुबिद्धं युक्तं तथा उदयदुद्दीप्यमानो बहुलानुरागो यत्र तत् तथोक्तम् । 'रागोऽनुवृत्तो विच्छिन्नमनुराग उदाहृतः' इति । रतेरेवावस्थाविशेषाः प्रेमादय इत्युक्तं रसार्णवे

'अङ्कुरपल्लवकलिकाप्रसूनफलभागयं क्रमशः ।
प्रेमा मानः स्नेहः प्रणयो रागोऽनुरागश्च ॥'

इत्युक्तेः । एतादृशमवलोकितं वा लभ्येत । प्रार्थनायां लिङ् ।

ईर्ष्याविप्रलम्भं लक्षयति । नायकस्येति । स्वप्रियस्यान्यासक्तभावान्नायिकान्तरासक्तत्वाद्दर्शनश्रवणानुमानैरुपलब्धादिति शेषः । अन्यथेर्ष्यानुदयादिति भावः । चित्तविक्रिया ईर्ष्या मानरूपेत्यर्थः । अत एवोक्तं दशरूपके ।

'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये ।
श्रुते वानुमिते दृष्टे ईर्ष्याकोपः स उच्यते ॥'

इति । अत एवायमीर्ष्याविप्रलम्भः स्त्रीणामेव न पुरुषाणामिति द्रष्टव्यम् । तदुक्तं हेमचन्द्रेण ।

---

१ °मवलोकनं वा M.　२ नायकस्यान्यासक्तिभवा चित्तविक्रिया ईर्ष्या M.　३ °सक्तिभावाश्रित्त° P.　४ °त्वमप्यभिमेने ६.

लक्ष्मीर्यस्य[1] विलोचनाब्जवसतिः सेर्ष्या त्वदालोकने[2]
वाक्यस्यापि[3] सरस्वती न सहते सार्कं त्वया भाषणम् ।
लीलाकर्षणविभ्रकृत् त्वयि मही बाहुस्थिता काकति-
क्षोणीन्द्रे न हि कैतवानि सुभगे मानेन किं ताम्यसि ॥ ८१ ॥

विरहो नाम लब्धसंयोगयोर्नायिकानायकयोः[4] केनचित् का-
रणेन पुनः समागमकालातिक्षेपः[5] ।

यथा ।

अङ्गेषु जीर्णेषु विभूषणानां
व्यत्यासमार्गोऽपि मुहूर्तशोभी ।
संव्यस्तदास्तां[6] परिकर्मरीति-
रानीयतां रुद्रनृपः किमन्यत् ॥ ८२ ॥

---

'ईर्ष्या मानः स्त्रीणामेव' इति । उदाहरति । लक्ष्मीरिति । अत्र नेत्राननबाहुवासिन्यः श्रीवाणीधरण्यो यथाक्रमं त्वदालोकनसंभाषणलीलाकर्षणानि प्रतिबध्नन्ति । काकतिनाथोऽयं पुनर्न तथा कितवस्तस्मान्न तत्र मानः कार्य इत्यर्थः । कैतवाभावोऽत्र नायकविशेषवाचिना सुभगशब्देन सूच्यते । तल्लक्षणमुक्तं भावप्रकाशे ।

'सपत्नीनखदन्तादि चिह्नं यत्र न दृश्यते ।
विस्मार्यमाणमानेर्ष्यः सुभगः सोऽभिधीयते ॥'

इति । अत एव भारविणाप्युक्तम् । 'कः प्रिये सुभगमानिनि मानः' इति ।

विरहविप्रलम्भं लक्षयति । विरह इति । नायकयोः स्त्रीपुंसयोः । केनचित् कारणेनेति । अविद्यमान एवान्यासङ्ग इति भावः । नायकयोर्निर्निमित्तो विप्रयोगः प्रणयमानापरपर्यायो विरहविप्रलम्भ इत्यर्थः । तदुक्तं रसमञ्जर्याम् । 'परस्परमाज्ञोल्लङ्घनं प्रणयमानः[7]' इति । अयं पुनर्द्वयोरपि भवति । तत्र स्त्रीविरहमुदाहरति । अङ्गेष्विति । व्यत्यासमार्गः अङ्गुलीयकादीनां कटकादिस्थानेषु[8] धारणादिति भावः । मुहूर्तशोभी अनन्तरमतिकार्श्यसंभवेन तत्रापि तेषामनवस्थानादिति भावः । परिकर्मरीतिः प्रसाधनप्रकारः । किमन्यदिति कार्यान्तरस्य वृथा विलम्बनहेतुत्वादिति भावः । एवं पुंविरहेऽप्युदाहार्यम् ।

---

१ लक्ष्मीरस्य R.; M. २ तदालोकने R. ३ वक्त्रस्था च P.; वक्त्रस्थापि M. ४ °संयोगनायिका° P. ५ समागमे M. ६ सव्यस्तदानीम् M. ७ °मानोल्लङ्घनम् I. ८ °स्थाने I.

यूनोर्देशान्तरवृत्तित्वं प्रवासः[1] ।

तेन विप्रलम्भो यथा ।

सेव्योऽस्तु रुद्रनृपतिर्निखिलैर्नृपालै-
[2]रभ्युत्सवेषु सुलभा न[3] हि वल्लभा नः ।
इत्थं कलिङ्गसुदृशां विरहार्त्तितापा-[4]
दङ्गानि यान्ति तनुतां दिवसा युगन्ति ॥ ८३ ॥

रसाभासो यथा ।

प्रासादगर्भवलभीषु कपोतपाल्यां
पारावतीं[5] रमणचुम्बितचञ्चुकोटिम् ।
आविर्भवत्सुरतकूजित[6]रक्तकण्ठी-
मालोक्य[7] काकतिविभुः स्मितमातनोति ॥ ८४ ॥

---

प्रवासविप्रलम्भं लक्षयति । यूनोरिति । उदाहरति । सेव्य इति । निखिलेतरभूपालवद् वीररुद्रं स्वप्रिया अपि सेवन्तां नाम । अकिंचनैरप्यादरणीयेषूत्सवदिवसेष्वपि ते नो दुर्लभा अभूवन्निति ब्रूयामहे इत्यर्थः । इत्थमनुलपन्तीनामिति शेषः । दिवसा युगन्ति युगकल्पा भवन्तीत्यर्थः । युगप्रातिपदिकादाचारक्विबन्ताद्वर्त्तमाने[8] लट् । रात्रयस्तु दुरतिवाहा एवेति भावः ।

त्रिधा रसाभास इत्युक्तं तत्र तिर्यग्गतमुदाहरति । प्रासादेति । वलभीषु गोपानसीषु । कपोतपाल्यां विटङ्के च रमणचुम्बितचञ्चुकोटिमत एवाविर्भवत्सुरतकूजितामयथोचन्मणितां रक्तकण्ठीं मधुरस्वनाम् । अत्र तिरश्चोः पारावतयोः कलाकौशलाभावेन तदीयशृङ्गारस्य विभावादिपरिपूर्त्यभावादाभासत्वं द्रष्टव्यम् । रस एवायं नाभास इति केचित् । तदुक्तं विद्याधरेण । ‘ विभावादिसंभवो हि रसं प्रति प्रयोजको न विभावादिज्ञानं ततश्च तिरश्चामप्यस्त्येव रसः ’ इति । भेदान्तराणामुदाहरणमन्यतोऽवगन्तव्यम् ।

---

१ प्रवासो नाम यूनोर्देशान्तरवृत्तित्वम् P. २ °रप्युत्सवेषु M. ३ नहिवल्लभा R. ४ विरहाग्निपातात् M. ५ पारावतीरमण° R. ६ °कूजित° R. ७ चन्द्रवदना T. ८ °वर्तमानार्थे ८.

भावोदयो यथा ।

मुग्धे कस्तव वर्त्तते हृदि मनोजन्मैव नान्यः शपे
सख्यै तस्य किमत्र कार्यमपरं किं जन्मसद्मादरः ।
कोऽन्यस्तत्प्रतिबिम्ब एव निपुणे जानासि कामाधिकः
प्रेयान्रुद्रनृपस्तवेति कथिता नम्राननाभूद्वधूः ॥ ८५ ॥

अत्र लज्जाया उदयः ।

भावशमो यथा ।

लक्ष्मीस्त्वं पुरुषोत्तमस्तव पतिः श्रीवीररुद्रो नृपः
सृष्टयामम्बुजविष्टरस्य सदृशोर्योगश्चिरात् संभृतः ।
तस्मात् कृत्रिममप्यसाम्प्रतमिदं वां वैमनस्यं मना-
गित्यालिं प्रणतां विलोक्य विकसद्वक्त्राम्बुजा मानिनी ॥८६ ॥

---

भावोदयमुदाहरति । मुग्ध इति । मुग्धे सुन्दरीति संबोध्य सखी पृच्छति । अथ नायिकोत्तरमाह । मनोजन्मेति । शपथविशेषेण सखीमत्र प्रत्याययति । शप इति । 'शप उपालम्भने' इत्यात्मनेपदम् । 'वाचा शरीरस्पर्शनमुपालम्भः' इति वृत्तिकारः । 'श्लाघह्नुङ्स्था—' इत्यादिना सख्या इति संप्रदानत्वाच्चतुर्थी । पुनः सख्याह । तस्येति । अत्र मनसि । तस्य मनोभुवः । नायिका प्रतिवक्ति । अपरमिति । जन्मभूमिस्नेहादन्यत् किमपि नास्तीत्यर्थः । कामस्तावदास्तां द्वितीयः क इति सखी पृच्छति । कोऽन्य इति । तत्प्रतिबिम्बादन्यः कोऽपि नास्तीत्युत्तरमाह । तदिति । पुनः सख्याह । निपुण इति । जानासि प्रतारणप्रकारमिति शेषः । नम्रानना लज्जयेति भावः ।

भावशान्तिमुदाहरति । लक्ष्मीरिति । अम्बुजविष्टरस्य कमलासनस्य । सदृशोः समानयोः । तस्माद्वां युवयोर्वैमनस्यं मनागल्पं कृत्रिमं बाह्यमपीत्यर्थः । असाम्प्रतमयुक्तम् । यतो 'न पुनरेति गतं चतुरं वयः' इति भावः । इत्युक्त्वेति शेषः । प्रणतामालिं सखीं विलोक्य विकसद्वक्त्राम्बुजा भ्रुकुटिवैवर्ण्यादिकोपानुभावापगमादित्यर्थः । कोपः शान्त इति भावः ।

---

१ सख्येतस्य P., R. २ जन्मसद्मादरात् M.; जन्मपद्माकरः $M_2$. ३ निपुणो P. ४ जानामि R. ५ तव $M_2$. ६ भावशान्तिर्यथा M. ७ 'विष्टपस्य M.

अत्र[1] कोपस्य प्रशमः[2] ।

भावसन्धिर्यथा[3] ।

> प्रतापरुद्रस्य दिगन्तजैत्र-
> यात्राप्रभूतैः पटहप्रणादैः ।
> प्रियानुलापैश्च तथा भटानां
> रोमाञ्चवर्मावृतमङ्गमासीत् ॥ ८७ ॥

अत्र वीरशृङ्गारकृतयोर्हर्षयोः[4][5] संधिः ।

भावशबलता यथा ।

> [6]निन्दन्त्वत्र कुलस्त्रियः प्रियतमो लभ्यः सुखं केन वा
> भाग्येनानुमतं न किं गुरुजनैः का वा सखी प्रेष्यते ।
> किं लोकस्य भवेत् प्रसिद्धमचिरात् स्वच्छन्दमङ्गं कदा
> रोक्ष्यामि स्थिरता कदा हृदि भवेद्यातव्य एव प्रियः ॥ ८८ ॥

---

भावसन्धिमुदाहरति । प्रतापेति । प्रियाणां प्रेयसीनामनुलापैरनुरागतरङ्गितैस्तत्कालोचितवचनाम्रेडितैश्च । अत्र परस्परविरुद्धवीरशृङ्गाराश्रितयोर्हर्षयोः स्पर्धया सम्बन्धकथनात् भावसंधिरेव चर्वणास्पदमित्यर्थः । तदेतदाह । अत्रेति ।

भावशबलतामुदाहरति । निन्दन्त्विति । प्राप्तकाले लोट् । अत्र आरमोपसरणावसर इत्यर्थः । अनेन कार्यकारणमूला लज्जा व्यज्यते । प्रियतम इति । अत्र प्रियसौलभ्ये किं वा भाग्यं निमित्तमित्यूहकथनाद् विमर्शमूलो वितर्कः । अनुमतमिति । अत्र किमर्थं वा गुरुजनानुमतिर्नाभूदिति कार्पण्योक्त्या दैन्यं भान्यते । प्रियानयनार्थं का वा सखी प्रेष्यत इति सहायान्वेषणानुभावेन[7] प्रारब्धकार्यानिर्वहणरूपो विषादो व्यज्यते । किमिति प्रसिद्धमिति स्वदुर्विनीतत्ववैभवमिति शेषः । अतस्तन्मूलानर्थोत्प्रेक्षालक्षणा शङ्केयमिति भावः । अचिरादिति । स्वः स्वकीयश्छन्दोऽभिप्रायो यस्मिन् कर्मणि तत् स्वच्छन्दं स्वेच्छयेत्यर्थः । अङ्गं प्रियस्येति शेषः । अत्र कालाक्षमत्वलक्षणमौत्सुक्यं प्रतीयते । स्थिरतेति । अत्र हृदयस्थैर्याकाङ्क्षया नैस्स्पृह्यलक्षणा धृतिरवधार्यते । यातव्योऽभिसरणीय एव प्रिय इत्यनेन तत्त्वनिर्धारणात्मिका मतिरिति । अत्र लज्जादीनामष्टानामपि भावानामन्योन्योपमर्दकतया समावेशाद् भावशबलतेत्यर्थः । अत्र लज्जा वित-

---

१ तत्र M. २ शमः $M_1$. ३ तदा R., M, ४ °कृतहर्षयोः P. ५ °हर्षामर्षयोः $M_1$. ६ निन्दन्त्वद्य T., M. ७ °यान्वेषणेनानुभावेन £. ८ °मूलो £. ९ °दुर्नीतिवैभव° £.

अत्रौत्सुक्यादीनां शबलता ।

अथ रससंकरस्योदाहरणम् ।

तत्र शृङ्गारकरुणयोः संकरो यथा ।

आसन्नेऽपि महोत्सवे कथमितस्त्यक्त्वा प्रवासं व्रजे-
धिग् धिक् साहसमावयोर्विघटनं को वा विधिः काङ्क्षति ।
इत्थं स्वप्ननिवारितप्रियतमप्रस्थानबुद्धिस्ततो
बुद्धा मूर्च्छति काकतीयनृपते त्वद्वैरिनारीजनः ॥ ८९ ॥

---

र्केण बाध्यते दैन्यं विषादेन शङ्का औत्सुक्येन धृतिर्मत्येत्येवमन्योन्यबाध्यबाधकभावेन द्वन्द्वशो भवन्ती भावशबलतां ततो गत्वा मतेरेव प्राधान्यमादधाना परमास्वादस्थानमित्यर्थः । तदेतदभिसंधायाह । अत्रेति । अत्रानादेरप्यौत्सुक्यस्यादित्वेनोपादानमन्येषामौत्सुक्यजीवितत्वसूचनार्थमित्यनुसंधेयम् । अत्र लज्जादीनामभिसरणविरोधित्वाद्बाध्यत्वम् । वितर्कादीनां तु तदभावाद् बाधकत्वमिति विवेकः । ननु 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायेन लज्जादीनां बाध्यानामनुपादानमेव श्रेय इति न शङ्कनीयम् । विरोधिनामपि रसादीनामाधिकारिकरसदार्ढ्यार्थमङ्गत्वेनोपनिबन्धनवदत्रापि तदुपादानस्य न्याय्यत्वात् । तदुक्तं ध्वन्याचार्यैः ।

'विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् ।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥'

इति । अत्रोक्तभावोदयादीनां राजानुगतविवाहप्रवृत्तभृत्यवत् कदाचिदङ्गित्वमप्यङ्गीक्रियते । तदुक्तं काव्यप्रकाशे ।

'मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन'

इति ।

भावमेलनप्रसङ्गाद्रसमेलनमप्युदाहर्तुं प्रतिजानीते । अथेति । तत्र शृङ्गारसंकीर्णं करुणमुदाहरति । आसन्न इति । व्याख्यातमेतत् काव्यप्रकरणे ( पृ० ६२ ) मध्यकैशिक्युदाहरणे ।

---

१ व्रजेद् P., M., $M_2$, $M_5$. २ कस्माद्विधिः P. ३ काङ्क्षते R. ४ t. drops वक. ५ मध्यमकैशिक्यामुदाहरणे ( काव्यप्रकरणे omitted ) t.

अथ[1] रौद्रबीभत्सयोः संकरो यथा।

पीत्वा मांसोपदंशं द्विरदगलगलद्रक्तमैरेयधारां
मत्तो मस्तिष्कलग्नैर्दलितनृपवपुःकीकसैः स्पष्टदंष्ट्रः[2]।
बिभ्रद्रौद्रान्त्रमालां जनितजनभयो भैरवाकारघोरः
संग्रामोर्व्याः कलिङ्कैर्बलिविधिमकरोद्वीररुद्रस्य खड्गः॥ ९०॥

---

बीभत्ससंकीर्णं रौद्रमुदाहरति। पीत्वेति। व्याख्यातमिदमपि नाटके तृतीयेऽङ्के (पृ॰ १८२)। अत्रोदाहरणद्वये द्वयोः करुणरौद्रयोर्विश्रान्तिधामत्वेन चर्वणायां प्रथमभावित्वात् प्राधान्येनाङ्गित्वम्। शृङ्गारबीभत्सयोस्तदुपस्कारकत्वेनाङ्गत्वमिति[3] विवेकः। अत एवोक्तं भावप्रकाशे।

'रसाः कार्यवशात् सर्वे मिलन्त्येव परस्परम्।
प्रथमं यो रसः ख्यातः स प्रधानो भविष्यति॥'

इति। नन्वयमङ्गभूतो[4] रसः परिपोषमप्राप्तः प्राप्तो वा। नाद्यः। रसत्वव्याघातात्। न द्वितीयः। उपस्कार्यत्वेनाङ्गत्वभङ्गात्। तस्मादयुक्ता रससंकरवाचोयुक्तिरिति चेन्नैवम्। परिपोषलोभेऽपि[5] कस्यचित् कदाचिदुपस्कारत्वेनाङ्गत्वाङ्गीकारात्। तदुक्तमभिनवगुप्ताचार्यैः। 'संभूतान्यपि रसान्तराणि स्वविभावादिसामग्र्यां स्वावस्थायां यद्यपि लब्धपरिपोषाणि चमत्कारगोचरतां प्रतिपद्यन्ते तथापि स चमत्कारस्तावत्येव परितुष्यन् न विश्राम्यति किं तु चमत्कारान्तरमनुधावति' इति। अङ्गाङ्गिभावे सर्वत्रेयमेव भङ्ग्यङ्गीकरणीया। तदुक्तमाचार्यैः।

'गुणः कृतात्मसंस्कारः प्रधानमनुषज्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्तते॥'

इति। तच्चाङ्गत्वं स्वाभाविकं रूपकादिबलादारोपितं चेत्यादिविशेषास्त्वन्यतो द्रष्टव्या इत्याशयेनाह। एवमिति।

---

१ M. and R. drop this line and after having given the two verses R. has अत्र बीभत्सरौद्ररसयोः संकरः and M. has अत्र रौद्रबीभत्सरसयोः संकरः.
२ °दृष्ट° T. ३ °स्तदुपस्कारत्वेना° t. ४ अय° p. ५ °लाभे p.

एवमन्यदपि यथासंभवमुदाहार्यम्।

अत्र रसो नायकाश्रय एव। यदि परं निपुणनटचेष्टया तथाविधकाव्यश्रवणबलेन च सामाजिकैः साक्षाद् भाव्यते तदा परगतस्यापि रसस्य सम्यग्भावनया परत्र निरतिशयानन्दजननमविरुद्धम्। अथवा मालत्यादिशब्देभ्यो योषिन्मात्रप्रतीतौ रावणादिशब्देभ्यः शत्रुमात्रप्र-

---

अयं च रसो लौकिकालौकिकभेदेन द्विविधः। तत्राद्यः कदलीरसालादिफलास्वादजन्यानन्दसदृशः कार्यश्च। इतरो ब्रह्मानन्दसब्रह्मचारी नित्यश्च। तत्राद्यस्याश्रयमाह। अत्रेति। रसो लौकिको नाट्योऽनुकार्यो रामादिराश्रयो यस्य स तथोक्तः। एवकारः आश्रयान्तरव्यवच्छेदार्थः। यद्येवं सामाजिकानां पौनःपुन्येनाभिनयावेक्षणकाव्यश्रवणकौतुकमुन्मत्तचेष्टितं स्यात्। अत आह। यदि परमिति।

'शिल्पविद्यायकादीनां तादात्म्यापत्तिभावकः।
चतुर्धाभिनयाभिज्ञो नटो भाषादिभेदवित्॥'

इत्युक्तलक्षणस्य निपुणस्य नटस्य चेष्टयाभिनयेन तथाविधस्य गुणालंकारपरिष्कृतरसोल्लसितशब्दार्थसंघटनात्मकस्य काव्यस्य श्रवणबलेन समाजः सभा तत्र समवेताः सामाजिकाः रामादितन्मयीभवनयोग्यमनस्का भावकप्रेक्षकाद्यपरपर्यायाः सहृदया इत्यर्थः। संपूर्वादजेः समूहवाचिनो घञन्तात् 'समवायान् समवैति' इति ठक्प्रत्ययः। तैर्यदि परं साक्षाद् भाव्यते केवलं स्वसंबन्धित्वेनानुसंधीयते चेदित्यर्थः। तर्हि पुत्राद्यानन्ददर्शने पित्रादिवदत्राप्यानन्द उदेतीति भावः। अत एवोक्तं भावप्रकाशे।

'यस्तुष्टे तुष्टिमाप्नोति शोके शोकमुपैति च।
क्रोधे क्रुद्धो भये भीरुः स श्रेष्ठः प्रेक्षकः स्मृतः॥'

इति। न केवलं तत्र तावन्मात्रं किं तु विशेषोऽप्यस्तीत्याह। परगतस्येति। भावनाविशेषादानन्दविशेषो युक्त एवेति भावः। अथालौकिकरसस्याश्रयमाह। अथवेति। मालत्यादिशब्देभ्य इति। अभिनयवेलायां नटादिसमुच्चारितेभ्यो विशिष्टकाव्यगतेभ्य इत्यर्थः। योषिन्मात्रप्रतीतौ न तु मालत्यादिविशेषोल्लेखे-

---

१ एवमन्यदपि द्रष्टव्यम् R. २ नायिकाश्रित एव R., M. ३ अत एव माल° T'. ४ °शब्देभ्योऽपि T'., M. ५ अयं च p. ६ मालादि° p.

तीतौ च स्मृत्यारूढेन तत्तद्योषिद्विशेषेणानुकार्येण सामाजिकाश्रयत्व-

नेत्यर्थः । एवमन्यत्रापि द्रष्टव्यम् । स्मृत्यारूढेनेति । सामान्यप्रतीतौ विशेष स्मरणमनयोरविनाभावमूलमित्यनुसंधेयम् ।

ननु सामाजिकानां श्रूयमाणमालत्यादिविशेषपरिहारेण स्वाभिलषितनायिका-स्मरणे किं प्रमाणमिति न शङ्कनीयम् । काव्यादौ विशेषाणामविवक्षितत्वात् । न हि महाकविभिर्वाल्मीकिप्रमुखैरिव ध्यानदृष्टया रामादीनामवस्थाः प्राति-स्विका निरूप्यन्ते किं तु रामादिकमाश्रयतया परिकल्प्य स्वप्रतिभाप्रभावलब्धाः सर्वसाधारणा इति । तदुक्तं षट्सहस्रीकारेण । 'एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते ' इति । तर्हि तैरपि विशेषमात्रं विहाय सामान्यमेव किमिति नोपादीयत इति न वाच्यम् । विशेषोपादानेनैव श्रोतॄणामास्वादसंभवात् । तदुक्तम् ।

> 'क्रीडतां मृण्मयैर्यद्वद् बालानां द्विरदादिभिः ।
> स्वेच्छा हि स्वदते तद्वच्छ्रोतॄणामर्जुनादिभिः ॥'

इति । योषिद्विशेषेणेति । नायकनयनान्तावलोकननिर्वेदादीनामप्युपलक्षणम् । योषिन्मात्रेण रसनिष्पत्तेरभावात् । ननु भवन्तु नाम स्मृताः स्त्रीपुंसादयः कथं ते रसनिष्पत्तिः कथं वा रसस्य सामाजिकाश्रयत्वमिति चेदिदमत्रानुसंधेयम् । सामाजिकास्तावत् पूर्वं लौकिकनायकानुरागाद्यनुमानेन संस्कृतहृदयाः काव्या-दिशब्दमहिम्ना रामादीन् सामान्यात्मना स्वसंबन्धित्वेन भावयन्ति । ते च भा-विता भावकमनोऽङ्गणे वर्त्तमानवदवभासन्ते । तदुक्तं भर्तृहरिणा ।

> 'शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ।
> प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥'

इति । कंसादीनां प्रत्यक्षरूपमिव शब्दोपहितरूपमप्यर्थक्रियाकारीत्यर्थः । न च सीतारामादीनां स्वस्त्रीपुंसतया भावनादनौचित्यम् । तेषां जनकदशरथतनयत्वा-दिविशेषपरित्यागेन स्त्रीपुंसमात्रानुवादित्वादित्युक्तत्वात् । ते च स्त्रीपुंसादयो लौकिका एव । काव्याभिनयमुखेन विभावादिपदाभिधानराज्याभिषिक्तभाव-कैर्भाव्यमानाः सन्तो मुद्रामुद्रितन्यायेन तदन्तःकरणप्रतिबिम्बिताः सामाजि-कनिष्ठा भवन्ति । रत्यादयोऽपि लौकिका एवैवंविधाः सन्तः स्थायिभावसाम्रा-

१ M. drops अनुकार्येण. २ कृप्यर्थं L. ३ 'मप्युपलक्षकम् L. ४ न तु P.

मपि न विरुद्धम्। नटस्यानुकरणमात्रपरतया नैव रसाश्रययोग्यता। तस्य भावकत्वाभ्युपगमेऽपि[१] सामाजिकत्वमेव। अनुभावादीनां प्रकाशनं तु शिक्षाभ्यासपाटवेनैव[२] घटते। एषु[३] रसादीनां[४] परस्परविरोधेऽपि कविप्रौढोक्तिसमाश्रयेणैकत्र समावेशो न विरुद्धः। विरोधक्रमः **शृङ्गारतिलके** कथितः।

---

ज्यमूर्धाभिषिक्ता भवन्ति। तेऽमी विभावादयः सर्वेऽपि चित्रतुरगन्यायेन सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिविलक्षणचर्वणादिशब्दवाच्यालौकिकशब्दप्रतीतिविषयत्वादलौकिका एव। तन्निष्पाद्यत्वेनालौकिकस्य रसस्य सामाजिकान्तःकरणप्रतिबिम्बितस्थायिपरिणामत्वात् सामाजिकाश्रयत्वम्। अस्मिन्नर्थे वृद्धसंवादः प्रकरणान्ते वक्ष्यते। तदेतदभिसंधायाह। सामाजिकाश्रयत्वमपि न विरुद्धमिति। अपिशब्दः पूर्वोक्तलौकिकपक्षं समुच्चिनोति। न पुनरलौकिकस्यैवाश्रयान्तरत्वमसंभावितत्वात्। आश्रयान्तरमाशङ्कमानस्तावदेवं प्रष्टव्यः। आश्रयः किमनुकार्योऽनुकर्त्ता वा। नाद्यः। अतीतत्वात्। न द्वितीयः इत्याह। नटस्येति। अनुकरणमात्रपरतयाभिनयाभिनिविष्टचित्तत्वेन। ननु कदाचिद्रामादितादात्म्यानुसंधानात् सामाजिकत्वमनुभवतो नटस्यानन्दपराधीनस्य कथमभिनयप्रकाशनमत आह। अनुभावादीनामिति। ननु तत्र तत्र रसान्तरसमावेशो न कथं प्रकृतरसभङ्गहेतुरत आह। रसानामिति। अपिशब्दोऽविरोधे[५]। किमु वक्तव्यमिति भावः। प्रौढोक्तिसमाश्रयणेनेति। रसानां मिथोविरोधोऽस्तु मा वा। कस्यचिदङ्गित्वाङ्गीकारेणेतरेषां परिपोषाभावान्नास्ति विरोध इति कविसमयाश्रयणादित्यर्थः। तदुक्तं ध्वन्याचार्यैः।

> 'अविरोधी[६] विरोधी वा रसोऽङ्गिनि[७] रसान्तरे।
> परिपोषं न नेतव्यस्तदा स्यादविरोधिता॥'

इति। न केवलमविरोधः प्रत्युत तथाविधे विषये सहृदयानां प्रह्लादातिशय एवेत्यपि तत्रैवोक्तम्।

---

१ T' drops अपि. २ °पाटवेन घटते M. ३ T'. and M., omit एषु. ४ रसानाम् T'.
५ अपिशब्दादविरोधे t. ६ अविरोधो विरोधो वा p. ७ रसोऽङ्गिनि p.

'शृङ्गारबीभत्सरसौ तथा वीरभयानकौ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः॥'

रसाद्रसोत्पत्तिरपि संमता[1]। तथोक्तं[2] शृङ्गारतिलके[3]।

'हास्यो भवति शृङ्गारात् करुणो रौद्रकर्मणः।
अद्भुतश्च तथा वीराद्बीभत्साच्च भयानकः॥'

व्यभिचारिभावानां तत्तद्रसानुगुण्यमेवं प्रतिपादितं शृङ्गारतिलके। तथाहि।

'शङ्कासूयाभयं[4] ग्लानिर्व्याधिश्चिन्ता स्मृतिर्धृतिः।
औत्सुक्यविस्मयावेगा[5] व्रीडोन्मादौ मदस्तथा॥
विषादो जडता निद्रावहित्था चापलं मृतिः।
इति भावाः प्रयोक्तव्याः शृङ्गारे व्यभिचारिणः॥
श्रमश्चपलता निद्रा स्वप्नो ग्लानिस्तथैव च।
शङ्कासूयावहित्था च हास्ये भावा भवन्त्यमी॥
संत्रासो मरणं दैन्यं ग्लानिश्चैव भयानके।
अपस्मारो विषादश्च भयं रोगो मृतिर्मदः[7]॥
उत्साहश्चेति विज्ञेया भावा बीभत्ससंभवाः।
आवेगो जडता मोहो हर्षणं विस्मयः स्मृतिः[8]॥
इति भावा निबद्धव्या[9] रसज्ञैरद्भुते रसे।
दैन्यं चिन्ता तथा ग्लानिर्निर्वेदो जडता स्मृतिः॥

---

एकत्र प्रबन्धे वा वाक्ये वा रसविरोधिक्रमं संमतिव्याजेनाह। शृङ्गारेति। प्रसंगाच्छृङ्गारादिभ्यो हास्यानामुत्पत्तिमाह। रसादिति। अत्र बाह्यार्थसंबन्धस्य यथायोगं सत्त्वरजस्तमोऽहंकारसहितस्य मनसो विकारविशेषाः शृङ्गारादयः। एतेभ्य एव सत्त्वरजस्तमोऽहंकारेषु यथायोगमावापोद्धारसहितेभ्यो हास्यादय उत्पद्यन्त इति नारदादयः। वासुकिनोक्तो विशेषो भावप्रकाशे द्रष्टव्यः।

अथ व्यभिचारिभावानां व्यवस्थामाह। व्यभिचारिभावानामित्यादिना।

---

१ मता for संमता P., R. २ तथा चोक्तम् P. ३ T'. has तथा हि after शृङ्गारतिलके. ४ भय° P. ५ औत्सुक्यं विस्मयो वेगो R. ६ °विस्मयौ वेगो M. ७ रतिर्मदः R. ८ मोहोऽमर्षणम् M. ९ निबोद्धव्या M.

व्याधिश्च करुणे वाच्या भावा[1] भावविशारदैः ।
हर्षोऽसूया तथा गर्व उत्साहो मद एव च ॥
चापल्यमुग्रता चैवं[2] रौद्रे भावाः प्रकीर्त्तिताः ।
अमर्षः[3] प्रतिबोधश्च वितर्कोऽथ मतिर्धृतिः ॥
क्रोधोऽसूयाथ[4] संमोह आवेगश्चोपहर्षणम्[5] ।
गर्वो मदस्तथोग्रत्वं भावा वीरे भवन्त्यमी ॥
रसः सर्वोऽपि संपूर्णस्तिरोधत्ते रसान्तरम् ॥'

इति ।

भारतीयोक्तप्रक्रियया यद्यप्येक एव रसस्तथापि महाकविप्रसिद्ध्या रससंकरः[6] स्वीक्रियते ।

तत्र रसादेरप्राधान्ये रसवदाद्यलंकारा भवन्ति । रस[7]निर्बन्धे[8] रसवदलंकारः । भावनिबन्धे[9] प्रेयोऽलंकारः । रसाभासभावाभासनिबन्धे[10] ऊर्जस्विदलंकारः[11] । भावशान्तिनिबन्धे[12] समाहितमलंकारः[13] । तथा भावोदयादयोऽपि ।

---

अथ रसवदाद्यलंकारविचारमारभते । रस इति । वाक्यार्थत्वेन प्रधानभूत इत्यर्थः । संपूर्णः स्वस्वविभावादिसामग्रीपरिपुष्टः । रसान्तरमङ्गभूतम् । महाकविप्रसिद्ध्येति । अङ्गभूतस्य विश्रान्तिविषयत्वाभावेन रसत्वाभावेऽपि महाकविभी रसत्वेन व्यवहारादित्यर्थः । वस्तुतस्तु तदानीमलंकारत्वमेव रसादीनामपीति भावः । तदेव विविनक्ति । तत्रेत्यादिना । अत्र रसवदलंकारस्योदाहरणं यथा ।

'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥'

रणभुवि पतितं भूरिश्रवसो भुजं दृष्ट्वा तत्प्रेयसीनामयं विलापः । अत्राधिकारिकस्य करुणस्याङ्गभूतशृङ्गारोऽलंकारतामापद्यते । एवमन्यदप्युदाहार्यम् ।

---

१ भाषा वाच्या R. २ चेति P. ३ अमर्षश्च वितर्कश्च प्रतिबोधमदौ धृतिः P. ४ °सूया च M. ५ °श्चोपमर्षणम् R., M. ६ संकराः स्वीक्रियन्ते M. ७ P. has अन्याङ्गत्वेन before this. ८ निबन्धने P. ९ निबन्धने P. १० °भासनिबन्धने P. ११ ऊर्जस्वी अलंकारः M. १२ °निबन्धने P. १३ समाहितोऽलंकारः R., M.

एतदलंकारसर्वस्वे प्रपञ्चेनोक्तम् ।

'रसभावतदाभासतत्प्रशमननिबन्धने[1] रसवत्प्रेयोर्जस्वि[2]समाहितानि । भावोदयभावशान्ति[3]भावसंधिभावशबलताश्च पृथगलंकाराः' इति ।

एतेषामु[4]दाहरणमलंकारप्रकरणे भविष्यति ।

गुणालंकारश्रीकृतपरिकरो भावविभवः
स्फुरत्प्रादुर्भावः क्रमगलितवेद्यान्तरमतिः ।

---

अथ प्रतिपत्तिसौकर्यार्थं रसस्वरूपं श्लोकत्रयेण संगृह्णाति । गुणेति । गुणालंकारग्रहणं वृत्तिरीत्यादीनामप्युपलक्षणार्थम् । तेषां श्रिया संपत्त्या कृतपरिकरो विशिष्टकाव्यप्रतिपादितविभावाद्यभिव्यक्त इत्यर्थः । अत एव स्फुरदुत्पद्यमानः प्रादुर्भावो रसोन्मुखत्वं यस्य स तथोक्तः । भावविभवो रत्यादिस्थायिभाववर्गः । प्रथमं तावत् काव्याभिनयाभिनिविष्टस्य सामाजिकस्य रसप्रादुर्भावसमये नटे रामादिप्रतीतिदार्ढ्यमुत्पद्यते[5] । ततः सामाजिकानुकार्यहृदययोरभेदप्रतीतिः[6] । ततः सामाजिकहृदयं नृत्तगीतादिनानाविधनाट्यधर्मेषु मज्जति[7] । ततो वेद्यान्तरमतिर्विगलति । तदानीमलौकिको रसो योगिवेद्यब्रह्मानन्दसदृशः स्वयमेव चर्वणास्पदं भवति । यदाहुः ।

'पाठ्यादथ ध्रुवागानात् ततः संपूरिते रसे ।
तदास्वादभरैकाग्रो हृष्यत्यन्तर्मुखः क्षणम् ॥
ततो निर्विषयस्यास्य स्वरूपावस्थितो निजः ।
व्यज्यते ह्लादनिष्यन्दो येन तुष्यन्ति योगिनः ॥'

इति । तदेतत् सर्वं मनसि निधायाह । क्रमगलितवेद्यान्तरमतिरिति । इयांस्तु विशेषः । ब्रह्मानन्दानुभवे वेद्यान्तरं किमपि न स्फुरति । रसास्वादे तु विभावादिव्यतिरिक्तवेद्यान्तरनिरास इति । तर्हि विभावादिप्रतीतावखण्डानन्दानुभवः कथमिति चेत् सत्यम् ।

'द्राक्षामधूकखर्जूरकाश्मर्यैः सह रूषकैः ।
तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम् ॥
पानकं पञ्चसाराख्यं दाहतृष्णानिवर्तकम् ॥'

इत्युक्तलक्षणनानारसकदम्बस्वरूपपानकरसन्यायेनेति ब्रूमः । नन्वानन्दमूले शृङ्गारादावस्तु नाम सुखास्वादः । शोकमूले पुनः करुणे कथमेतदित्याशङ्क्यानु-

---

१ °निबन्धे M. २ °प्रेयोर्जस्वित् P. ३ P. and M. drop भावशान्ति. ४ तेषामु° $M_1$, $M_2$. ५ °मुत्पद्यते t. ६ °कानुकार्ययो° p. ७ निमज्जति t.

सुखं वा दुःखं वा [1]निबिडयतु यूनोः सहृदये
त्वमन्दानन्दात्मा परिणमति पूर्णो रसभरः ॥ ८८ ॥
रसो वाक्यार्थः सन् विलसति पदार्थाः पुनरमी
विभावाद्या यस्मिन् किल दधति विश्रान्तिमुचिताम् ।

कार्यविषयेयमास्वादवैचित्री न सामाजिकविषयेत्याह । सुखं वेति । अत्रास्य सूत्रस्य शाटकं वयेति न्यायेन भाविनीं वृत्तिमाश्रित्य लौकिको रत्यादिभावः श्लेषभङ्ग्या भावविभावशब्देनोच्यते । अयं यूनोः स्त्रीपुंसयोः सुखं लौकिकं शृङ्गारादौ दुःखं करुणे निबिडयतु दृढं करोतु । येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता अत एव हृदयसंवादभाजः सहृदया इत्युक्तलक्षणे सहृदये तु पूर्णः पूर्वोक्तरीत्या विभावादिसमुल्लासितः सन्नित्यर्थः । रसभरस्य पूर्णस्य भारत्वं युक्तमेवेति भावः । अमन्दानन्दात्म ब्रह्मानन्द इव निरतिशयसुखस्वरूपः परिणमति । ननु यद्ययमानन्दात्मकः कथं तर्हि भावकानां करुणात्मककाव्यश्रवणे तथाविधाश्रुधाराविर्भाव इति चेन्नैष दोषः । संभोगसमये स्त्रीणामधरदंशनादौ कृत्रिमदुःखानुभावसीत्कारवदत्राप्युपपत्तेः सुखेऽपि दुःखवदुपचारः कुट्टमितमिति तल्लक्षणात् । यद्यप्यस्यापि सहजदुःखात्मकत्वं स्यान्न कोऽपि सामाजिकस्तत्र प्रवर्तेत । ततश्च करुणैकरसानां रामायणादीनामुच्छेदप्रसङ्गः स्यात् । तस्माद्रसान्तरवत् करुणस्यापि आनन्दात्मकमेवेति निरवद्यम् । ननु रसास्वादे विशेषाभावात् कथं नवधा विभाग इति चेत् सत्यम् । यथैकस्य ब्रह्मानन्दस्य चन्द्रकान्तसोपानपङ्क्तिप्रतिबिम्बितचन्द्रबिम्बवदुपाधिभेदादनेकधा कल्पनं तद्वदत्रापि व्यञ्जकविभावादिभेदाद्वस्तुत एकस्यापि नानात्वमिति वेदितव्यम् ।

अथैवंविधो रसः काव्यादौ केन कारणेन प्रतीयत इत्याकाङ्क्षायामाह । रस इति । वाक्यार्थ इति । कविसंरम्भविश्रान्ते रसस्यैव प्राधान्यादिति भावः । तदुक्तम् ।

'कवेर्विवक्षया यत्र प्राधान्यं परिकल्प्यते ।
भवेत् स एव वाक्यार्थ इति निर्णीयते बुधैः ॥'

इति । न चास्य पदार्थसंसर्गादिरूपवाक्यार्थवन्मतभेदेन वाच्यत्वं लक्ष्यत्वं वा संभवति । अभिधालक्षणयोरत्रानवकाशात् । तात्पर्यविशेषस्तु व्यञ्जनान्तर्भूत

[1] निबिडयति P. [2] रसभरः P.

तैतो भावा ऐकक्रमसमुदितान्योन्यविभवा
रसीभावं विभ्रत्यथ च पटतां तन्तव इव ॥ ८९ ॥

एवेति प्रतिपादितं काव्यप्रकरणे । अतोऽयं वाक्यार्थो व्यङ्ग्य एवेति वेदितव्यम् । अमी रैसस्य व्यञ्जका विभावाद्याः पुनः पदार्थाः । यद्यपि विभावादीनां स्वस्ववाक्यापेक्षया वाक्यार्थत्वं तदुक्तम्—

'स्थायी वा सात्त्विको वापि संचारी वा क्वचित् क्वचित् ।
भावो वाक्यार्थतामेति तत्तद्भावविशेषतः ॥'

इत्यादिना तथापि रसं प्रत्यवान्तरव्यापारत्वात् पदार्थव्यवहारः । एवं च पदार्थस्थानीयभावादिप्रतीत्युत्तरकालीनस्फुरणतया रसो वाक्यार्थस्थानीय इति निष्कर्षः । रसं प्रति विभावादीनामवान्तरव्यापारत्वं निर्वहति । यस्मिन्निति । उचितां विश्रान्तिं दधति कारकज्ञापकभाववैलक्षण्येन व्यञ्जनध्वननचर्वणचमत्कारादिशब्दवाच्यरसगोचरज्ञानविशेषोपयोगित्वं भजन्त इत्यर्थः । अत एवोक्तं लोचने । 'विभावादिरत्र न ज्ञापको नापि कारकः । अपि तु चर्वणोपयोगी' इति । अत ऐवालौकिकत्वमस्येति भावः । एतच्चाघटितघटनसूचकेन किलशब्देन द्योत्यते । अत इति । विभावादिविश्रान्तेरित्यर्थः । भावाः स्थायिभावा एव क्रमेणाङ्कुरितकन्दलितपल्लवितत्वादिरूपेण समुदितोऽन्योन्यविभवः स्वस्वपरिपोषो येषां ते क्रमसमुदितान्योन्यविभवाः । यद्यप्यन्योन्यशब्दः कर्मव्यतीहारे द्विर्भावितस्तथाप्यौचित्यादुक्तार्थे योजनीयः । अथ च विभावादिसंनिधानान्तरमेवेत्यर्थः । चोऽवधारणे । अनेन व्यङ्ग्यव्यञ्जकयो रसविभावाद्योरस्त्येव क्रमः । किं तु शतपत्रपत्रशतव्यतिभेदवदाशुभावित्वान्न संलक्ष्यत इति सूचितं भवतीति भावः । बिभ्रति पूर्वं वासनामात्रावस्थायिनः स्थायिनो विभावादिमहिम्ना रसात्मना परिणमन्ति रसादिशब्दप्रतिपाद्यत्वं च भजन्त इत्यर्थः । तत्र दृष्टान्तमाह । पटतां तन्तव इति । तदुक्तम् ।

'यथा हि तन्तवो वेमतुर्यादिक्रिययान्विताः ।
पटात्मना परिणता पटवाच्या भवन्ति ते ॥
तथैव स्थायिनो भावा विभावादिभिरन्विताः ।
रसात्मना परिणता रसवाच्या भवन्ति ते ॥'

इति ।

१ अतो P. २ एव M. ३ बिभ्रत्यपि च M. ४ रसव्यञ्जका t. ५ एव न लौकिकत्व° p.

भावे स्थायिनि वर्धमानविभवे रत्यादिके सिंधुवत्
कल्लोला इव संभवन्ति विलयं चायान्ति भावा मुहुः ।
निर्वेदाद्युपभोगभावितनिजास्वादातिरेको रसो
लोके स्यादनुकार्य एव कथितो नाट्ये तु सामाजिके ॥ ९० ॥

---

अथ निर्वेदादीनां रसपोषकाणामवस्थानक्रममभिदधानः प्रतिपत्तिदाढ्यार्थं पूर्वोक्तमेव रसस्याश्रयं स्मारयति । भाव इति । वर्धमानविभवे विभावादिभिरिति भावः । यथार्णवे कल्लोला उत्पद्यन्ते विलीयन्ते च तद्वद्रत्यादिस्थायिभावे निर्वेदादयो निमज्जन्त्युन्मज्जन्ति चेति भावः । तदुक्तम् ।

'मज्जन्तश्च निमज्जन्तः कल्लोलास्ते यथार्णवे ।
तस्योत्कर्षं वितन्वन्ति यान्ति तद्रूपतामपि ॥
तथा स्थायिनि निर्मग्ना ह्युन्मग्ना व्यभिचारिणः ।
पुष्णन्ति स्थायिनः स्वांश्च तन्नयन्ति रसात्मताम् ॥'

इति । ततः किमत आह । निर्वेदेति । निर्वेदादीनामुपभोगेन चर्वणया भावित उत्पादितः निजः स्वगोचर इत्यर्थः । स्वस्मादभिन्नस्यापि स्वरूपस्य स्वेनैव विषयीकरणसंभवात् । यथाहुः । 'आत्मानमात्मन्यवलोकयन्तम्' इति । तथाभूतः स्वादातिरेकोऽलौकिकचमत्कारात्मा यस्य स तथोक्तः सन् रसोऽखण्डानन्दात्मको भवति । अयं च लोके स्यात् लौकिकश्चेदित्यर्थः । अनुकार्ये रामादावेव नान्यत्र । नाट्ये तु अलौकिकश्चेदित्यर्थः । सामाजिके कथित इति । अत्र रसो नायकाश्रय एवेत्यत्रेति शेषः । अत एवोक्तं लोचने । 'स च न व्यतिरिक्तमाधारमपेक्षते[1] किं त्वनुकार्याभिन्नाभिमते नर्तके आस्वादयिता सामाजिकः तेन नाट्य एव रसा नानुकार्यादिषु' इति । उक्तं च शारदातनयेन ।

'व्यापारेण च काव्यस्य तदीयाभिनयेन च ।
रसात्मत्वं नीयमानः स्थायी स्वाद्यत्वमेष्यति ॥
सामाजिकादिरेवास्य रसस्याश्रय उच्यते ।
रसस्य वर्तमानत्वात् नानुकार्यस्य संभवः ॥
अनुकार्यस्य रामादेः कालातिक्रमदर्शनात् ।
नातिक्रान्तानुकार्यस्य रसोद्भावनया कविः ॥
बध्नाति काव्यं यत् तस्माद्रसः सामाजिकाश्रयः ॥'

---

१ 'मपेक्षय किं तु' I. २ स्वाद्युत्व' I.

इति श्रीविद्यानाथकृतौ प्रतापरुद्रयशोभूषणेऽलंकारशास्त्रे रसप्रकरणं समाप्तम् ।

---

इति । केचिदेतत् सामाजिकाश्रयत्वमारोपितं न तु मुख्यमित्याहुः । तदुक्तं महोपाध्यायनरहरिसूरिणा । 'एवं सामाजिकसमवेततां रसस्याङ्गीकृत्यालौकिकता वर्णिता । परमार्थतः पुनः परिपूर्णाखण्डैकरसानन्दरूपपरमेश्वरपर्यायस्यास्य रसस्याधिकारचिन्ता कुतो वा । न सत्यानन्तानन्दात्मके ब्रह्मण्यपि पदमासादयेदिति विचारचतुरैरनादिकविभिरनाधारो रसः सामाजिकैः परं चर्व्यते विभावादिभिः परं व्यज्यते । योगिगम्यत्वमात्रेणेश्वरस्य योगिमनोनिवाससंवादवत् सामाजिकाधिकरणत्वारोपोऽपि सह्यत' इत्यादिभिर्युक्तिभिः प्रतिपादितम् । अनधिकरणत्वमेव सिद्धान्तः । अत एवायं ब्रह्मानन्द एव । इयांस्तु विशेषः । ब्रह्मानन्दो योगगम्यः । अयं तु विभावाद्यनुसंधानगम्य इति । इदमपि तेनैवोक्तम् । 'सर्वत्रैकैवानन्दव्यक्तिर्लौकिकं सुखमिति व्यवह्रियते । अलौकिकविभावाद्यभिव्यक्त्या कविसमयप्रसिद्ध्यनुसारादलौकिको रस इति कथ्यते । नानाविधविमलकर्मनिर्मलान्तःकरणेषु शमदमादिसाधनसंपन्नेषु श्रवणमनननिदिध्यासनपरेषु परमयोगिषु निर्विकल्पकसमाध्यभिव्यक्त्या ब्रह्मेति परमात्मेतीश्वर इति शब्द्यत' इति । उक्तं च स्वात्मयोगप्रदीपे ।

'या स्थायिभावरतिरेव निमित्तभेदा-
च्छृङ्गारमुख्यनवनाट्यरसीभवन्ती ।
सामाजिकान् सहृदयान्नटनायकादी-
नानन्दयेत् सहजपूर्णरसोऽस्मि सोऽहम् ॥'

इति संक्षेपः ।

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलचल-
मल्लिनाथसूरिसूनुना विश्वजनीनविद्यस्य विद्वन्मणेः
पेद्दयार्यस्यानुजेन कुमारस्वामिसोमपीथिना
विरचिते प्रतापरुद्रीयव्याख्याने रत्नाप-
णाख्याने रसनिरूपणं नाम
चतुर्थं प्रकरणम् ॥

## अथ दोषप्रकरणम् ।

अथ काव्यजीवितभूत[1]रसनिरूपणानन्तरं तदुपस्कारहेतूनां[2] गुणानां[3] सम्यग्विवेकाय दोषा निरूप्यन्ते ।

तत्र दोषसामान्यलक्षणम् ।

दोषः काव्यापकर्षस्य हेतुः शब्दार्थगोचरः ।

शब्दार्थमयत्वात् काव्यस्य तदपकर्षहेतूनामपि[4] दोषाणां शब्दगतत्वे नार्थगतत्वेन च द्वैविध्यम् । शब्दगतानामपि पदवाक्यगतत्वेन च द्वैविध्यम् । तत्र पदगतदोषाः[5] कथ्यन्ते[6] ।

अप्रयुक्तमपुष्टार्थमसमर्थं निरर्थकम् ।
नेयार्थं च्युतसंस्कारं संदिग्धं चाप्रयोजकम् ॥
क्लिष्टं गूढार्थकं ग्राम्यमन्यार्थं चाप्रतीतिकम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृत् तथा ॥
अश्लीलं परुषं चेति दोषाः सप्तदश स्मृताः ।

एषां स्वरूपं निरूप्यते ।

यदप्रयुक्तं कविभिरप्रयुक्तं तदुच्यते ।
प्रकृतानुपयुक्तार्थमपुष्टार्थं तदुच्यते ॥

---

रसनिरूपणानन्तरं तदुपस्कारहेतुभूतगुणालंकारनिरूपणे प्रसक्तेऽपि तदुल्लङ्घ्य मध्ये दोषनिरूपणं संगमयन् प्रतिजानीते । अथेति । गुणानामित्यलंकाराणामप्युपलक्षणम् । सम्यगिति । अन्यथा विवेकमात्रस्य प्ररूढत्वाभावादिति[7] भावः । तत्र दोषसामान्यलक्षणमाह । दोष इति । रसापकर्षद्वारा काव्यापकर्षहेतुर्दोष इत्यर्थः । अत एवोक्तं काव्यप्रकाशे । 'मुख्यार्थहतिर्दोषः'—इत्यादिना । शब्दार्थगोचर इत्येतद्विभागपरम् ।

अत्र[8] रसादिप्रतीतेर्विभावाद्यर्थमूलत्वाद् विभावादेश्च वाक्याधीनत्वात् वाक्यानां च पदार्थलब्धत्वात्[9] प्रथमभावितया तेषां तद् दोषनिरूपणं प्रतिजानीते । तत्र पदगतदोषा इति ।

यथोद्देशमेतेषां लक्षणमाह । यदप्रयुक्तमित्यादिना । अभिधानादावाम्नात-

---

१ M. omits भूत. २ °भूतानाम् M,. ३ P drops गुणानाम्. ४ °हेतूनां दोषाणामपि M.; P. drops दोषाणाम्. ५ पदगता दोषाः M. ६ चिन्त्यन्ते M. ७ °दित्यर्थः m. ८ अत्र m. ९ पदारब्धत्वात् m.

योगमात्रप्रयुक्तं यदसमर्थं तदुच्यते ।
पादपूरणमात्रं यत्तन्निरर्थकमुच्यते ॥
स्वसंकेतप्रसिद्धार्थं नेयार्थं परिकीर्त्यते ।
शब्दशास्त्रविरुद्धं यच्च्युतसंस्कारमुच्यते ॥
संदिग्धं तन्मतं यत् स्यात् संदिग्धार्थप्रतीतिकृत् ।
तदप्रयोजकं यत् स्यादविशेषविधायकम् ॥
क्लिष्टं तदर्थावगतिर्दूरदूरायतो भवेत् ।
प्रयुक्तमप्रसिद्धार्थे गूढार्थं परिकीर्त्यते ॥
पामरव्यवहारैकप्रसिद्धं ग्राम्यमुच्यते ।
यद्रूढिप्रच्युतं नाम तदन्यार्थमुदाहृतम् ॥
शास्त्रमात्रप्रसिद्धं यदप्रतीतिकमुच्यते ।
अविमृष्टविधेयांशं गुणीभूतविधेयकम् ॥
विपरीतार्थधीर्यस्माद्विरुद्धमतिकृन्मतम् ।
अश्लीलं यदमाङ्गल्यजुगुप्साव्रीडभीकरम् ॥

मपि कविभिरनादृतमप्रयुक्तमित्यर्थः । योगमात्रप्रसिद्धं शास्त्रमात्रप्रसिद्धमित्यर्थः । मात्रशब्देन वाचकशक्तिविरहः प्रतिपाद्यते । स्वसंकेतप्रसिद्धार्थमिति । संकेतमात्राधीनार्थमित्यर्थः । च्युतः संस्कारो व्याकरणकृतो यस्मात् तत् च्युतसंस्कारम् । विशेषविधायकं न भवतीत्यविशेषविधायकम् । दूरदूरा अतिदूरा व्यवहितेत्यर्थः । अप्रयुक्तमिति । बहुभयार्थे संदेप्रसिद्धार्थे प्रयुक्तं तद्गूढार्थमित्यर्थः । एतदेव निहतार्थमिति केचित् । रूढेः प्रसिद्धेः प्रच्युतं रूढिप्रच्युतम् । अन्यार्थमवाचकमित्यपरे । अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तदविमृष्टविधेयांशम् । तदेवाह । गुणीभूतविधेयकमिति ।

१ °मात्रार्थं तन्निरर्थक° P. २ °प्रकृत्यर्थम् P. ३ °मिष्यते R., M. ४ यस्मात् संदिग्धा° R. ५ पामरेष्वपि यत् प्रायः प्रसिद्धं R.; पामरेषु प्रसिद्धं यत् तद्ग्राम्यमनुमन्यते M. ६ °प्रस्थितम् R. ७ °प्रयुक्तम् M.; °प्रतीतं यदप्रती° T'. ८ यदप्रतीतं तदुच्यते R; यदप्रतीतमुदाहृतम् M. ९ यदमङ्गल्यं R.; तदमङ्गल्यजु° M. १० p. drops मात्र. ११ च्युतो यस्मात् m. १२ न प्रसिद्धार्थे m.

परुषं नाम तद्यत् स्याद्विहितं परुषाक्षरैः ।

अत्र वन्यवृत्तीनां शत्रुस्त्रीणां वचनेषु दोषा उदाह्रियन्ते ।

अप्रयुक्तं यथा ।

विमुखा दैवताः सर्वे ते नो दुश्च्यवनादयः ।
अरण्यगृहमेधिन्यो यैर्वयं हन्त कल्पिताः ॥ १ ॥

अत्र दैवता इति पुल्लिङ्गप्रयोगः दुश्च्यवन इति चेन्द्रपरत्वेन कविभिर्न प्रयुक्तम् ।

अपुष्टार्थं यथा ।

व्यर्थाष्टार्धार्धबाहूनाममीषामीदृशां दशाम् ।
कथं सहामहे धिग्धिक् कठिनं हन्त जीवितम् ॥ २ ॥

---

यथायोगमुदाहरति । विमुखा इति । दैवता इति । 'वृन्दारका दैवतानि पुंसि वा देवता' इत्यमरः । दुःसहः च्यवनो मुनिरस्येति दुश्च्यवनः इन्द्रः । गृहेण पत्न्या गृहैर्वा मेधन्ते संगच्छन्त इति गृहमेधिनः गृहस्थाः तत्पत्न्यो गृहमेधिन्यः । 'गृहं पत्न्यां गृहेऽपि च' इति हलायुधः । 'मेधृ संगमे च' इत्यस्माद्धातोर्णिनिप्रत्ययः । अत्र दैवतदुश्च्यवनशब्दयोर्यथाक्रमं लिङ्गानुशासनशब्दानुशासनाभ्यातयोरपि कवीनामनादराद् दुष्टत्वमित्याह । अत्रेति । एकैकोदाहरणविवक्षायां पददोषद्वयमेतत् । समुदायविवक्षायां तु वाक्यदोषोऽयम् । विरोधिनो दुश्च्यवनादिदैवता इत्युक्ते समासदोषः । अप्रयुक्तादीनां त्रैविध्यस्यापि काव्यप्रकाशकारादिभिरङ्गीकृतत्वादिति द्रष्टव्यम् । एवमुत्तरत्रापि यथासंभवमूहनीयम् ।

व्यर्थेति । अष्टार्धार्धं द्वयं तद्विशिष्टा बाहवस्तथोक्ता इति मध्यमपदलोपी समासः । जीवितमिति धिक्शब्दयोगे द्वितीया । तस्य 'नित्यवीप्सयोः' इत्या-

---

१ वनवर्तिनाम् P., M. २ सर्वेऽत्रसे R. ३ दैवतशब्दपुल्लिङ्गप्रयोगः R. ४ प्रयुक्तः R., M. ५ °मीदृशीं R. ६ सहिष्यामः कथं M., ७ जीवनम् M. ८ m. has before this 'दारेष्वपि गृहः जाया च गृहिणी गृहाः' इति विश्वामरहलायुधाः I. ९ मध्यपद° m.

अत्र व्यर्थबाहुद्वयानामिति विवक्षितेऽष्टार्धार्धबाहूनामित्यनुपयुक्तम् । एतदेवाविमृष्टविधेयांशस्योदाहरणम्[1] । बाहुद्वयस्य वैयर्थ्ये विधेये तस्योपसर्जनत्वं प्रतीयते ।

**असमर्थं** यथा ।

> विहाय वसुधामेनां चतुरम्बुधरावृताम् ।
> क नु गन्तव्यमस्माकं[2] मरणेऽप्यसुखा स्थितिः ॥ ३ ॥

अत्र जलनिधि[3]परत्वेनाम्बुधरपदमसमर्थम् ।

**अनर्थकनेयार्थ[4]च्युतसंस्कारसंदिग्धानि** यथा ।

> विहाय च गृहांस्तान् वै व्यत्यस्तनवृत्तयः ।
> कदा भविष्यते वासः कटकेषु महीभृताम् ॥ ४ ॥

अत्र वै इति निरर्थकम् । व्यत्यस्तनवशब्देन वनप्रतीतिः स्वसंकेतमात्रायत्तेति नेयार्थकम् । भविष्यते इति भवतेरात्मनेपदित्वं शब्दशास्त्र-

---

भीक्ष्ण्ये द्विर्भावः । प्रकृतानुपयुक्ततां दर्शयति । अत्रेति । उदाहरणलाघवमाह । एतदेवेति । व्यर्थबाहुद्वयानामितीदमेवेत्यर्थः । अत्र दुर्दशाप्रस्तावे बाहूद्देशेन विधेयस्य वैयर्थ्यस्यान्यपदार्थप्रधानबहुव्रीहिवर्तिपदार्थत्वेन गुणीभावादविमृष्टविधेयांशाख्यो दोष इत्यर्थः ।

विहायेति । अत्राम्बुधरशब्दस्य समुद्रे शास्त्रप्रसिद्धिरेव न तु वाचकशक्तिः । अतोऽसमर्थत्वमित्याह । अत्रेति ।

लाघवार्थमनर्थकादिचतुष्टयमेकेन श्लोकेनोदाहरति । विहाय चेति । अत्र वैशब्दद्योत्यस्य कस्यचिदप्यर्थस्यान्वयाभावात् पादपूरणमात्रप्रयोजकत्वेन निरर्थको वैशब्द इत्याह । अत्र वै इतीति । अत्र वाक्यसन्ध्येर्वैकल्पिकत्वादादेशाभावः । यमकेषु निरर्थकं न दोष इत्युक्तं हेमचन्द्रेण । व्यत्यस्तनवेत्यत्र वर्णव्यत्यासेन वनप्रतीतिर्लक्षणयेति वक्तव्यम् । तस्यां च कुशलादिवन्न रूढिर्निमित्तम् । नापि गङ्गायां घोष इत्यादिवत् प्रयोजनं किं तु स्वसंकेतमात्रमतस्त्वशक्तेयं लक्षणोपेक्षणीया ।

> 'निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् ।
> क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः ॥'

इत्याचार्यैस्तस्या निषिद्धत्वात् । अतो नेयार्थमेतदित्याशयेनाह । व्यत्यस्तनवशब्देन वनप्रतीतिः स्वसंकेतमात्रायत्तेति । प्राप्त्यर्थस्यैव भवतेरात्मनेपदित्वं न सत्तार्थस्येति वैयाकरणाः । अतोऽस्य च्युतसंस्कारत्वमित्याह । भविष्यत इति ।

---

१ °विधेयांशस्याप्युदाहरणम् T., M. २ °मस्मामिररण्ये M. ३ जलधिपर° T. ४ नेयार्थक° T.

विरुद्धमिति च्युतसंस्कृतिः।[1] महीभृतां कटकेषु[2] वास इत्यनेन राज्ञां सैन्येषु वास उत पर्वतानां नितम्बेष्विति संदेहात् संदिग्धम्।

अप्रयोजकक्लिष्टे यथा।

हन्त वर्त्तामहे वज्रघटनात् प्राक् चलात्मसु।
नभस्वदशनारातिध्वजाग्रजविरोधिषु॥ ५॥

[3]अत्र नभस्वदशनाः सर्पास्तेषामरातिर्गरुडः स एव ध्वजो[4] यस्येति विष्णुस्तस्याग्रज इन्द्रस्तस्य विरोधिषु पर्वतेष्वित्यर्थप्रतीतेरतिदूरत्वात्[5] क्लिष्टम्। पर्वतेषु वर्त्तनं दुःखावहमिति प्रकृते वज्रघटनात् प्राक् चलात्मस्विति पर्वतविशेषणस्यानुपयुक्तत्वादप्रयोजकम्।

गूढार्थग्राम्यान्यार्थानि यथा।

शोणिताब्जदृशः कामं क्षामगल्लकटिस्थलाः।
विदग्धहृदयाः शोकवह्निना राजकन्यकाः॥ ६॥

अत्र शोणितशब्दस्य रुधिरे प्रसिद्धस्य पाटलवर्णपरत्वेन प्रयोगाद्गूढार्थम्।[6] गल्लकटिशब्दौ[7][8] कपोलजघनपरत्वेन ग्राम्यप्रयुक्तौ। विदग्धहृदया इति विशेषणं दग्धहृदयस्यावाचकत्वादन्यार्थम्[9]

---

संदिग्धमभिनीय दर्शयति। महीभृतामिति। अत्र भृञः पालनधारणार्थत्वानुशासनम्। 'कटकं वलयं सानौ राजधानीनितम्बयोः' इत्यभिधानं च संदेहबीजमिति भावः।

हन्तेति। व्युत्क्रमेण लक्षणं योजयति। अत्रेत्यादिना।

शोणितेति। ग्राम्यप्रयुक्तौ पामरव्यवहारमात्रप्रसिद्धावित्यर्थः। विपूर्वस्य दग्धशब्दस्य निपुणार्थत्वाद्दाहं प्रत्यवाचकत्वादन्यार्थमित्याह। विदग्धेति।

---

१ च्युतसंस्कारः T. २ नगरेषु T'. ३ P. has अत्र पर्वतेषु वर्तनं ............प्रयोजकम्। नभस्वदशनाः..............क्लिष्टम् for अत्र नभस्वदशनाः..............क्लिष्टम्। पर्वतेषु वर्तनं..........°दप्रयोजकम्. ४ ध्वजे P., ध्वजेषु M. ५ पर्वतेष्वित्यतिदूरत्वात् P. ६ गूढार्थः M. ७ °श्यामगल्ल° P. ८ °कटी° M. ९ °हृदयस्य वाचकत्वा° P., M.

**अप्रतीतिकं** यथा।

मनूपदेशाः क गताः कुलाचार्यैरुदीरिताः।

अत्र मनुशब्दो मन्त्रपरत्वेन मन्त्रशास्त्रप्रसिद्ध इत्यप्रतीतिकम्।

**विरुद्धमतिकृद्** यथा।

अम्बिकारमणस्याङ्घ्रिसेवा व्यर्था भवेत् कथम्।
राज्ञामकार्यमित्राणां विनाशं समुपेयुषाम्॥ ७॥

अत्राम्बिकारमणशब्दान्मातृसंभोगकारिणः प्रतीतिः। अकार्यमित्रशब्दादकार्येषु मित्राणीति प्रतीतिः। वियोगदुःखपरतया प्रयुक्ताद्विनाशशब्दान्नाशप्रतीतिरिति विरुद्धमतिकृत्।

**अमङ्गलव्रीडाजुगुप्साप्रतीतिकरं त्रिविधमश्लीलं** यथा।

अभिप्रेतपदावासः कदा नः संभविष्यति।
नीचं साधनमेतेषां परोत्सर्गैकजीविनाम्॥ ८॥

अत्राभिप्रेतपदावासशब्दात् प्रेतलोकपदावासप्रतीतेरमङ्गलत्वम्। नीचं साधनमित्यनेन तुच्छमेहनप्रतीतेर्व्रीडाकरत्वम्। परोत्सर्गैकजीविनामित्यत्रोत्सर्गशब्दादधोवायुप्रतीतेर्जुगुप्साकरत्वम्।

---

अप्रतीतिकमुदाहरति। मनूपदेशा इति। यथा लोकमात्रप्रसिद्धं ग्राम्यं तथा शास्त्रमात्रप्रसिद्धमप्रतीतिकमित्यर्थः। कुलाचार्यैरित्यनेन संप्रदायशुद्धिः सूच्यते।

अम्बिकारमणस्येति। विनाशं वियोगदुःखमित्यर्थः। लक्ष्ये लक्षणं योजयति। अत्रेत्यादिना। कार्यं विना मित्राणि निरुपाधिकबन्धव इति विवक्षितेऽकार्येष्वनुचितकर्मसु मित्राणीति विरुद्धमतिकृदित्याह। अकार्येति।

अभिप्रेतेति। अभिप्रेतपदमिष्टस्थानम्। एतेषां स्वभर्तॄणाम्। नीचसाधनमल्पसैन्यम्। सहायसंपत्तिर्नास्तीत्यर्थः। 'साधनं निर्वृतौ मदे सैन्ये सिद्धौषधे गतौ' इति विश्वः। परोत्सर्गः परकर्तृकत्यागः। 'उत्सर्गो वर्जने त्यागे' इति विश्वः। त्रिविधमश्लीलं योजयति। अभिप्रेतेत्यादिना।

---

१ व्यर्थामभवत् कथम् M. २ कथं भवेत् P., M. ३ °कारिप्रतीतिः M. ४ M. drops दुःख. ५ प्रयुक्तविनाशमिति शब्दा° P., प्रसिद्धाद्विनाश° M. ६ R. drops अत्र. ७ R. and M. drop पद. ८ °रमङ्गलाङ्गत्वम् M. ९ साधनं नीचमि° M. १० °मित्यनेनाधोवायु° R.

परुषं यथा ।

कुतः कान्तारवृत्तीनां कार्त्तार्थ्यार्थित्वमस्ति नः ।

अत्र कार्त्तार्थ्यार्थित्वमिति परुषवर्णारब्धत्वम् ।

अथ वाक्यदोषाः ।

शब्दहीनं क्रमभ्रष्टं विसंधि पुनरुक्तिमत् ।
व्याकीर्णं वाक्यसंकीर्णमपूर्णं वाक्यगर्भितम् ।
द्वे भिन्नलिङ्गवचने द्वे च न्यूनाधिकोपमे ।
भग्नच्छन्दो यतिभ्रष्टमशरीरमरीतिकम् ॥
विसर्गलुप्तमस्थानसमासं वाच्यवर्जितम् ।
समाप्तपुनरात्तं च तथा संबन्धवर्जितम् ॥
पतत्प्रकर्षमधिकपदं प्रक्रमभङ्गवत् ।
चतुर्विंशतिरुच्यन्ते दोषा वाक्यसमाश्रिताः ॥

एषां स्वरूपमुदाहरणं च ।

शब्दशास्त्रहतं वाक्यं शब्दहीनं प्रकीर्त्यते[2] ।

यथा शत्रुवाक्येषु

न संशृणुमहे हन्त हितमाप्तैर्निमन्त्रितम्[1] ।
येन काकतिभूमर्त्तुः सेवां हित्वा हता वयम् ॥ ९ ॥

---

कुतः इति । कार्त्तार्थ्यार्थित्वं धन्यताभिलाषित्वम् । परुषैः करुणरसाननुगुणत्वेन श्रुतिकटुभिर्वर्णैः सरेफद्वितीयसंयोगादिभिरारब्धमित्यर्थः ।

पददोषानन्तरं वाक्यदोषानुद्देशपूर्वकं लक्षणोदाहरणाभ्यां दर्शयति । अथेत्यादिना ।

नेति । आप्तैर्निमन्त्रितमुपदिष्टं हितं न संशृणुमहे न समश्रौष्मेति वर्त्तमानसामीप्ये वर्त्तमानप्रत्ययेन हिताश्रवणराज्यभ्रंशयोरविरामः सूच्यते । ननु च्युतसंस्कारस्यैव शब्दहीनमिति संज्ञान्तरं न पुनः पृथग्दोषः । वाक्यगतत्वेन पार्थक्यस्य काव्यप्रकाशाकारेण पदद्वये युगपदसाधुत्वासंभवेन परिहृतत्वादिति चेत् सत्यम् । यद्यप्येकपदमेवासाधु तथापि तदसाधुत्वं पदान्तरसमन्वयसापेक्षमिति वाक्यदोष एवायं न पददोषः किं तु कदा भविष्यते वाम इत्यत्रापि पदान्तर-

---

१ °मीरिताम् P. २ प्रकीर्तितम् R.

अत्र हितं न संशृणुमहे इति [1]पदद्वयप्रयोगे दोषाविष्काराद्वाक्यमेव दुष्टमिति न पददोषशङ्का । संपूर्वस्य [2]शृणोतेरात्मनेपदत्वे कर्मणोऽनुपादाननियमात् ।

अथ क्रमभ्रष्टम् ।

क्रमभ्रष्टं [3]भवेदार्थः [4]शाब्दो वा यत्र [5]न क्रमः ।

यथा ।

> प्रभवे काकतीन्द्राय तुरगान् [6]करिणो यथा ।
> उपायनम[7]कुर्वाणा वयं [8]दैवेन वञ्चिताः ॥ १० ॥

अत्र करिणो यद्वा तुरगानिति वक्तव्ये व्युत्क्रमेणोक्तम् । तुरगापेक्षया करिणा[8]मुत्कृष्टत्वात् । [9]अथवा करिण [10]इत्यर्थक्रमभङ्गः ।

---

संनिधानादेव दोषत्वावगमाद्वाक्यदोषत्वमेव केवलं भविष्यतेशब्दस्य लृटः शत्रादेशे चतुर्थ्येकवचने सत्यसाधुत्वासंभवादिति चेत् सत्यम् । वाक्यस्यैवात्र प्रयोगयोग्यत्वादावश्यकपदान्तरसंनिधाने यत्र वाक्यमात्रनिर्वाहस्तत्र पददोषः । यत्र पदान्तरविशेषसहकृतस्यैवासाधुत्वं यथा प्रकृते तत्र वाक्यदोषः । अन्यथा पददोषस्यैवाभावप्रसङ्गादिति तदेतत् सर्वं मनसि निधायाह । अत्र हितमित्यादि । आत्मनेपदित्व इति 'समो गम्यृच्छि—' इत्यादिनेति शेषः । कर्मणोऽनुपादाननियमादिति । अकर्मकाधिकारादिति शेषः । न च कर्माकाङ्क्षस्य शृणोतेः कथमकर्मकत्वमिति वाच्यम् । अविवक्षितकर्मकस्यैवात्राकर्मकत्वात् । तदुक्तम् ।

> 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
> प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥' इति ।

क्रमभ्रष्टमिति । तत्रार्थक्रमभ्रष्टमुदाहरति । प्रभव इति । लक्ष्ये लक्षणं योजयति । अत्रेति । दुर्लभत्वात् करिणां सुलभत्वाच्च [11]तुरगाणामिति । ननु यवाग्वाग्निहोत्रं जुहोति यवागूं पचतीत्यत्र पाठक्रमानुपपत्तावर्थक्रमो यथा स्वीकृतस्तद्वदत्रापि यथायोगमन्वयोऽङ्गीक्रियतामिति चेत् सत्यम् । अपौरुषेये वेदवाक्ये यथा तथा वास्तु पुंवाक्ये तु श्रवणानन्तरमेव प्रयोक्तुस्तारतम्यानभिज्ञत्वप्रतीतेरन्वयविलम्बासहिष्णुत्वाद् दुष्टत्वमेवेत्यनवद्यम् ।

---

१ पदद्वये P. २ शृणुधातोरात्मनेपदित्वे P. ३ भवेदर्थः P., T. ४ शब्दो वा P., T. ५ व्युत्क्रमः P. ६ करिणोऽथवा M., P. ७ °मकुर्वन्तो M. ८ °मुच्चैः कृष्टत्वात् R. ९ T. drops अथवा. १० इत्यत्र क्रमभङ्गः M. ११ तुरङ्गाणामिति M.

शब्दक्रमभङ्गो यथा ।

> का नाम गणनास्मासु काकतीयस्य भूपतेः ।
> यशःप्रतापयोर्मग्नौ सूर्याचन्द्रमसावपि ॥ ११ ॥

अत्र यशःप्रतापयोश्चन्द्रसूर्यौ मग्नाविति शब्दक्रमे उचिते तथा नोक्तम् । यशःप्रतापयोः सूर्याचन्द्रमसौ मग्नाविति समुदायद्वयान्वये यथायोगमर्थान्वये सिद्धे नार्थक्रमविरोधः अपि तु शब्दप्रयोग एव क्रमभङ्गः।

---

शाब्दं क्रमभङ्गमुदाहरति । का नामेति । सूर्याचन्द्रमसाविति 'देवताद्वन्द्वे च' इत्यानङादेशः । तत्र लोकवेदयोरिति प्रसिद्धसाहचर्याणामेव देवतावाचिनां द्वन्द्वस्य विवक्षितत्वाच्च चन्द्रसूर्याविल्यत्रानङादेशः । व्युत्क्रममभिव्यक्तुमुचितक्रमानुक्तिमभिनीय दर्शयति । अत्रेति । आद्यभेदसाङ्कर्यं परिहरति । यश इति । यशःप्रतापयोरित्येकः समुदायः । सूर्याचन्द्रमसावित्यपरः । तदेतत् समुदायद्वयमुद्भूतावयवभेदम् । अन्यथा द्विवचनानुपपत्तेः । तस्यान्वये सतीति शेषः । यथायोग्यमर्थान्वये नार्थक्रमविरोध इति । अभिधानक्रमेणाभिधेयक्रमौचित्येऽपि कविसमयसिद्धोपमानोपमेयभावानुसारेण वर्त्तिपदार्थानां कीर्तिप्रभृतीनां व्युत्क्रमेणापि संबन्धेऽनन्तरोदाहरणवत् बाधकाभावात् नार्थक्रमभङ्ग इत्यर्थः । कुत्र तर्हि क्रमभङ्ग इत्याकाङ्क्षायामाह । अपि तु शब्दप्रयोग एवेति । यथासंख्यन्यायोल्लङ्घनादिति भावः । ननु द्वन्द्वसमासे वर्त्तिपदानि प्रत्येकं स्वसहचरितपदार्थान्तराण्यपि युगपदभिदधतीति वार्त्तिककारमतम् । तदुक्तम् । 'युगपदधिकरणवचने द्वन्द्वः' इति । तन्मते यशःशब्देनापि युगपद्यशःप्रतापावभिधीयेते प्रतापशब्देनापि । एवं सूर्याचन्द्रमसावित्यत्रापि द्रष्टव्यम् । तथा च मिथोऽन्वये शाब्दोऽपि क्रमभङ्गो न संभवतीति चेन्नैष दोषः । सर्वदा केवलपदानामेकैकार्थवाचकत्वाद्वृत्तिपदानामपि मतभेदेन तथाभावात् प्रायेण सर्वेषामप्येवमेव व्युत्पत्तिः । अत्राप्यलौकिकानेकार्थवाचकत्वनिबन्धनमक्रमं बाधित्वा क्रमस्यैव जागरूकत्वात् । यदाह पद्ममञ्जरीकारः । 'पाद्याद्यमित्यादौ युगपदधिकरणवचनतायां द्वन्द्वेऽपि क्रमस्य प्रतीतेः स एव नियामकः' इति ।

---

१ काकतीयकुलमापतेः M. २ सूर्यचन्द्रं॰ P. ३ शब्दक्रमेणोचिते M. ४ सूर्यचन्द्र॰ P. ५ ॰मर्थान्वये R. ६ सिद्धे शब्दे नार्थ॰ T'.; सिद्धोऽर्थक्रमविरोधः M. ७ शब्दक्रमभङ्ग एव P. ८ शब्दक्रमभङ्ग॰ m. ९ अत्र m.

अथ विसन्धि।

विसंहितो विरूपो वा यस्य संधिर्विसंधि तत्॥

यथा।

शौर्याणि ईदृशान्यासन् पृथ्वैश्वर्यं क्व वा गतम्॥

अत्र शौर्याणि ईदृशानीति विसन्धि। पृथ्वैश्वर्यमिति [1]संधिवैरूप्यम्।

अथ पुनरुक्तिमत्।

शब्दार्थपौनरुक्त्ये तु तद्वाक्यं पुनरुक्तिमत्।

यथा।

जीर्णकाननसंकीर्णे विन्ध्ये काननवृत्तयः॥

अत्र काननसंकीर्णे काननवृत्तय इति [3]पुनरुक्तिमत्।

अथ व्याकीर्णम्।

व्याकीर्णं तद्विभक्तीनां व्याकीर्णे [4]च मिथोन्वये।

यथा।

[5]सुखार्थिनो महीपाला वर्त्तध्वं काकतीशितुः।
आज्ञामुरसि बिभ्राणाः शिरसि क्रोडमुद्रिकाम्॥

अत्र क्रोडमुद्रिकामुरसि शिरस्याज्ञां बिभ्राणा इति [6]संबन्धः।

---

विसंहित इति। विगता संहिता वर्णानां परस्परसंनिकर्षो यत्र विसंहितः विश्लिष्ट इत्यर्थः। विरूपः कर्णकठोर इत्यर्थः। शौर्याणि ईदृशानि इत्यत्र सवर्णदीर्घाभावाद् विश्लेषः। न चात्र व्याकरणविरोधः वाक्यसंधेर्वैवक्षिकत्वात्। तदुक्तम्।

'संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते॥' इति।

पुनरुक्तमाह। शब्दार्थपौनरुक्त्ये इति। शब्दमात्रपौनरुक्त्ये त्वलंकारत्वमर्थमात्रपौनरुक्त्ये दोषत्वं वक्ष्यति।

व्याकीर्णमिति। विभक्तीनां विभक्त्यन्तानां पदानामित्यर्थः। संकीर्णपदमेकवाक्ये व्याकीर्णमित्यर्थः। सुखार्थिन इति। क्रोडमुद्रिकां काकतीयध्वजवराहमुद्राम्। दास्यरूपत्वात् तद्धारणस्येति भावः। तदुक्तम्।

---

१ वैरूप्यम् M. २ पौनरुक्त्ये P., R. ३ पुनरुक्तम् R., M.; पुनरुक्तिः M. ४ तु R. ५ यथासुखं मही° P. ६ इति न संबन्धः P.

अथ वाक्यसंकीर्णम् ।

वाक्यान्तरपदैः कीर्णं वाक्यसंकीर्णमुच्यते ।

यथा ।

मानेन महतास्माभिर्वने वक्त्रेण तिष्ठताम् ।
विन्ध्यस्य जीवितं तस्मो जातमद्य तृणं कृतम् ॥ १३ ॥

अत्र महता मानेन यत्तृणं वक्त्रेण कृतं तदद्य विन्ध्यस्य वने तिष्ठता नो जीवितं जातमिति वाक्यद्वयपदानामन्योन्यसंकीर्णता ।

अथापूर्णम् ।

अपूर्णं तद्भवेद्यत्र ने संपूर्णो क्रियान्वयः ।

यथा ।

शैलेष्वस्माकमावासो वन्यैः सोच्छ्वासिता वयम् ।
मृगैर्बन्धुमतश्चास्मान् पश्यन् धाता प्रमोदताम् ॥ १४ ॥

अत्र शैलवासान् वन्यवृत्तीन् मृगबान्धवान् पश्यन्निति विवक्षितसंबन्धो न संपूर्णः ।

---

'पथमङ्गुलिविच्छेद उरोविन्यस्तमक्षरम् ।
तन्नामकरणं चेति दास्यमेतच्चतुष्टयम् ॥' इति ।

मानेनेति । अत्र वाक्यद्वयपदानां मिथः संकीर्णत्वाद्वाक्यसंकीर्णमित्याह । अत्रेति ।

शैलेष्विति । वन्यैः कन्दमूलफलादिभिः । सोच्छ्वसिताः सप्राणाः । अत्र बन्धुमतश्चेति चशब्देनास्मदर्थविशेषणतया शैलवासवन्यवृत्ती समुच्चीयेते । तत्र दर्शनक्रियाया अस्मदर्थद्वारा बन्धुमत इत्यनेनैव संबन्धो न शैलवासवन्यवृत्तिभ्यामिति क्रियान्वयापरिपूरणादपूर्णमित्याशयेनाह । अत्रेति ।

---

१ मानेनास्माभिर्यत्तृणम् M. २ संपूर्णो न P. ३ वन्यैश्चाश्वासिता वयम् M. ४ शैलवनवृत्तीन् P. ५ विवक्षितः R. ६ °संबन्धोऽपूर्णः M. ७ मानसेति m. ८ °वृत्तीः समुच्चीयते m.

अथ वाक्यगर्भितम्।

तद्वाक्यगर्भितं यस्य मध्ये वाक्यान्तरं भवेत्।

यथा।

ज्ञात्वाप्यन्ध्रपुरीन्द्रस्य क्रोधाग्निमतिदुःसहम्।
यद्वा न लङ्घ्यते दैवं तस्मिन्निपतिता वयम्॥ १५॥

अत्रातिदुःसहं क्रोधाग्निं ज्ञात्वापि तस्मिन्निपतिता वयमिति वाक्यमध्ये यद्वा न लङ्घ्यते दैवमिति वाक्यान्तरमनुप्रविष्टमिति वाक्यगर्भितत्वम्।

अथ भिन्नलिङ्गवचने।

यत्रोपमा भवेद्भिन्नवचना भिन्नलिङ्गका।
तद्भिन्नवचनं भिन्नलिङ्गं चाहुर्मनीषिणः॥

द्वयोरुदाहरणं यथा।

समुद्रा इव गम्भीरं मनो यादवभूभुजः।
गिरिणेवान्ध्रनृपतिध्वजिन्या कलुषीकृतम्॥ १६॥

अत्र समुद्रा इव गम्भीरमिति भिन्नवचनम्। गिरिणेव ध्वजिन्येति भिन्नलिङ्गकम्।

---

तदिति। वाक्येन वाक्यान्तरेण गर्भितं संजातगर्भं वाक्यं वाक्यगर्भितमित्यर्थः। उदाहरणं स्पष्टम्। नन्वत्र वाक्यार्थस्यापि वाक्यान्तरगर्भितत्वेनोभयदोषत्वसंभवेऽपि वाक्यार्थप्रतीतावन्तरङ्गत्वेन प्राधान्याद्वाक्यदोषप्रायपाठ इत्यनुसंधेयम्। एवमन्यत्रापि यथासंभवमूह्यम्।

भिन्नलिङ्गभिन्नवचनयोर्लक्षणोदाहरणे दर्शयति।

यत्रेत्यादिना। समुद्रा इव गम्भीरं मन इत्यत्रोपमानोपमेययोर्भिन्नलिङ्गत्वेऽपि मुखं चन्द्र इवेतिवत् सहृदयानामुद्वेगाभावाद् भिन्नवचनस्यैवेदमुदाहरणम्। अत एवोक्तं दण्ड्याचार्येण।

'न भिन्नलिङ्गवचने न च न्यूनाधिके तथा।
उपमादूषणायालं यत्रोद्वेगो न धीमताम्॥' इति।

तदेतन्मनसि निधायाह। अत्र समुद्रा इव गम्भीरमिति भिन्नवचनमिति।

---

१ अत्र T'. २ °प्यन्ध्रनरेन्द्रस्य R., M. ३ तस्मिन् वयं निपतिता R. ४ वाक्यगर्भत्वम् P.; वाक्यगर्भितम् M. ५ लिङ्गभिन्नता M. ६ M. drops यथा. ७ °नृपतेर्ध्वजिन्या M., °नाथस्य ध्वजिन्या M₄. ९ °दाहरणम् m. १० दण्डिना m.

अथाधिकन्यूनोपमे ।

यत्रोपमानमधिकं न्यूनं वा स्याद्विशेषणैः ।
तत्राधिकोपमं पूर्वं न्यूनोपममतः परम् ॥

यथाक्रममुदाहरणम् ।

क्षामक्षाममुखाः कान्ताः कानने मौल्वेरिशितुः ।
ग्रीष्मे नद्य इव म्लानपद्मोत्पलबिसाविलाः ॥ १७ ॥

अत्र क्षामक्षाममुखानां कान्तानामुपमानभूतासु नदीषु म्लानपद्मत्वमात्रं वक्तव्यम् । म्लानोत्पलबिसाविला इत्यधिकम् ।

न्यूनोपमं यथा ।

हाराङ्गरागसुभगा नगरेषु यथा वयम् ।
तथैव निर्झराकीर्णा विभान्ति धरणीभृतः ॥ १८ ॥

अत्र हारस्थाने निर्झरा उक्ताः । अङ्गरागस्थाने किमपि नोक्तमिति न्यूनोपमम् ।

अथ भग्नच्छन्दोयतिभ्रष्टे ।

छन्दोभग्नं वचो यत्र तद्भग्नच्छन्द उच्यते ।
यत्र स्थाने यतिभ्रंशस्तद्यतिभ्रष्टमुच्यते ॥

---

यत्रेति । अत्रोपमाशब्दः करणव्युत्पत्त्योपमानवाची । तेनाधिकविशेषणोपमानमधिकोपमं न्यूनविशेषणोपमानं न्यूनोपमम् । तेन साधारणधर्माधिक्येऽधिकोपमं तन्न्यूनत्वे न्यूनोपममिति फलितम् । उभयोदाहरणं सुगमम् ।

छन्दोभग्नमिति । भग्नं छन्दो वृत्तं यस्मिन् तच्छन्दोभग्नम् । यतिविच्छेद इति च्छान्दसाः । भ्रष्टा यतिर्यत्र तद्यतिभ्रष्टम् । उभयत्र 'वाहिताग्न्यादिषु'

---

१ अत्रा° R. २ द्वयोर्यथाक्रम° T'. ३ मागधेशितुः P. ४ क्षाममुखानाम् R. ५ °पद्ममात्रम् R. ६ म्लानपद्मोत्पल° P. ७ इति न वक्तव्यम् M. ८ वयं यथा R. ९ सर्वतो निर्झरा° R. १० न्यूनोपमत्वम् M. ११ °स्योपमानोपमेयवाची P.

यथा ।

विन्ध्यारण्यकृतकुटुम्बरक्षणस्य
किं भद्रं भवति जनस्य मादृशस्य ॥

अत्र विन्ध्यारण्येति [1]तृतीयवर्णे यतिभङ्गः । [2]पादान्तवर्णस्य गुरुत्वाभावाच्छन्दोभङ्गः ।

अथाशरीरम् ।

क्रियापदेन रहितमशरीरं प्रकीर्त्त्यते ।

यथा ।

हन्त निष्करुणो धाता क्रीडितो मणिकुट्टिमे ।
कानने कण्टकाकीर्णे स्थितान् पाण्ड्यशिशू[3]नमून् ॥ १९ ॥

अत्र क्रियापदं न [4]विहितम् । एतदेवाने[5]न्वयाख्यं दूषणम् ।

---

इति परनिपातः । विन्ध्यारण्येति तृतीयवर्णे यतिभङ्ग इति । प्रहर्षिणीवृत्ते तृतीयदशमवर्णयोर्विच्छेदो विहितः । तदुक्तं वृत्तरत्नाकरे ।

'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।' इति ।

तत्र तृतीयवर्णे तदभावाद्यतिभ्रंशः पादान्तवर्णस्य गुरुत्वाभावाच्छन्दोभङ्गश्च । ननु क्वचिदवसानेऽपि लघ्व्यन्त्यमिति वचनेन पादान्त्यलघोर्विकल्पेन गुरुत्वविधानादत्रापि गुरुत्वाङ्गीकारे न च्छन्दोभङ्ग इति चेत् सत्यम् । यत्रेन्द्रवज्रोपेन्द्रवज्रादौ पादान्तवर्णस्य लाक्षणिकगुरुत्वेऽपि श्राव्यभङ्गाभावस्तत्र मा भूच्छन्दोभङ्गः । प्रहर्षिणीवैतालीयवसन्ततिलकादौ तु वैपरीत्यादस्त्येव दोष इति प्राचीनाः ।

क्रियापदेनेति । हन्तेत्यनुकम्पायाम् । पाण्ड्यशिशूनिति दर्शनक्रियापेक्षया कर्मणि द्वितीया । अत्र दर्शनक्रियानुपादानात् । आख्यातं साव्ययकारकविशेषणं वाक्यमिति वाक्यलक्षणाभावेन वाक्यत्वस्यैवाभावादशरीरं नाम दोष इत्याशयेनाह । अत्रेति । क्रियापदराहित्येनान्वयाभावाच्चानन्वय इत्यस्यैव नामान्तरं मतान्तरेणेत्याह । एतदेवेति ।

---

१ P. drops तृतीयवर्णे. २ पदान्त्यवर्णस्य M. ३ °शिशूनपि P. ४ निहितम् R.; लिखितम् M. ५ °न्वयाख्यदूषणम् R. ६ अनन्वय° m.

अथारीतिकम्।

रसाननुगुणा रीतिर्यत्रारीति तदुच्यते।

अखर्वगर्वदुर्वारदोर्गलनिरर्गलाः।
हा बन्धुवर्गाः सर्वेऽपि कृन्तातातिथयः कृताः॥ २०॥

अत्र करुणेऽनुचितो वर्णाडम्बरः।

अथ विसर्गलुप्तम्।

ओत्वलोपौ विसर्गस्यासकृल्लुप्तविसर्गकम्।

यत्र विसर्गो बहुधौत्वं लोपं वा प्राप्नोति तद्विसर्गलुप्तम्।

यथा।

व्यर्थौ मनोरथो यातो जातो वासो ध्रुवो मरौ।
म्लाना दीना हता जीर्णा वनान्तेष्वीदृशा वयम्॥ २१॥

अथास्थानसमासम्।

अपदस्थसमासं तत् समासो यत्र नोचितः।

यथा।

कुतो वैमुख्यमस्मासु ब्रह्मणः परुषात्मनः।
इत्युदभ्रतरभ्राम्यद्भ्रुकुटीकुटिलाननाः॥ २२॥

---

अरीतिकमिति। विरुद्धरीतिकमित्यर्थः। अखर्वेति। अत्र वर्णपारुष्यदीर्घसमासादिनिबन्धनाया गौडरीतेः करुणानुचिताया निबन्धनादरीतिकं नाम दोष इत्याशयेनाह। अत्रेति।

विसर्गलुप्तमिति। लुप्तविसर्गमित्यर्थः। ओत्वमिति। म्लाना इत्यादौ परम्परया विसर्जनीयस्थानिकस्य यकारस्य 'लोपो व्योर्वलि' इति लोपविधानात् लुप्तविसर्गत्वम्। व्यर्थौ मनोरथ इत्यादौ यद्यपि विसर्जनीयस्य रुत्वादिसंधिकार्यवशाद् गुणे सत्योत्वमेव न लोपः। तथापि विसर्गादर्शनाल्लुप्तविसर्गव्यवहार इति द्रष्टव्यम्। यदाहुराचार्याः। 'अदर्शनं लोपः' इति।

अपदस्थसमासमिति। अस्थानसमासमित्यर्थः। कुत इति। परुषात्मनः कठिनहृदयस्य वेधसे क्रुध्यतामिति 'क्रुधद्रुह—' इत्यादिना संप्रदानत्वाच्चतुर्थी।

---

१ यथारीतिकमुच्यते R. २ कारुण्ये M. ३ °नुचितं वर्णाडम्बरं विहितम् P. ४ °विसर्गकः M. ५ जातो यतो वासो ध्रुवो मरौ P. ६ दीनां M.

अत्र वेधसे क्रुध्यतां नृपाणामुक्तौ न समासः। किं तु कविवचने समास इत्यपदस्थसमासः।

अथ वाच्यवर्जितम्।

नोक्तं स्याद्यत्र वक्तव्यं तदाहुर्वाच्यवर्जितम्।

यथा।

दुर्दशां प्रतिपन्नानामस्माकं जीवितं मतम्॥

अत्र दुर्दशां प्रतिपन्नानामपीत्यपिशब्दो वक्तव्यो नोक्तः।

अथ समाप्तपुनरात्तकं पतत्प्रकर्षं च।

समाप्य पुनरादाने समाप्तपुनरात्तकम्।
पतत्प्रकर्षं तत्प्राहुः प्रकर्षो यत्र विश्लथः॥

द्वयोरुदाहरणम्।

धावन्मृगेषु संभ्राम्यत्करिषूद्यत्तरक्षुषु।
विन्ध्यारण्येषु तिष्ठामः क्षुभ्यद्भल्लुकपङ्क्तिषु॥ २३॥

अत्र विन्ध्यारण्येषु तिष्ठामः इति समाप्य क्षुभ्यद्भल्लुकपङ्क्तिष्विति पुनरादानात् समाप्तपुनरात्तकम्। तथा भ्राम्यत्करिषूद्यत्तरक्षुषु धावन्मृगेष्विति वक्तव्ये न तथोक्तमिति पतत्प्रकर्षता।

---

न समास इति। क्रोधव्यञ्जक इति शेषः। किं त्विति। कवेः समासव्यङ्ग्यस्य क्रोधस्याभावादिति भावः।

दुर्दशामिति। अत्र जीवितस्य हेयत्वं विवक्षितं तच्च दुर्दशां प्रतिपन्नानामपीत्यपिशब्दप्रयोग एव लभ्यते नान्यथा। अतस्तदभावाद्वाच्यवर्जिताख्योऽयं दोष इत्याह। अत्रेति।

समाप्येति। समाप्तस्य वाक्यस्य विशेषणद्वारा पुनरुपादाने समाप्तपुनरात्तम्। तदत्र योजयति। अत्रेति। पतत्प्रकर्षमपि योजयति। अथेति। तरक्षवो मृगादनाः। तदपेक्षया करिणां प्रकृष्टत्वात् पूर्वमुपादानम्। मृगाणां पुनरपकृष्टत्वात् पश्चादेवोचितं तथापि मृगाणामादावुपादाने प्रकर्षभ्रंशात् पतत्प्रकर्षमिति भावः।

---

१ ब्रह्मणे M. २ °शब्दे वक्तव्ये नोक्तः R.; °शब्दो नोक्तः P. ३ °रात्तकपतत्प्रकर्षे R.; °रात्तकम्। P., M. ४ °रुदाहरणं यथा P. ५ °भल्लूक° M. ६ पुनरादाने M.

अथ संबन्धवर्जितम् ।

संबन्धवर्जितं तत् स्याद्यत्रेष्टेनान्वयो हतः ।

यथा ।

भद्रासनानि दृषदः छत्राणि च महीरुहः ।
दुर्दशाराज्यमूर्धाभिषिक्ताः पुनरहो वयम् ॥ २४ ॥

अत्र राज्ये भद्रासनानि दृषद इत्यादिसंबन्धो नोक्तः ।

अथाधिकपदम् ।

यत्राधिकपदोक्तिः स्यात् तत्राधिकपदं मतम् ।

यथा ।

विमुक्ता वल्लभैरेता वनान्ते गुर्जरस्त्रियः ।
सुधांशुमण्डलाकाररूपक्रमविपाण्डुराः ॥ २५ ॥

अत्र सुधांशुमण्डलाकार इत्येतावता परिपूर्णे मण्डलाकारविपाण्डुरत्वे रूपक्रम इत्यधिकम् ।

अथ भग्नप्रक्रमम् ।

प्रक्रान्तनियमत्यागे भग्नप्रक्रममिष्यते ।

यथा ।

गुहागृहाणि शबरा बान्धवा विन्ध्यभूः पुरी ।
सरितो दीर्घिकाः कष्टमाक्रीडाः काननानि नः ॥ २६ ॥

---

संबन्धेति । संबन्धेनेष्टयोगेन वर्जितं संबन्धवर्जितम् । एतदेव केचिदभवन्मतयोगमाहुः । भद्रासनानीति । अत्र दुर्दशाराज्यशब्दः समासे गुणीभूत इति न तदर्थो भद्रासनादिभिः संबध्यत इत्याह । अत्र राज्य इति ।

विमुक्ता इति । अत्राधिकमंशं विविनक्ति । अत्रेति । 'व्याधैः सहोषितं विन्ध्ये हन्त वल्कलधारिभिः' इत्यत्रास्माभिरिति पदस्य न्यूनत्वान्न्यूनपदं नाम दोषो द्रष्टव्यः ।

बहुवचनप्रक्रमभङ्गमुदाहरति । गुहा इति ।

---

१ गूर्जर° T. २ विपाण्डराः M. ३ सुधांशुपाण्डुरा M.; सुधांशुपाण्डुरा R. ४ परिपूर्णमण्डला° M. ५ मण्डलाकाररूपक्रम R. ६ इत्यधिकः M. ७ भ प्रक्रम R. ८ भग्नक्रममिहेष्यते P. ९ काननीकृताः M.

अत्र बहुवचनतया प्रथमं प्रक्रम्य विन्ध्यभूः पुरीत्येकवचनं प्रक्रमभ्रष्टम्।

अथार्थदोषाः।

अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम्।
भिन्नं चैवातिमात्रं च परुषं विरसं तथा॥
हीनाधिकोपमे स्यातामसदृक्षोपमं तथा।
अप्रसिद्धोपमं हेतुशून्यं च निरलंकृति॥
अश्लीलं च विरुद्धं च तथा सहचरच्युतम्।
एवमष्टादश प्रोक्ता दोषा अर्थसमाश्रयाः॥

एषां स्वरूपमुदाहरणं च।

समुदायार्थशून्यं चापार्थं तत् परिकीर्त्यते।

यथा।

कुतः शुष्यदपो नद्यः का वार्त्ता चोलमण्डले।
फणाः सहस्रं शेषस्य भारः कति कुलाचलाः॥ २७॥

अत्र न कश्चिद्वाक्यार्थः प्रतीयते।

---

अथार्थदोषाणामुद्देशपूर्वकं लक्षणोदाहरणे दर्शयति। अथेत्यादिना।

समुदायार्थशून्यं वाक्यार्थशून्यम्। कुत इति। शुष्यदपाः शुष्यज्जलाः। 'ऋक्पूर्—' इत्यादिना समासान्तप्रत्ययः। अत्र दशदाडिमादिवाक्यवदर्थशून्यत्वादपार्थत्वम्।

---

१ बहुवचनान्तपरतया T'. २ प्रथमम् is dropped in R. and M. ३ प्रक्रमे P. ४ °वचनोक्तिः T'. ५ क्रमभ्रष्टम् R. ६ M. and M$_4$ have भिन्नं. ७ °समाश्रिताः T'. ८ यत्तदपार्थं प्रकीर्त्यते R.; यदपार्थं परिकीर्त्यते M.

यत् प्रयोजनशून्यं स्यात्तद् व्यर्थं परिकीर्त्यते ।

यथा ।

निर्मलं कुलमुद्दलं शौर्यं वः प्रथितं यशः ।
किमित्यन्ध्रपतेः पादपीठं पाण्ड्यैर्न सेव्यते ॥ २८ ॥

अत्र निर्मलं कुलमित्यादिप्रशंसा सेवा कर्त्तव्येत्युपदेशे नोपयुज्यते ।

अथैकार्थम् ।

उक्ताभिन्नार्थकं यत् स्यादेकार्थं तन्निगद्यते ।

यथा ।

विशीर्णं शतधा चेतो मूर्च्छितान् वीक्ष्य बालकान् ।
शिशून् निश्चेतनान् दृष्ट्वा खण्डितं शतशो मनः ॥ २९ ॥

अत्र पूर्वोत्तरार्धयोरभिन्नार्थत्वम् ।

अथ ससंशयम् ।

वाक्यार्थसंशयो यत्र तत् ससंशयमिष्यते ।

यथा ।

करिकुम्भौ स्तनावद्य जयेतां क्षामतां गतौ ।
लता वपुःश्रियः स्त्रीणां हसन्तु म्लानतां गताः ॥ ३० ॥

अत्र करिकुम्भयोः स्तनयोर्लतानां वपुःश्रियां च कर्तृकर्मत्वसंशयः ।

अथापक्रमम् ।

यत्र पूर्वापरीभावविहतिस्तदपक्रमम् ।

---

निर्मलमिति । अत्र राजसेवाविधावैश्वर्यादिलोभवत् कुलादिप्रशंसया निष्प्रयोजकत्वाद् व्यर्थमेतदित्याह । अत्रेति ।

उक्ताभिन्नार्थमिति । पुनरुक्तार्थमित्यर्थः ।

करिकुम्भाविति । अनर्घराघवे 'विजयेतां रामलक्ष्मणौ कुम्भकर्णमेघनादौ' इत्यत्र वैरिवाक्ये कर्तृकर्मसंदेहेऽपि न दोषः । नायकाभ्युदयसूचकतया तत्रैव कविसंरम्भविश्रान्तेः ।

---

१ स्याद् व्यर्थं तत् P. २ पाण्ड्यो न सेवते M. ३ °देकार्थं च निगद्यते M. ४ निश्चेतनान् T². ५ लवशो R., M. ६ संशयः R. ७ संशयवदिष्यते T²., M. ८ जायेताम् M. ९ हसन्ति M. १० लतानां तु श्रियाम् M. ११ °कर्मत्वे M. १२ °भावाभावहतात् स्यादपक्रमम् P.

यथा ।

हन्त व्यादाय वक्त्राणि निद्रान्त्यन्तर्वणं स्त्रियः ।

तृणैस्तत्पतितैरस्मान् शिक्षयन्त्यस्तथाक्रमम् ॥ ३१ ॥

अत्र निद्रोत्तरकालीनमुखव्यादानस्य पूर्वकालत्वमुक्तमित्यपक्रमत्वम् ।

अथ भिन्नम् ।

संबन्धवर्जितं यत् स्यात् तद्भिन्नं परिकीर्त्यते ।

यथा ।

नूनं भालेषु लाटानां न धात्रा लिखिता लिपिः ।

यदस्माकं कुटुम्बानि विषीदन्ति मरुस्थले ॥ ३२ ॥

अत्र मरुस्थलनिवासविषादस्य भालगतलिप्यभावस्य च न संबन्धः ।

अथातिमात्रम् ।

यत् सर्वलोकातीतं तदतिमात्रं प्रकीर्त्यते ।

---

हन्तेति विषादे । व्यादाय विवृत्य । वनेष्वन्तर्वणम् । विभक्त्यर्थेऽव्ययीभावः । 'प्रनिरन्तर्—' इत्यादिना णत्वम् । तत्पतितैर्वक्त्रपतितैः । शिक्षयन्त्यस्तथाक्रममिति । तृणं ग्रसित्वा भवन्तोऽपि जीवन्त्वित्यस्मानुपदिशन्त्य इवेत्यर्थः । अत्र निद्रावक्त्रव्यादानयोर्लोके प्रसिद्धं पौर्वापर्यं विहतमितीदमपक्रममित्याह । अत्रेति । पूर्वकालत्वमुक्तमिति । 'समानकर्तृकयोः पूर्वकाले' इति विहितेन क्त्वाप्रत्ययेनेति शेषः । ननु वक्त्रं व्यादाय स्वपितीत्यत्र व्यादानस्य पूर्वकालत्वाभावात् क्त्वाप्रत्ययानुपपत्तिरिति चोदयित्वानन्तरभाविस्वप्नापेक्षया पूर्वकालत्वसंभवान्नानुपपत्तिरिति परिहृतं महाभाष्ये । तथैव व्याख्यातं कैयटेन । यद्यपि स्वप्नक्षणानां व्यादानात् पूर्वकालता तथापि तद्व्यादानानन्तरभाविस्वप्नक्रियापेक्षं व्यादानस्य पूर्वकालत्वमस्तीति । अतः कथमत्र पौर्वापर्यविहतिरिति चेत् सत्यम् । व्यादानात् पूर्वकालीनस्वप्नक्रियापेक्षया पौर्वापर्यविघातादस्त्येवापक्रमदोषोऽत्रेति हृदयम् ।

भिन्नलक्षणं संबन्धवर्जनं दर्शयति । अत्र मरुस्थलेति । प्रतीयमानस्तु हेतुहेतुमद्भावो न वास्तव इति भावः ।

---

१ °कालभाविनो मुख° R., M. २ °त्यपक्रमम् R. ३ खिन्नम् M., M$_4$. ४ तद्भिन्नम् M., M$_4$. ५ विधात्रा लिखिता M. ६ निषीदन्ति M. ७ मरुस्थले वासविषादस्य P. ८ भालस्थलगत° P., T'. ९ °लिपिभावस्य M. १० प्रकीर्तितम् M. ११ बोधयित्वा° m.

यथा ।

मा भूदेकार्णवं विश्वमिति संकोचिताश्रुभिः ।
अरण्ये हूणनारीभिरसंख्या निम्नगाः कृताः ॥ ३३ ॥

अत्राश्रुभिर्जगदेकार्णवमित्यत्युक्तिः ।

अथ परुषम् ।

अतिक्रूरार्थसहितं पेरुषं परिकीर्त्यते ।

यथा ।

दावानलेन्धनं सद्यः क्रियन्तामर्भका इमे ।

अत्र फलानि याचमानान् शिशूनुद्दिश्यातिपरुषोक्तिः ।

अथ विरसम् ।

अप्रस्तुतरसं यत् तद्विरसं परिकीर्त्यते ।

यथा ।

चन्द्राननाः कटाक्षैर्नः पश्यतामृतवर्षिभिः ।
शोचित्वालमिति क्लिष्टाः किरातैश्चोलसुभ्रुवः ॥ ३४ ॥

अत्र पुरुषवियोगखिन्नानां स्त्रीणां वनचरैः संभोगप्रार्थनं विरसम् ।

अथ हीनोपमम् ।

हीनं यत्रोपमानं स्यात् तद्धि हीनोपमं मतम् ।

---

मा भूदिति । एकार्णवभियाश्रुसंकोचेऽपि असंख्या नद्यः प्रवृत्ता इत्यतिमात्रालौकिकार्थप्रतिपादनादत्युक्तिरेवायं दोषो नातिशयोक्तिरलंकार इति भावः ।

परुषमुदाहरति । दावानलेति । इमे फलानि याचमाना इत्यर्थः ।

चन्द्रानना इति । शोचित्वालं न शोचितव्यमित्यर्थः । 'अलंखल्वोः—' इत्यादिना क्त्वाप्रत्यय इत्युक्त्वा क्लिष्टा क्लेशिताः । क्लिश्नातेः 'उदितो वा' इति विकल्पात् 'यस्य विभाषा' इति निषेधः । 'क्लिशः क्त्वानिष्ठयोः' इति विकल्पादिडभावः । संभोगप्रार्थनं विरसमिति । अनौचित्यप्रवृत्तत्वादिति भावः । तदुक्तं ध्वन्याचार्यैः ।

'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।' इति ।

हीनमिति । जात्या प्रमाणेन वेति शेषः । एवमधिकमित्यत्रापि द्रष्टव्यम् ।

---

१ परुषः M. २ °वियोगखिन्नानाम्, ३ R. drops स्त्रीणाम्, ४ संग° P. ५ हीनोपमा M., R.

यथा ।

शुनकैरिव सारङ्गा भवद्भिर्निहता द्विषः[1] ।
क गतं पौरुषं तद्वः काननैकनिवासिनाम् ॥ ३५ ॥

अत्र शुनकैरिव भवद्भिरिति न्यूनोपमम् ।

अथाधिकोपमम्[2] ।

यत्रोपमानमधिकं तद् भवेदधिकोपमम् ।

यथा ।

अमी पारेसरस्तीरं बका निश्चलमूर्त्तयः ।
महर्षय इवास्माभिरद्य सोपद्रवाः कृताः ॥ ३६ ॥

अत्र बका महर्षय इवेत्यधिकोपमम् ।

अथातुल्योपमम् ।

यदतुल्योपमानं तद् भवेदसदृशोपमम्[3] ।

यथा[4] ।

एष विन्ध्याचलः[5] सान्द्रकुञ्जोच्चलितनिर्झरः ।
भालेक्षणस्फुरद्वह्निशिखाटोप इवेश्वरः ॥ ३७ ॥

अत्र कुञ्जोच्चलितनिर्झरस्य विन्ध्याचलस्य भालेक्षणस्फुरद्वह्नेरीश्वरस्य[6] च मिथो न सादृश्यम् ।

---

अत एव पूर्वोक्ताभ्यां न्यूनाधिकोपमाभ्यामनयोर्भेदः[7] । जातिहीनमुदाहरति । शकुनैरिति । प्रमाणहीनोदाहरणं तु स्फुलिङ्ग इव भानुमानित्यादौ द्रष्टव्यम् ।

जात्यधिकमुदाहरति । अमी इति । पारे सरस्तीरस्य पारेसरस्तीरम् । 'पारेमध्ये षष्ठ्या वा' इत्यव्ययीभावः । प्रमाणाधिकोदाहरणं तु पातालमिव नाभिस्त इत्यादौ द्रष्टव्यम् । अत्र सर्वत्र साधर्म्येण चमत्काराय विवक्षितार्थस्य शकुनादिभिः प्रतिपत्तिपरिक्षोभणेन कदर्थीकरणादनौचित्येन दोषत्वमिति भावः । अत एवोक्तं काव्यप्रकाशे । 'उपमानस्य जातिप्रमाणकृतं न्यूनत्वमधिकता वा तादृश्यनुचितार्थत्वं दोषः' इति ।

---

१ भवद्भिर्विहता T'. २ 'त्यधिकोपमा R., M. ३ 'सदृशोपमम् T'. ४ R. omits यथा. ५ विन्ध्यस्य R. ६ भालेक्षणोज्ज्वलद्वह्नेः R. ७ न्यूनाधिकाभ्यामनयोर्भेदः m.

अथाप्रसिद्धोपमम् ।

अप्रसिद्धोपमानं यदप्रसिद्धोपमं मतम् ।

यथा ।

बाष्पाम्बुस्विन्ननेत्राणि मुखान्यङ्ग मृगीदृशाम् ।
हिमदूषितपत्राणि कुमुदानीव निर्मुदाम् ॥ ३८ ॥

अत्र मुखानां कुमुदान्युपमानतया कविलोके न प्रसिद्धानि ।

अथ हेतुशून्यम् ।

हेतुशून्यार्थकथनं हेतुशून्यं प्रकीर्त्यते ।

यथा ।

मुधानुधावनं जातं मार्गेऽस्मिन् मौक्तिकाङ्किते ।
अन्वेष्टुमन्यतो यामि पदवीयं न सुभ्रुवः ॥ ३९ ॥

अत्र सुभ्रुवः पदवीयं न भवतीत्यत्र हेतुर्नोक्तः ।

---

यदिति । न ह्यत्र विन्ध्यविरूपाक्षयोस्तद्धर्मयोश्च वह्निनिर्झरयोः सादृश्यप्रसिद्धिरस्ति । न च धर्मिणोर्धर्मद्वारा सादृश्यं धर्मयोश्च धर्मिद्वारेति वाच्यम् । इतरेतराश्रयत्वप्रसङ्गात् । यथाह । 'बध्नामि काव्यशशिनं विततार्थरश्मिम्' इत्यत्र वामनः । 'तदेवमितरेतराश्रयदोषो दुरुत्तरः' इति । तदेतत् सर्वं मनसि निधायाह । अत्र कुत्र इति ।

हेतोर्विनेति । हेतुना विनेत्यर्थः । 'पृथग्विना—' इत्यादिना पञ्चमी । मौक्तिकाङ्कित इति । कण्ठीरवाकृष्टकरिकुम्भादिगलितमौक्तिकाङ्कित इत्यर्थः । मुधानुधावनमिति प्रियालंकारमौक्तिकाङ्कित इति भ्रान्त्येति भावः । पदवीयं न भवतीति । अत्रेति शेषः । हेतुर्नोक्त इति । 'अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात्' इत्याद्युक्तलक्षणपदपङ्क्त्यभावादिरूपो हेतुर्नोक्त इत्यर्थः ।

---

१ अप्रसिद्धोपमानं यथा R. २ स्मृतम् T'. ३ °क्लिन्न° T'. ४ M. omits कविलोके. ५ हेतोर्विनार्थकथनम् M.; हेतुं विनार्थकथनम् M₁. ६ प्रचक्षितम् T'; प्रचक्षते M. ७ मौक्तिकान्तिके P., R. ८ अत्र पदवीयं न सुभ्रुव इत्यत्र P. ९ पदवी न भवती° M.

अथ निरलंकारः।

अलंकारेण रहितं निरलंकारमुच्यते।

यथा।

आघ्राय सुरभैर्योनिमुन्मुखैर्दीर्घमेहनैः।
महोक्षैर्लम्बमानाण्डैर्विष्वक्व्याकुलितं वनम्॥ ४०॥

अत्र न कश्चिदलंकारः। श्लाघ्यविशेषणाभावात् न स्वभावोक्तिः।

यथाश्लीलम्।

अश्लीलार्थस्य कथनमश्लीलं परिकीर्त्यते।

अस्यापि पूर्वमेवोदाहरणम्।

अथ विरुद्धम्।

विरुद्धं देशकालादिविरुद्धं बहुधोच्यते।

यथा।

दिश्युत्तरस्यां नेदीयानुद्वेलो लवणार्णवः।
मरुदेशेऽपि गङ्गा नः पिपासां शमयिष्यति॥ ४१॥

अत्र दिश्युत्तरस्यां लवणार्णव इति दिग्विरोधः। मरौ गङ्गेति देशविरोधः।

---

आघ्रायेति। महोक्षैः पुङ्गवैः। 'अचतुर—' इत्यादिना निपातनात् साधुः। विच्छित्तिविशेषाभावादिति भावः। वर्ण्यमानवस्तुस्वभावस्तु ग्राम्यधर्मतया सहृदयश्लाघानधिरोहान्न स्वभावोक्तिबीजम्। तदुक्तं चक्रवर्तिना।
'स्वभावोक्तिर्बुधश्लेयवस्तुस्वाभाव्यवर्णनम्।' इति। तदेतदाह। श्लाघ्यविशेषणाभावान्न स्वभावोक्तिरिति।

अश्लीलार्थस्येति। अश्लीलार्थस्यामङ्गलजुगुप्साव्रीडबुद्धिजनकस्येत्यर्थः। तत्र व्रीडबुद्धिजनकस्य पूर्वमेवोदाहरणमित्याह। अस्यापीति। अत्र पर्यायैरप्यस्यार्थस्य सुवचत्वात् पदविनिमयासहिष्णोः पददोषादश्लीलादमुष्य भेदः। इतरभेदद्वयस्योदाहरणं स्वयमूहनीयम्।

विरुद्धमिति। देशकालादीत्यादिशब्देन विद्यास्वभावादयो गृह्यन्ते। नेदीयानन्तिकतमः। अन्यथोत्तरदेशेऽपि लक्षयोजनव्यवहिते लवणोदस्य संभवेन विरोधाभावादिति भावः। शमयिष्यतीति। चुरादिणिच्युपधावृद्धिः। शमयि-

---

१ निरलंकृतिः P., M. २ निरलंकारमिष्यते R.; निरलंकृतिरुच्यते P. ३ °वोदाहरणं प्रदर्शितम् T'. ४ लवणाम्बुधिः R. ५ शामयिष्यति T'. ६ उत्तरस्यां दिशि R., M.

अरण्यमहिषोदग्रविषाणोदरजन्मनाम् ।
महत्यर्घेऽपि मुक्तानां स्त्रियो गुञ्जाविभूषणाः[1] ॥ ४२ ॥

अत्र महिषविषाणेभ्यो मुक्तानां जन्मेति लोकविरोधः । एवं विरोधान्तरमप्युदाहार्यम् ।

अथ सहचरभ्रष्टम्[2] ।

मतं सहचरभ्रष्टमतुल्यानां निबन्धने[3] ।

यथा

शान्त्या श्रुतं ह्रिया नारी मन्मथेन रतोत्सवः ।
श्रुतेन धिषणा वन्यवृत्त्या जीवन्ति शात्रवाः ॥ ४३ ॥

---

ध्यतीति पाठे चन्द्रमते मितात् ह्रस्वः । मरुदेश इति देशविरोधः । अरण्येति । अर्घे मूल्ये महत्यपि मुक्तामयानि विभूषणानि यासां ता मुक्ताविभूषणाः । गुञ्जाविभूषणा इति पाठान्तरम् । अत्र

'करीन्द्रजीमूतवराहशङ्ख-
मत्स्याहिशुक्त्युद्भववेणुजानि ।
मुक्ताफलानि प्रथितानि लोके
तेषां तु शुक्त्युद्भवमेव भूरि ॥'

इति वचनाद् गजादीनामेव मुक्ताकरत्वं प्रसिद्धं नान्येषाम् । तस्मान्महिषविषाणानां मुक्ताकरत्वं लोकविरुद्धमित्याह । अत्रेति । विरुद्धान्तरं विद्याविरुद्धादिकम् । यथा ।

'सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥'

अत्र रात्रौ स्नानं धर्मशास्त्रविरुद्धम् । एवमन्यदप्युदाहार्यम् ।

शान्त्येति । श्रुतधिषणाभ्यां शान्तिश्रुतालङ्कृतत्वेन सर्वेषामत्यन्तोपादेयतया

---

1 मुक्ताविभूषणाः R., M. 2 °भ्रष्टः M. 3 °मतुल्यार्थनिबन्धने M.

अत्र श्रुतधिषणाभ्यां नारीरतोत्सवयोरपकृष्टत्वात् सहचरभ्रष्टम् । एव [1]दोषान्तराणि यथा संभवमू[2]ह्यानि । [3]रसभावादीनां स्वशब्दवाच्यता दुष्टैव ॥

[4]इति [5]श्रीविद्यानाथकृतौ प्रतापरुद्रयशोभूषणेऽलंकारशास्त्रे दोषप्रकरणं समाप्तम् ।

---

सर्वोत्कृष्टाभ्यामित्यर्थः । नारीरतोत्सवयोर्लज्जामन्मथसमवेतयोः [6]कतिपयोपादेयतयापकृष्टत्वादित्यर्थः । वन्यवृत्त्या जीवन्ति शात्रवा इत्येतत्तु सर्वापकृष्टत्वात् सर्वेभ्यः सहचरेभ्यो भ्रष्टमिति द्रष्टव्यम् । रसेति । भावाः संचारिभावाः । आदिग्रहणात् स्थायिभावा गृह्यन्ते तेषां स्वशब्दवाच्यता रसशृङ्गारादिसामान्यशब्दाभिधेयता दुष्टैवेति । रसप्रतीतेर्विभावादिप्रयोगान्वयव्यतिरेकानुविधानाद्रसादिशब्दप्रयोगेऽपि तदप्रतीतेश्च नित्यव्यङ्ग्यस्य रसादेर्वाच्यत्वं दुष्टमेवेति भावः । तदुक्तं काव्यप्रकाशे रसदोषप्रकरणे ।

'व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।'

इति ।

अत्रावाङ्मनसगोचरस्यापि ब्रह्मानन्दस्योपाधिवशाद् [7]यथातथादिपदवाच्यत्व न दोषः । एवं ब्रह्मानन्दसब्रह्मचारिणो रसस्यापि विभावाद्यनुसंधानानन्तरभाविनश्चर्व्यमाणस्य वाच्यत्वानुपपत्तावपि सहकारिवैकल्येऽपि परोक्षतया प्रतीयमानस्य रसस्य शृङ्गारादिशब्दवाच्यत्वे न कोऽपि दोष इति द्रष्टव्यम् ।

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलचलमल्लि-
नाथसूरिसूनुना विश्वजनीनविद्यस्य विद्वन्मणेः पेद्दयार्यस्या-
नुजेन कुमारस्वामिसोमपीथिना विरचिते प्रताप-
रुद्रीयव्याख्याने रत्नापणाख्याने दोषनिरूपणं
नाम पञ्चमं प्रकरणम् ॥

---

१ दोषान्तरम् $M_4$. २ °मुदाहार्याणि M.; °मुदाहार्यम् $M_4$. ३ रसभावानाम् $M_4$ ४ R. has इति दोषप्रकरणम् and M. दोषप्रकरणं समाप्तम् before this. ५ T' drops श्री. ६ कतिपयोपादानतया° m. ७ यदातदादिपद° m.

## अथ गुणा निरूप्यन्ते ।

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वं तथा कान्तिरुदात्तता ॥
ओजः सुशब्दता प्रेयानौर्जित्यमथ विस्तरः ।
समाधिः सौक्ष्म्यगाम्भीर्ये[1] संक्षेपो भाविकं तथा ॥
संमितत्वं तथा प्रौढी रीतिरुक्तिर्गतिस्तथा[2] ॥[3]

एषां[4] मध्ये केषांचिद् दोषपरिहारकत्वेन[5] गुणत्वम् । केषांचित् स्वत एवोत्कर्षहेतुत्वाद् गुणत्वम् । तत्र ये स्वत एव चारुत्वातिशयहेतवस्ते[6] परमुत्कृष्टाः । दुष्टत्वपरिहारहेतूनां[7] गुणत्वं न सर्वसंमतम्[8] । ये तु दोषाभावतया[9] गुणत्वमिच्छन्ति तेषामेव सौकुमार्यादयो गुणत्वेन संमताः ।

श्रुतिकटुरूप[10]पददोषनिराकरणाय सौकुमार्यं संमतम्[11] । ग्राम्यदोषनिराकरणाय कान्तिः स्वीकृता । अपुष्टार्थनिराकरणायार्थ[12]व्यक्तिर्मता[13] । न्यूनाधिकपदनिराकरणाय[14] संमितत्वं मतम् । अनुचितार्थ[15]निराकरणार्थ[16]मुदात्तता स्वीकृता । विसंधि[17]निराकरणार्थ[18]मौर्जित्यं मतम् । पतत्प्रकर्षनिराकरणाय रीतिरिष्टा । क्लिष्टपरिहाराय प्रसादो मतः । अश्लीलपरि-

---

इत्थं यथासंभवं दोषान् निरूप्य तत्प्रतिभटभूतगुणनिरूपणं प्रतिजानीते । अथेति । तत्र गुणास्त्रय इति भामहादयः । दशेति वामनादयः । चतुर्विंशतिरिति भोज[19]राजः । तत्र भोज[20]राजमतेनोद्देशमाह । श्लेष इत्यादि ।

एषां मध्ये केषांचिद्दोषपरिहारकत्वेन गुणत्वमिति । तथापि केषांचिन्मते उत्कर्षहेतुत्वात् काव्योत्कर्षहेतुत्वादिति भावः ।

को दोषः केन गुणेन परिह्रियते इत्याकाङ्क्षायामाह । श्रुतिकटुरूपेत्यादिना ।

---

१ °गाम्भीर्यम् R. २ °स्तथा गतिः ॥ $M_1$. ३ After this line M. has चतुर्विंशतिरिते स्युर्गुणाः काव्यप्रकाशकाः ॥ ४ एतेषाम् R., M. ५ °परिहारद्वारेण M. ६ अतिशयचारुत्वं° $M_2$.; चारुत्वादिहेतव° R. ७ दुष्टपरिहार° T'. ८ सर्वैः संमतम् R., M. ९ दोषाभावतयापि R.; दोषाभावस्यापि M. १० P. and R. drop रूप. ११ मतम् M. १२ निर्वहणायार्थम° $M_1$. १३ °व्यक्तिः संमता M. १४ °निरासाय $M_1$. १५ अनौचित्यहत्यै $M_1$. १६ °निराकरणायो° R. १७ च्युतसंस्कारपरिहारार्थं सौशब्द्यमिष्टम् is found before this in P. १८ °निराकरणायौ° R., M.; °लोपायौ° M.; °निरासायौ° P. १९ भोजः m. २० भोजमतेना° m.

हारार्थमुक्तिः स्वीकृता । च्युतसंस्कृतिपरिहारार्थं सौशब्द्यमिष्टम् । प्रक्रमभङ्गनिराकरणाय समता मता । परुषदोषनिवृत्त्यर्थं प्रेयान् मतः । एवं यथासंभवं केषांचिद्दोषपरिहारकत्वेन गुणत्वम् ।

एषां गुणानां स्वरूपमुदाहरणं च ।

मिथः संश्लिष्टपदता श्लेष इत्यभिधीयते ।

बहूनां पदानामेकपदवदवभासमानत्वं श्लिष्टत्वम् ।

यथा ।

श्रीमत्काकतिवीररुद्रमखिलक्ष्मापालमौलिस्फुरन्-
माणिक्यद्युतिरञ्जिताङ्घ्रिमखिलप्रख्यातशौर्योदयम् ।
विश्वत्राणविनिद्रमक्षयगुणज्योत्स्नावितानावृत-
व्योमागारमनल्पवैभवममुं स्तोतुं वयं नेश्महे ॥ १ ॥

अत्र पाठसमये पदानामेकवत् प्रतिभासमानत्वात् श्लेषः ।

अथ प्रसादः ।

प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते ।

यथा ।

प्रतापरुद्रदेवोऽयं भाति लक्ष्मीपतिः स्वयम् ।
येनास्य लोचने फुल्लपुण्डरीकमनोहरे ॥ २ ॥

अत्र झटित्यर्थसमर्पकपदत्वात् प्रसादः ।

---

एषां गुणानामिति । संघटनाश्रयत्वे सति चारुताहेतवो गुणा इति वक्ष्यमाणसामान्यलक्षणानामिति भावः । मिथ इति । संश्लिष्टानि मसृणानि पदानि यस्य तस्य भावस्तत्ता । निष्कर्षमाह । बहूनामिति । तदुक्तं वामनेन ।

'यत्रैकपदवद् भान्ति पदानि सुबहून्यपि ।
अनालक्षितसन्धीनि स श्लेषः परमो गुणः ॥' इति ।

उदाहरति । श्रीमदिति । अक्षयगुणज्योत्स्नेति । लौकिकचन्द्रिकाव्यतिरेकः । वितानमुल्लोचः ।

प्रसादमुदाहरति । प्रतापेति । झटित्यर्थसमर्पकपदत्वादिति । व्यवहितार्थप्रत्यायकक्लिष्टत्वविपर्ययोक्तिः ।

---

१ °संस्कार° P. २ °निवृत्त्यर्थं° R., M. ३ परुषनिराकरणार्थं R.; परुषदोषनिराकरणाय M. ४ प्रेयो मतः M. ५ °परिहारत्वेन R., M. ६ सुश्लिष्टपदता M. ७ °पदत्वेन भासमानत्वम् P.; °पदत्वेनावभासमानत्वम् R. ८ संश्लिष्टत्वम् P. ९ °मन्वयगुण° M. १०शोक्तुम् M. ११ °मेकवदवभासमानत्वात् T.; °मेकवत् प्रतिभासमानाभ्या M. १२ °मनोऽभे R. १३ °समर्पकात् P.; °समर्पणपदत्वात् M. १४ °क्लिष्ट° m.

अथ समता ।

अवैषम्येण भणनं समता सा निगद्यते ।

यथा ।

> वदान्यतरुमञ्जरीसुरभयः श्रवःपारणं
> गुणा विदधते सतां जगति वीररुद्रप्रभोः ।
> सुधामधुरिमाधरीकरणचातुरीचुंञ्चवो
> वियच्चरतरङ्गिणीविहरदूर्मिमर्मस्पृशः ॥ ३ ॥

अत्र पादचतुष्टयेऽपि तुल्यभणनात् समत्वम् ।

अथ माधुर्यम् ।

या पृथक्पदता वाक्ये तन्माधुर्यं प्रकीर्त्यते ।

यथा ।

> यशःश्रियः काकतिभूपतेर्दिशां
> नितम्बबिम्बेषु दुकूलरीतयः ।
> उरोजयोर्मौक्तिकहारविभ्रमाः
> शिरस्सु जातीकुसुमस्रगुज्ज्वलाः ॥ ४ ॥

अत्र वाक्ये पाठसमयेऽपि पृथक्पदत्वप्रतीतेर्माधुर्यम् ।

अथ सुकुमारत्वम् ।

सुकुमाराक्षरप्रायं सौकुमार्यं प्रतीयते ।

सुकुमारत्वं नाम सानुस्वारकोमलवर्णत्वम् ।

---

वदान्यतरवः कल्पवृक्षाः । तन्मञ्जर्य इव सुरभयो मनोहराः । श्रवःपारणं श्रोत्रसन्तर्पणम् । सुधामधुरिमाधरीकरणचातुरीचुञ्चवः अमृतमाधुर्यन्यक्करणचातुर्यवित्ताः । वियच्चरतरङ्गिणीविहरदूर्मिमर्मस्पृशः मन्दाकिनीकल्लोलकल्पा इत्यर्थः । पादचतुष्टयेऽपि तुल्यवर्णनादिति । अनेन प्रक्रमभङ्गः परिहृतः ।

यशःश्रिय इति । दिशामित्यनेन स्त्रीप्रतीतेस्तासामधोमध्योर्ध्वदेशेषु नितम्बस्तनशिरोऽध्यवसायो युज्यते । उरोजयोरिति । 'स्तनादीनां द्वित्वविशिष्टता जातिःप्रायेण' इति वामनवचनात् द्विवचनोपपत्तिः । अत्र माधुर्ये पृथक्पदत्वं दीर्घसमासाभाव इति वामनः ।

सुकुमारेति । सौकुमार्यमपरुषत्वमित्यर्थः ।

---

१ °चञ्चवो R. २ तुल्यवर्णनात् M. ३ सुकुमारता T. ४ सौकुमार्यं तदुच्यते R.; सौकुमार्यमुदीर्यते M. ५ °वर्णकत्वम् P., R. ६ कल्पद्रुमाः m. ७ °चञ्चवः p.

यथा ।

अमन्दानन्दनिष्यन्दसुन्दरीवदनेन्दुभिः[1] ।
नगरे काकतीन्द्रस्य दिवाप्याभाति चन्द्रिका ॥ ५ ॥

अथार्थव्यक्तिः ।

यत्तु[2] संपूर्णवाक्यत्वमर्थव्यक्तिं वदन्ति ताम् ।

यथा ।

भाग्यं[5] मध्यमलोकनिघ्नमधुना येनास्य संरक्षिता
जातः खेलति वीररुद्रनृपतिर्निःसीमशौर्योदयः ।
यद्वा त्रीण्यपि विष्टपानि दधते धन्यत्वमंशो हरे-
र्यत् साक्षादवतीर्य काकतिकुले स्वैरं समुज्जृम्भते ॥ ६ ॥

अत्रा[3]र्थप्रतिपादने वाक्यस्य निराकाङ्क्षतया परिपूर्णत्वादर्थव्यक्तिः ।

अथ[4] कान्तिः ।

अत्युज्ज्वलत्वं बन्धस्य काव्ये कान्तिरितीष्यते ।

---

अर्थव्यक्तिरिति । तद्धेतौ तत्त्वोपचारः । तदुक्तम् । 'यत्रार्थव्यक्तिहेतुत्वं सोऽर्थव्यक्तिः स्मृतो गुणः ।' इति । भाग्यमिति । मध्यमलोकनिघ्नं मध्यलोकाधीनम् । यद्वा त्रिविक्रमावतारस्य काकतिविभोः किमनेन संकोचेनेत्याह । यद्वेति । निराकाङ्क्षतया परिपूर्णत्वादित्यनेन क्रियापदराहित्यात् साकाङ्क्षत्वेनापरिपूर्णानामशरीरादीनां दोषाणां प्रत्युदाहरणत्वं दर्शितम् । न चापुष्टार्थनिराकरणायार्थव्यक्तिरिति पूर्वोक्तविरोधः परिपोषाभावलक्षणयोगेन तेषामप्यपुष्टार्थत्वात् प्रकृतानुपयुक्तार्थत्वलक्षणापुष्टार्थस्य तु निराकाङ्क्षत्वेन परिपूर्णस्य प्रकृतवैपरीत्याभावान्नास्ति प्रत्युदाहरणत्वमिति द्रष्टव्यम् ।

अत्युज्ज्वलत्वमिति । यदभावे चिरन्तनचित्रच्छायेव प्रबन्धच्छाया भवति तदौज्ज्वल्यं सैव कान्तिरित्यर्थः । तदुक्तम् ।

'औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविपश्चितः ।
पुराणचित्रस्थानीयं तेन बन्ध्यं कवेर्वचः ॥' इति ।

---

१ °वदनांशुभिः R. २ यत्र T. ३ M. drops अत्र. ४ R. has the treatment of औदार्य before that of कान्ति. ५ मान्यः m.

यथा ।

जेतुः काकतिवीररुद्रनृपतेर्जैत्रप्रयाणोत्थिते
क्षोणीरेणुभरे नभस्यतिभृशं भूविभ्रमं बिभ्रति ।
जाता मर्त्यनदी विशंकटतटी दीर्घा वियद्दीर्घिका
गाढं गूढतमा च गौतमनदी पातालगङ्गायते ॥ ७ ॥

अथौदार्यम् ।

विकटाक्षरबन्धत्वमार्यैरौदार्यमिष्यते ।

यथा ।

जग्ध्वा भूयांसि मांसान्यहमहमिकया बद्धगार्ध्यान् संपीत्या-
मस्रस्योच्चैस्तरास्थ्युत्कषणभवकटत्काररौद्राग्रदंष्ट्रान् ।
संविभ्राणाः क्षपाटान् द्विपगलितवसानिर्झरान्तर्नदीष्णान्
कुर्वन्त्यायोधनोर्व्यो भयमवनिभृतामन्ध्रसैन्येन सृष्टाः ॥ ८ ॥

---

जेतुरिति काव्यप्रकरणे व्याख्यातम् ।

औदार्यं नाम विकटाक्षरबन्धत्वं तच्च नर्तनबुद्ध्युत्पादकपदविन्यासः । तदुक्तम् ।

'विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम् ।
वैचित्र्यं न प्रपद्यन्ते यया शून्याः पदक्रमाः ॥
पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः ॥' इति ।

जग्ध्वेति । अन्योन्यं प्रति श्रेष्ठोऽहमित्यभिमानोऽहमहमिका । अहमिति विभक्तिप्रतिरूपकमव्ययं निपातितम् । तस्य वीप्सायां द्विरुक्तिः । संज्ञायां कन् प्रत्ययः । पृषोदरादिरिति सुभूतिचन्द्रः । गर्ध एव गार्ध्यम् । चातुर्वर्ण्यादित्वादौपम्यादिवत् स्वार्थे ष्यञ्प्रत्ययः । तद्बद्धं यैस्तान् बद्धगार्ध्यान् । समाना पीतिः सपीतिः । 'सहपानं सपीतिः स्त्री तुल्यपानम्' इत्यमरः । 'समानस्य च्छन्दसि—' इत्यादिना समानशब्दस्य सभावः । छान्दसत्वेऽपि बाणादिप्रयोगमहिम्ना लोकेऽपि न विरोध इत्याह देशटीकासर्वस्वकारः । 'समानस्य च्छन्दसि—' इत्यत्र समानस्येति योगविभागसामर्थ्यात् भाषायामपि सपक्षादिप्रयोगसिद्धि-

---

१ दाद्यः $M_3$. २ नमस्यृषि भृश° R. ३ °तटा P. ४ °मौदार्यं चेष्यते बुधैः R., $M_3$ ५ समित्या P. ६ पलादान् P.; फलादान् M. ७ °कलित° R. ८ °सैन्येशसृष्टाः T. ९ वस्तुतः m. १० दशमिका° m.

अथौदात्तता ।

श्लाघ्यैर्विशेषणैर्योगो यस्तु सा स्यादुदात्तता ।

यथा ।

बृंहमाणगजाकीर्णा ह्रेषमाणहयाकुला ।
संक्रीडत्स्यन्दनो क्ष्वेडमदा रुद्रविभोश्चमूः ॥ ९ ॥

अथौजः ।

ओजः समासभूयस्त्वम् ।

यथा ।

उद्दामद्विरदौघदानलहरीसौरभ्यलोभभ्रमद्-
भृङ्गश्रेणिनिबद्धझंकृतिकलावाचालितप्राङ्गणाः ।
निःसीमप्रथमानभूमविभवारम्भप्रियंभावुका
मोदन्ते भुवि वीररुद्रनृपतेर्विद्वद्गृहश्रेणयः ॥ १० ॥

---

रित्याह वृत्तिकारः । पदमञ्जरीकारस्तु 'योगविभागाङ्गीकारे तस्य नित्यत्वात् समानजातीयशब्दप्रयोगो न स्यात् । अस्ति च प्रयोगः । तस्मात् सपक्षादिशब्देषु सदृशार्थस्य सहशब्दस्य पक्षादिभिरस्वपदविग्रहे बहुव्रीहौ सहशब्दस्य 'वोपसर्जनस्य' इति सभावः । भाष्यवार्त्तिकयोश्च योगविभागो नोपन्यस्तः' इत्यवोचत् । यदत्र युक्तं तद् ग्राह्यम् । अस्थ्युत्कषणमस्थिसंघर्षः । कटत्कारोऽनुकरणशब्दः । क्षपास्वटन्तीति क्षपाटाः नक्तंचराः भूतवेतालादयः । नद्यां स्नान्तीति नदीष्णाः कुशलाः । 'सुपि—' इति योगविभागात् कप्रत्ययः । 'निनदीभ्यां स्नातेः कौशले' इति षत्वम् ।

श्लाघ्यैरिति । श्लाघ्यैरुचितैः बृंहणादीनां गजानामेवोचितत्वादिति भावः । वैपरीत्येऽनौचित्यमनेन परिहृतमित्यनुसंधेयम् । बृंहमाणेति चानशान्तोऽयं न शानजन्तः । बृंहेः परस्मैपदित्वात् । क्ष्वेडमदेति पचाद्यजन्तपाठो न क्ष्वेडद्धटेति शत्रन्तपाठः । तस्यात्मनेपदित्वादित्यादिप्रपञ्चेन व्याख्यातं नाटकप्रकरणे द्वितीयेऽङ्के । अनुचितार्थपरिहारकोऽयं गुणः ।

उद्दामेति । वाचालानि कृतानि वाचालितानि शब्दायमानानीत्यर्थः । भूमविभवो महिमातिशयः । प्रिया भवन्तीति प्रियंभावुकाः । 'कर्त्तरि भुवः खिष्णुच्खुकञौ' इति खुकञ्प्रत्ययः । अत्र वीररुद्रविदुषां गजान्तलक्ष्मीर्माहात्म्यं च प्रतिपाद्यते ।

---

१ °क्ष्वेडद्रटा M. २ °झांकृति° R. ३ °वृत्तिकारपोश्च m. ४ प्रियमावुकाः p.

अथ सुशब्दता ।

सुपां तिङां च व्युत्पत्तिः सौशब्द्यं परिकीर्त्यते ।

यथा ।

आशामण्डलकूलमुद्वहकथैरभ्रंकषैर्वैभवै
रक्षन् सुप्रजसः प्रजास्त्रिभुवनक्षेमङ्करप्रक्रियः ।
दुष्टानां भुवि निग्रहन्तुमतुलैराढ्यंभविष्णुर्गुणै-
र्भूम्ना संचरतेऽद्य काकतिकुले रुद्रावतारो हरिः ॥ ११ ॥

अथ प्रेयः ।

प्रेयः प्रियतराख्यानं चाटूक्त्या यद्विधीयते ।

यथा ।

---

सुपां तिङां चेति । सुबन्ततिङन्तविशेषाणामित्यर्थः । कूलमुद्वहन्तीति कूलमुद्वहाः कथा येषैर्दिगन्तप्रसिद्धैरित्यर्थः । 'उदि कूले रुजिवहोः' इति खश्प्रत्ययः । अभ्रं कषन्तीत्यभ्रंकषाः । तैरुत्कृष्टैरित्यर्थः । 'सर्वकूलाभ्रकरीषेषु कषः' इति खश्प्रत्ययः । वैभवैरैश्वर्यैः । शोभना प्रभा यासां ताः सुप्रजसः । 'नित्यमसिच्प्रजामेधयोः' इत्यसिच्प्रत्ययः । प्रजा रक्षन्निति शतृप्रत्ययः । रक्षणेन हेतुनेत्यर्थः । अत एव त्रिभुवनक्षेमंकरप्रक्रियो विश्वजनीनव्यापार इत्यर्थः । 'क्षेमप्रियमद्रे ण्च्' इति खश्प्रत्ययः । गुणैः शौर्यादिभिः । आढ्यो भवतीत्याढ्यंभविष्णुः । 'कर्त्तरि भुवः' इति खिष्णुच्प्रत्ययः । दुष्टानां निग्रहन्तुम् । 'जासिनिप्रहण—' इत्यादिना कर्मणि षष्ठी । भूम्ना महिम्ना संचरते । 'समस्तृतीयायुक्तात्' इत्यात्मनेपदम् । इत्थमत्र सौशब्द्यं नाम गुणः । तस्य च्युतसंस्कारपरिहारार्थत्ववचनमयुक्तम् । अनभिहितगुणभावेनापशब्दाभावमात्रेण तत्परिहारसंभवात् । अत्र तु सकलसचेतश्चेतश्चमत्कारकारिविशिष्टपदप्रयोगेण चारुताहेतुत्वसंभवादस्यैव स्वतन्त्रं गुणत्वमिति ।

प्रेय इति । चाटूक्तौ प्रियोक्तौ । दाक्षिण्यं सरलत्वम् । दक्षता क्षिप्रकारिता । धौरेयता धुरन्धरत्वम् । 'धुरो यड्ढकौ' इति ढक्प्रत्ययः । निष्ठुरोक्तिलक्षणपरुषप्रातिपक्ष्यं प्रेयस इत्युक्तम् ।

---

१ °मिद्वमुद्धत° P.; °कूलमुद्रज° M. २ निग्रहीतुममतै° P. ३ चाटूक्तौ P., R., M.

दाक्षिण्यं त्वयि दक्षता त्वयि दया त्वय्युन्नतत्वं त्वयि
प्रागल्भ्यं त्वयि पौरुषं त्वयि कला संपत्त्वयि श्रीस्त्वयि ।
औदार्यं त्वयि धीरता[1] त्वयि जगद्धौरेयता च त्वयि
श्रीमत्काकतिनाथ पालय भुवं[2] वैरिञ्चकल्पान् शतम् ॥ १२ ॥

अथौर्जित्यम् ।

[3]और्जित्यं गाढबन्धत्वम् ।

यथा ।

[4]क्षोणीरक्षणदक्षिणाः क्षतजगत्क्षोभा [5]दुरीक्ष्यक्रमाः
क्षुद्रक्षत्रियपक्षशिक्षणविधौ प्रोल्लिखितकौक्षेयकाः ।
उद्दामोद्यमनस्य रुद्रनृपतेर्दोर्दण्डयोश्चण्डयो-
र्गर्जद्दुर्जनगर्वपर्वतभिदा दम्भोलयः केलयः ॥ १३ ॥

[6]अथ समाधिः ।

समाधिरन्य[7]धर्माणां यदन्यत्राधिरो[8]हणम् ।

यथा ।

पृच्छन्ती दुग्धसिन्धुं कुशलमनुसरन्त्यादरा[9]च्छंकराद्रिं
चाटूक्त्या मानयन्ती मुहुरमरनदीं चन्द्रमग्रे हसन्ती ।
वैधात्रीं यानहंसावलिमनुकृपया स्वागतं व्याहरन्ती
लोकेषु त्रिष्वमीषु प्रभवति महती वीररुद्रस्य कीर्तिः ॥ १४ ॥

---

और्जित्यमिति । गाढबन्धत्वमिति विसन्धिवैलक्षण्येनेति भावः । क्षोणीरक्षणेत्यादि श्लोको व्याख्यातः काव्यप्रकरणे शब्दचित्रे ।

पृच्छन्तीति । अत्र कुशलप्रश्नादेश्चेतनधर्मस्याचेतनायां कीर्तावधिरोपणात् समाधिः ।

---

१ वीरता P. २ भुवम् R. ३ गाढबन्धत्वमौर्जित्यम् M. ४ गर्जद्दुर्जनगर्वपर्वतभिदस्त्वद्बाहुविस्फूर्जथः इत्यादि M. ५ दुरीक्ष° R.; °दुरीक्ष T.; °दुरीक्ष्य° T'. ६ In M. and R. समाधि is treated after विस्तर. ७ °धर्मस्य T'. ८ °रोपणम् T'. ९ °च्छ्रंकराद्रिं R.

अथ विस्तरः ।

समर्थनमपञ्चोक्तिरुक्तस्यार्थस्य विस्तरः ।

यथा ।

लोकेषु त्रिषु काकतीश्वरगुणान् स्तोतुं मुहुर्वीक्षितुं
श्रोतुं बह्वभिनन्दितुं च फणिनामेकः क्षमो नायकः ।
यद्वक्त्राणि सहस्रमस्य कृतिनो यद्[1] द्वे सहस्रे दृशा-
स्ता एव श्रुतयः फणा दशशतान्यत्यद्भुतान्दोलने[2] ॥ १५ ॥

[3]अथ संमितत्वम् ।

यावदर्थपदत्वं तु संमितत्वमुदाहृतम् ।

यथा ।

काकतीयनरेन्द्रस्य यशश्चन्दन[4]चर्चनम्[5] ।
दिगङ्गना वितन्वन्ति वतंसीकृततद्गुणाः ॥ १६ ॥

---

समर्थनेति । विस्तर इति समर्थनप्रपञ्चनस्य शब्दात्मकत्वेन 'प्रथने वाव-शब्दे' इति घञः प्रतिषेधे 'ऋदोरप्' इत्यप् प्रत्ययः । 'स तु शब्दस्य विस्तरः' इत्यमरः । लोकेष्विति । अभिनन्दितुमनुमोदितुम् । स्तोत्रादिषु फणि-पतिसामर्थ्यं समर्थ्यते । यदिति । यस्मात् कारणादित्यर्थः । अत एवेदं न काव्य-लिङ्गम् । हेतुवाचकविभक्त्यादेरश्रवण एव तस्योत्थानादिति ।

यावदिति । यावन्तोऽर्था यावदर्थमिति तद्धितान्तेन विग्रहः । तदुक्तं हरदत्तेन ।

'यावदित्यव्ययं चास्ति तद्धितान्तश्च विद्यते ।
अतो नित्यसमासेऽपि तद्धितान्तेन विग्रहः ॥' इति ।

'यावदवधारणे' इत्यव्ययीभावः । यावदर्थं पदानि यस्य तस्य भावस्तत्त्वम् । अभिधेयापेक्षया यत्रैकमपि पदं न न्यूनं नाप्यधिकं तत्संमितमित्यर्थः । काक-तीयेति । गतमेतत् ।

---

१ ये द्वे P.　२ °शताम्यत्तत्कृतान्दोलने M.　३ In R., $M_{c}$ and T'. the order of the Guṇas after विस्तर is—सौक्ष्म्य, गाम्भीर्य, संक्षेप, भाविक, संमितत्व, प्रौढि, रीति, उक्ति and गति.　४ कीर्तिचन्दन° M.　५ °चर्चितम् M.; °चर्चिकाम् $M_{c}$

अथ गाम्भीर्यम् ।

ध्वनिमत्ता तु गाम्भीर्यम् ।

यथा ।

विषं कौक्षेयके गङ्गा कीर्त्तौ दिग्वसनं रिपौ ।
इन्दुर्मुखे च रुद्रस्य काकतीयस्य दृश्यते ॥ १७ ॥

अत्र शंकरस्य कण्ठे विषं मौलौ गङ्गा कटिस्थले दिग्वस्त्रं शिरसि चन्द्र इति ध्वन्यते ।

अथ संक्षेपः ।

संक्षिप्तार्थाभिधानं यत् संक्षेपः परिकीर्त्त्यते ।

यथा ।

वंशोऽस्ति काकतीयानां तत्रासन् बहवो नृपाः ।
तेषां भाग्यविवर्त्तोऽयं वीररुद्रो नरेश्वरः ॥ १८ ॥

अत्रातिविस्तरकथनयोग्यार्थस्य संक्षेपोक्तेः संक्षेपः ।

अथ सौक्ष्म्यम् ।

अन्तः संजल्परूपत्वं शब्दानां सौक्ष्म्यमुच्यते ।

यथा ।

अध्यधःपरिसंश्लिष्टाः ष्ठाकृञ्भूधातवः सदा ।
वर्त्तन्ते काकतीयेन्द्रे कर्त्तर्यन्यत्र कर्मणि ॥ १९ ॥

---

ध्वनिमत्त्वमुदाहरणे योजयति । अत्र शङ्करस्येति । वंश इति । भाग्यविवर्त्तो भाग्यपरिपाकः ।

अन्तरिति । समीचीनो जल्पः संजल्पः विवक्षितार्थः सोऽन्तःकृतो गर्भितो यत्र तद्रूपत्वमन्तःसञ्जल्परूपत्वं सौक्ष्म्यमित्यर्थः । अध्यधःपरिशब्दैः संश्लिष्टाः संबद्धाः प्राक्प्रयुक्ताध्यादिशब्दा इत्यर्थः । ष्ठा गतिनिवृत्तौ । डुकृञ् करणे । भू सत्तायामित्येते धातवो 'भूवादयो धातवः' इत्युक्तलक्षणाः शब्दविशेषाः ष्ठाकृञ्भूधातवः काकतीयेन्द्रे सदा कर्त्तरि वर्त्तन्ते । कर्तृवाचिन एव तिबादिप्रत्ययान् दृधतीत्यर्थः । अन्यत्र कर्मणि कर्मवाचिनो यगादिप्रत्ययान् दृधतीत्यर्थः । एतच्च

---

१ कटौ P. २ राज्ञां विवर्त्तोऽयम् $M_3$, $M_4$ ३ वीररुद्रनरेश्वरः R., $M_3$., $M_4$. ४ संक्षेपेणोक्तिः $M_3$., $M_4$. ५ सौक्ष्म्यम° P. ६ °श्लिष्टा धा° P. ७ कृ for कृञ् P.; कृञि $M_4$

अत्राधितिष्ठत्यधःकरोति परिभवतीत्यन्तःसंजल्परूपत्वात् सौक्ष्म्यं भवति।

अथ प्रौढिः।

प्रौढिरुक्तेः परीपाकः।

यथा।

> वीप्सा पद्मभवस्य चन्द्रमुकुटस्यावृत्तिराम्रेडितं
> दैत्यारेः प्रतिबिम्बनं सुरगिरेरिन्दोः संमुत्तेजना।
> कर्णादेः पुनरुद्भवः सुरतरोः सर्वस्वमाविष्क्रिया
> स्वर्धेनोरिति तर्कयन्ति कवयः श्रीवीररुद्रप्रभुम्॥ २०॥

अथोक्तिः।

विदग्धभणितिर्या स्यादुक्तिं तां कवयो विदुः।

यथा।

> [1]दिट्ठा कमलासत्ती रण्णो तुह सुहेअचित्तचरिअस्स।
> भासन्तो वि तुमं तं कुवलअलच्छि पसाहेसि॥ २१॥

---

न केवला प्रकृतिः प्रयोक्तव्येति नियमेन केवलधातोः प्रयोगाभावात् 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति प्रत्ययानामेव कर्तृकर्माभिमर्शनदर्शनाच्चेति द्रष्टव्यम्। फलितमाह। अत्राधितिष्ठतीत्यादि।

प्रौढिरिति। परीपाको वैचित्रीविशेषः। वीप्सेति। वीप्सा द्विर्भावः। निमित्तनैमित्तकयोरभेदोपचारात्। आम्रेडितं द्विस्त्रिरुक्तम्। प्रतिबिम्बनं प्रतिबिम्बः। संमुत्तेजना शाणोल्लीढत्वम्। सर्वत्र द्वितीयब्रह्मादिरूपत्वमित्यर्थः। अत्र वीररुद्रे विरिञ्चिवीप्साद्यारोपलक्षणवैचित्रीवशात् प्रौढिः।

दिट्ठेति। कमलासक्तिरेकत्र कमलायामन्यत्र कमलेष्वासक्तिः। कुवलयलक्ष्मीं भूमण्डललक्ष्मीमन्यत्रोत्पलसंपदम्। राज्ञश्चन्द्रस्यापि कमलासक्तिः भास्वतः सूर्यस्यापि कुवलयप्रसाधनमित्येवंरूपायां विदग्धभणितावश्लीलं परिह्रियते।

---

छाया।

> 1 दृष्टा कमलासक्ती राज्ञस्तव सुभगाचित्तचरितस्य।
> भास्वानपि त्वं तां कुवलयलक्ष्मीं प्रसाधयसि॥

१ सौक्ष्म्यल° P. २ समुत्तेजनम् P., T., R.; समुत्तेजनात् $M_2$. ३ श्रीकाकतीन्द्रप्रभुम् T. ४ विच्छि $M_2$ ५ सुभग $M_2$. ६ भासन्तो वि $M_2$. ७ कर्तृकर्माभिधानाच्चेति m. ८ द्विरुक्तम् m. ९ संमुत्तेजनम् p.

अथ रीतिः ।

येथोपक्रमनिर्वाहो रीतिरित्यभिधीयते ।

षड् गुणान् सेवते राजा षड् रिपूनवमन्यते ।
षड् दर्शनान्युपादत्ते षड् बलानि च वीक्षते ॥ २२ ॥

अथ भाविकम् ।

भावतो वाक्यवृत्तिर्या भाविकं तदुदाहृतम् ।

यथा ।

स्वामिंस्तात कुलोत्तंस वीररुद्र जगत्प्रभो ।
पुत्रिणां धुरमेषोऽहं पुत्रेणारोपितस्त्वया ॥ २३ ॥

अत्र प्रेमरूपभाववशात् स्वामिंस्तातेति वाक्यवृत्तिः ।

अथ गतिः ।

गतिर्नाम सुरम्यत्वं स्वरारोहावरोहयोः ।

यथा ।

प्रकाश्ये त्रैलोक्ये सततमतुलैः काकतिविभो-
र्महोभिर्निःसीमैर्दिनकरकराटोपपटुभिः ।

---

षड् गुणान् सन्ध्यादीन् । 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः' इत्यमरः । षड् रिपून् कामक्रोधादीन् । षड् दर्शनानि पाणिनीयप्रभृतीन्युक्तानि । षड् बलानि मौलादीनि । तदुक्तं मौलेश्वरेण ।

'मौलं भृत्यं तथा मैत्रं श्रैणमाटविकं बलम् ।
आमित्रमपरं षष्ठं सप्तमं नोपलभ्यते ॥' इति ।

अत्र पादचतुष्टयेऽप्यादौ षड्डोपादानाद्यथोपक्रमनिर्वाहेण पतत्प्रकर्षपरिहारिणी रीतिर्द्रष्टव्या ।

भावत इति । भावः प्रेमात्रास्तीति भाविकम् । स्वामिन्निति पुत्रं प्रति जनकस्योक्तिः । भाविकं योजयति । अत्र प्रेमेति ।

गतिरिति । स्वराणामारोहो दीर्घाक्षरप्रायत्वम् । अवरोहो वैपरीत्यम् । प्रकाश्य इति । निःसीमैरिति सूर्यादितेजोव्यतिरेकोक्तिः । वीररुद्रतेजसि विश्वव्या-

---

१ यथाक्रमेण T. २ °वृत्तिः स्याद् भाविकम् M₃. ३ वाक्यप्रवृत्तिः B. ४ त्रैलोक्यम् m.

तमः कृत्स्नं शोकज्वलदनलरोचिःपरिचयं
दधत्स्वप्युद्वेलत्यरिनृपमनःस्वेव सततम् ॥ २४ ॥

अत्र पूर्वार्धे दीर्घाक्षरप्रायत्वात् स्वरस्यारोहः। एतेषां गुणानामर्थगतत्वमपि केचिदिच्छन्ति। प्राचामाचार्याणां मतेन संघटनाश्रयत्वमेव गुणानाम्। तदुक्तमलंकारसर्वस्वे। 'संघटनाधर्मत्वेन शब्दार्थधर्मत्वेन च गुणालंकाराणां व्यवस्थानम्' इति। अनयैव भङ्ग्या गुणालंकाराणां सुनिरूपः स्वरूपभेदः। अन्यथा स्वरूपभेदस्य दुर्निरूपत्वात्। काव्यशोभाकरत्वमेव गुणालंकारस्वरूपम्। तदुक्तं रुद्रभट्टेन।

---

पिनि तमसो वैरिहृदयान्येवावकाश इत्याह। तम इति। तत्राग्निसंनिधानेऽपि तमसो न बाध इत्याह। शोकेति। दधत्स्वपीत्यपिशब्दो विरोधसूचकः। दुःखिता मुह्यन्तीति परिहारः। उद्वेलति विजृम्भते। अत्र पूर्वार्ध इत्यनेनोत्तरार्धे ह्रस्वाक्षरप्रायत्वादवरोह इति द्रष्टव्यम्।

एतेषां गुणानां मतभेदेनार्थगतत्वलक्षणं विशेषमाह। एतेषामिति। तदुक्तं वामनेन। 'एत एवौजःप्रसादप्रभृतयोऽर्थगुणाः' इति। स्वमतमाह। प्राचामिति। संघटनाश्रयत्वमेवेति। बहूनां पदानामेकपदवदवभासमानत्वादिलक्षणे श्लेषादावर्थगतत्वस्य दुर्घटत्वादिति भावः। अलंकारसर्वस्व इति। उद्भटादिमतानुवादत्वेनेति भावः। अनयैव भङ्ग्येति। संघटनाशब्दार्थरूपाश्रयभेदेनैवेत्यर्थः। अन्यथेति। आश्रयभेदाभाव इत्यर्थः। ननु कथमेतदुपपद्यते 'काव्यशोभायाः कर्तारो धर्मा गुणाः। तदतिशयहेतवस्त्वलंकाराः' इति वामनेन स्वरूपभेदस्योक्तत्वादिति चेत् नैतत् साधीयः। विकल्पासहत्वात्। इदं हि तद्दर्शनरहस्यम्। रीतिरात्मा काव्यस्य। रीतिश्च गुणविशिष्टपदरचना। सा वैदर्भ्यादिभेदेन त्रिविधा। तत्र सर्वगुणविशिष्टा वैदर्भी। कतिपयगुणविशिष्टे गौडीयापाञ्चाल्याविति। तत्र सर्वगुणानां मिलित्वा काव्यशोभाहेतुत्वे गौडपाञ्चालरीत्योरव्याप्तिः। कतिपयानां काव्यशोभाहेतुत्वे

---

१ परिचयान् $M_2$. २ °स्वरूप° P. ३ °मनस्येव $M_2$, $M_4$. ४ T'. has उत्तरार्धे अवरोहः and $M_2$. has उत्तरार्धे ह्रस्वाक्षरतया स्वरस्यावरोहः. ५ $M_2$. omits अपि. ६ °मपि R., T'. ७ °काराणामवस्थानम् P., R. ८ निरूपितः T'.; सुनिरूपितस्व° $M_2$. ९ स्वरूपे भेदः $M_4$. १० स्वरूपमुक्तं रुद्रदेवेन R., $M_2$. ११ प्रसादादयो m. १२ °पदवदाभास° P. १३ °नुवादत्वेने° m. १४ मिलितत्वात् m.

'यो हेतुः काव्यशोभायाः सोऽलंकारः प्रकीर्त्यते।
गुणोऽपि तादृशो ज्ञेयो दोषः स्यात्तद्विपर्ययः॥'

अतो गुणानां संघटनाश्रयत्वमेव युक्तम्।

इति [1]श्री[2]विद्यानाथकृतौ प्रतापरुद्रयशोभूषणेऽलंकारशास्त्रे गुणप्रकरणं समाप्तम्।

---

अद्रावत्र प्रज्वलत्यग्निरुच्चैः
प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः।

इत्यादौ पर्वतोऽग्निमानित्यादिशुष्कशाखानुकूल्येन काव्यत्वरहितेऽप्योजःश्लेषादिसंभवेनातिव्याप्तिः स्यात्। तस्मान्नास्ति गुणानां तन्मते काव्यशोभाकरत्वम्। न च तन्मूलमलंकाराणां तदतिशयहेतुत्वमिति। स्वमतेऽभिमतसंमतिं च दर्शयति। यो हेतुरिति। उपसंहरति। अत इति। स्वरूपभेदाभावादित्यर्थः। संघटनाश्रयत्वमेव युक्तमिति। भेदकत्वेनेति भावः। एतच्चोद्भटादिमतमवलम्ब्य श्लेषादीनां [3]माधुर्यादावनन्तर्भावमङ्गीकृत्योक्तम्। वस्तुतस्तु भामहादिमतेनान्तर्भावे श्लेषादिगुणानां रसधर्मत्वम्। अलंकाराणां तु शब्दार्थधर्मत्वमिति विद्यत एव स्वरूपभेद इति रहस्यम्। अत एव स्वयमेवोक्तवान् काव्यप्रकरणे।

हारादिवदलंकारास्तेऽनुप्रासोपमादयः।
श्लेषादयो गुणास्तत्र शौर्यादय इव स्थिताः॥

आत्मोत्कर्षावहा इति।

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलचलमल्लिनाथसूरिसूनुना विश्वजनीनविद्यस्य विद्वन्मणेः पेद्दयार्यस्यानुजेन कुमारस्वामिसोमपीथिना विरचिते प्रतापरुद्रीयव्याख्याने रत्नापणाख्याने गुणनिरूपणं नाम षष्ठं प्रकरणम्॥

---

१ R. and M. have इति गुणप्रकरणम् before this. २ T'. drops श्री.
३ माधुर्यादावन्तर्भावस्याङ्गीकारेणोक्तम्। m.

## अलंकारस्वरूपनिरूपणम् ।

अथ गुणनिरूपणानन्तरमलंकारा निरूप्यन्ते[1] । अलंक्रियतेऽनेनेति चारुत्वहेतुरलंकारः । तथा चोक्तं[2] काव्यप्रकाशे ।

---

परिशेषादलंकारनिरूपणं प्रतिजानीते । अथेति ।

अत्रैतेऽलंकाराश्लेकानुप्रासवृत्त्यनुप्रासौ ।
यमकं पुनरुक्तवदाभासो लाटोपलालितः प्रासः ॥ १ ॥
चित्रमथो उपमानन्वयोपमेयोपमास्मरणम् ।
रूपकपरिणामौ द्वौ संदेहभ्रान्त्यपह्नवोल्लेखाः ॥ २ ॥
उत्प्रेक्षातिशयोक्ती तथा सहोक्तिर्विनोक्तिश्च ।
उक्तीः समासवक्रस्वभावकव्याजपूर्विका विद्यात् ॥ ३ ॥
मीलनसमानतद्तद्गुणाविरोधो विरोधश्च ।
अधिको विभावनाथो विशेषपूर्वोक्त्यसंगती स्याताम् ॥ ४ ॥
विचित्रान्योन्यविषमाः समोऽथो तुल्ययोगिता ।
दीपकं प्रतिवस्तूपमा दृष्टान्तो निदर्शना ॥ ५ ॥
व्यतिरेकः श्लेषपरिकराक्षेपा सूपास्तुतिः ।
अप्रस्तुतप्रशंसा च पर्यायोक्तं प्रतीपकम् ॥ ६ ॥
अनुमानं काव्यलिङ्गं न्यासोऽर्थान्तरपूर्वकः ।
यथासंख्यार्थापतने परिसंख्योत्तरं तथा ॥ ७ ॥
वार्थचार्यौ द्वौ समाधिर्भाविकं प्रत्यनीककम् ।
व्याघातपर्यायसूक्ष्मा उदात्तः परिवृत्तिका ॥ ८ ॥
हेतुमालैकावली च मालादीपकसारकौ ।
संसृष्टिसंकरौ चेति पञ्चसप्ततिरीरिताः ॥ ९ ॥
रसवत् प्रेय ऊर्जस्वी समाहितमथोदयः ।
भावस्य संधिः शाबल्यं द्व्यशीतिरिति मे मताः ॥ १० ॥

एतेषामलंकारशब्दव्युत्पत्त्या तत्सामान्यलक्षणलाभं[3] मत्वाह । अलंक्रियतेऽनेनेति । अनियमेन रस इति शेषः । ' अकर्तरि च कारके संज्ञायाम् ' इति करणे घञ्प्रत्ययः । एतेनैतेषां गुणानामिव रसोपकारासंभवात् तेभ्यो वैलक्षण्यं

---

१ M. has अथालंकारं निरूप्यते. २ तत्रोक्तम् R. ३ सामान्यतद्गुणा° m.

'उपस्कुर्वन्ति तं सन्तं येऽङ्गद्वारेण संश्रिताः ।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥' इति ।

यथा करचरणाद्यवयवगतैर्वलयनूपुरादिभिस्तदलंकारतया प्रसिद्धैरवयव्येवालंक्रियते तथा शब्दार्थावयवगतैरनुप्रासोपमादिभिस्तत्तदलंकारतया प्रसिद्धैरवयवीभूतं काव्यमुपस्क्रियते ।

आश्रयाश्रयिभावेनालंकार्यालंकारभावो लोकवत् काव्येऽपि संमतः । चारुत्वहेतुत्वेऽपि गुणानामलंकाराणां चाश्रयभेदाद्भेदव्यपदेशः । संघटनाश्रया गुणाः शब्दार्थाश्रयास्त्वलंकाराः ।

तत्र प्रथमं शब्दार्थोभयगतत्वेन त्रैविध्यमलंकाराणाम् । अर्थालंकाराणां चातुर्विध्यम् । केचित् प्रतीयमानवस्तवः । केचित् प्रतीयमानौपम्याः । केचित् प्रतीयमानरसभावादयः । केचिदस्फुटप्रतीयमाना इति ।

---

सूच्यते । अस्मिन्नेवार्थे वृद्धसंवादमाह । उपस्कुर्वन्तीति । येऽङ्गद्वारेण शब्दार्थयोरुत्कर्षाधानद्वारेण तमङ्गिनं रसं सन्तं विद्यमानमुपस्कुर्वन्तीत्यनेन रसाभावे चित्रकाव्ये शब्दार्थवैचित्रीमात्रपर्यवसायित्वमलंकाराणामिति सूच्यते । तेऽलंकाराः कण्ठादीनामुत्कर्षाधानद्वारेण हारादय इव संयोगवृत्त्या वर्तन्त इत्यर्थः । न केवलमेव सति रसेऽनुप्रासोपमादिभिः स्वाश्रयभूताः शब्दार्था एवोपस्क्रियन्ते किं तु तदवयवीभूतं काव्यमपीत्येतल्लौकिकदृष्टान्तेनाह । यथेति । आश्रयाश्रयिभावेनेति । संयोगमूलेनेति शेषः । लोके मूलभूतः संयोगो मुख्यः । अत्र त्वनित्यत्वसाधर्म्यादौपचारिक इति भेदः । अथालंकारविभागं करिष्यमाणस्तदुपयोगितयोद्भटादिमतेनोक्तमेव गुणालंकारभेदमनुवदति । चारुत्वहेतुत्वेऽपीति ।

इत्थमलंकारस्वरूपं निरूप्य तद्विभागमाह । तत्र प्रथममिति । शब्दालंकारा अनुप्रासादयः । अर्थालंकारा उपमादयः । उभयालंकारा लाटानुप्रासोभयसंसृष्ट्यादयः । एतेषां तुल्येऽपि काव्यशोभाहेतुत्वे शब्दार्थोभयालंकारव्यवस्थायामाश्रयाश्रयिभाव एव प्रमाणमित्यलंकारसर्वस्वकारः । अन्वयव्यतिरेकाविति काव्यप्रकाशकारः । रसभावादिर्व्यज्यत इति । गुणीभूतव्यङ्ग्यत्वेन प्रतीयत इत्यर्थः ।

---

१ उपकुर्वन्ति R., M. २ सन्ततम् P.; सततम् R. ३ जातुचित् P. ४ तथैव R., M. ५ °स्तदलंकारतया R., M. ६ आश्रयाश्रयिभेदेन P. ७ लोके कत् T'. ८ R. and M. drop अपि. ९ भेदव्यवहारः R.; भेदाद् व्यपदेशः M. १० T' has अलंकारविभागः as heading before तत्र. ११ अर्थालंकारस्य R.; अर्थालंकारवर्गस्य T'. १२ उपकुर्वन्तीति m.

समासोक्तिपर्यायोक्त्याक्षेपव्याजस्तुत्युपमेयोपमानन्वयातिशयोक्तिपरिकराप्रस्तुतप्रशंसानुक्तनिमित्तविशेषोक्तिषु प्रतीयमानं वस्तु काव्योपस्कारतामुपयाति[1] ।

रूपकपरिणामसंदेहभ्रान्तिमदुल्लेखापह्नवोत्प्रेक्षास्मरणतुल्ययोगितादीपकप्रतिवस्तूपमादृष्टान्तसहोक्तिव्यतिरेकनिदर्शनाश्लेषेष्वौपम्यं गम्यते[2] ।

रसवत्प्रेयऊर्जस्विसमाहितभावोदयभावसंधिभावशबलतासु[3] रसभावादिर्व्यज्यते[4] ।

उपमाविनोक्त्यर्थान्तरन्यासविरोधविभावनोक्तगुणविशेषोक्तिविषमसमचित्राधिकान्योन्यकारणमालिकावलीव्याघातमालादीपककाव्यलिङ्गानुमानसारयथासंख्यार्थापत्तिपर्यायपरिवृत्तिपरिसंख्याविकल्पसमुच्चयसमाधिप्रत्यनीकप्रतीपविशेषमीलनसामान्यासंगतितद्गुणातद्गुणव्याजोक्तिवक्रोक्तिस्वभावोक्तिभाविकोदात्तेषु सहृदयहृदयाह्लादि स्फुटं प्रतीयमानं नास्ति ।

अत्रेत्थमलंकारकक्ष्याविभागः ।

साधर्म्यं त्रिविधम् । भेदप्रधानमभेदप्रधानं भेदाभेदप्रधानं चेति । उपमानोपमेययोः स्वतो भिन्नत्वाच्छाब्दमेतन्न वास्तवम् ।

रूपकपरिणामसंदेहभ्रान्तिमदुल्लेखापह्नवानामभेदप्रधानसाधर्म्यनिबन्धनत्वम् ।

दीपकतुल्ययोगितादृष्टान्तनिदर्शनाप्रतिवस्तूपमासहोक्तिप्रतीपव्यतिरेकाः भेदप्रधानसाधर्म्यनिबन्धनाः ।

---

चतुर्धा विभक्तेष्वलंकारेष्ववान्तरविभागं प्रतिज्ञापूर्वकमाह । अत्रेति । इत्थं वक्ष्यमाणप्रकारेण । कक्ष्याविभागः साधर्म्यविरोधादिमूलत्वेनालंकाराणां वर्गशो विभाग इत्यर्थः । एतदभेदप्रधानत्वं शाब्दमारोपितं न वास्तवं न स्वाभाविकम् ।

---

१ काव्योपस्करणमुपयाति R.; काव्योपस्कारमुपैति M. २ °मायाति T'. ३ भावसंधि is dropped in R. and M. ४ रसभावादि व्यज्यते R., M. ५ °गुणनिमित्तविशेषोक्ति° P. ६ °समविषम° P. ७ °विचित्र° R., M. ८ °निमीलन° T'. ९ °संदेहपरिणाम° R. १० °निदर्शनादृष्टान्त° R., M.

उपमानन्वयोपमेयोपमास्मरणानां भेदाभेदसाधारणसाधर्म्यमूलता।

उत्प्रेक्षातिशयोक्ती अध्यवसायमूले।

विभावनाविशेषोक्तिविषमचित्रासंगत्यन्योन्यव्याघाततद्गुणभाविक-विशेषाणां विरोधमूलता।

यथासंख्यपरिसंख्यार्थापत्तिविकल्पसमुच्चयानां वाक्यन्यायमूलता।

परिवृत्तिप्रत्यनीकतद्गुणसमाधिसमस्वभावोक्त्युदात्तविनोक्तयो लोक-व्यवहारमूलाः।

काव्यलिङ्गानुमानार्थान्तरन्यासानां तर्कन्यायमूलता।

कारणमालैकावलीमालादीपकसाराः शृङ्खलावैचित्र्यमूलाः।

व्याजोक्तिवक्रोक्तिमीलनान्यपह्नवमूलानि।

समासोक्तिपरिकरौ विशेषणवैचित्र्यमूलौ।

अथालंकारणां परस्परवैलक्षण्यं निरूप्यते।

आरोपगर्भत्वेऽप्यारोप्यमाणस्य प्रकृतोपयोगानुपयोगाभ्यां परिणाम-रूपकयोर्भेदः।

आरोपविषयस्यारोप्यमाणरूपसंभवासंभवाभ्यामुल्लेखरूपकयोर्भेदः।

आरोपविषयस्य संदेहभ्रान्त्यपह्नवैः संदेहभ्रान्तिमदपह्नवानां परस्परं भेदः।

साधर्म्यमूलत्वेऽपि तुल्ययोगितादीपकनिदर्शनाव्यतिरेकदृष्टान्तेभ्यः साधर्म्यस्य वाच्यत्वादुपमानन्वयोपमेयोपमा भिद्यन्ते।

साधर्म्यस्य वाच्यत्वगम्यत्वाभ्यामुपमेयोपमाप्रतिवस्तूपमयोर्भेदः।

वस्तुप्रतिवस्तुबिम्बप्रतिबिम्बभावाभ्यां प्रतिवस्तूपमादृष्टान्तयोर्भेदः।

---

अथालंकाराणामत्यन्तविवेकार्थं मिथो वैधर्म्यमाह। अथालंकारणां परस्प-रवैलक्षण्यं निरूप्यत इत्यादिना। शिष्टमन्यदुदाहरणप्रस्ताव एव स्पष्टीभविष्य-तीति नेह विविच्यते।

---

१ M. drops विषम. २ °विचित्रा° R., M. ३ T'. drops लोक. ४ °न्यासा तर्क-न्यायमूलाः R., M. ५ शृङ्खलान्यायमूलाः M. ६ °मीलनानि निह्नवमूलानि M. ७ °वैरूप्यं P. ८ R. drops निरूप्यते. ९ °दपह्नुतिनाम् M. १० परस्परभेदः R., M. ११ साधारणधर्मस्य M., R. १२ अथा° k.

[1]प्रस्तुताप्रस्तुतानां व्यस्तसमस्तत्वाभ्यां तुल्ययोगितादीपकयोर्भेदः ।
उपमानस्य प्रसिद्धत्वाप्रसिद्धत्वाभ्यामुपमोत्प्रेक्षयोर्भेदः ।
अर्थसाम्यशब्दसाम्याभ्यामुपमाश्लेषयोर्भेदः ।
[2]उपमानोपमेययोर्भेदाभेदाभ्यामुपमानन्वययोर्भेदः ।
उपमानोपमेयभावस्य पर्याययौगपद्याभ्यामुपमेयोपमोपमयोर्भेदः ।
अप्रस्तुतस्य वाच्यत्वगम्यत्वाभ्यामप्रस्तुतप्रशंसासमासोक्त्योर्भेदः ।
वाच्यव्यङ्ग्ययोः [3]प्रस्तुतत्वे पर्यायोक्तिः । वाच्यस्याप्रस्तुतत्वेऽप्रस्तुतप्रशंसा ।

व्याप्तिपक्षधर्मताद्यभावात् काव्यलिङ्गस्यानुमानाद्भेदः ।

साधारणगुणयोगाद् भेदानुपलब्धौ सामान्यम् । [4]उत्कृष्टगुणयोगान्न्यूनगुणतिरोधाने [5]मीलनम् ।

[6]अन्यव्य[7]वच्छेदे तात्पर्याभावा[8]दुदात्तालंकारस्य परिसंख्यातो भेदः ।
काकतालीयतया कार्यसाधने कारणान्तरोपनिपाते समाधिः ।
अहमहमिकया कार्यसाधने बहूनां कारणानामुद्यमे [9]द्वितीयः समुच्चयः ।
निह्नवस्य वाच्यत्वगम्यत्वाभ्यामपह्नवव्याजस्तुत्योर्भेदः ।
अन्येषां भेदः स्पष्ट एव । यद्यपि व्याजोक्ति[10]वक्रोक्तिमीलनसामान्येषु कथंचित् सादृश्यमस्ति तथाप्यविवक्षितत्वान्न सादृश्यमूलेषु गणना ।

शब्दालंकारा निरूप्यन्ते ।

अथालंकारस्वरूपविभागानन्तरं शब्दार्थयोर्मध्ये शब्दस्यार्थं [11]प्रत्यन्तरंगत्वात् प्रथमं शब्दालंकारा निरूप्यन्ते ।

---

इत्थमलंकाराणां पीठिकां विधाय शब्दालंकारनिरूपणं प्रस्तौति । अथेति । तत्प्राथम्ये हेतुमाह । शब्दस्येति । अत्र शब्दप्रतीतिपूर्वकत्वादर्थप्रतीतेः शब्दस्य प्रतीतावन्तरङ्गत्वं तेन तस्य प्राधान्यात् प्राथम्यमिति भावः । प्रथमं तावच्छब्दा-

---

१ प्रस्तुताप्रस्तुतव्यस्तत्वसमस्तत्वाभ्याम् R. २ उपमानोपमेयोस्तु M.; उपमानोपमेययोश्च R. ३ उभयोः प्रस्तुतत्वे R., M. ४ Before this R. has उत्कृष्टगुणयोगाद् भेदानुपलब्धौ समम्. ५ निमीलनम् R.; मेलनम् P. ६ अन्यत्र व्यवच्छेदे R. ७ °व्यवच्छेद° M. ८ °तद्गुणालंकारस्य M. ९ द्वितीयसमुच्चयः R. १० R. and M. drop वक्रोक्ति. ११ प्रतीत्यन्तरङ्गत्वात् R.; प्रतीत्यन्तरङ्गगम्यात् M.

छेकानुप्रासः।

भवेदव्यवधानेन द्वयोर्व्यञ्जनयुग्मयोः।
आवृत्तिर्यत्र स बुधैश्छेकानुप्रास इष्यते॥

यत्राव्यवहितयोर्व्यञ्जनयुग्मयोर्द्वयोः पौनरुक्त्यं तत्र छेकानुप्रासः। यथा

महीमहीनविभवे धत्ते क्षेमंकरे करे।
राजन्यजन्यविजयी राजा राजद्गुणोदयः॥ १॥

वृत्त्यनुप्रासः।

एकद्विप्रभृतीनां तु व्यञ्जनानां यथा भवेत्।
पुनरुक्तिरसौ नाम वृत्त्यनुप्रास इष्यते॥

यथा।

---

र्थोभयगतत्वेन त्रिविधं पौनरुक्त्यम्। तत्राद्ये केवलस्वरपौनरुक्त्यस्य चारुताहेतुत्वाभावाद् व्यञ्जनमात्रपौनरुक्त्यम्। स्वरव्यञ्जनसमुदायपौनरुक्त्यं च चारुताहेतुः। तत्राद्यमपि संख्यानियमे छेकानुप्रासः। वैपरीत्ये वृत्त्यनुप्रास इति सर्वस्वकारः। तदनुसारेण छेकानुप्रासं लक्षयति। भवेदिति। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः। तदुक्तम्।

'प्रकृष्टो वर्णविन्यासो रसाद्यनुगतो हि यः।
सोऽनुप्रासः स च छेकवृत्त्युपाधिगतो द्विधा॥' इति।

गृहचराः पक्षिमृगादयश्छेका इति केचित्। विदग्धा इति सर्वस्वकारादयः। तदुपलक्षितोऽनुप्रासः छेकानुप्रासः। द्वयोरित्यत्र वीप्सा द्रष्टव्या। तेन यत्र द्वयोर्व्यञ्जनयुग्मयोरव्यवधानेनावृत्तिः स छेकानुप्रास इत्यर्थः। उदाहरति। महीमिति। अहीनविभवे फणीन्द्रसदृश इत्यर्थः। करे बाहौ। राजन्याः क्षत्रियाः। 'राजश्वशुराद्यत्' इति यत्प्रत्ययः। जन्यं युद्धम्। अत्र पादचतुष्टयेऽपि व्यञ्जनयुग्मानामव्यवधानावृत्तेश्छेकानुप्रास इति द्रष्टव्यम्।

संख्यानियमेन छेकानुप्रासमुक्त्वान्यथा वृत्त्यनुप्रासमाह। एकेति। प्रभृतिग्रहणात् त्रिचतुरादिसंग्रहः। अत्रैकस्य व्यञ्जनस्य सकृदावृत्तौ वैचित्र्याभावात्

---

१ °विबुधै° P. २ यदा R., P.

रे रे क्षुद्रमहीक्षितः क्षणमितः श्रीकाकतिक्ष्मापते-
र्वीक्षध्वं ध्वजिनीं दुरीक्ष्यसुभटां प्रोक्षितकौक्षेयकैः ।
यौत्स्यध्वे यदि लभ्यमक्षयपदं कान्तारपक्षो वृथा
क्ष्माभृत्कुक्षिचरत्तरक्षुनिकरात्त्रात्मरक्षा कुतः ॥ २ ॥

यमकम्

**यमकं पौनरुक्त्ये तु स्वरव्यञ्जनयुग्मयोः ।**

छेकानुप्रासे वृत्त्यनुप्रासे च स्वरपौनरुक्त्यमानुषङ्गिकम् । यमके तु स्वरव्यञ्जनयोरावृत्तिः । तस्यादिमध्यान्तगतत्वेन बहवो भेदाः । अत्र दिङ्मात्रमुदाह्रियते ।

---

सामर्थ्यादसकृदावृत्तिर्लभ्यते । द्वयोस्तु सकृदेव । अन्यथा छेकानुप्रासः स्यात् । व्यवधाने त्वसकृदावृत्तावपि न विरोधः । त्र्यादीनां तु सकृदसकृद्वा व्यवधानेनाव्यवधानेन वावृत्तिर्द्रष्टव्या । वृत्तिशब्देन वैदर्भ्यादयो विवक्षिताः । तदुपलक्षितानुप्रासो वृत्त्यनुप्रासः । उदाहरति । रे रे इति । योत्स्यध्वे हनिष्यध्वे यदि । युध संप्रहारे इत्यस्माद्धातोः कर्मणि लृट् । लभ्यमक्षयपदमिति ।

‘ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥’

इति स्मरणादिति भावः । कान्तारपक्षोऽरण्यनिवासपक्षः । तरक्षुनिकरात् मृगादनयूथात् दुर्मरणकारणादरण्यनिवासाच्छुभोदर्कं युद्धमरणमेव श्रेय इति भावः । अत्रासकृत्क्षकारावृत्त्या वृत्त्यनुप्रासः । एवमन्येऽपि भेदाः सूर्यशतकादौ द्रष्टव्याः ।

व्यञ्जनमात्रपौनरुक्त्याश्रयमलंकारद्वयमुक्त्वा स्वरव्यञ्जनपौनरुक्त्याश्रयमलंकारमाह । यमकमिति । ननु महीमहीनविभव इत्यादौ छेकानुप्रासे ‘ युधिष्ठिरं द्वैतवने वनेचरः ’ इत्यादावेकदा सादृश्यलक्षणे वृत्त्यनुप्रासे च स्वरपौनरुक्त्यसंभवात् कथं तत्र व्यञ्जनमात्रपौनरुक्त्यमित्याशङ्क्य परिहरति । छेकानुप्रास इति । अनुषङ्गादागतमानुषङ्गिकम् । अन्वाचयविशिष्टसमुच्चय इत्यर्थः । स्वरव्यञ्जनयुग्मयोरित्यत्र स्वरसहितव्यञ्जनेति मध्यमपदलोपी समासो विवक्षित इति व्याचष्टे । यमके त्विति । तत्र यम्यमानानां पादैकदेशानामादिमध्यमान्त-

---

१ महीभृतः M. २ दुरीक्ष्य॰ M. ३ योत्स्यध्वम् R. ४ ॰निकरस्तथा॰ P. ५ P. and R. drop वृत्त्यनुप्रासे च. ६ स्वरव्यञ्जनसमुदायपौ॰ M. ७ ॰निवासजातोदर्कं t.

प्रतापः काकतीन्द्रस्य महामहिमतेजसः।
श्रियं दधाति पंयोरुहमहामहिमतेजसः ॥ २ ॥

पुनरुक्तवदाभासः।

यत्रार्थः प्रमुखे किंचिद् भासते पुनरुक्तवत्।
पुनरुक्तवदाभासोऽलंकारः स सतां मतः ॥

यत्रार्थः पुनरुक्तवदाभासते अन्वयवेलायामन्यथा भवति स पुनरुक्तवदाभासोऽलंकारः। अर्थालंकारत्वेऽप्यस्य शब्दपौनरुक्त्याश्रितत्वाच्छब्दालंकारप्रस्तावे लक्षणं कृतम्।

यथा।

---

गतत्वेनानेकविधमित्याह। तस्येति। एतच्च श्लोकार्धपादयमकानामप्युपलक्षणम्। सर्वेऽप्येते भेदाश्चिरन्तनैरेव बहुधा प्रपञ्चिताः। गुरुत्वभीतत्वाच्चेह प्रपञ्च्यन्ते। तत्रैकमुदाहरति। प्रताप इति। महान् महिमा आधिक्यं यस्य तेजसो महामहिमतेजसः काकतीन्द्रस्य प्रतापः। पयोरुहमहां पद्मप्रियोत्सवानाम्। अहिमतेजसः उष्णांशोः श्रियं दधाति। अत्र द्वितीयपादस्य चतुर्थे यमनात् संदष्टयमकं नाम यमकभेदः। तदुक्तमन्यत्र। अत्र यम्यमानयोरुभयोः सार्थकत्वं 'विहगाः कदम्बसुरभाविह गाः' इत्यत्रैकस्य सार्थकत्वमन्यस्यानर्थकत्वम्। 'कलयन्त्यनुक्षणमनेकलयम्' इत्यत्रोभयोरनर्थकत्वम्। एवं सर्वेष्वपि यमकेषु प्रकारत्रयं यथासंभवं द्रष्टव्यम्।

शब्दपौनरुक्त्याश्रितानलंकारानभिधायार्थपौनरुक्त्यमूलमलंकारमाह। यत्रेति। यत्रालंकारेऽर्थः प्रमुखे प्रथमं पुनरुक्तवत् पुनरुक्तेन तुल्यमत एव किंचित् किमप्यनन्वितो भासते परमार्थतस्तु अन्यथा पर्यवस्यतीत्यर्थः। अर्थपौनरुक्त्यस्य प्ररूढदोषत्वात् तदेतन्निष्कृष्य व्याचष्टे। यत्रार्थ इत्यादिना। नन्वस्य शब्दालंकारप्रस्तावे का संगतिरत आह। अर्थेति। अर्थपौनरुक्त्यादेवार्थाश्रितत्वादर्थालंकारे सत्यपीत्यर्थः। शब्दपौनरुक्त्याश्रितत्वादिति। पर्यायशब्दाश्रितत्वादित्यर्थः। आम्रेडितशब्दवत् पर्यायशब्देष्वप्यर्थैकत्वसादृश्यादौपचारिकं शब्दपौ-

---

१ पयोरुहा° P. २ पुनरुक्तिवत् P. ३ °भासः सोऽलंकारः सतां मतः R. ४ P. drops अस्य. ५ काव्यगतमूलत्वाज्जेह विलम्बन्ते m., t. ६ °मितरस्या° t. ७ प्रमुखम् P.

जिष्णुरिन्द्रः क्षितिभुजां श्रीपतिः पुरुषोत्तमः ।
भास्वान् सूर्यस्फुरत्तेजाः काकतीन्द्रो विराजते ॥ ४ ॥

अथोभयपौनरुक्त्यालंकारः कथ्यते ।

लाटानुप्रासः ।

शब्दार्थयोः पौनरुक्त्यं यत्र तात्पर्यभेदवत् ।
स काव्यतात्पर्यविदां लाटानुप्रास इष्यते ॥

यत्र शब्दार्थयोस्तात्पर्यभेदमात्रं न स्वरूपभेदस्तत्र लाटानुप्रासः । यथा ।

गुणा गुणास्ते गण्यन्ते ये रुद्रनृपमाश्रिताः ।
नीतिर्नीतिरसौ तस्य लक्ष्मीर्लक्ष्मीश्च कथ्यते ॥ ५ ॥

---

नरुक्त्यं द्रष्टव्यम् । उदाहरति । जिष्णुरिति । जयशीलो जिष्णुः । क्षितिभुजामिन्द्रो राजाग्रणीः । श्रीपतिः समुद्रः । पुरुषोत्तमः पुरुषश्रेष्ठः । भास्वान् दीप्तिमान् । सूर्य इव स्फुरत्तेजाः स्फुरत्प्रतापः । तत्र जिष्णुादीनामिन्द्रादिपर्यायप्रयोगेण प्रमुखे भासमानस्य पौनरुक्त्यस्योक्तप्रकारेणान्वयवेलायामन्यथा पर्यवसानात् पुनरुक्तवदाभास इति भावः ।

केचित् पुनरेवमाहुः । 'भाति सदानत्यागः स्थिरतायाम्' इत्यत्र सत्पुरुषप्रणामेन प्रकाशते स्थैर्ये पर्वतभूत इत्यस्यार्थस्य दानत्यागशब्दपरिवृत्तावसंभवाच्छब्दालंकारोऽयम्। 'तनुवपुः' इत्यत्र कृशाङ्ग इत्यस्मिन्नर्थे तनुशब्दपरिवृत्तौ नायमलंकार इति शब्दाश्रयत्वं वपुःशब्दविपरिवृत्तौ नालंकारत्वहानिरित्यर्थाश्रयत्वम् । अत उभयालंकारोऽप्ययमिति । तदुक्तं काव्यप्रकाशे ।

'पुनरुक्तवदाभासो विभिन्नाकारशब्दभाक् ।
एकार्थतैव शब्दस्य तथा शब्दार्थयोरयम् ॥' इति ।

शब्दार्थयोरेकैकपौनरुक्त्यमूलानलंकारानभिधायोभयपौनरुक्त्यमूलमलंकारं प्रतिज्ञापूर्वकमाह । अथेत्यादिना । शब्दार्थयोः पौनरुक्त्यं प्रसक्तदोषः तद्व्यवच्छेदार्थं तात्पर्यभेदवादिति । अनेन यमकव्यावर्तकशब्दार्थयोः स्वरूपभेदाभावः फलित इति व्याचष्टे । यत्रेति । लाटजनोपलालितोऽनुप्रासो लाटानुप्रासः । न तु लाटदेशजन्यः कश्चनोपकारः काव्यस्य इति गोपालः । उदाहरति । गुणा

---

१ °विदा M. २ गीयते M., M, ३ °विपरीतवृत्तौ m. ४ °च्छब्दालंकारोऽयम् p. ५ °विपरीतवृत्तौ m.

चित्रालंकारः पद्मबन्धादिः ।

पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते[1] ।

आदिग्रहणाच्चक्रबन्धादयः ।

तत्राष्टदलपद्मबन्धो यथा ।

याता यस्यासमग्रानतिमिह[2] कनकास्थानसक्तासनाया[3]
यानासक्तासनस्था सुखयतु कमलाभ्याससुज्ञानमाया ।

---

इति । असौ वीररुद्रसंबन्धिनी । अत्र द्वितीयगुणादिशब्दानामुत्कर्षलक्षणतात्पर्यभेदः । 'अत्राब्जपत्रनयने नयने निमील्य[4]' इत्यादौ विभक्त्यादेरपौनरुक्त्येऽपि शब्दार्थपौनरुक्त्याल्लाटानुप्रासत्वम् । अत एवायं पदाश्रयः प्रातिपदिकाश्रयश्चेति द्वेधा लाटानुप्रास इति सर्वस्वकारः । उद्भटेनाप्युक्तम् ।

'स्वरूपार्थाविशेषेऽपि पुनरुक्तिः फलान्तरात् ।
शब्दानां प्रकृतीनां[5] वा लाटानुप्रास इष्यते ॥' इति ॥

ननु युद्धेऽर्जुनोऽर्जुन इवेत्यत्रैकैकस्यैवोपमानोपमेयत्वलक्षणे अनन्वयालंकारेऽपि शब्दार्थपौनरुक्त्यसंभवाल्लाटानुप्रासत्वमेव किं नेष्यते । सत्यम् । यद्यप्यनन्वयेऽर्थपौनरुक्त्यमात्रं लक्षणं तथापि निर्देशप्रतिनिर्देशयोरैकरूप्याभावे पर्यायप्रक्रमदोषप्रसङ्गादानुषङ्गिकं शब्दपौनरुक्त्यम् । अत्र तूभयपौनरुक्त्यमप्यावश्यकमेवेति विषयभेदान्न कोऽपि विरोधः । तदुक्तम् ।

'अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम् ।
अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम् ॥' इति ।

चित्रं लक्षयति । पद्मेति । न च श्रावणानां वर्णानां पद्माद्याकारहेतुत्वं न घटत इति वाच्यम् । वर्णशब्देन तत्स्मारकाणां लिप्यक्षराणामाक्षेपात् तेषां मुख्यवर्णाभेदेन लोकव्यवहारादस्य[6] शब्दालंकारत्वम् । पद्मादिबन्धेषु कर्णिकादिस्थानविशेषेषु वर्णानां पौनरुक्त्यात् पौनरुक्त्यमूलालंकारानन्तर्यं[7] च द्रष्टव्यम् । यातेति । कनकास्थाने सुवर्णमयसभामण्डपे सक्तं स्थितमासनं सिंहासनमयति प्राप्नोतीति कनकास्थानसक्तासनाया । अयतेः कर्मण्यण्प्रत्ययः । यानेषु तुरगादिष्वासक्ता-

---

१ चित्रमिष्यते B. २ यस्या समग्रा M. ३ कनकस्थान° P. ४ निमीलितेत्यादौ t. ५ पदार्थानां वा t. ६ लोके व्यवहारा° t. ७ °कारानन्तरं च t.

या मानज्ञा सुसभ्या क्षितिपतितिलकं ज्ञातिरक्ता सगेया
यागे सक्ता रतिज्ञा सुकृतिषु फलितग्रामसस्यायताया ॥ ६ ॥

अष्टदलपद्मबन्धोऽयम् ।




न्यासनानि पल्ययनादीनि तत्र तिष्ठतीति यानासक्तासनस्था । राज्योपकरणेषु लक्ष्मीरस्तीत्यागमः । अभ्यासेन परिचयेनोपासनयेत्यर्थः । सुखेन ज्ञायते इति सुज्ञाना । 'कृत्यलुटो बहुलम्' इति कर्मणि ल्युट् । माया स्वरूपवैचित्री यस्याः सा अभ्याससुज्ञानमाया । अनुपासकानां दुरवबोधस्वरूपेत्यर्थः । मानं पूजां जानातीति मानज्ञा । सभायां साधवः सभ्याः । 'सभाया यः' इति यप्रत्ययः । ते शोभना यस्याः सा सुसभ्या । सम्पन्नस्यैव सभ्याश्रयत्वादिति भावः । जानन्तीति ज्ञाः विवेकिनः । 'इगुपध—' इत्यादिना कप्रत्ययः । तत्रातिरिक्ता । गीयते इति गेयं गानं तेन सह वर्तत इति सगेया स्वनामाङ्कानेकगीतेत्यर्थः ।

१ °तिलक° P.

चक्रबन्धो यथा ।

लक्ष्मीर्वीक्षितवैभवस्य जगतां नाथस्य भद्रश्रियो
दिक्ष्वारब्धनिजप्रतापजनितां भास्वद्धुरां यच्छतः ।
नित्यं रुद्रजनाधिपस्य जयिनो भाति प्रकाशस्थिरा
राजत्पालनमोदितात्मनि भुजे योग्याश्रितत्वाद्धरा ॥ ७ ॥

---

यागे सक्ता संबद्धा । समृद्धस्यैव तत्राधिकारादिति भावः । रतिं स्वविषयाभिरतिं भक्तिं जानातीति रतिज्ञा । अत एव सुकृतिविषये फलितैर्ग्रामसस्यैः कार्यैरायतो महान् अयः शुभावहो विधिर्यस्याः सा तथोक्ता । स्वभक्तानां ग्रामादिसंपादनेन प्रकटितस्वानुग्रहेत्यर्थः । एवंविधा या लक्ष्मीर्यस्य विभोरासमग्रामतिसंपूर्णामानतिं वश्यत्वं याता सा कमला लक्ष्मीस्तं क्षितिपतितिलकं वीररुद्रमिहैव लोके जन्मनि वा सुखयतु सुखवन्तं करोतु । अयमष्टदलपद्मबन्धः । उद्धारस्तु ।

'कर्णिकादि लिखेद्वर्णान् क्रमाद्दिक्षु विदिक्षु च ।
सकर्णिकां सप्तदिक्षु [1]विदिक्षु तु विकर्णिकान् ॥
प्रवेशनिर्गमाभ्यां तु दिक्षु ते स्युश्चतुर्दश ।
व्यवधानेन तानाद्ये दलेऽन्यत्र त्वनन्तरान् ॥' इति ।

चक्रबन्धमुदाहरति । लक्ष्मीति । कोशागारनियुक्तयेव लक्ष्म्या वीक्षितवैभवस्य विचारितैश्वर्यस्य । भद्रश्रियः कल्याणमूर्तेः रित्यर्थः । आरब्धः संवर्धितः । भास्वद्धुरां भास्करभावं निजप्रतापेन दिक्षु सूर्यकल्पं कुर्वत इत्यर्थः । राजत्पालनेन सम्यक्संरक्षणेन मोदितात्मनि सर्वैरनुमोदितस्वरूपे भुजे । अत एव योग्याश्रितत्वात् प्रकाशं व्यक्तत्वं स्थिरा निश्चितस्थैर्येत्यर्थः । धरा भूमिर्नित्यं भाति । उद्धारस्तु

'बद्ध्यते षडरं चक्रं प्रत्यरं तत्रवाक्षरम् ।
त्रयाणामपि पादानां दशमं कर्णिकाक्षरम् ॥ १ ॥
आदितः स्वस्तुर्यारैस्त्रयः पादाश्चतुर्थगाः ।
वर्णाः षष्ठान्त्यमारभ्य [3]संपतन्तेऽन्तिमाक्षरैः ॥ २ ॥
मध्ये द्वौ द्वौ विसंवादौ षडरेषु क्रमाद् भवेत् ।
चतुर्थः सप्तमैर्वर्णैर्वर्णनं कविवर्णयोः ॥ ३ ॥' इति ।

---

१ सुकृतिषु विषये p., m.   २ विदिताश्च विकर्णिकाः t.; विदिताश्च विकर्णिकाः m.
३ संपद्यन्ते t., m.

अत्र वैजनाथकृति वीररुद्रयश इति प्रतीयते ।

चक्रबन्धोऽयम् ।

नागबन्धो यथा ।

ओजस्ये रुद्रदेवे विभवति महिमत्याजितान्यप्रतापे
विद्यावर्येऽभिनेतर्युरुहरिचरितं विश्वविस्तारभाजि ।

---

नागबन्धमुदाहरति । ओजस्य इति । ओजो बलं तत्र साधुरोजस्यः प्रबलः । यद्वाहर्वाचिनौजस्यशब्देनाहस्करो लक्ष्यते तेन ओजस्ये सूर्यसदृशे इत्यर्थः । 'ओजसोऽहनि यत्खौ' इति यत्प्रत्ययस्य च्छान्दसत्वेऽपि दृत्यांशवतातिवदस्य भाषायां प्रयोगो द्रष्टव्यः । महिमत्याजितोऽन्येषां प्रतापो येन तस्मिन् तथोक्ते । विद्याभिर्वेदवेदाङ्गादिभिर्वर्ये श्रेष्ठे उर्वधिकं हरिचरितमभिनेतर्यनुकुर्वतीति विष्णुसदृश इत्यर्थः । 'न लोक—' इत्यादिना षष्ठीप्रतिषेधः । विश्वविस्तारं भरणीयत्वेन भजतीति विश्वविस्तारभाक् । तस्मिन् विभवति विभौ सति अतिमलिनख्यातयो वैरिव्राताः शत्रुसंघा देहविद्धा रणे विद्धदेहाः सन्तो वन्यैर्जन्तुभिर्व्यालमृगैः सह क्षतिः क्षयः तद्वति । विविधे नानाविधदुःखभाजन इत्यर्थः । अथा-

---

१ अत्र वै° R.; अत्र चक्रं वै° M. २ वैद्यनाथ° M. ३ 'कृतिर्वीर° M ४ जिष्णु ५ विस्तार ।

वैरिव्राता भेजन्ते वनमतिमलिनख्यातयो देहविद्धा
वन्यैरध्वन्यवारि क्षितिमति विविधे जन्तुभिः स्थानभाजः ॥ ८ ॥

**नागबन्धोऽयम् ।**



र्यनुदके अध्वनि मरुदेशे इत्यर्थः । 'आपःस्त्री भूम्नि वार्वारि' इत्यमरः । स्थान-भाजः स्थितिं प्राप्ताः सन्तो वनं भजन्ते सेवन्ते । उद्धारस्तु ।

१ लभन्ते R. २ ख्यातिनो T. ३ क्षितिमति P. ४ विविधैर्जन्तुभिस्स्थान° P.

इति श्रीविद्यानाथकृतौ प्रतापरुद्रयशोभूषणेऽलंकारशास्त्रे शब्दालंकारप्रकरणं समाप्तम् ।

'रेखाभ्यां चतुरश्राणि चतुष्कोष्ठानि कल्पयेत् ।
रेखाद्वयान्तराले स्याद्यथाकोष्ठे गृहाष्टकम् ॥ १ ॥
विदिक्षु कुण्डलीकुर्यात् तद्रेखाग्रैर्यथाक्रमम् ।
दिग्रेखाग्राणि बाह्यानि योजयेत् दिक्त्रये मिथः ॥ २ ॥
एकत्र तु फणापुच्छमेलनं कल्पयेत् तथा ।
अन्तराण्यक्षयीकुर्यात् संदशाः स्युर्यथा मिथः ॥ ३ ॥
वर्णावृत्तिस्थलान्यत्र कोष्ठकोणानि षोडश ।
सन्दशानां चतुष्कं च कण्ठश्चेत्येकविंशतिः ॥ ४ ॥
आवृत्तिर्युग्मवर्णानां नेतरेषामिह क्वचित् ।
अर्केशानदशब्रह्मवर्णाः पादचतुष्कगाः ॥ ५ ॥
आवर्त्तैरश्वैर्कलादिकुण्डलेष्वप्रदक्षिणम् ।
यथैवं स्यात् तथा वर्णान् फणातो विन्यसेत् क्रमात् ॥ ६ ॥
त्रिंशदष्टाविंशतिश्च षड्विंशतिरनुक्रमात् ।
वेष्टनत्रितये वर्णाः समाप्तिस्तु गलाक्षरे ॥ ७ ॥
एवमेतन्निधायान्तः संगृहीतं महात्मभिः ॥
विदिक्स्थले कुण्डलितं स्वमङ्गं
स्वेन त्रिरावेष्ट्य विभाङ्गिभङ्गम् ।
क्षिप्त्वा गले पुच्छमहेः स्थितस्य
पाठ्यः फणातः फणिबन्ध एषः ॥ ८ ॥' इति ॥

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलचलमल्लिनाथसूरिसूनुना विश्वजनीनविद्यस्य विद्वन्मणेः पेद्दयार्यस्यानुजेन कुमारस्वामिसोमपीथिना विरचिते प्रतापरुद्रीयव्याख्याने रत्नापणाख्याने शब्दालंकारनिरूपणं नाम सप्तमं प्रकरणम् ॥

---

१ R. has before this इति शब्दालंकाराः and M. इति शब्दालंकारप्रकरणम्. २ t. drops श्री. ३ अन्तराण्यक्षरा कुर्यात् t.; अन्तराण्यक्षिण या कुर्यात् m. ४ °यथायथम् t. ५ °प्रदक्षिणैः t. ६ कुण्डलितपरसमङ्गम् p.

## अथार्थालंकाराः ।

तत्र प्रथममनेकालंकारबीजभूतत्वादुपमा निरूप्यते ।

> स्वतः सिद्धेन भिन्नेन संमतेन च धर्मतः ।
> साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा ॥

यत्र स्वतः सिद्धेन स्वतो भिन्नेन सहृदयसंमतेनाप्रकृतेन सह प्रकृतस्य धर्मतः सादृश्यमेकदा वाच्यं चेद् भवति तत्रोपमा । स्वतः सिद्धेनेत्यनेनोत्प्रेक्षाव्यावृत्तिः । उत्प्रेक्षायामप्रसिद्धस्याप्युपमानत्वसंभवात्

यथा[२]

> कीर्त्तिः काकतिवीररुद्रनृपतेः सिंहासनाध्यासिनः
> प्राचां भूमिभुजां यशः पिदधती कोटीन्दुतुल्यद्युतिः[३] ।
> रक्षादक्षिणराजलाभजनिता मन्दप्रमोदोत्थिता
> त्रैलोक्याट्टहसप्रभेव ककुभां प्रान्तेषु विद्योतते ॥ १ ॥

अत्र[४] प्रभाशब्दो जातिवचनः त्रैलोक्याट्टहासप्रभायाः कविप्रौढोक्तिसिद्धत्वान्नोपमाशंकावकाशः ।

स्वतो भिन्नेनेत्यनेनानन्वयव्यावृत्तिः । अनन्वय एकस्यैवोपमानोपमेयत्वसंभवात् ।

तथा हि

---

शब्दालंकारनिरूपणानन्तरमवसरमाप्तत्वादर्थालंकारनिरूपणं प्रतिजानीते । अथेति । प्रथममुपमानिरूपणे निमित्तमाह । तत्रेति । अत्रार्थलंकारेष्वित्यर्थः । अनेकालंकारबीजभूतत्वादिति । वाच्यौपम्यानामनन्वयादीनां गम्यौपम्यानां च रूपकादीनामन्येषां च सादृश्यमूलानां मीलनादीनां निदानभूतत्वादित्यर्थः[५] । लक्षयति । स्वत इति । धर्मतो गुणक्रिययोरन्यतरेणेत्यर्थः । साम्यमित्यनेन कार्यकारणादिकयोरसंभवात् साधर्म्यादन्यवर्ण्यशब्दयोरुपमानोपमेयार्थत्वं द्रष्टव्यम् । अत्रानुषङ्गाध्याहारादिभिः शिष्टमंशं पूरयन् व्याचष्टे । यत्रेति ।

---

१ P. drops it. २ Portions from यथा कीर्त्तिः° to °शंकावकाशः, from तथा हि to स्वयम्, from यथा to °त्युपमैवेयम्, from तथा हि to श्लेष एव, from तथा हि to नोपमा, from धर्मोऽर्थ इव to °त्युपमेयोपमा, and from तथा हि to °न्नोपमाशङ्का are omitted in P. and M.
३ राकेन्दुबिम्बद्युतिः $M_g$. ४ तत्र $M_g$. ५ निदानत्वात् t.

सन्तु लोके सुवर्णाद्रिरत्नाकरसुधाकराः ।
तथापि वीररुद्रोऽयं वीररुद्र इव स्वयम् ॥ २ ॥

संमतेनेत्यनेन न्यूनोपमादिव्यावृत्तिः ।

यथा

उदन्वानिव गम्भीरः सुवर्णाद्रिरिवोन्नतः ।
दिङ्महेन्द्र इव क्षोणीधौरेयकाकतीश्वरः ॥ ३ ॥

अत्र समुद्रसुवर्णाद्रिदिग्गजानामुपमानत्वं योग्यमित्युपमैवेयम् ।

धर्मत इत्यनेन श्लेषालंकारवैलक्षण्यम् । श्लेषे शब्दसाम्यमात्रमभ्युपगतं न गुणक्रियासाम्यम् ।

तथाहि

नीराजयन्त्यन्ध्रपुरीरमण्यः
प्रदीपजालैर्वरवीररुद्रम् ।
चन्द्रानना गोत्रपतिं रजन्य-
स्तारागणैर्मेरुमिव स्फुरद्भिः ॥ ४ ॥

अत्र प्रतापरुद्रं पुरस्त्रियो नीराजयन्ति मेरुं रजन्य इवेति नोपमा । गोत्रपतिमिति विशेषणार्थस्य साम्यासंभवात् । राजपक्षे गोत्रशब्देन कुलप्रतीतिः मेरुपक्षे गोत्रशब्देन पर्वतप्रतीतिः । तथा चन्द्रानना इति

---

व्यावृत्त्यादिकं तु स्वयमेव व्यक्तीकरिष्यते ।

न्यूनोपमादीति । न्यूनविशेषणोपमानं न्यूनोपमम् । आदिग्रहणादधिकोपमादिसंग्रहः सहृदयसंमतिं दर्शयति । उदन्वानिति । 'उदन्वानुदधौ च' इति निपातनात् साधुः । धुरं वहतीति धौरेयो धुरन्धरः । 'धुरो यड्ढकौ' इति ढक्प्रत्ययः । क्षोण्या धौरेय इति शिवभागवत् समासः ।

धर्मत इत्यनेन श्लेषालंकारवैलक्षण्यमिति । शब्दसाम्यमूलत्वात् तस्येति भावः । व्यावर्त्यं श्लेषमूलमुदाहरति । नीराजयन्तीति । एवंविधस्थले शब्दसाम्येऽप्युपमैवेति काव्यप्रकाशकारः । तदुक्तम् ।

---

१ न्यूनोपमाधिकोपमाव्यावृत्तिः $M_{2,3}$; दुष्टोपमादिव्यावृत्तिः M. २ क्षोण्या $M_2$. ३ सुवर्णाद्रिसमुद्रदिगन्तगजानाम् R. ४ श्लेषव्यावृत्तिः P.; श्लेषालंकारवैषम्यम् p. ५ R. omits from श्लेषे to गुणक्रियासाम्यम्. ६ साम्याभावात् R., $M_p$. ७ गोत्रपक्षे राजशब्देन T'. ८ T'. drops गोत्रशब्देन. ९ शब्दसाम्यं नोपमाप्रयोजकमपि तूपमाप्रतिभोत्पत्तिहेतुः श्लेष एवायमेव इत्यवोचत् । विद्यानाथः सर्वस्वकारसिद्धान्तश्रद्धालुतया श्लेष एवायं नोपमेत्याह । अत्रेत्यादिना । t.

स्त्रीपक्षे चन्द्र इव आननं यासामिति समासः । रात्रिपक्षे चन्द्र एवाननं यासामिति शब्दमात्रसाम्येन नोपमाप्राप्तिः । किं तु श्लेष एव ।

अन्येन वर्ण्यस्य साम्यमित्यनेन प्रतीपालंकारो व्यावर्त्यते ।

तथा हि

> लोकोऽयमविशेषज्ञः किं कुर्मः कस्य कथ्यते ।
> यत् काकतिनरेन्द्रेण सुमेरुरुपमीयते ॥ ५ ॥

अत्राप्रकृतस्य मेरोः प्रकृतेन राज्ञा सादृश्यमिति प्रतीपालंकारो नोपमा ।

एकदा साम्यमित्यनेन उपमेयोपमाव्यवच्छेदः । उपमेयोपमायामुपमानोपमेययोरनेकधा साम्यप्रतिपादनम् ।

> धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव स्थितः ।
> कामस्ताविव तौ काम इव रुद्रनरेश्वरे ॥ ६ ॥

अत्र धर्मोऽर्थ इव अर्थो धर्म इवेत्यनेकदा शब्दद्वयेन धर्मार्थकामानां सादृश्यं प्रतिपाद्यत इत्युपमेयोपमा ।

वाच्यमित्यनेन प्रतीयमानौपम्यानां रूपकसंदेहभ्रान्तिमदुल्लेखापह-

---

'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव ।' इत्यादिशब्दमात्रसाम्येऽपि सा युक्तैवेति । अलंकारसर्वस्वकारः पुनरस्मिन्नेवोदाहरणे गुणक्रियासाम्यवच्छब्दसाम्यं नोपमाप्रयोजकमपि तूपमाप्रतिभोत्पत्तिहेतुः श्लेष एवायमिति इत्यवोचत् । विद्यानाथस्तु सर्वस्वकारश्रद्धालुतया श्लेष एवायं नोपमेत्याह अत्रेत्यादिना ।

अन्येन वर्ण्यस्येति । उपमानोपमेयस्येत्यर्थः । लोकोऽयमिति । अत्रोपमानोपमेयभावस्य वैपरीत्यात् प्रतीपालंकार इत्याह । अत्रेति ।

धर्म इति । अत्रैकदा साम्यस्य प्रथमार्धमेव प्रत्युदाहरणम् । तावतैवोपमेयोपमायाश्चरितार्थत्वात् । द्वितीयं पुनरभ्युच्चयः । तदेवाभिप्रेत्योक्तं धर्मार्थकामानामिति ।

---

१ °साम्ये नोपमा° R. २ प्रतीपस्याव्याप्तिः M. ३ M. adds प्रतीपे उपमेयस्योपमानत्वकल्पनात् सादृश्यं वर्ण्यते । ४ °व्याप्तिः P. ५ R. and T. omit उपमेयोपमायाम्°—प्रतिपादनम्. ६ For प्रतीयमानौ°—वैलक्षण्यम् P. has गम्यौपम्यरूपकादेर्व्याप्तिः and M. has गम्यौपम्यस्य रूपकादेर्व्याप्तिः.

वतुल्ययोगितादीपकप्रतिवस्तूपमादृष्टान्तसहोक्तिव्यतिरेकनिदर्शनानां वैलक्षण्यम् ।

तथा हि

प्रतापरुद्रनृपतेर्मण्डलाग्रविधुंतुदः ।
अखण्डविक्रमोद्दामो ग्रसते राजमण्डलम् ॥ ७ ॥

अत्र मण्डलाग्रविधुंतुदपदयोः सामानाधिकरण्यप्रयोगान्यथानुपपत्त्या सादृश्यं लक्ष्यत इति नोपमा किं तु रूपकालंकारः ।

किमेष नवमो हरित्पतिरमन्दसंपत्पदं
किमेष दशमः प्रजापतिरपूर्वसर्गक्रमः ।
किमेष हरिरुर्वरोद्धरणचञ्चुरेकादश-
श्चिरादिति विलोक्यते जगति काकतीन्द्रो जनैः ॥ ॥ ८ ॥

अत्र काकतीश्वरस्य दिगीश्वरादीनां च परस्पराभेदप्रतीतेः संदेहनिबन्धनान्यथानुपपत्त्या सादृश्यमाक्षिप्यते । ततः संदेहालंकारः ।

काकतीयविभोः कीर्तिविभवे व्याप्तरोदसि ।
दिवापि चन्द्रिकाबुद्ध्या चकोरा यान्ति निर्वृतिम् ॥ ९ ॥

अत्र कीर्तिविभवे चन्द्रिकाबुद्धिः चन्द्रिकासादृश्यं विना न संभवतीति सादृश्याक्षेपात् भ्रान्तिमदलंकारः ।

लक्ष्मीनिवासगृहमित्यखिला नरेन्द्रा
शौर्यातिभूमिखनिरित्यरिवीरवर्गाः ।
विद्याविहारपदवीति च लब्धवर्णाः
श्रीकाकतीन्द्रनगरीमनिशं स्तुवन्ति ॥ १० ॥

---

वाच्यव्यवच्छेद्यतया साधर्म्यस्य गम्यत्वं केषुचिदलंकारेषु दर्शयति । तथाहीत्यादिना । उदाहरणश्लोका यथायोगं स्वस्वप्रकरणे एव व्याख्यास्यन्ते ।

---

१ संपत्पदः $M_1$, $M_2$. २ °चुञ्चु $M_1$, $M_2$, R. ३ विलक्ष्यते $M_2$. ४ काकतीन्द्रस्य R. ५ °विहारवल्लभी° R.

अत्र नगर्यां तत्तत्पदार्थतारोपः सादृश्यादृते न संभवतीति सादृश्य-कल्पनादुल्लेखालंकारः।

> वीररुद्रस्य भूपालजयहोमं वितन्वतः।
> धूमराजिरियं भाति न चमूरेणुरुत्थिता ॥ ११ ॥

अत्रोत्थितां चमूरेणुमवलोक्य धूमपङ्क्तिरित्यपह्नवेनारोपः सादृश्यमूल एवेति सादृश्याक्षेपादपह्नवः। एवं तुल्ययोगितादिष्वपि सादृश्य-गम्यत्वान्नोपमाशङ्का। अतः सर्वेभ्यः साधर्म्यमूलेभ्यो विलक्षणे-यमुपमा।

सा प्रथमं द्विधा। पूर्णा लुप्ता चेति। उपमानोपमेयसाधारणधर्मसादृश्य-प्रतिपादकानां चतुर्णां प्रयोगे पूर्णा। एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता। पूर्णा द्विविधा। श्रौती आर्थी चेति। साक्षात्सादृश्यप्रतिपादकेवादिशब्दानां प्रयोगे श्रौती। धर्मिव्यवधानेन सादृश्यप्रतिपादकानां सदृशसंकाशनी-

---

उपमायाः स्वरूपमुक्त्वा विभागमाह। सा प्रथममिति। पूर्णामाह। उप-मानेति। उपमीयते सदृशीक्रियते येनोत्कृष्टगुणेन तदुपमानं चन्द्रादि। उपमी-यते यदपकृष्टगुणं तदुपमेयं मुखादि। साधारणो धर्मो गुणः क्रिया वा। साद-श्यप्रतिपादका यथेवादयः। चतुर्णामेतेषां कण्ठोक्तौ पूर्णेत्यर्थः। कतिपयलोपे लुप्तेत्याह। एकस्येति। लोपे शास्त्रीये स्वारसिके च। तत्राद्यां विभजते। पूर्णेति। श्रुत्या सादृश्यप्रतिपादनात् श्रौती। अर्थतस्त्वार्थीत्यर्थः। श्रौतीं लक्ष-यति। साक्षादिति। आर्थीं लक्षयति। धर्मिव्यवधानेनेति। सदृशाभिधान-द्वारेत्यर्थः। ननु यथेवादिशब्दानां सदृशादिशब्दवत् सादृश्यविशिष्टार्थपरत्वा-भावात् केवलसादृश्यपरत्वं वक्तव्यम्। तथा सति मुखं चन्द्रसादृश्यमित्यर्थः स्यात्। एवं च दशदाडिमादिवाक्यवदसम्बद्धमिदं भविष्यतीति चेत् सत्यम्।

---

१ सादृश्याद्विना R. २ वीररुद्र महीपाले जयहोमं वितन्वति M. ३ धूमरेणु° R. ४ सादृश्यस्य R. ५ T. and M. drop चतुर्णाम्. ६ द्विधा R. ७ R. drops शब्दानाम्. ८ तादृशाभिधान° t. ९ तादृशादि° t.

काशप्रतीकाशादिशब्दानां प्रयोगे आर्थी । द्वे अपि वाक्यसमासतद्धितग-तत्वेन त्रिविधे[1] । एवं पूर्णोपमा षट्प्रकारा । लुप्तोपमा एकोनविंशतिभेदा । 'तेन तुल्यं क्रिया चेद्वतिः' इति सदृशार्थे[3] विहितस्य वतेरुपादाने आर्थी । 'तत्र तस्येव' इतीवार्थे विहितस्य वतेरुपादाने श्रौती । अत एव सादृश्यार्थे विहितस्य वतेः प्रयोगे धर्मोपादान एवान्वयसौकर्यादनुक्तधर्मा तद्धितगा श्रौती लुप्ता[5] नास्ति[4] । कल्पबादिप्रयोगे त्वार्थ्येव[6] ।

अथोदाहरणानि[7] ।

## वाक्यगा पूर्णा श्रौती यथा ।

---

यथा राज्ञः पुरुष इत्यत्र गुणभूतराजविशेषणभूता षष्ठी अनुशासनबलादुभय-निष्ठसंबन्धमात्रमभिदधानापि तद्द्वारा प्रधानभूतं पुरुषमप्याक्षिपति । तदुक्तं हरिणा ।

'द्विष्ठोऽप्यसौ परार्थत्वात् गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानः सन् प्रधानेऽप्युपयुज्यते ॥' इति ।

एवमुपमानविशेषणभूता यथेवादयः शब्दाः श्रुत्या सादृश्यं बोधयन्तोऽपि शब्दशक्तिस्वाभाव्यात् तात्पर्येण सादृश्यवति वर्तन्ते[8] । एवं च यथेवादिशब्दानां श्रुत्या सादृश्यपरत्वात् तत्प्रयोगे श्रौती । सदृशादिशब्दानामर्थात् सादृश्यपरत्वात् तत्प्रयोगे त्वार्थीति विवेकः । तयोः पुनः प्रत्येकं त्रैविध्यमाह । द्वे इति । एकोनविंशतिभेदेति । वक्ष्यमाणप्रकारेणेति शेषः । वतिप्रत्ययभेदादुपमाभेद इत्याह । तेन तुल्यमित्यादिना । तत्र श्रौत्या विशेषमाह[9] । अत एवेति । अतोऽस्मादेवा-न्वयसौकर्यादिति संबन्धः । कूर्मवदित्यादिवक्ष्यमाणोदाहरणे मेदिनीभानरूपस्य समानधर्मस्योपादान एवान्वयसौकर्यादन्यथा तदभावाच्च तद्धितगतायां श्रौत्यां धर्मोपादानमावश्यकमिति भावः । कल्पबादिप्रयोगे त्विति[10] । 'ईषदसमाप्तौ—' इति विहितानां कल्पब्देश्यदेशीयर्प्रत्ययानां 'विभाषा सुपः' इति विहितस्य बहुच्प्रत्ययस्य च प्रयोग इत्यर्थः । आर्थ्येवेति । धर्मिव्यवधानेनैव सादृश्यप्रतिपादनादित्यर्थः ।

---

१ वाक्यगतसमासगततद्धित° T'; वाक्यतद्धितसमास° R. २ R. has इति after it. ३ R. drops सदृशार्थे विहितस्य. ४ धर्मानुपादानेऽन्वयासंभवान्नानुक्तधर्मा तद्धितगा श्रौती । P. ५ लुप्तापि P. ६ चार्थ्येव P., M. ७ तथोदाहरणानि R. ८ सादृश्यवति वर्तन्ते t. ९ श्रौत्यादिविशेष° t. १० °प्रयोगेष्विति p.

उद्दामोद्यतविक्रमे कृतयुगे बाहौ ययातेर्यथा
त्रेतायां रघुनायकस्य महितख्यातौ भुजायां यथा ।
दोर्दण्डे च युधिष्ठिरस्य विलसच्छौर्ये यथा द्वापरे
विस्रब्धाद्य कलौ तथैव रमते क्षोण्यन्ध्रभर्तुर्भुजे ॥ १२ ॥

**समासगा पूर्णा श्रौती यथा ।**

भास्वानिवोद्यन्नुदयाद्रिलम्बी
भद्रासनस्थो वरवीररुद्रः ।
उत्पश्यतामन्ध्रपुरीजनानां
नेत्राब्जजाड्यं शमयत्यशेषम् ॥ १३ ॥

अत्र भास्वानिवेति ' इवेन सह नित्यसमासः ' इति नित्यसमासः ।

**तद्धितगा पूर्णा श्रौती यथा ।**

कूर्मवच्छेषवद्गोत्रगिरिवद्दिङ्महेभवत् ।
भुजे प्रतापरुद्रस्य धुरीणे भाति मेदिनी ॥ १४ ॥

**वाक्यगा पूर्णार्थी यथा ।**

'तैस्तैर्महीपालनसंविधानै-
स्तैस्तैः प्रजारञ्जनवैभवैश्च ।

---

उद्दामेति । अत्र यथाशब्दप्रयोगादियं वाक्यगता श्रौती च ।

भास्वानिवेति । कथमियं समासगेत्याकाङ्क्षायामाह । ' इवेन सह नित्यसमासः ' इति । ' इवेन सह समासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वं च ' इति वार्तिकादिति शेषः ।

कूर्मवदिति । ' तत्र तस्येव ' इति सप्तमीसमर्थादिवार्थे वतिप्रत्ययः । अत एवेयं तद्धितगा श्रौती । धुरं वहतीति धुरीणे धुरन्धरे । ' खः सर्वधुरात् ' इत्यत्र ' खः ' इति योगविभागात्खप्रत्ययः । ' गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् ' इति तस्येवेति वतेरुदाहरणम् ।

तैस्तैरिति । महीपालसंविधानैर्वापीकूपतडागादिनिर्माणैरित्यर्थः । प्रजारञ्जन-

---

१ विस्रब्धा हि कलौ M. २ °मूर्धजे P. ३ °त्यजनम् P. ४ P. and R. drop सह. ५ नित्यसमासो विभक्त्यलोपश्चेति P. ६ प्रतापरुद्रस्य भुजे R. ७ वाक्यगता पूर्णार्थी T. ८ तादृङ्मही° for तैस्तैर्मही° P. ९ वाक्यगा t. १० t. drops सह. ११ समानधर्मार्थवतिप्रत्ययः t. १२ °विभागादिति P.

विराजते संप्रति काकतीय-
लक्ष्मीपतिर्दाशरथेः समानः ॥ १५ ॥

**समासगा पूर्णार्थी** यथा ।

तादृक्पालनसामर्थ्यसंपदा काकतीश्वरः ।
हरिदीश्वरसंकाशः शास्ति मध्यमविष्टपम् ॥ १६ ॥

**तद्धितगा पूर्णार्थी** यथा ।

हिमाचलवदौन्नत्ये गाम्भीर्ये क्षीरसिन्धुवत् ।
प्रतापे भानुवद् भाति वीररुद्रनरेश्वरः ॥ १७ ॥

एषूदाहरणेषूपमेयोपमानसाधारणधर्मसादृश्यप्रतिपादकानि चत्वारि निबद्धानीति पूर्णत्वम् ।

## अथ लुप्तोपमाया उदाहरणानि ।

**अनुक्तधर्मा वाक्यगा श्रौती लुप्ता** यथा ।

यथा रुचां स्वामिनि चक्रवाक्यो
यथा च नीहाररुचौ चकोर्यः ।

---

वैभवैश्चौरादिनिवारणपूर्वकैः पालनविशेषैरित्यर्थः । अत्र दाशरथेः समान इति व्यासेन समानशब्दोपादानादार्थीयमुपमा वाक्यगता च ॥

तादृगिति । हरिदीश्वरेण दिक्पतिना सदृशो हरिदीश्वरसंकाश इति नित्यसमासः । ‘स्युरुत्तरपदे त्वमी । निभसंकाशनीकाशप्रतीकाशोपमादयः ॥’ इत्यमरकोशे निभादिशब्दानामुत्तरपदनियमात् । अत एव समासगतेयमार्थी ।

हिमाचलवदिति । औन्नत्यादौ मेर्वादितुल्यं भातीत्यर्थः । अत्र ‘तेन तुल्यम्—’ इति विहितस्य वतेः प्रयोगादार्थीयं तद्धितगा । एषूदाहरणेषूपमानादिचतुरङ्गनिबन्धनात् पूर्णत्वमित्याह । एष्विति ।

अथ लुप्तोदाहरणेषु प्रथमं धर्मानुपादाने पञ्चोदाहरणानि क्रमेणाह । यथेत्यादि । रुचां स्वामिनि सूर्ये । वीररुद्रे वर्तन्ते इति शेषः । अत्र प्रतापाह्लादसारस्यानां धर्माणामनुपादानम् ।

---

१ काकतीयो P. २ काकतीयनरेश्वरः R. ३ M. drops एषूदाहरणेषु—पूर्णत्वम्. ४ °षूपमानोपमेय° R ५ निबन्धनानीति T. ६ चक्रवाका M. ७ °चोरादिभयनिवारण° I.

यथा प्रसूनस्तबके भ्रमर्य-
स्तथा प्रजाः काकतिवीररुद्रे ॥ १८ ॥

**अनुक्तधर्मा समासगा श्रौती लुप्ता यथा ।**

प्रतापरुद्रदेवस्य पादपीठीमनारतम् ।
आराधयन्ति भूपालाः प्रणता देवतामिव ॥ १९ ॥

**अनुक्तधर्मा वाक्यगा आर्थी लुप्ता यथा ।**

काकतिक्ष्मापतेर्जैत्रप्रस्थानपटहध्वनिम् ।
तुल्यं दम्भोलिनिर्घोषैः शृण्वन्त्यरिमहीभृतः ॥ २० ॥

**अनुक्तधर्मा समासगा आर्थी लुप्ता यथा ।**

शश्वत् पुरीमेकशिलाभिधानां
वस्वोकसारासदृशीमवेक्ष्य ।
नमन्ति भूपा भुवि काकतीय-
राज्यप्रतिष्ठां बहुमन्यमानाः ॥ २१ ॥

**अनुक्तधर्मा तद्धितगा आर्थी लुप्ता यथा ।**

प्रतापरुद्रनृपतेर्जगन्महिततेजसः
कन्दर्पकल्पमाकारं पश्यन्त्यन्तःपुरस्त्रियः ॥ २२ ॥

एषूदाहरणेषु धर्मस्यानुपादानम् ।

---

प्रतापेति । अत्र पादपीठीदेवतयोः समानो धर्मः सम्पत्प्रदत्वमनुक्तम् । अनुक्तधर्मा तद्धितश्रौती लुप्ता नास्तीत्युक्तम् ।

काकतीति । दम्भोलिनिर्घोषैरशनिध्वनिभिस्तुल्यं तद्वत् भीषणमिति गम्यते ।

शश्वदिति । वस्वोकसारासदृशीमलकासमानां वैभव इति नोक्तम् ।

प्रतापरुद्रेति । कन्दर्पकल्पं कन्दर्पसदृशम् । रूपसंपदेति शेषः । ईषदसमाप्तौ कल्पप्प्रत्ययः । इयमेकलोपे लुप्ता पञ्चविधा ।

---

१ पादपीठमनारतम् P. २ शृण्वन्त्यन्यमहीभृतः R.; शृण्वन्त्यरिमहीभुजः P. ३ वस्वोकसारा॰ T. ४ काकतीये P. ५ ॰जगन्मोहित॰ R.; ॰जगन्महिम॰ P. ६ ॰पुरन्ध्रयः P. ७ R. and M. drop एषू॰-दानम्.

**अनुक्तधर्मेवादिः कर्मक्यचा लुप्ता यथा ।**

दुग्धार्णवीयत्यम्भोधीन् कैलासीयति भूधरान् ।
प्रतापरुद्रदेवस्य यशोवैशद्यवैभवम् ॥ २३ ॥

**अनुक्तधर्मेवादिराधारक्यचा लुप्ता यथा ।**

क्रीडाद्रीयति गोत्रशैलशिखरेष्वास्थानसद्मीयति
द्वीपेष्वब्धिषु दीर्घिकीयति हरित्स्वेकान्तगेहीयति ।
उद्यानीयति सीमपर्वततटारण्ये सुपर्वाचले
प्रासादीयति वीररुद्रनृपतेः स्फारः प्रतापोदयः ॥ २४ ॥

**अनुक्तधर्मेवादिः कर्मणोमुल्लुप्ता यथा ।**

पश्यन्त्यात्मजदर्शमिन्दुममरस्रोतस्विनीं सत्सरो-
दर्शं क्षीरपयोनिधिं प्रियसुहृद्दर्शं गिरिं राजतम् ।

---

अथ द्विलोपे लुप्तां क्रमेणोदाहरति । दुग्धार्णवीयतीत्यादिना । अत्र 'उपमानादाचारे' इति क्यच्प्रत्ययः । 'क्यचि च' इतीकारः । धावल्यमत्र साधर्म्यं गम्यते । अम्भोधीन् दुग्धार्णवानिवाचरतीत्यत्र वाक्ये प्रक्रान्तं कर्मद्वयम् । तत्रोपमानकर्मणोऽन्तर्भूतत्वात् तदपेक्षयासावकर्मको धातुः । तदुक्तम् ।

'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥' इति ।

कर्मान्तरापेक्षया तु सकर्मक एव । यथाह भगवान् भाष्यकारः । 'द्वे ह्यत्र कर्मणी उपमानकर्मोपमेयकर्म चेति । उपमानकर्मान्तर्भूतमुपमेयेन कर्मणा सकर्मको भवति' इति । एवमन्यत्रापि द्रष्टव्यम् ।

क्रीडाद्रीयतीति । आस्थानसद्म सभामण्डपः । दीर्घिकाः क्रीडासरांसि । सीमपर्वतो लोकालोकः । सुपर्वाचलो मेरुः । क्रीडापर्वतादिष्विव कुलपर्वतशिखरादिष्वाचरतीत्यत्र सुखसाधनत्वं साधर्म्यं गम्यते । 'अधिकरणाच्च' इति वचनात् क्यच्प्रत्ययः । क्रीडाद्रीयतीत्यत्र 'अकृत्सार्वधातुकयोः' इति दीर्घः । अन्यत्र यथायोगं टिलोपे 'क्यचि च' इतीकारः ।

पश्यन्तीति । आत्मजं पुत्रमिव दृष्ट्वा आत्मदर्शम् । एवमुत्तरत्रापि द्रष्टव्यम् ।

---

१ पर्वतान् R. २ हैमगोत्रशिरसि R. ३ °पर्वीयति P., R. ४ पूर्वाचले P., R. ५ °णमुल्ला लुप्ता P. ६ सत्सर्वां° M., P., R. ७ द्विलोपलुप्ताम् L.

लीलादर्पणदर्शमन्यदमलं तारादिहारावली-
दर्शं खेलति वीररुद्रनृपतेः कीर्त्तिर्जगद्व्यापिनी ॥ २५ ॥

**अनुक्तधर्मेवादिः कर्तृणमुल्लुप्ता यथा ।**

नृपेषु शिक्षाविधिदण्डचारं
कान्तासु पुष्पायुधधन्वचारम् ।
प्रजासु चालम्बनयष्टिचारं
चरत्ययं रुद्रनरेन्द्रखङ्गः ॥ २६ ॥

**अनुक्तधर्मेवादिः क्विपा लुप्ता यथा ।**

सुधाप्रवाहति सतामसतां कालकूटति ।
वीररुद्रनरेन्द्रस्य गुणज्योत्स्नाविजृम्भितम् ॥ २७ ॥

इति दशोदाहरणानि । षष्ठूदाहरणेषु द्वयोरनुपादानम् ।

---

'उपमाने कर्मणि च' इति णमुल्प्रत्यये कषादित्वात् सर्वत्र पश्यन्तीत्यनुप्रयोगः । अत्रारमजसख्यादीनामिन्दुमन्दाकिनीमुख्यानां चोपमानोपमेयभावे नैर्मल्यमेव साधर्म्यमूलमिति गम्यते ।

नृपेष्विति । शिक्षाविधेर्दण्डः शिक्षाविधिदण्ड इति तादर्थ्ये अश्वघासादिवत् षष्ठीसमासः । स इव चरित्वा तच्चारमिति 'उपमाने कर्मणि च' इति चकारात् कर्तरि णमुल् । कषादित्वाच्चरतेरनुप्रयोगः । अत्र भीषणोद्दीपनविश्रामभूमित्वानां क्रमेण समानधर्मत्वमुन्नेयम् ।

सुधेति । गुणज्योत्स्नाविजृम्भितं कर्तृ । सुधाप्रवाह इवाचरति सुधाप्रवाहति तद्वच्छ्लाघ्यमित्यर्थः । कालकूटमिवाचरति कालकूटति तद्वदसह्यमित्यर्थः । 'सर्वप्रातिपदिकेभ्यः क्विब्वाचारे' इत्याचारे क्विप्प्रत्ययः । अत्राचारस्य समानधर्मत्वं मन्यमानः काव्यप्रकाशकारस्तद्वाचकस्य क्विपः सर्वलोपादिवादिलोपाच्च द्विलोपः । क्यजादौ तु प्रत्ययश्रवणादेकलोप एवेत्याह । विद्यानाथस्तु कर्तरि क्यजादावस्तु नाम धर्मान्तरोद्भावना शक्तौ कथंचिदाचारः सामर्थ्यम् । कर्मणि क्यजादौ तूपमानोपमेयगतो धावल्यादिरेव समानधर्मो नाचारमात्रं तस्यान्यधर्मत्वादिति मन्यमानः क्यजादावपि द्विलोप इत्याह । षष्ठूदाहरणेषु द्वयोरनुपादानमिति । एत-

---

१ °मन्यद्द्विलम् P., R. २ °णमुला लुप्ता T. ३ M. drops लुप्ता ४ °नृपेन्द्रखङ्ग M. ५ M. omits लुप्ता. ६ The portion from इति दशो° to लुप्तत्वम् is omitted in P. and M. ७ °चार इत्येके ' T.

अम्भोधीन् दुग्धार्णवीयतीत्यत्र कर्मक्यचि दुग्धार्णवानिव करोतीति गोत्रशिखरेषु[1] क्रीडाद्रीयतीत्याधारक्यचि[2] क्रीडाद्रिष्विव वर्तत इति चन्द्र-मात्मजदर्शं पश्यन्तीति कर्मणमुलि आत्मजमिव पश्यन्तीति शिक्षा-विधिदण्डचारं चरतीति कर्तृणमुलि शिक्षाविधिदण्ड इव चरतीति इव-शब्दोऽन्तर्गत इति तस्य लुप्तत्वम्।

अनुक्तधर्मीवादिः[3] कर्तृक्यचा लुप्ता यथा।

> ज्योत्स्नीयन्ति सुधीयन्ति चन्दनीयन्ति सर्वतः।
> प्रतापरुद्रनृपतेः शुभाः कीर्तिमहोर्मयः[4] ॥ २८ ॥

अत्र कीर्तीनां स्वरूपमुपमेयम्।

---

देव विविनक्ति। अम्भोधीनित्यादि। इवशब्दोऽन्तर्गत इति गम्यमानार्थ इत्यर्थः। एतद्यथोदाहरणमस्मदुद्घाटितधावल्यादिसाधारणधर्मस्याप्युपलक्षणम्। तस्य लुप्तत्वमिति। अप्रयुक्तत्वमित्यर्थः। यदाह कैयटः। 'गम्यमानार्थस्याप्रयोग एव लोपः' इति। क्विबन्तोदाहरणं तु सर्वसंप्रतिपन्नत्वान्न विवृतमिति द्रष्टव्यम्।

क्वचित् त्रिलोपे लुप्तामाह। अनुक्तेति। धर्मः समानधर्मोऽस्यास्तीति धर्मि उपमेयं तच्चेवादिश्चानुक्तौ यत्रासावनुक्तधर्मीवादिः। अनुक्तोपमेयेवादिरित्यर्थः। धर्मलोपस्तु प्रसिद्धः। कर्तृक्यचेति। यत्र क्यच्प्रत्यये प्रकृतिभूतस्योपमानस्य कर्मणः कर्त्रैवोपमेयं तेनेत्यर्थो द्रष्टव्यः। केवलकर्तृक्यच्प्रत्ययस्यैवाभावात्। तेन लुप्तामुदाहरति। ज्योत्स्नीयन्तीति। ज्योत्स्नामिवात्मानमाचरन्तीत्यत्रात्मन उप-मेयस्येवादेः साधर्म्यस्य नैर्मल्यादेश्चानुपादानात् त्रिलोपे लुप्तेयमिति भावः। आचारसामर्थ्यवादिनां तु द्विलोप एव। तदुक्तं काव्यप्रकाशे। 'क्यचीवाद्युप-मेयौ' इति। न च कीर्तिमहोर्मय इत्युपमेयोपादानम्। उपमानापेक्षया भिन्न-विभक्तिकत्वात्। न चैतदनुसारेण ज्योत्स्नीयन्तीत्यत्र ज्योत्स्ना इवाचरन्तीति समानविभक्तिकत्वकल्पनमुपपद्यते। कर्तृक्यच्प्रत्ययस्यानुशासनविरुद्धत्वात्। न च शुभा इति समानधर्मोपादानम्। तस्याकर्तृभूतकीर्तिविशेषणत्वेन तत्रैवोप-क्षीणत्वादित्यलमतिप्रसङ्गेन।

---

१ गोत्रशैलेषु $M_1$, $M_3$. २ °त्याधारक्यचि $M_3$. ३ अनुक्तधर्मोपमेयेवादिः कर्मक्यचा लुप्ता यथा $P_1$; अनुक्तधर्मोपमेयादिरुपमेयक्यचा यथा M. ४ कीर्णाः $P_1$, $R_1$; पूर्णाः M.

**अनुक्तधर्मेवादिः कर्तृक्यङा यथा।**

शेषायते मही वोढुं कल्पशाखायतेऽर्थिनाम्।
प्रतापरुद्रदोर्दण्डः कालदण्डायते द्विषाम्॥ २९॥

**अनुक्तोपमाना वाक्यगा लुप्ता यथा।**

वदान्यो नान्योऽस्ति त्रिजगति समो रुद्रनृपते-
र्गुणश्रेणीश्लाघापिहितहरिदीशानयशसः।
समन्तादुद्भूतैर्द्विरदमदगन्धैः सुरभयः
क्रियन्ते यद्विश्राणनमणिगृहप्राङ्गणभुवः॥ ३०॥

**अनुक्तोपमाना समासगा लुप्ता यथा।**

---

पुनरपि धर्मेवादिलोपे लुप्तामाह। शेषायत इति। शेष इवाचरति इति शेषायते। 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्प्रत्यये ङित्वादात्मनेपदम्। अत्रोपमानकर्तुरन्तर्भूतत्वादुपमेयकर्त्रा सकर्तृकत्वमिति भाष्यकारः। अत्र महीवहनलक्षणस्य साधर्म्यस्योपादानात् कल्पशाखायत इत्यादिकमेवोदाहरणम्। शेषायत इत्येतदेकलोपस्येति विवेकः। अत एवास्य प्रकरणादुत्कर्षः। अत एव कर्तृणमुलि क्विपि च समानधर्मस्योपादानानुपादानाभ्यां द्वैविध्यं द्रष्टव्यम्। पुरुषव्याघ्र इत्यत्र सामान्याप्रयोग एव सामानाधिकरण्यात् समासः संभवति। तदुक्तं हरिणा।

'व्याघ्रशब्दो यदा शौर्यात् पुरुषार्थेऽवतिष्ठते।
तदाधिकरणाभेदात् समासस्यास्ति संभवः॥
शूरशब्दप्रयोगे तु व्याघ्रशब्दो मृगे स्थितः।
भिन्नेऽधिकरणे वृत्तेस्तत्र नैवास्ति संभवः॥' इति।

अतोऽत्र धर्मलोपादिवादेरभावाचानुक्तधर्मेवादिः समासगा लुप्तेत्यय भेदोऽत्रत्यपुस्तकेष्वभावादुपेक्ष्यः।

उपमानानुक्तौ वाक्यसमासगतत्वेनोदाहरणद्वयं क्रमेणाह। वदान्य इति। गतमेतत्। रुद्रनृपतेः समो वदान्य इत्युपमेयवाचकसमानधर्माणां प्रयोगः। उपमानं नोक्तम्।

---

१ कर्तृक्यङा लुप्ता यथा T. २ कल्पशाखीयते P. ३ अनुक्तोपमेया P., R.; अनुक्तधर्मोपमानवाक्यगा M. ४ अनुक्तोपमेया P., R. ५ p. drops हरिणा. ६ तु नोक्तम् t.

वीररुद्रसमो राजा नास्ति नास्त्येव भूतले ।
यस्य धर्मानुबन्धेन कलिः कृतयुगीकृतः ॥ ३१ ॥

**अनुक्तधर्मोपमाना वाक्यगा लुप्ता यथा ।**

लोके काकतिवीररुद्रनृपतेरुद्दाममूमभ्रियः
कीर्त्या कार्त्तिककौमुदीधवलया तुल्यं न किंचित् क्वचित् ।
यन्माधुर्यविजृम्भितक्षतविषां ग्रीवां विलोक्याधुना
कण्ठालिङ्गनमीशितुर्वितनुते नीरन्ध्रमद्रेः सुता ॥ ३२ ॥

**अनुक्तधर्मोपमाना समासगा लुप्ता यथा ।**

प्रतापश्रीतुल्यं क्वचिदपि न भूतं न च भवन्
न भावि त्रैलोक्ये किमपि जयिनः काकतिविभोः ।
यथा लोकालोकक्षितिधरतटेष्वर्कदृषदः
प्रकाशन्ते नक्तंदिवमुदितरोचिःपरिचयाः ॥ ३३ ॥

पूर्वोदाहरणद्वये वदान्येति राजेति शब्दाभ्यां वितरणशीलत्वं प्रजारञ्जकत्वं च साधर्म्यमुक्तम् । अनन्तरोदाहरणद्वये च धर्मस्याप्यनुपादानम् । एषु चतुर्षूदाहरणेषु न प्रतीपालंकारशङ्का । उपमानस्याक्षेपा-

---

वीररुद्रसम इति समासेनोपमेयवाचकयोः प्रयोगः । रञ्जनाद्राजेति साधर्म्यकथनम् ।

पूर्ववद्धर्मोपमानानुक्तावुदाहरणद्वयमाह । लोक इति । कीर्त्या तुल्यं मधुरं वस्तु किमपि नास्तीत्यर्थः । अत एव साधर्म्योपमानयोरनुपादानम् । यन्माधुर्यविजृम्भितैः यस्याः कीर्तेर्माधुर्यातिशयैरित्यनेन साधर्म्योपादानमिति न शङ्कनीयम् । तस्य वाक्यान्तरगतत्वात् । किं तु माधुर्यमेव साधर्म्यं विवक्षितं न कौमुदीधवलत्वादिकमित्यनेन सूच्यते ।

प्रतापेति । लोकालोकक्षितिधरतटेषु पाश्चात्येष्वपीति भावः । अर्कदृषदः सूर्यकान्ताः । देशतः कालतश्च परिच्छेदातीतत्वात् प्रतापश्रीतुल्यं नास्तीत्यत्रोपमेयवाचकयोरेवोपादानम् । एषूदाहरणेष्वाद्ययोरेकलोपमन्त्ययोश्च द्विलोपं विविनक्ति । पूर्वेति । अत्रोदाहरणचतुष्टये प्रतीपालंकारसाङ्कर्यं वारयति । एष्विति ।

---

१ °धर्मोपमेया P. २ °मूमस्पृशा P., °शुभ्रश्रियः M. ३ °विजृम्भितैः क्षत° P. ४ °धर्मोपमेया P. ५ वदान्यो नान्योऽस्तीति T., M$_1$, M$_2$. ६ °शीलत्वप्रजा° T., M$_1$. ७ °रञ्जकत्वसाधर्म्यम् T., M$_1$, M$_2$. ८ T. drops it. ९ धर्मस्य चानुपा° M$_1$. १० °नुपादानमिति भेदः P.

भावात् । उपमेयस्याधिक्याविवक्षणाच्च । यत्रोपमेयस्याधिक्यविवक्षयोपमानत्वमुच्यते तत्रैव प्रतीपालंकारः ।

**अनुक्तेवादिः समासगा लुप्ता यथा ।**

> असतामुष्णभानूष्णं सतां शीतांशुशीतलम् ।
> प्रतापरुद्रदेवस्य चरितं विश्वमङ्गलम् ॥ ३४ ॥

**अनुक्तधर्मेवाद्युपमाना समासगा लुप्ता यथा ।**

> काकतीन्द्रो रणे भाति भीमसेनपराक्रमः ।
> किं त्वदुःशासनाः सर्वे यस्य प्रत्यर्थिपार्थिवाः ॥ ३५ ॥

अत्र भीमसेनस्य पराक्रम इव पराक्रमो यस्य स भीमसेनपराक्रम इति धर्मेवाद्युपमानलुप्ता ।

---

> 'आक्षेप उपमानस्य कैमर्थक्येन कथ्यते ।
> यद्वोपमेयभावः स्यात् तत् प्रतीपमुदाहृतम् ॥'

इति लक्षणानुसारेण द्विविधस्यापि प्रतीपस्येहानुप्रवेशाभावान्न तत्साङ्कर्यशङ्काकलङ्कावकाश इति भावः ।

असतामिति । उष्णभानुरिवोष्णमुष्णभानूष्णमित्यत्र वाचकमात्रलोपादेकलोपे लुप्ता समासगा । सर्वस्यापि शब्दस्य शब्दान्तरसंबन्धेन विशेषवाचित्वादुष्णादिशब्दानां तथात्वेन सामान्यवचनत्वाभावेऽपि भाष्योक्तरीत्या समासात् पूर्वं सामान्यवचनत्वेन 'उपमानानि सामान्यवचनैः' इति समासः ।

समासे त्रिलोपमुदाहरति । काकतीन्द्र इति । भीमसेनपराक्रम इव दुःसहः पराक्रमो यस्यासौ भीमसेनपराक्रमः । अत्र विशेषमाह । किं त्विति । दुःशासनो दुर्योधनानुजः तत्सहिता भीमसेनप्रत्यर्थिनः वीररुद्रवैरिणस्तु तद्रहिता इति प्रातीतिकोऽर्थः । दुष्करं शासनं स्वविषयं येषां ते दुःशासनाः दुःसाध्याः । ते न भवन्तीत्यदुःशासनाः । सर्वेऽपि सुसाध्या इत्यर्थः । त्रिलोपं दर्शयति । अत्रेति । धर्मेवाद्युपमानलुप्ता इति । धर्मेवायोर्गम्यमानार्थत्वाल्लुप्तत्वम् । उपमानस्य तु वार्तिकादिति भावः । तथा हि 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्च' इति वार्त्तिकम् । अस्यार्थः । सप्तम्यन्तं तावदास्ताम् । उपमानं पूर्वपदं

---

१ °स्याधिक्यं न विवक्षितम् $M_1$, $M_3$. २ °पमानस्याधिक्यमुच्यते $M_3$. ३ प्रतीपालंकारात् P. ४ मङ्गलान्वितम् $M_1$. ५ किं तु दुःशासनाः P. ६ °धर्मोपमानेवादिः P.; धर्मेवाद्युपमानं लुप्तम् $M_1$, $M_3$.

इति लुप्तोपमा एकोनविंशतिप्रकारा।

अथ साधारणधर्मोपादाने द्वैविध्यम्। धर्मस्य सकृदुपमानोपमेयगतत्वेन निर्देशः। उभयगतत्वेन पृथगुपादानं वा। पृथगुपादानं च वस्तुप्रतिवस्तुभावेन बिम्बप्रतिबिम्बभावेन च द्विविधम्। एकस्यार्थस्य शब्द-

यस्य समासस्य तस्य शब्दान्तरेण बहुव्रीहिः पूर्वसमासावयवस्योत्तरपदस्य च लोप इति। एतेनेदं फलितम्। अत्रोपमानशब्देन मुख्योपमानभूतस्य भीमसेनपराक्रमस्याश्रयो भीमसेनो लक्ष्यते। तत्पूर्वपदस्य भीमसेनपराक्रम इत्यस्य समासस्योपमेयवाचिना पराक्रमशब्देन बहुव्रीहिः। भीमसेनपराक्रम इव दुःसहः पराक्रमो यस्येति। ततः पूर्वसमासावयवस्योत्तरपदस्य मुख्योपमानपराक्रमशब्दस्य लोप इति। तेन धर्मेवाद्युपमानानां लोपात् त्रिलोपवती समासगा। अत्रायं संग्रहः।

समासगेवादिलोपे स्यादेका वृत्तिवाक्यगे।
द्वे लोप उपमानस्य वाक्यतद्धितवृत्तिगाः॥ १॥
धर्मानुक्तौ पञ्च चैकलोपेऽष्टौ मिलिता भिदाः।
कर्माधारक्यचा कर्मकर्त्रोश्च णमुला क्विपा॥ २॥
क्यङा कर्तर्युपमितवृत्त्या चेवादिधर्मयोः।
अनुक्तौ सप्त धर्मोपमानलोपे समासगा॥ ३॥
वाक्यगा च द्विधेत्येवं द्विलोपे नव कीर्तिताः।
क्यचोपमानान्यलोपे स्यादेकान्या समासगा॥ ४॥
उपमेयान्यलोपे द्वे स्यातामेवं त्रिलोपगे।
लुप्तभेदा मिलित्वा स्युरेवमेकोनविंशतिः॥ ५॥
पूर्णाभिः सह षड्भिस्तु भेदाः स्युः पञ्चविंशतिः।
द्वे श्रौत्यौ धर्मलोपेऽन्या आर्थ्यः सप्तदश स्मृताः॥ ६॥
कुत्रचित् कर्तृणमुलि तथाचारक्विपि क्यङि।
एकलोपे विलुप्ता स्याद्धर्मोपादानसंभवात्॥ ७॥ इति।

समानधर्मोपादाने सर्वभेदसाधारणं विशेषणमाह। अथेति। द्वितीयं द्वेधा विभजति। पृथगिति। तत्राद्यं लक्षयति। एकस्येति। द्वितीयं लक्षयति। द्वयो-

१ P. has दर्शिता for एकोनविंशतिप्रकारा. २ उभयगतत्वेन च पृथगुपादानम् P., M₂. drops उभयगतत्वेन. ३ वा द्विधा T'. ४ 'क्यचौ t. ५ कर्मलोपेऽष्टौ मिलिता भिदाः।

द्वयेनाभिधानं वस्तुप्रतिवस्तुभावः । द्वयोरर्थयोर्द्विरुपादानं बिम्बप्रतिबिम्बभावः । सकृन्निर्देशो यथा ।

नृपाः प्रणतमूर्द्धानः सेवन्ते काकतीश्वरम् ।
असाधूनां विनेतारं गुरुं शिष्या इवाभितः ॥ ३६ ॥

अत्र नरेश्वराणां शिष्याणां च प्रणतमूर्द्धान इति सकृदेव साधर्म्यमुक्तम् । तथासाधूनां विनेतारमिति राज्ञो गुरोश्च तुल्यधर्मत्वं सकृदेवोक्तम् ।

## वस्तुप्रतिवस्तुभावेन द्विधा निर्देशो यथा ।

वंशोऽयं काकतीयानां वीररुद्रेण भूषितः ।
अन्ववायः ककुत्स्थानां रामेणैव परिष्कृतः ॥ ३७ ॥

अत्र भूषितपरिष्कृतशब्दाभ्यामेकार्थप्रतीतेर्वस्तुप्रतिवस्तुभावः ।

## बिम्बप्रतिबिम्बभावो यथा ।

स्फुरच्छ्वेतातपत्रश्रीः काकतीयनरेश्वरः ।
हाटकाद्रिरिवाभाति शुभ्रसंक्रान्तेन्दुमण्डलः ॥ ३८ ॥

अत्र श्वेतातपत्रचन्द्रमण्डलयोः सादृश्येन काकतीन्द्रसुवर्णाचलयोः सादृश्यमिति बिम्बप्रतिबिम्बभावः ।

---

रिति । द्वयोः सदृशयोरिति शेषः । तेन धर्मापेक्षो वस्तुप्रतिवस्तुभावः । धर्म्यपेक्षस्तु बिम्बप्रतिबिम्बभाव इति फलितम् । नृपा इति । अत्र समानधर्मस्य सकृन्निर्देशं योजयति । अत्रेति ।

द्विधा निर्देश इति । उपमानगतत्वेनोपमेयगतत्वेन चेति भावः । वंश इति । परिष्कृत इत्यत्र 'संपरिभ्यां करोतौ भूषणे' इति सुडागमे षत्वम् । अत्र संबन्धिभेदेन भूषितपरिष्कृतशब्दाभ्यां समानधर्मकथनाद्वस्तुप्रतिवस्तुभावः ।

स्फुरदिति । अत्र श्वेतातपत्रस्येन्दुमण्डलं प्रतिबिम्बतया निर्दिश्यते । काकतीन्द्रस्वर्णाचलयोः स्वरूपतः सादृश्याभावाद्विशेषणसादृश्यनिबन्धनं विशेष्यसादृश्यमिति वक्तव्यम् । स एव बिम्बप्रतिबिम्बभाव इत्याह । अत्रेति ।

---

१ नृपाः P. २ तुल्यत्वम् $M_2$. ३ सकृदेवोपात्तम् P. ४ द्विविधो $M_2$. ५ रामेणेव $M_2$. ६ For यथा T. has वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्याद् भिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभाव इत्यालंकारिकसमयः । ७ °सक्रममण्डलः $M_2$. ८ t. drops फलितम्. ९ °सुवर्णाचलयो° t.

अपरमपि द्वैविध्यमस्यालंकारस्य । समस्तवस्तुविषया एकदेशवर्त्तिनी चेति ।

यथाक्रमं द्वयोरुदाहरणम् ।

विभाति भूर्द्यौरिव काकतीन्द्र-
पुरी विराजत्यमरावतीव ।
पौराः प्रथन्ते त्रिदशा इवार्द्धिं
धत्ते मरुत्वानिव वीररुद्रः ॥ ३९ ॥

एषा **समस्तवस्तुविषया** ।

**एकदेशविवर्त्तिनी** यथा ।

द्विपैश्चरद्भिर्धरणीधरैर्वा
तुरङ्गमश्रेणिभिरूर्मिभिर्वा ।
नानायुधैर्व्यालजलग्रहैर्वा
बलं त्रिलिङ्गाधिपतेर्दुरापम् ॥ ४० ॥

अत्र त्रिलिङ्गाधिपतेर्बलं समुद्र इवेत्यर्थप्रतीतेरेकदेशविवर्त्तित्वम् ।

**मालारूपेणाप्ययमलंकारो** दृश्यते ।

यथा ।

कुन्दति कुमुदति हंसति हारति हैरति क्षपाकरति ।
कैलासति च यशःश्रीवैशद्यं वीररुद्रस्य ॥ ४१ ॥

---

प्रकारान्तरेण विभागमाह । अपरमिति । समस्तानि वस्तून्यवयव्यवयवाश्च विषया यस्याः समस्तवस्तुविषया । अवयवावयविनोरेकदेशे वर्तत इत्येकदेशवर्त्तिनी । आद्यामुदाहरति । विभातीति । मरुत्वानिन्द्रः । 'तसौ मत्वर्थे' इति भसंज्ञायां पदकार्यं न भवति । 'झय' इति मतोर्वत्वम् । इयमनेकेवोपमेति केचित् । इवशब्दान्तरप्रयोगे पौनरुक्त्यापत्तेरेकेनैवालमिति विद्याधरः ।

द्वितीयामुदाहरति । द्विपैरिति । धरणीधरैर्मैनाकादिभिः । सर्वत्र वाशब्द इवार्थे । 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' इति विश्वः । त्रिलिङ्गाधिपतेरन्ध्रदेशाधीश्वरस्य । नाटके व्युत्पादितम् ।

एकस्यैवोपमेयस्य बहूपमानोपादाने मालोपमा । तामुदाहरति । कुन्दतीति ।

---

१ अन्यद् द्वैवि° P. २ भजन्ते P. ३ P. drops हरति; $M_1$ has नीहारति. ४ सुधाकरोति $M_1$. ५ यशसां वैशद्यम् $M_1$. ६ पदकार्यं जश्त्वं P.

अत्रैकस्योपमेयस्यानेकोपमानदर्शनात् मालात्वम् । उपमायां भेदाभेदसाधारणसाधर्म्यस्य प्रयोजकत्वम् । एवं भेदान्तरं यथासंभवमुदाहार्यम् ।

अनन्वयालंकारः ।

**एकस्यैवोपमानोपमेयत्वेऽनन्वयो मतः ।**

यत्र द्वितीयसब्रह्मचारिनिवृत्त्यर्थमेकस्योपमानोपमेयभावो निबध्यते असावनन्वयालंकारः ।

यथा ।

> सन्तु लोके सुवर्णाद्रिरत्नाकरसुधाकराः ।
> तथापि वीररुद्रोऽयं वीररुद्र इव स्वयम् ॥ ४२ ॥

उपमेयोपमालंकारः ।

**पर्यायेण द्वयोस्तस्मिन्नुपमेयोपमा मता ।**

तस्मिन्नित्युपमानोपमेयत्वपरामर्शः ।

---

सब्रह्मचारे क्विप्प्रत्ययः । साधर्म्यं त्रिविधम् । भेदप्रधानमभेदप्रधानं भेदाभेदप्रधानं चेति । तत्राद्यं व्यतिरेकादौ । द्वितीयं रूपकादौ । तृतीयमत्रेत्याह । उपमायामिति । यदाह भगवान् भाष्यकारः । 'यत्र किंचित् सामान्यं कश्चिच्च विशेषस्तत्रोपमानोपमेये भवतः' इति । 'भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिः—' इत्यादिरशनोपमादिकमन्यतो द्रष्टव्यमित्याह । एवमिति ॥

भेदाभेदसाधारणसाधर्म्यमूलेषूपमानन्तरं प्रतीयमानवस्तुकयोरेकवाक्याश्रयमनन्वयं लक्षयति । एकस्येति । एकस्यैवोपमानोपमेयभावानन्वयादन्वर्थेयं संज्ञा । वाच्याभिप्रायेणोपमेयस्यैव द्वितीयसदृशनिवृत्तिलक्षणव्यङ्ग्याभिप्रायेणोपमानत्वमन्वेतीत्यभिप्रायेण व्याचष्टे । यत्र द्वितीयेति । उदाहरति । सन्त्विति । उपमानभावानर्हैः किं तैरिति भावः ॥

अनन्वयवैलक्षण्येन वाक्यभेदाश्रयमुपमेयोपमालंकारं लक्षयति । पर्यायेणेति । पर्यायो यौगपद्याभावः । द्वयोरुपमानोपमेययोः । तच्छब्दस्य प्रकृतानन्वयपरामर्शं वारयति । तस्मिन्निति । द्वयोरुपमानोपमेयभावविनिमये सत्युपमेयोपमालं-

---

१ अत्रैकदेशस्यो° M. २ °प्रधान° P. ३ °मूलम् M. ४ °सदृश° P. ५ °नोपमेयत्वपरामर्शः M. ६ कश्चित् P. ७ कश्चिच्च P. ८ °रशनोपमादित्व° P.

यथा ।

धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव स्थितः ।
कामस्ताविव तौ काम इव रुद्रनरेश्वरे ॥ ४३ ॥

स्मरणालंकारः ।

सदृशानुभवादन्यस्मृतिः स्मरणमुच्यते ।

यत्र सदृशस्य पदार्थस्यानुभवेन सदृशवस्त्वन्तरपरामर्शो जायते तत्र स्मरणालंकारः ।

यथा ।

राज्ञा प्रतापरुद्रेण पालितेयं वसुंधरा ।
हरिश्चन्द्रनलादीनां प्राचां स्मरति भूभुजाम् ॥ ४४ ॥

अत्र नलनहुषादितुल्यपालनप्रवीणतया[1] प्रतापरुद्रं रक्षितारं प्राप्तवत्याः मेदिन्याः पूर्वराजस्मरणम्[2] ।

भेदाभेदसाधारणसाधर्म्यनिबन्धनालंकाराः[3] प्रदर्शिताः ।

---

कार इत्यर्थः । उपमेयेनोपमा उपमेयोपमेत्यन्वर्थत्वम् । धर्म इति । अत्र वाक्यभेदेन द्वयोरेवोपमानोपमेयभावात् तृतीयसब्रह्मचारिनिवृत्तिलक्षणं वस्तु प्रतीयते । अत्र पूर्णश्रीरिति धर्मस्य साधारण्यं स च वस्तुप्रतिवस्तुनिर्देशेनापि दृश्यते ।

सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः ।
वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः ॥ इति ।

भेदाभेदप्रधानेषु परिशेषात् स्मरणं लक्षयति । सदृशेति । व्याचष्टे । यत्रेति । अन्यशब्दार्थमाह । सदृशवस्त्वन्तरेति । ‘ सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः ’ इति न्यायेन सदृशानुभवात् पूर्वानुभवजनितसंस्कारोद्बोधे सति सदृशवस्त्वन्तरस्मृतिः स्मरणालंकार इत्यर्थः । सादृश्यव्यतिरिक्तनिमित्तत्वेन ‘ अत्रानुगोदं मृगयानिमित्तम्—’ इत्यादौ नायमलंकारः । न चेदमनुमानम् । अविनाभावाभावात् । उदाहरति । राज्ञेति । भूभुजामित्यत्र ‘ अधीगर्थ—’ इत्यादिना कर्मणि षष्ठी ।

अथ वृत्तानुकथनपुरःसरं प्रघट्टकसङ्गतिमाह । भेदाभेदेति । आरोपगर्भा

---

१ ˚प्रवीणम् P. २ पूर्वजस्मरणम् M. ३ ˚निदर्शनालंकाराः R.

[1]संप्रत्यारोपगर्भालंकारप्रस्तावः। तत्रापि प्राधान्यात् प्रथमं रूपकं निरूप्यते।

रूपकालंकारः।

आरोपविषयस्य स्यादतिरोहितरूपिणः।
उपरञ्जकमारोप्यमाणं तद्रूपकं मतम्॥

अनारोपमूलानां चोपमादीनां व्यावृत्तिः। अतिरोहितरूपिण इत्यनेन संदेहभ्रान्तिमद[2]पह्नुतीनां च व्यावृत्तिः। [3]संदेहालंकारे विषयस्य संदिह्यमानतया तिरोधानम्। [4]भ्रान्तिमदलंकारे भ्रान्त्या विषयतिरोधानम्। अपह्नुत्यलंकारेऽपह्नवेनारोपविषयतिरोधानम्। उपरञ्जकमित्यनेन परिणामालंकारव्यावृत्तिः। [5]परिणामालंकारे आरोप्यमाणस्य प्रकृतोपयोगित्वेनान्वयो न प्रकृतोपरञ्जकत्वेन। अतः सादृश्यमूलेभ्यः स[6]र्वेभ्यो विलक्षणं रूपकम्।

तस्य प्रथमं त्रैविध्यम्। सावयवं निरवयवं परम्परितं चेति। साव-

---

अभेदप्रधाना इत्यर्थः। तेषु रूपकस्य [7]संगतिमाह। तत्रापीति। अभेदप्रधानेष्वित्यर्थः। प्राधान्यादिति। आरोपमूलालंकारबीजभूतत्वेनेति[8] भावः। तस्य लक्षणमाह। आरोपेति। [9]अन्यत्रान्यज्ञानमारोपः। तद्विषयस्य मुखादेरतिरोहितरूपिणः। अतिरस्कृतस्वरूपस्य। सर्वधनादित्वादिन् प्रत्ययः। आरोप्यमाणं चन्द्रादि। उपरञ्जकं ताद्रूप्यप्रतीतिमात्रजनकम्। आरोपस्य तावतैव चरितार्थत्वान्न पुनः परिणामवत् प्रकृतोपयोगान्तमारोपविवक्षेति भावः। यदेवंविधं तद्रूपकम्। प्रकृतमप्रकृतेन रूपवत् क्रियत इति लक्ष्यनिरुक्तिः। तदुक्तम्।

'ततो विषयिरूपेण रूपवान् विषयो यतः।
आरोपणेन क्रियते तेनैतद्रूपकं मतम्॥' इति।

विशेषणकृत्यमाह। अत्रारोपविषयस्येत्यादिना। तस्य विभागमाह। तस्य प्रथममित्यादिना। समस्तवस्तुविषयं लक्षयति। यत्रेति। आरोपविषय-

---

१ संप्रत्याहार्यारोप° P. २ °दपह्नुतिप्रमुखाणाम् P., °दपह्नुतिमूलानामेवमादीनां च M. ३ संदेहालंकारस्य P. ४ M. drops the portion from भ्रान्तिमद°—to पह्नवेनारोपविषयातिरोधानम्. ५ परिणामे R. ६ सर्वेभ्यः सादृश्यमूलेभ्यः R., M. ७ प्रसङ्गमाह L. ८ °भूतत्वादिति भावः L. ९ अन्यत्रान्यधर्मारोप आरोपः P., T.

यवं द्विविधम् । समस्तवस्तुविषयमेकदेशविवर्त्ति च । निरवयवं द्विविधम् । केवलं मालारूपं चेति । परम्परितस्यापि श्लिष्टनिबन्धनत्वेनाश्लिष्टनिबन्धनत्वेन च द्वैविध्यम् । तयोरपि प्रत्येकं केवलमालारूपतया चातुर्विध्यम् । एवमष्टविधो रूपकालंकारः ।

अथोदाहरणानि ।

यत्रावयवानामवयविनश्च सामस्त्येन निरूपणं निबध्यते तत् समस्तवस्तुविषयं रूपकम् ।

यथा ।

> यात्राप्रावृषि वीररुद्रनृपतेर्निस्साणधाराधरे
> वैरिक्ष्मापतिगर्वपर्वतभिदाभीमं मुहुर्गर्जति ।
> शत्रुस्त्रीनयनाम्बुवृष्टिरसकृज्जातानया सर्वतो
> वर्धन्ते हरिदन्तरेषु जगदानन्दा यशःकन्दलाः ॥ ४५ ॥

यत्रावयवनिरूपणादवयविनो निरूपणं गम्यते तदेकदेशविवर्त्ति रूपकम् ।

---

यदारोप्यमाणानामपि यत्र शब्देनोपादानं तत् समस्तवस्तुविषयमित्यर्थः । उदाहरति । यात्रेति । अत्र यात्राप्रावृषीत्यादावयवरूपणम् । यशःकन्दला इत्यवयविनिरूपणम् । ननु यशांसि कन्दला इवेत्युपमितसमासः प्राप्नोति यशांस्येव कन्दला इति रूपकसमासोऽपि । उभयोः साधकबाधकाभावात् संदेहसंकर एवायं तेन रूपकमेवेति कथं निर्णीयते इति चेत् सत्यम् । जगदानन्दा इति सामान्यप्रयोगान्नोपमितसमासः किं तु मयूरव्यंसकादित्वाद्रूपकसमास एव तेन रूपकमेवेदं नोपमा । एवमुत्तरत्रापि साधकबाधकयोरुद्भावनं द्रष्टव्यम् ।

एकदेशविवर्त्ति रूपकं लक्षयति । यत्रेति । उपलक्षणमेतत् । तेन यथायोगमवयवावयविनोरेकदेशस्य शाब्दत्वार्थत्वाभ्यामेकदेशविवर्त्ति रूपकमिति लक्षणं यथोदाहरणं द्रष्टव्यम् । अत एव आह काव्यप्रकाशकारः ।

'श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्त्ति तत्' इति । एकदेशे विशेषेण

---

१ माला चेति P. २ °धाराधरेवैरि P.; °धाराधरो वैरि° M. ३ यथा सर्वतो M. ४ वर्तन्ते P. ५ °प्रयोगसमवाशो° P.

यथा।

> प्रसाधिताशावलयान्तरालः
> शौर्याकरः काकतिवीररुद्रः।
> विकस्वरैर्वासनया त्रिलोकीं
> गुणप्रसूनैः सुरभीकरोति ॥ ४६ ॥

अत्रावयवानां गुणानां प्रसूनत्वनिरूपणेन नृपतेः कल्पशाखित्वं निरूप्यते। तस्मादेकदेशविवर्त्तित्वम्।

यथा वा।

> मथिताद्वैरिवाराशेर्भुजामन्दरभूभृता।
> राज्ञः प्रतापरुद्रस्य कीर्त्तिर्लोकान् धिनोत्यमून् ॥ ४७ ॥

अत्र वैरिजनस्य वारां राशित्वनिरूपणेन भुजस्य मन्दराद्रित्वनिरूपणेन च जातायाः कीर्त्तेः सुधात्वमर्थादापतति लोकानाममरत्वं चेत्येकदेशविवर्त्ति रूपकम्।

**यत्रावयवनिरूपणमात्रे कविसंरम्भविश्रान्तिस्तन्निरवयवं रूपकम्। अवयविनिरूपणमात्रेऽपि तदेव।**

---

वर्त्तनादेकदेशविवर्त्तीत्यर्थः। उदाहरति। प्रसाधितेति। प्रसाधिताशावलयान्तरालो वशीकृतदिङ्मण्डलः। विकस्वरैर्विकासिभिः। 'स्थेशभास—' इत्यादिना वरच्प्रत्ययः। अवयवरूपणादवयविरूपणं गम्यत इत्याह। अत्रेति।

उदाहरणान्तरमाह। मथितादिति। पूर्वोदाहरणे अवयवरूपणादवयविरूपणस्य गम्यत्वमत्र त्ववयवस्यापीति भेदः। 'निरकासयद्रविमपेतवसु वियदालयादपरदिग्गणिका' इत्यत्र रविशब्देन विटप्रतीतेरवयवैकदेशमात्रगम्यत्वेऽप्येकदेशविवर्त्तिरूपकत्वं द्रष्टव्यम्।

निरवयवं लक्षयति। यत्रेति। पूर्वत्रावयवमात्रेऽन्यत्रावयवान्तरे च रूपणा-

---

१ प्रासादिता° P. २ प्रसूनत्वरूपणेन T'; प्रसूनैर्निरूपणेन M. ३ °देकदेशवर्ति R.; °देकदेशवृत्ति M.; °देकदेशवर्तित्वन् M₁. ४ यथा च T'. ५ °भुंजौ मन्दरभूभृतौ M₁. ६ वाराशित्वरूपणेन T'.; वारिधरत्वरूपणेन M₁. ७ °रूपणेन T'. M₁. ८ सुधात्वरूपणम° M₁ ९ °विलम्भ° M.

तत्र केवलं यथा ।

यात्रारम्भविजृम्भमाणसुभटप्रे[1]ङ्खेडिताम्रेडितै-
निःस्साणध्वनिभिः स्फुटं प्र[2]तिदलद्रोदःकटाहान्तरैः ।
क्षुब्धेष्वब्धिषु कम्पितेषु गिरिषु श्रुत्वैव मुञ्चन्त्यसून्
भीताः काकतिवीररुद्रनृपतेः प्रत्यर्थिनः पार्थिवाः ॥ ४८ ॥

अत्र रोदसः क[3]टाहत्वं निरूप्यते ।

मालानिरवयवं यथा ।

राज्ञां मौलिविभूषणस्रगमला दिक्कुञ्जरश्रोत्रयोः
स्फारं चामरभूषणं धरणिभृच्छृङ्गेषु गङ्गासरित् ।
व्योम्नः क्षौ[4]मवितानमुज्ज्वलतरं मुक्ताकलापो भुवः
स्फो[5]रः काकतिवीररुद्रयशसां जागर्त्ति विस्फूर्जितम् ॥ ४९ ॥

रूपकहे[6]तुरूपकं परम्परितरूपकम् ।

रूपकद्वयमात्रव्य[*]वस्थितत्वान्न समस्तवस्तुविषयेऽन्तर्भावि ।

श्लिष्टकेवलपरम्परितं यथा ।

---

भावान्निरवयवमिति भावः । अत्रैकस्यारोपविषयस्यैकमेवारोप्यमाणं चेत् केवलम् । अनेकं चेद् माला चेति द्वेधा । तत्राद्यमुदाहरति । यात्रारम्भेति । प्रङ्खेडिताम्रेडितैः सिंहनादावृत्तिभिः । रोदो ब्रह्माण्डमेव कटाहः पात्रविशेषः क्षुब्धेषु क्षुभितेष्वित्यर्थः । व्याख्यातमेतद्रसप्रकरणे ।

द्वितीयमुदाहरति । राज्ञामिति । गङ्गा भागीरथी । विस्फूर्जितं विजृम्भणम् । अत्रैकस्य यशसो माल्याद्यारोप्यमाणानेकत्वान्मालानिरवयवम् ।

परम्परितं लक्षयति । रूपकेति । रूपकं हेतुर्यस्य तत् तथोक्तम् । अत एव परम्परास्य संजाता परम्परितमित्यन्वर्थम् । एकरूपकसापेक्षं रूपकं परम्परितमित्यर्थः । तेनानेकरूपकसापेक्षे समस्तवस्तुविषये नान्तर्भावोऽस्येत्याह । रूपक-

---

१ °प्रस्वेलिता° R. २ प्रविदलद्रो° T'. ३ कटाहरूपत्वम्. ४ क्षौम° M. ५ स्फारम् M. ६ °हेतुकं रूपकं परम्परितमिति बोध्यम् M₁. * °व्यवस्थितत्वादस्य T'.

प्रतापवीररुद्रस्य मण्डलाग्रविधुन्तुदः ।
अखण्डविक्रमोद्दामो ग्रसते राजमण्डलम् ॥ ५० ॥

श्लिष्टमालापरम्परितं यथा ।

पद्मोल्लाससहस्रभानुरसकृत्सन्मार्गचर्या बुधः
क्षमाभृत्पक्षभिदाशनिः कुवलयालंकारराकाशशी ।
नित्योद्यत्सुमनोविकाससुरभिः कल्याणसंपत्सुर-
क्षोणीभृद्भुवनाश्रयाम्बुधिरयं श्रीवीररुद्रो नृपः ॥ ५१ ॥

अश्लिष्टकेवलपरम्परितं यथा ।

काकतीयस्य दुग्धाब्धेर्यशो लीलामहोर्मयः ।
दिक्कूलमुद्रुजाटोपाः खेलन्त्यभ्रंकषोच्छ्रयाः ॥ ५२ ॥

---

ह्वयेति । प्रतापेति । मण्डलाग्रः खड्ग एव विधुन्तुदो राहुः । राजमण्डलं क्षत्रियसमूह एव राजमण्डलं चन्द्रबिम्बम् । अत्र मण्डलाग्रविधुन्तुद इति रूपणं राजमण्डलमेव राजमण्डलमिति श्लिष्टरूपके निमित्तमेकमेवेति श्लिष्टकेवलपरम्परितम् ।

पद्मेति । पद्माया लक्ष्म्या उल्लास एव पद्मानामुल्लासः । तत्र सहस्रभानुः सूर्यः । सन्मार्गः साधुमार्ग एव सन्मार्गो नक्षत्रमार्गः तत्र चर्यायां बुधः सौम्यः । क्ष्माभृत्पक्षो राजबलमेव क्ष्माभृत्पक्षाः । पर्वतपत्राणि तद्भिदायामशनिः कुलिशम् । कुवलयस्य भूमण्डलस्यैव कुवलयानामुत्पलानामलंकारो राकाशशी पूर्णिमाचन्द्रः । सुमनोविकासो विद्वदाह्लाद एव सुमनोविकासः पुष्पविकासः तस्य सुरभिर्वसन्तः । कल्याणसंपन्मङ्गलसंपत्तिरेव कल्याणसंपदक्षयस्वर्णसमृद्धिः । 'कल्याणमक्षयस्वर्गे कल्याणं मङ्गलेऽपि च' इति विश्वः । तस्याः सुरक्षोणीभृत् सुवर्णाचलः । भुवनं लोक एव भुवनमुदकं तदाश्रयस्याम्बुधिः । अत्र वीररुद्र एव सहस्रभानुरित्याद्यारोपपूर्वकस्य पद्मोल्लास एव पद्मोल्लास इत्यारोपस्य श्लेषनिबन्धनस्यानेकधा निबन्धनात् श्लिष्टमालापरम्परितम् ।

काकतीयस्येति । दिशां कूलमुद्रुजतीति दिक्कूलमुद्रुजः आटोपो यासां तास्तथोक्ताः दिगन्तविश्रान्तसंभ्रमा इत्यर्थः । अभ्रं कषतीत्यभ्रंकष उच्छ्रयो यासां

---

१ °विक्रमोद्दण्डो M. २ °नाश्रयोऽम्बुधि° R. ३ श्रीकाकतीयदुग्धाब्धे° P., R. ४ °मुद्रताटोपाः P. ५ खेलन्त्युच्चहल्लोलयाः P., R. ६ राजमण्डल° t. ७ पर्वतपक्षा t.

अश्लिष्टमालापरम्परितं यथा ।

दोराशीविषजिह्वया रिपुवनश्रेणीमहावात्यया
शौर्योग्रानलधूम्यया जयरमायोषाविलासभ्रुवा ।
संहृष्यद्धरणीविलासशिखिनीसंवासयष्ट्या जगत्-
प्रासादार्गलया कृपाणलतया रुद्रो नृपः क्रीडति ॥ ५३ ॥

अश्लिष्टमालापरम्परितं वैधर्म्येणापि संभवति । यथा ।

त्रासान्धकारमध्याह्नाः कैतवातपरात्रयः ।
जयन्ति वीररुद्रस्य रणप्राङ्गणकेलयः ॥ ५४ ॥

एवमष्टविधस्यापि वाक्यसमासगतत्वेन षोडशरूपकभेदाः संभवन्ति ॥

---

तास्तथोक्ताः । 'उदि कूले रुजिवहोः' 'सर्वकूलाभ्र—' इत्यादिनोभयत्र खश्-प्रत्ययः । अत्र यशोलीलानां महोर्मित्वरूपणं काकतीयस्य दुग्धार्णवत्वरूपणाधीनमित्यश्लिष्टकेवलपरम्परितम् ।

दोराशीविषेति । वातानां समूहो वात्या । धूमानां समूहो धूम्या । उभयत्र 'पाशादिभ्यो यः' इति यप्रत्ययः । विलासशिखिनी क्रीडामयूरी । अर्गला-विष्कम्भः । अत्र कृपाणलतायां जिह्वाद्यनेकरूपस्य भुजादीनामाशीविषाद्यारोपप्रतीक्षत्वादश्लिष्टमालापरम्परितम् । सर्वत्र चात्र हेतुहेतुमद्भावोऽयमलंकारसर्वस्वकारमतेनोक्तः । काव्यप्रकाशकारस्तु विपरीतमवोचत् । यदत्र युक्तं तद् ग्राह्यम् ।

व्यतिरेकेणाप्येतत् संभवतीत्याह । अश्लिष्टेति । त्रास एव अन्धकारस्तस्य मध्याह्नाः । शक्तस्य तस्य त्रासासंभवादिति भावः । कैतवं कपटमेवातपस्तस्य रात्रयः । धर्मयोधित्वात् तैस्येत्यर्थः । एतच्च मुखचन्द्र इत्यादौ समासगतं मुखमेव चन्द्र इत्यादौ वाक्यगतम् । अतः षोडशैते भेदाः । तत्रावशिष्टा भेदा अन्यतो द्रष्टव्या इत्याशयेनाह । एवमिति । आरोप्यमाणस्य धर्मित्वाल्लिङ्गसंख्ययोर्नैयत्येऽपि जटावल्कलावलम्बिनः कपिलादावमय इत्यत्रैकस्य कपिलमुनेरनेकत्वमनेकविषयारोपात् । तदुक्तमलंकारसर्वस्वे । 'अत्र चारोप्यमाणस्य धर्मित्वादाविष्टलिङ्गसंख्यानेकत्वेऽपि क्वचित् स्वतोऽसंभवत् संख्यायोगस्य विषयसंख्यानं प्रत्येकमारोपात्' इति ।

---

१ 'योषिद्विलास' R. २ भवति P. ३ 'गतत्वे M. ४ षोडश भेदा भवन्ति P. ५ ° प्रतिनिमित्तत्वाद' t. ६ तत्र युक्तं ग्राह्यम t. ७ तस्येति भावः t.

## परिणामालंकारः ।

आरोप्यमाणमारोपविषयात्मतया स्थितम् ।
प्रकृतस्योपयोगित्वात् परिणाम उदाहृतः ॥

आरोप्यमाणं प्रकृतोपयोगीत्यनेन सर्वालंकारव्यावृत्तिः । तस्य सामानाधिकरण्यवैयधिकरण्याभ्यां द्वैविध्यम् ।

सामानाधिकरण्येन परिणामो यथा ।

शश्वत् प्रसाधनविधानकृताभिलाषा
नम्रैर्भजन्ति मुकुटैरवनीपवर्गाः ।

---

रूपकालंकारात् प्रकृतोपयोगित्ववैधर्म्येण परिणामं लक्षयति । आरोप्यमाणमिति । प्रकृतस्योपयोगित्व इति विषयसप्तमी । प्रकृतोपयोगार्थमित्यर्थः । आरोप्यमाणं चन्द्रादिकम् । आरोपविषयात्मतया मुखादितादात्म्येन । मुखचन्द्रेण तापः शाम्यतीत्यत्र प्रकृतोपयोगान्तमारोपस्य विवक्षितत्वात् । वस्तुतो मुखस्यैव तापशान्तिनिमित्तत्वेन तादात्म्याभावे चन्द्रस्य प्रकृतोपयोगाभावादिति भावः । अतः प्रकृतमनपह्नुतस्वरूपमेवारोप्यमाणात्मना परिणमतीति परिणामालंकार इत्यर्थः । एवं च यत्रारोपस्य ताद्रूप्यप्रतीतिमात्रपर्यवसायितया प्रकृतमपह्नुतस्वरूपमप्रकृतरूपापन्नं भवति तस्माद्रूपकात् परिणामस्य वैलक्षण्यं दर्शितम् । तदुक्तं चक्रवर्तिना ।

'विषय्याकारमारोप्य विषयस्यगनं यदा ।
रूपकत्वं तदा तत्र रञ्जनेन समन्वयः ॥
यदा तु विषयो रूपात् स्वस्मादप्रच्युतो भवेत् ।
उपयुक्ते पराकारं परिणामस्तदा मतः ॥' इति ।

अस्य द्वैविध्यमाह । तस्येति । आद्यमुदाहरति । शश्वदिति । प्रसाधनविधानमलंकारविधिः । अत्रारोपेण प्रकृताज्ञातादात्म्यमापन्नाया अप्रकृतायाः

---

१ °मारोप्य° M. २ प्रकृतस्योपयोगी स्यात् M.; प्रकृतस्योपयोगित्वे Com. ३ °व्यवच्छेदः M. ४ प्रसाधनविधौ हि P. ५ °विषयात्मकतया p. ६ °तादात्म्येन स्थितम् । t. ७ °योगादिति भावः t. ८ यथा p.

श्रीवीररुद्रनृपतेः ककुभां विजेतु-
राज्ञामयीं स्रजममन्दविलासलक्ष्मीम् ॥ ५५ ॥

वैयधिकरण्येन परिणामो[1] यथा ।

किरीटमाणिक्यमयूखजालै-
र्विधाय पुष्पाञ्जलिमर्चयन्ते ।
फलार्थिनो रुद्रनरेन्द्रपाद-
पीठान्तसीमानमरिक्षितीशाः[2] ॥ ५६ ॥

समासोक्तावारोप्यमाणस्य प्रकृतोपयोगित्वेऽप्यवाच्यत्वान्न परिणामेऽन्तर्भावः ।

संदेहालंकारः ।

विषयो विषयी यत्र सादृश्यात् कविसंमतात् ।
संदेहगोचरौ स्यातां संदेहालंकृतिश्च सा ॥

सा त्रिविधा । शुद्धा निश्चयगर्भा निश्चयान्ता चेति ।

संदेहमात्रपर्यवसायिनी शुद्धा यथा ।

---

स्रजो मुकुटधारणात्मकप्रकृतोपयोगात् परिणामालंकारः[3] । अत्र विषयविषयिणो समानविभक्तिकत्वात् सामानाधिकरण्यम् ।

किरीटेति । अत्र च पूर्ववत् परिणाम उन्नावनीयः । किं तु मयूखजालपुष्पाञ्जलयो विषयविषयिणोर्भिन्नविभक्तिकत्वात् वैयधिकरण्यमिति विशेषः[4] । ननु प्रकृतोपयोगाविशेषात् परिणामसमासोक्त्योः को भेद इत्याशङ्क्यारोप्यमाणस्योपादानानुपादानाभ्यां भेद इत्याह । समासोक्ताविति ।

आरोपगर्भेष्वनवधारणात्मकं संदेहालंकारं लक्षयति । विषय इति । कविसंमतादित्यनेन स्थाणुर्वा पुरुषो वेति संदेहस्यालंकारता व्यावर्त्यते । वर्ण्योत्कर्षार्थं कविप्रतिभोत्थापितः प्रकृताप्रकृतगोचरः संदेहः संदेहालंकार इत्यर्थः । तस्य त्रेधा

---

१ R. omits परिणामो, R. has this verse after यथा—प्रतिभटविजयाय प्रस्थितस्याग्रयायी प्रलयदहनरूक्षो वीररुद्रप्रतापः । समजनि भुजशौर्यं वर्मखड्गः सहायः समिति विहरतस्ते साक्षिणी वीरलक्ष्मीः ॥ अत्र प्रतापभुजशौर्यादयः अग्रयायिवर्मादिरूपेण परिणमन्तः शत्रुविजयहेतौ समरकाल उपयोगमुपगताः । २ °क्षितीन्द्राः P. ३ परिणामः t. ४ °विशेषत्वे t.

किमेष नवमो हरित्पतिरमन्दसंपत्पदं
किमेष दशमः प्रजापतिरपूर्वसर्गक्रमः ।
किमेष हरिरुर्वरोद्धरणचञ्चुरेकादश-
श्चिरादिति विलोक्यते जगति वीररुद्रो जनैः ॥ ५७ ॥

निश्चयगर्भा यथा ।

कालाहिः किमयं मृणालमृदुलं भोगं स धत्ते पुनः
कालभ्रूकुटिरेष किं नु मुख एवोज्जृम्भते सा पुनः ।
कालोग्रानलधूमपद्धतिरसौ किं सा पुनर्धूयते
वातेनेति विकल्प्यते प्रतिभटै रुद्रस्य कौक्षेयकः ॥ ५८ ॥

निश्चयपर्यवसाना यथा ।

---

विभागमाह । सेति । आद्यमुदाहरति । किमिति । हरित्पतिर्लोकपालः । प्रजापतिर्ब्रह्मा । उर्वरोद्धरणचुञ्चुः क्षोणीरक्षणदक्षः । अत्र संपदादिसादृश्याद्वीररुद्रलोकपालादिकोटिद्वयगोचरस्य संदेहस्य तावन्मात्रपर्यवसायित्वाच्छुद्धोऽयं संदेहभेदः । ननु नवमादिपदविरहे केवललोकपालादीनामारोप्यमाणत्वसंभवादस्तु संदेहः । नवमादिपदप्रयोगे तु लोकपालादीनां वीररुद्रत्वेन संभावनादुत्प्रेक्षेयं न संदेह इति चेत् सत्यम्। अस्तु संभावनमारोपो वा । यत्र कोटिद्वयावलम्बित्वं तत्र संदेह एवेति स्वमतम् । एवंविधस्थले केचिदुत्प्रेक्षाश्रयः संदेह इत्याहुः । उत्प्रेक्षा एव इत्यन्य इत्यादि सर्वमलंकारसर्वस्वे स्पष्टम् ।

द्वितीयमुदाहरति । कालाहिरिति । भोगं सर्पशरीरम् । कालभ्रूकुटिरन्तकभ्रूभङ्गः । कालोग्रानलः प्रलयकालाग्निः । तस्य पद्धतिर्धूमरेखा । धूयते कम्प्यते । अत्र कौक्षेयकं कृष्णसर्पादिरूपतया संदिह्य सुकुमारशरीरादिविशेषादर्शनेन सर्पादिनिषेधनिश्चयेऽपि कौक्षेयकनिश्चयाभावान्निश्चयगर्भोऽयं संदेहः ।

---

१ °रमन्दसंपत्प्रदः M.; °रमन्दसत्त्वास्पदम् P. २ °चुञ्चु° T'.; com. ३ वा M. ४ सुकुमारादिशरी° P.

किं कल्पद्रुममञ्जरीस्रज इमे किं वा पयोराशयः[1]
स्वर्धेनोरथवा किमुज्ज्वलतराश्चिन्तामणिस्फूर्तयः ।
किं वा सिद्धरसोर्मयश्चिरमिति[2] व्यामृश्य निश्चिन्वते
सन्तः काकतिवीररुद्रनृपतेः स्मेराः कटाक्षा इति ॥ ५९ ॥

भ्रान्तिमदलंकारः ।

कविसंमतसादृश्याद्विषये पिहितात्मनि ।
आरोप्यमाणानुभवो यत्र स भ्रान्तिमान् मतः ॥

यथा ।

काकतीयविभोः कीर्तिविभवे व्याप्तरोदसि ।
दिवापि चन्द्रिकाबुद्ध्या चकोरा[3] यान्ति निर्वृतिम् ॥ ६० ॥

अपह्नवालंकारः ।

निषिध्य विषयं साम्यादन्यारोपे ह्यपह्नुतिः[4] ।

---

तृतीयमुदाहरति । किमिति । सिद्धरसोर्मयः सुधारसकल्लोलाः । व्यामृश्य कल्पद्रुममञ्जरीमाल्यादिरूपेण संदिह्य । स्मेराः स्मितप्रधानाः सानुग्रहा इत्यर्थः । कटाक्षा इति निश्चिन्वते । अत एव निश्चयान्तोऽयं संदेहः । वीररुद्रकरुणावलोकनविषयाः सर्वे समृद्धा जीवन्तीति भावः ।

अयथार्थज्ञानत्वसाधर्म्यात् संदेहानन्तरं भ्रान्तिमन्तं लक्षयति । कवीति । पिहितात्मनि आच्छादितस्वरूपे । भ्रान्तिश्चित्तधर्मोऽस्यास्तीति भ्रान्तिमान् । कविप्रतिभोत्थापितः प्राकरणिके प्रत्यप्राकरणिकत्वेनोपलम्भो भ्रान्तिमानित्यर्थः । एतेन सादृश्यमात्रनिबन्धनायाः शुक्तिरजतादिभ्रान्तेर्नालंकारत्वमिति दर्शितम् । दोषमूलायास्तु किमुतेति भावः । उदाहरति । काकतीयेति । व्याप्तरोदसि व्याप्तब्रह्माण्डे । अत्र कीर्त्यां चन्द्रिकानुभवात् भ्रान्तिः ।

सादृश्याद्वस्त्वन्तरप्रतीतिसाम्याद् भ्रान्तिमदनन्तरमपह्नुतिं लक्षयति । निषि-

---

१ पयोराशयः M. २ °रसोर्मय° P., R. ३ चकोरायन्ति वृत्तये M. ४ या स्यादन्यारोपे T.

तस्याश्चैविध्यम् । अपह्नुत्यारोपः आरोप्यापह्नवः छलादिशब्दै-रसत्यत्वप्रतिपादनं च ।

आद्यद्वयस्योदाहरणं यथा ।

उद्वेलच्चतुरर्णवीकलकलो नायं चमूडम्बरो
नेदं दुन्दुभिगर्जितं त्रिपुरजित्कल्पान्तढक्कारवः ।
इत्थं रुद्रनरेन्द्रधाटिषु महीभारावनम्रीभव-
च्छेषाशेषशिरस्सु विस्मितमथ भ्रष्टं दिगीशैरपि ॥ ६१ ॥

छलादिपदैरसत्यत्वप्रतिपादनं यथा ।

सत्यं काकतिवीररुद्रधरणीनाथच्छलेन क्षितिं
पातुं मध्यमलोकपालपदवीं प्राप्तः स्वयंभूः शिवः ।
नैवं चेद्विषमावलोकनकलामात्रेण भस्मीकृतै-
र्जातं वैरिपुरैः कथं कथमेवाग्भूतं च भूभृद्गणैः ॥ ६२ ॥

---

ध्येति । अन्यारोपे आरोप्यमाणप्रतीतावित्यर्थः । तस्याश्चैविध्यं विविनक्ति । अपह्नुत्यारोप इत्यादि । उद्वेलदित्यारोप्यापह्नवः । नेदं दुन्दुभिगर्जितमित्यपह्नुत्यारोपः । नरेन्द्रधाटिष्विति । कृदिकारः । तल्लक्षणं तु ' शत्रुदेशावमर्दाय सद्यः सुभटघोटकैः । विजिगीषोः प्रवृत्तिर्या सा धाटीति निगद्यते ॥ ' इत्याहुः ।

सत्यमिति । धरणीनाथच्छलेनेत्यत्र छलशब्देन नायं धरणीनाथः किं तु स्वयंभूः शिव इति राज्ञः सत्यत्वं प्रतिपाद्यते । तदेव समर्थ्यते । नैवमिति । विषमावलोकनं निग्रहदृष्टिः । अन्यत्र तृतीयनयनदृष्टिः । वैरिपुरैरसंख्यैः त्रिभिश्च कर्तृभिर्भस्मीभूतैः कथं जातं जज्ञे । भूभृद्गणैः राजसमूहैः । अन्यत्र भूभृता कैलासेन गणैः प्रमथैश्च कथमवाग्भूतं न्यग्भूतमित्युभयत्र भावे क्तः । ईश्वरस्य गिरीशत्वात् प्रमथाधिपत्वाच्चेति भावः ।

---

१ °पदै° P., R. २ यथा is dropped by R., T'. ३ °ढक्का° M. ४ भ्रस्तम् M. ५ °रुद्रदेवधरणी° T'. ६ °मवाग्जातम् R. ७ इत्यादिना t. ८ इत्याह t. ९ भूभृता कैलासादीनां गणैः t.

## उल्लेखालंकारः ।

अर्थयोगरुचिश्लेषैरुल्लेखनमनेकधा ।
ग्रहीतृभेदादेकस्य स[1] उल्लेखः सतां मतः ॥

रुच्यर्थयोगाभ्यां[2] यथा ।

लक्ष्मीनिवासगृहमित्यखिला नरेन्द्रा
शौर्यातिभूमिखनिरित्यरिवीरवर्गाः ।
विद्याविलासपदवीति च लब्धवर्णाः
श्रीकाकतीन्द्रनगरीमनिशं स्तुवन्ति ॥ ६३ ॥

श्लेषेण[3] यथा ।

उग्रः सपत्नेषु गुणेषु भास्वान्
रामः प्रतीकेषु रणेषु भीमः ।
लीलासु लक्ष्म्याः पुरुषोत्तमश्चे-
त्याचक्षते रुद्रनृपं कवीन्द्राः ॥ ६४ ॥

---

आरोपगर्भेषु परिशेषादुल्लेखं लक्षयति । अर्थेति । अर्थेन प्रयोजनेन योगोऽर्थित्वं लिप्सेति यावत् । रुचिरभिरतिः । श्लेषः प्रसिद्धः । एतैः समस्तैर्व्यस्तैर्वा यथायोगं ग्रहीतृगतैरेकस्य वस्तुनो नानाधर्मयोगादनेकधोल्लेखनं निर्धारणमुल्लेखालंकार इत्यर्थः । सर्वालंकारव्यावर्तकेन ग्रहीतृभेदादित्यनेन विषयभेदोऽप्युपलक्ष्यते । लक्ष्मीति । शौर्यातिभूमेः पराक्रमातिशयस्य । खनिराकरः । लब्धवर्णा विद्वांसः । अत्रैकस्याः काकतीन्द्रनगर्याः समृद्ध्यादिधर्मयोगान्नरेन्द्रादिग्रहीतृभेदेन रुच्यर्थयोगाभ्यां लक्ष्मीनिवासगृहादिरूपतयानेकधोल्लेखनादुल्लेखः ।

उग्र इति । सपत्नेषु शत्रुषु उग्रः कपर्दी क्रूरश्च । गुणेषु भास्वान् सूर्यस्तेजस्वी[4] च । प्रतीकेष्वङ्गेषु रामो दाशरथिरभिरामश्च । लक्ष्म्या लीलासु पुरुषोत्तमो विष्णुः पुरुषश्रेष्ठश्च । अत्र ग्रहीतृभेदाभावेऽपि सपत्नादिविषयभेदाच्छ्लेषेणोग्रत्वाद्यनेकधर्मोल्लेखनादुल्लेखः ।

---

१ उल्लेखश्च सतां मतः P. २ अर्थयोगाभ्याम् R. ३ श्लेषे R. ४ p. omits सूर्यः

अथाध्यवसायगर्भमलंकारद्वयं[1] निरूप्यते।

विषयविषयिणोरन्यतरनिगरणेनाभेदप्रतिपत्तिरध्यवसायः। स द्विविधः। विषयि[2]निगरणेन विषय[3]निगरणेन च।

उत्प्रेक्षा।

यत्रान्यधर्मसंबन्धादन्यत्वेनोपतर्कितम्[4]।
प्रकृतं हि भवेत् प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते॥

यत्राप्रकृतगुणक्रियासंबन्धादप्रकृतत्वेन प्रकृतस्य संभावनं सोत्प्रेक्षा। सा द्विविधा। वाच्या प्रतीयमाना च। संभावनाप्रतिपादकानां नूनं-

---

अभेदप्रतिपत्तेरविशेषेऽप्यारोपादध्यवसायस्योत्कृष्टत्वादारोपमूलानन्तरमध्यवसायमूलालंकारप्रस्ताव इत्याशयेनाह। अथेति। मूलभूतमध्यवसायं निरूपयति। विषयेति। एकतरपरिशेषो मा भूदित्यन्यथा व्याचष्टे। स द्विविध इति। निगरणमसत्यत्वमित्यर्थः। अन्यथा विषयनिगरणेनाभेदप्रतिपत्तिरध्यवसाय इति सर्वसंप्रतिपन्नेन स्वयमपि पूर्वोक्तेनाध्यवसायलक्षणेन विरोधात्। यदा विषयिणोऽसत्यत्वं तदाध्यवसायः साध्यः। यदा विषयस्यासत्यत्वं तदाध्यवसायः सिद्ध इति विवेकः। तथा हि यदा चन्द्रादिविषयिगतं माधुर्यादिकं विषयभूते मुखादावुपनिबद्धं मुखं मुखत्वेन जानन्नेव नूनमिदं चन्द्र इति प्रयुङ्क्ते तदा विषयी चन्द्रो मुखत्वेनासत्यो निगीर्णः प्रतिभाति विषयस्तु परमार्थतः सत्य एव। एवं सत्यासत्ययोरभेदप्रतिपत्तेरभावान्नूनमादिशब्दैर्विषयिणोऽपि सत्यत्वसमर्थनादध्यवसायः साध्य इत्यत्राध्यवसायप्राधान्यम्। यदा तु मुखपदमनुक्त्वा चन्द्रोऽयमिति प्रयुङ्क्ते तदा वस्तुतोऽसत्यस्यापि विषयिणः सत्यता प्रतीयते। असत्यत्वनिमित्तस्य मुखपदप्रयोगस्याभावात्। विषयस्य वस्तुतः सत्यस्यापि अत्यन्तापलापादसत्याभिमतस्य निगीर्णत्वादध्यवसायः सिद्ध इत्यत्राध्यवसितप्राधान्यमित्यादि सर्वमलंकारसर्वस्वे तद्व्याख्यायां च संजीविन्यां प्रपञ्चितम्। तत् सर्वमनेनैव गतार्थमिति नेह विस्तरः क्रियते। तत्र साध्यावध्यवसायमूलामुत्प्रेक्षां लक्षयति। यत्रेति। अन्यदप्रकृतं तस्य धर्मो गुणक्रियादिरूपः। तत्संबन्धात् प्रकृतमन्यत्वेनाप्रकृतत्वेनोपतर्कितं संभावितं यत्र भवेत् तामुत्प्रेक्षां प्रचक्षत इत्यर्थः। तदेतद् व्याचष्टे। यत्रेति। तस्या विभागमाह। सेति। वाच्यां लक्षयति। संभावनेति।

---

१ °द्वयमुच्यते M., R. २ विषय° R. ३ विषयि° R. ४ °नोपदर्शितम् P. ५ प्राज्ञस्ताम् M. ६ P. drops यत्र. ७ संभावना M. ८ तत्रोत्प्रेक्षा M.; संभावनमुत्प्रेक्षा P. ९ संभावन° P. १० °त्संभवात् t. ११ t. omits आदि.

ध्रुवं[1]प्रायइत्येवमादीनां प्रयोगे वाच्या । अप्रयोगे तु[2] प्रतीयमाना । जाति-
क्रियागुणद्रव्याणां च[3]तुर्णामध्यवसायवि[4]षयत्वे सा द्विविधा प्रत्येकं च[5]तु-
र्विधा । तेषां भावाभावरूपतया द्वैविध्येऽष्टविधा । अध्यवसायस्य गुण-
निमित्तत्वेन क्रि[6]यानिमित्तत्वेन च द्वैविध्ये प्रत्येकं षोडशप्र[7]कारा । निमि-
त्तस्य वाच्यत्वगम्यत्वाभ्यां द्वैविध्यं वाच्योत्प्रेक्षायामेव । प्रतीयमानो-
त्प्रेक्षायामिवाद्यनुपादाने निमित्तस्य चाप्रयोगे उत्प्रेक्षाया निर[8]वलम्बन-
त्वात् । तथा जात्यादीनां स्वरूपेण फलरूपेण चा[9]ध्यवसायविषयत्वे बहु-
विधत्वम् । वाच्योत्प्रेक्षायामपि हेतुफलयोरुत्प्रेक्षावि[10]षयत्वे निमित्तस्यो-
पादानमेव । तथा हि । सा[11]ध्येऽनुपात्ते साधनत्वेन निर्देशो नान्वयं
पुष्णाति । तथा साधनेऽनुपात्ते साध्यत्वेन निर्देशोऽपि । तयोरन्योन्या[12]-
पेक्षत्वात् । हेतूत्प्रेक्षायां फलं निमित्तम् । तस्यानुपादाने कं प्रति हेतुत्वं
संगच्छते । फलोत्प्रेक्षायां साधनं निमित्तम् । तस्यानुपादाने कं प्रति
फ[13]लत्वेन संघटेत ।

य[14]था ।

---

अत्रादिशब्देन मन्ये शङ्के ध्रुवमित्यादीनां ग्र[15]हणम् । जातिक्रियागुणद्रव्याणां गौश्च-
लति शुक्लो डित्थ इत्येवमादीनामध्यवसायविषयत्वेनोत्प्रेक्षाविषयत्वेन द्विविधा
वाच्या प्रतीयमाना च प्रत्येकं चतुर्विधेत्यष्टविधा जातेत्यर्थः । तेषां जात्यादीनाम् ।
अष्टविधेति । प्रत्येकमिति शेषः । निमित्तद्वैविध्येनास्या द्वात्रिंशद् भेदा भवन्ती-
त्याह । अध्यवसायस्येति । वाच्योत्प्रेक्षायां विशेषमाह । निमित्तस्येति ।
अन्यत्रैतदभावे हेतुमाह । प्रतीयमानेति ।

---

१ ध्रुवम् is dropped by R. and M. २ R. drops तु. ३ P. drops चतुर्णाम्. ४ °विषयत्वेन P. ५ चतुर्धा R. ६ हेतुक्रिया° R. ७ °प्रकाराः R. ८ निरवलम्बनत्वापातात् M. ९ वाध्यवसाय° R. १० °विषयत्वेन R. ११ यथा साध्ये T. १२ °न्यापेक्षितत्वात् M. १३ फलत्वं संघटते P.; फलत्वेन संघटते M.; फलत्वेन संघटनम् R. १४ तथा हि R. १५ संग्रहः ६.

प्रतापरुद्रनृपतेरपारे कीर्त्तिसागरे ।
मग्ना दुरीशदुष्कीर्त्तिसेङ्गादिव जगत्त्रयी ॥ ६५ ॥

अत्रोत्प्रेक्षानिमित्तस्य मज्जनस्यानुपादाने सङ्गादिति हेतूत्प्रेक्षा न शोभामावहति ।

यँथा वा ।

जयश्रीवासपद्मस्य विकासायेव भानुमान् ।
प्रतिबिम्बमिषात् खड्गं प्रविशत्यन्ध्रभूभुजः ॥ ६६ ॥

---

' महिलासहस्सभरिए तुह हिअए सुहअ सामाअन्ती ।
दिअहं अणण्णसरणा अंगं तणुअं वितणुए हि ॥ '

छाया

महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती ।
दिवसमनन्यशरणा अङ्गं तनुकं वितनुते हि ॥

इत्यत्र महिलासहस्रभरिते तव हृदये अमान्तीत्युत्प्रेक्षा प्रतीयमाना इवादिप्रयोगाभावात् । तस्यामङ्गतनूकरणं निमित्तं यदि नोपादीयेत तदा तस्या निष्प्रमाणकत्वं स्यादित्यर्थः । प्रकारान्तरेण त्रैविध्यमाह । तथा जात्यादीनामिति । यदा जातिस्वरूपमुत्प्रेक्ष्यते तदा तस्य भावाभावरूपतया द्विविधस्योपात्तगुणक्रियानिमित्तभेदाच्चातुर्विध्यम् । निमित्तानुपादाने तु तत्कृतभेदाभावात् द्वैविध्यमेव । इत्थं षोढा जातिस्वरूपोत्प्रेक्षा । एवं क्रियागुणद्रव्याणां भेदकल्पने मिलित्वा चतुर्विंशतिस्वरूपोत्प्रेक्षाभेदाः । हेतुफलोत्प्रेक्षयोर्निमित्तोपादाननियमात् प्रत्येकं चातुर्विध्यमेवेति द्वात्रिंशत् । प्रतीयमानोत्प्रेक्षायां सर्वत्र निमित्तोपादाननियमात् निमित्तानुपादाननिबन्धनभेदाष्टकन्यूनत्वेऽष्टाचत्वारिंशद्भेदाः । एवं षण्णवतिभेदा इत्याशयेनोक्तम् । बहुविधमिति । वाच्योत्प्रेक्षायामपि हेतुफलोत्प्रेक्षयोर्निमित्तोपादाननियममुदाहरणमुखेन हृदयङ्गमीकर्त्तुमारभते । तॅथाहीत्यादिना । हेतूत्प्रेक्षायां फलं निमित्तम् । फलोत्प्रेक्षायां हेतुर्निमित्तम् । एवं च निमित्तनैमित्तिकयोरन्यतरोपादानेऽन्वयपोषाभावादुभयोपादाननियमे निमित्तोपादानं नियतमेवेति भावः । प्रतापेति । अस्पृश्यस्पर्शने स्नानस्य विहितत्वादिति भावः ।

जयश्रीत्यादि । स्पष्टम् ।

---

१ °भोगादिव जगत्त्रयी R. २ यथा T.; omitted in R. and M. ३ हृदयं समीकर्तुं° t. ४ वाच्येत्यादिना.

अत्रोत्प्रेक्षानिमित्तस्य[1] भानुमत्प्रवेशस्यानुपादाने[3] जयश्रीकमलविकासायेवेति फलोत्प्रेक्षणमसमीचीनम् । अतः स्वरूपोत्प्रेक्षायामेव निमित्तस्योपादानानुपादानाभ्यां द्वैविध्यम् । अतश्चेत्थं वाच्योत्प्रेक्षाया भेदगणना । उपात्तगुणनिमित्तजातिभावस्वरूपोत्प्रेक्षा । १ । उपात्तगुणनिमित्तजात्यभावस्वरूपोत्प्रेक्षा । २ । उपात्तक्रियानिमित्तजातिभावस्वरूपोत्प्रेक्षा । ३ । उपात्तक्रियानिमित्तजात्यभावस्वरूपोत्प्रेक्षा । ४ । अनुपात्तनिमित्तजातिभावस्वरूपोत्प्रेक्षा । ५ । अनुपात्तनिमित्तजात्यभावस्वरूपोत्प्रेक्षा । ६ । उपात्तगुणनिमित्तजातिभावहेतूत्प्रेक्षा । ७ । उपात्तगुणनिमित्तजात्यभावहेतूत्प्रेक्षा । ८ । उपात्तक्रियानिमित्तजातिभावहेतूत्प्रेक्षा । ९ । उपात्तक्रियानिमित्तजात्यभावहेतूत्प्रेक्षा । १० । उपात्तगुणनिमित्तजातिभावफलोत्प्रेक्षा । ११ । उपात्तगुणनिमित्तजात्यभावफलोत्प्रेक्षा । १२ । उपात्तक्रियानिमित्तजातिभावफलोत्प्रेक्षा । १३ । उपात्तक्रियानिमित्तजात्यभावफलोत्प्रेक्षा । १४ । एवं चतुर्दश भेदा जात्युत्प्रेक्षा । अनेनैव क्रमेण गुणक्रियाद्रव्योत्प्रेक्षापि परिगणनीया । एवं च वाच्योत्प्रेक्षायाः षट्पञ्चाशद् भेदाः । प्रतीयमानोत्प्रेक्षायास्त्वष्टचत्वारिंशद् भेदाः । तत्र स्वरूपोत्प्रेक्षायामपि निमित्तोपादाननियमात् निमित्तस्य गम्यत्वे गुणरूपत्वेन क्रियारूपत्वेन च चारुत्वविशेषाभावादेक एव भेदो गण्यते । गुणक्रिययोरुत्प्रेक्षाविषयत्वमुत्प्रेक्षानिमित्तत्वं चाभ्युपगतम् । प्राचामलंकारप्रबन्धेषु षण्णवतिभेदोत्प्रेक्षेति गणनामात्रम् । चारुत्वातिशयस्तु षट्पञ्चाशत एव भेदानाम् । तत्र यथासंभवमुदाहरणानि ।

---

बुद्धिसौकर्यार्थं भेदगणनामाह । अतश्चेत्यादिना । निगदव्याख्यानमेतत् । प्रतीयमानोत्प्रेक्षाया भेदाष्टकन्यूनत्वे निमित्तमाह । अत्रेति । यथा निमित्तस्योपादाने निमित्तभेदाद्भेदस्तथानुपादाने नास्तीत्याह । निमित्तस्येति । गम्यत्वेनानुपादानादिति भावः । अत एव तत्र गुणक्रियारूपनिमित्तभेदनिबन्धनस्य विच्छित्तिविशेषस्यानुत्पन्नपुत्रनामकरणकल्पत्वात् एक एव भेदो गण्यत इत्याह ।

---

१ इत्यत्रोत्प्रे° R. २ °निमित्तभूतस्य R. ३ भानुमतः प्रवेशस्य M.; भानुमतः स्वरूपप्रवेशस्य R. ४ P. has निमित्तक for निमित्त. ५ गम्यते T. ६ षट्पञ्चाशदभेदानाम् P. ७ निमित्तयोर्द्वयोरुपादाने t. ८ °क्रियानुपादाने निमित्त° t. ९ गम्यत t.

उपात्तगुणनिमित्तजातिभावस्वरूपोत्प्रेक्षा यथा।

कीर्त्तिः काकतिवीररुद्रनृपतेः सिंहासनाध्यासिनः
प्राचां भूमिभृतां यशः पिदधती राकेन्दुतुल्यद्युतिः।
रक्षादक्षिणराजलाभजनितामन्दप्रमोदोत्थिता
त्रैलोक्याट्टहसप्रभेव ककुभां प्रान्तेषु विद्योतते ॥ ६७ ॥

अत्र प्रभाशब्दो जातिवचनः। त्रैलोक्याट्टहसप्रभायाः कविप्रौढोक्तिसिद्धत्वान्नोपमाशङ्का।

उपात्तक्रियानिमित्तजातिभावस्वरूपोत्प्रेक्षा यथा।

वीरस्य रुद्रनृपतेः प्रियवल्लभस्य
राज्याभिषेकसलिलैः सरसीकृतायाः।
सद्यः समुच्छलितसान्द्रपरागरेखा-
क्षोण्याः प्रमोदपुलकाङ्कुरमञ्जरीव ॥ ६८ ॥

अत्र पुलकाङ्कुरमञ्जरीवेत्युत्प्रेक्षायां सरसीकरणं क्रियारूपं निमित्तम्।

---

गुणरूपत्वेनेत्यादि। गुणक्रिययोरिति। न तु जातिद्रव्ययोरिव केवलोत्प्रेक्षाविषयत्वमिति भावः। यथायोगमुदाहरति। कीर्त्तिरित्यादि। पिदधती आच्छादयन्ती। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः। अट्टहसोऽट्टहासः। 'स्वनहसोर्वा' इति पाक्षिकोऽप्प्रत्ययः। एषा प्रमोदगुणनिमित्ता जातिभावस्वरूपोत्प्रेक्षा। अत्राट्टहासप्रभायाः स्वतःसिद्धत्वेऽपि त्रिलोक्यसंबन्धित्वेन कविकल्पितत्वात् नोपमावकाश इत्याह। त्रैलोक्येति। अत एवात्रेवशब्दोऽपि संभावनावाचको नोपमावाचकः। तदुक्तं चक्रवर्त्तिना।

'यदायमुपमानांशो लोकतः सिद्धिमृच्छति।
तदोपमैव येनेवशब्दः साधर्म्यसूचकः ॥
यदा पुनरयं लोकादसिद्धेः कविकल्पितः।
तदोत्प्रेक्षैव येनेवशब्दः संभावनापरः ॥' इति।

वीरस्येति। प्रिया वल्लभा प्रेयसी यस्य प्रियवल्लभस्य। पुलकमञ्जरीवेत्युत्प्रेक्षायामिति। जातिभावस्वरूपोत्प्रेक्षायामित्यर्थः। क्रियारूपमिति। निमित्तमिति शेषः।

---

१ °भुजाम् R. २ यशोऽपिदधती P. ३ कोटीषु° P., M., R. ४ °शङ्कानवकाशः M., T. ५ प्रियमादधानैः T. ६ °मुपमानार्थो ६. ७ °मिच्छति ६.

अनुपात्तनिमित्तजातिभावस्वरूपोत्प्रेक्षा यथा ।

> प्रतापरुद्रस्य नखेन्दुकान्तिः
> प्रणामभाजां पदयोर्नृपाणाम् ।
> ललाटलग्ना विधिनिर्मितायाः
> वर्णावलेर्वाचनदीपिकेव ॥ ६९ ॥

अत्र दीपिकेवेति [1]जातिवचनाज्[2]जातिरुत्प्रेक्ष्यते ।

उपात्तगुणनिमित्तजात्यभावस्वरूपोत्प्रेक्षा यथा ।

> प्रतापरुद्रस्य गुणामृतोर्मि-
> धौता विराजन्त्यमलीकृताङ्गाः ।
> प्रक्षालितात्युद्धतभूमिपाला
> खड्गाम्बुभिः [3]स्वच्छतरा भवन्ति[4] ॥ ७० ॥

अनुपात्तनिमित्तजा[5]त्यभावस्वरूपोत्प्रेक्षा यथा ।

> दिशां जेतुर्विश्व[6]प्रथितमहसो रुद्रनृपते-
> र्जयप्रस्थानोद्यत्करितुरगसंमर्दजनितम् ।
> र[7]जः कृत्वा ग्रस्तप्रतिबलमसूर्यामिव दिवं
> प्रतापाख्यानन्यान् दिशि दिशि विधत्ते दिनकरान् ॥ ७१ ॥

अत्रासूर्यामिति जात्यभावः ।

[8]जातिहेतूत्प्रेक्षा यथा ।

---

प्रतापरुद्रस्येति । अत्र वाचनदीपिकेवेति जातिभावस्वरूपोत्प्रेक्षायां निमित्तं नोपात्तम् ।

दिशामिति । रजः कर्तृ । दिवमसूर्यामिव कृत्वेत्यत्र जात्यभावस्वरूपोत्प्रेक्षा अनुपात्तनिमित्ता ।

---

१ जातिवचनात् is omitted in P. २ जातिरुत्प्रेक्षा M. ३ संयाति वीरवर्याः M. ४ After this M. has अत्र भूमिपाला इति जात्यभावः । ५ जात्यभावोत्प्रेक्षा M. ६ °प्रसृत° T. ७ रजश्छिन्नं कृत्वा प्रति° R. ८ M. has उपात्तक्रियानिमित्तजातिहेतूत्प्रेक्षा and similar whole expressions further on.

उदारकीर्त्या भुजया प्रताप-<br>
  रुद्रस्य विश्वैकधुरंधरस्य।<br>
विश्वंभरा कोमलशय्ययेव<br>
  विस्मारिता गोत्रमहीध्रवासम्॥ ७२॥

अत्र शय्ययेवेति जातिहेतुत्वम्।

जात्यभावहेतूत्प्रेक्षा यथा।

भूमेरकल्पवृक्षत्वादिति धाता विचिन्तयन्।<br>
सृष्टवान् काकतीशानां निर्व्याजत्यागवैभवम्॥ ७३॥

अत्राकल्पवृक्षत्वादिति जात्यभावस्य हेतुत्वम्।

जातिफलोत्प्रेक्षा यथा।

नूनं विश्वंभराभारस्तम्भीभवितुमायतौ।<br>
वीररुद्रनरेन्द्रस्य भुजावाजानुलम्बिनौ॥ ७४॥

अत्र स्तम्भीभवितुमिति जातेः फलत्वम्।

जात्यभावफलोत्प्रेक्षा यथा।

---

उदारेति। उदाररीत्या उदारस्वभावया। गोत्रमहीध्रवासं कुलपर्वतनिवासम्। विस्मारितेति। 'गतिबुद्धि—' इत्यादिना अण्यन्तकर्त्र्या विश्वंभरायाः कर्मत्वं तस्मिन्नभिधेये कर्मणि क्तः। 'ण्यन्ते कर्तुश्च कर्मणः' इति वचनात्। अत्र शय्ययेवेति जातिभावहेतूत्प्रेक्षायाः पर्वतनिवासविस्मरणं निमित्तम्।

भूमेरिति। निर्व्याजं निरुपाधिकं त्यागवैभवमौदार्यातिशयो यस्य तं तथोक्तम्। काकतीशानं सृष्टवानिति फलं प्रत्यकल्पवृक्षत्वादिवेति जात्यभावहेतूत्प्रेक्षा।

नूनमिति। भुजयोराजानुलम्बित्वं पुरुषस्य भाग्यलक्षणम्। तदुक्तं नाटके तृतीयेऽङ्के। अत्राधारस्तम्भीभवितुमिति जातिभावफलोत्प्रेक्षायामायतत्वगुणो निमित्तम्।

---

१ °रीत्या R. M., Com. २ °महीध्रवासम् R. ३ °वं तत्त्यागवैभवम् M. ४ °मायतौ P. ५ जातिफलाभावोत्प्रेक्षा R. ६ फलं निमित्तम् L.

पशूनवध्यानालोक्य शत्रवः काकतीशितुः ।
प्रायेणामानुषत्वाय तृणवृत्तिं समाश्रिताः ॥ ७५ ॥

[1]अत्रामानुषत्वायेति जात्यभावस्य फलत्वम् ।

क्रियास्वरूपोत्प्रेक्षा यथा ।

श्रीकाकतीयनृपतेर्[2]द्विषदङ्गनानां
श्वासोर्मिभिः सपदि मर्मरितान्तरालाः ।
तासां नि[3]वासविधये कृतयाचनानां
प्रत्युत्तराणि दधतीव मरोर्वनान्ताः ॥ ७६ ॥

क्रियाभावस्वरूपोत्प्रेक्षा यथा ।

विमुखे सति काकतिक्षितीन्द्रे
वनसीमापि कठोरकण्टकाग्रा ।
चि[4]कुरेषु विकर्षति प्रतीशा-
नददानेव निजान्तरप्रवेशम् ॥ ७७ ॥

अत्राददानेति क्रि[5]याभावः ।

क्रियाहेतूत्प्रेक्षा यथा ।

---

पशूनिति । अत्रामानुषत्वायेति जात्यभावफलोत्प्रेक्षायां तृणवृत्तिसमाश्रयण-क्रिया निमित्तम् । एवमुत्तरत्रापि तादर्थ्यप्रतिपादकचतुर्थ्यादिश्रवणे फलत्वम् । तृतीयादिविभक्त्या सामर्थ्येन वा हेतुत्वं चेत्यादिकमूहनीयम् ।

श्रीकाकतीयेति । मर्मरः पर्णध्वनिः । 'अथ मर्मरः । स्वनिते वस्त्रपर्णानाम्' इत्यमरः । तद्वन्ति कृतान्यन्तरालानि येषां ते तथोक्ता इति गुणनिमित्तकथनं दानोत्प्रेक्षायाम् ।

विमुख इति । प्रतीशान् प्रत्यर्थिभूपान् । चिकुरेषु केशेषु । निमित्तात् कर्म-संयोगे सप्तमी । विकर्षतीति क्रियादानाभावोत्प्रेक्षायां निमित्तम् । एवं निमि-त्तानुपादानेऽप्युदाहार्यम् ।

---

१ P. drops this sentence, so does M. २ °नृपतिद्विष° P. ३ निवासविषये M. ४ चिकुरे प्रविकर्षति प्रतीशा° M.; चिकुरेषु विकर्षते प्रतीपा° P. ५ क्रियाया अभावः R., M.; क्रियास्वरूपाभावः T'.

राज्ञां गर्वाङ्कुरोद्भेदाः परिम्लाना दिने दिने ।
काकतीन्द्रप्रतापार्कतीव्रोष्माभिभवादिव ॥ ७८ ॥

अत्राभिभवादिति क्रियाहेतुत्वम् ।

क्रियाभावहेतूत्प्रेक्षा[1] यथा ।

कपोलफलकावस्याः कथं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृशीं[2] क्षामतां गतौ ॥ ७९ ॥

क्रियाफलोत्प्रेक्षा यथा ।

दम्भोलिसंरम्भमहाजिगोपः[3]
प्रस्थानभेरीनिनदोऽन्ध्रभर्तुः ।
लीनानिवान्वेष्टुमरातिवर्गान्
विगाहते शैलगुहान्तराणि ॥ ८० ॥

क्रियाभावफलोत्प्रेक्षा यथा ।

सीमाद्रिकुञ्जेषु[4] विहारभाजः
सिद्धाङ्गनाकल्पितचन्द्रिकार्घान्[5] ।

---

राज्ञामिति । परिम्लानत्वमुत्प्रेक्षाफलम् । क्रियाहेत्वभावोत्प्रेक्षायाः प्रतिज्ञामात्रमेव नोदाहरणमत्र दृश्यत इत्यन्यतो लिख्यते ।

कपालफलकावस्याः कथं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृशीं क्षामतां गतौ ॥

इति । अत्र दर्शनक्रियाहेत्वभावोत्प्रेक्षा क्षामतागमननिमित्ता ।

दम्भोलीति । महाजिर्महायुद्धमन्याभिभव इति यावत् । दम्भोलिसंरम्भमेव महाजिं गोपयत्याच्छादयतीति तथोक्तः तिरस्कृताशनिध्वनिरित्यर्थः । अन्वेष्टुमिवेति । अन्वेषणक्रियाफलोत्प्रेक्षा गुहान्तरगहनक्रियानिमित्ता ।

सीमाद्रीति । सीमाद्रिर्लोकालोकः । कल्पितश्चन्द्रिकाया इवार्घः पूजावि-

---

१ क्रियाहेतुत्वाभावो° R.; क्रियाहेत्वभावो° T. Com. notices the omission of this kind of उत्प्रेक्षा. २ °मीदृशाम् P. ३ °गोपः P., R. ४ हेमाद्रि° P., M. ५ चन्द्रिकार्घान् P.; चन्द्रिकोघान् M.

श्रीवीररुद्रस्य यशोविलासान्
गायन्त्यसंस्पृष्टुमिवान्धकारम् ॥ ८१ ॥

अत्रासंस्पृष्टुमिति क्रियाभावस्य फलत्वम् ।

गुणस्वरूपोत्प्रेक्षा यथा ।

चकास्ति काकतीन्द्रस्य कृपालोकनविभ्रमः[1] ।
प्रकृतिष्वपि सर्वासु प्रसाद इव मूर्त्तिमान् ॥ ८२ ॥

गुणाभावस्वरूपोत्प्रेक्षा यथा ।

प्रतापरुद्रस्य महाभिषेक-
पयःकणैः शीतलिताखिलाङ्गा[2] ।
प्रशान्त[3]भारार्त्तफणीन्द्रगाढ-
श्वासानिलोष्मेव विभाति पृथ्वी ॥ ८३ ॥

अत्र प्रशान्तोष्मेति गुणाभावः ।

गुणहेतूत्प्रेक्षा यथा ।

जयश्रियामाश्रयतामुपैति[4]
श्रीवीररुद्रस्य रणे[5] कृपाणः ।
जयश्रियं[6] वैरिमहीपतीनां
समुत्सुको हर्त्तुमसूययेव ॥ ८४ ॥

अत्रासूययेवेति गुणहेतुत्वम्[7] ।

गुणाभावहेतूत्प्रेक्षा[8] यथा ।

---

धिर्येषां तान् तथोक्तान् चन्द्रिकासदृशानित्यर्थः । यशोगानस्यान्धकारासंस्पर्शः फलम् ।

चकास्तीति । प्रकृतिषु प्रजासु प्रसादगुणस्य मूर्त्तिमद्विशेषणादुत्प्रेक्षालाभः । निमित्तमत्र नोक्तम् ।

प्रतापेति । अन्यत्र धर्मिणि धर्म्यन्तरोत्प्रेक्षा । अत्र भूरूपे धर्मिण्यूष्मप्रशान्तिलक्षणो धर्म उत्प्रेक्ष्यते तत्र शीतलाङ्गत्वं निमित्तमुपात्तम् ।

जयेति । विशिष्टवस्तुसंग्रहो[9] लेशतोऽपि तस्यान्यत्रावस्थानं न सहत इति भावः । अत एवोपात्तनिमित्तेयं गुणहेतूत्प्रेक्षा ।

---

१ °संभ्रमः R. २ °खिलाङ्गी R. ३ प्रशान्त° R. ४ °मुपैतः R. ५ करे P., R. ६ आयुःस्थिति वैरि° M. ७ गुणस्य हेतुत्वम् R. ८ गुणहेत्वभावोत्प्रेक्षा R. ९ °संग्रहो ६.

> जाता वयं संप्रति वीररुद्र-
> नरेन्द्रगम्भीरिमगुल्फदघ्नाः ।
> इत्यप्रमोदादिव जीवनेषु
> मालिन्यमम्भोनिधयो भजन्ते ॥ ८५ ॥

अत्राप्रमोदादिवेति गुणाभावस्य हेतुत्वम्[1] ।

गुणफलोत्प्रेक्षा यथा ।

> आशिषां विषधूम्राणां नैर्मल्यार्थमिवोत्सुकाः ।
> भुजङ्ग्यः काकतीन्द्रस्य गुणान् गातुं सुधामुचः ॥ ८६ ॥

अत्र नैर्मल्यार्थमिति गुणस्य फलत्वम् ।

गुणाभावफलोत्प्रेक्षा[2] यथा ।

> अरण्यवासोचित[3]बान्धवासु
> मृगीष्ववैरार्थमिवाशरण्याः ।
> त्रिलिङ्गदेशेश्वरवैरिनार्यः
> पराङ्मुखा लोचनविभ्रमेषु[4] ॥ ८७ ॥

---

जाता इति । पार्श्वनिस्सृतौ पादग्रन्थी गुल्फौ तद्दघ्नास्तत्प्रमाणाः । 'प्रमाणे द्वयसच्—' इत्यादिना दघ्नच्प्रत्ययः । नरेन्द्रगम्भीरिम्णो गुल्फदघ्नाः तदपेक्षयातिस्वल्पगाम्भीर्या इत्यर्थः । जीवनेषूदकेषु वृत्तिषु च मालिन्यं कार्ष्ण्यं क्लिष्टत्वं च भजन्ते । अत्राप्रमोदादिवेति गुणहेत्वभावोत्प्रेक्षाया न श्लेषो बाधकः किं त्वङ्गमेव । तदुक्तं रुच्यकेन । 'एषार्थाश्रयापि धर्मविषये श्लिष्टशब्दहेतुका क्वचिद् दृश्यते'[5] इति । चक्रवर्तिनाप्युक्तम् । 'क्वचिच्छ्लेषेण धर्मांशगतेनैषा न बाध्यते' इति ।

आशिषामिति । विषधूम्राणां विषमलिनानामाशिषां दंष्ट्राणाम् । 'आशीस्तु गदंष्ट्रायाम्' इति विश्वः । गुणगाननिमित्तां गुणभावफलोत्प्रेक्षां योजयति । अत्रेति ।

अरण्येति । शरणे रक्षणे साधुः शरण्यः । तद्रहिता अशरण्याः अनाथा

---

१ गुणफलत्वम् P. २ गुणफलाभावो' R. ३ 'वासार्जित' M. ४ लोकनविभ्रमेषु P.
५ श्लेषाश्रयामपि धर्मविषयं श्लिष्टशब्दहेतुत्वं क्वचित् दृश्यते ६.

अत्रावैरार्थमिति गुणाभावस्य फलत्वम् ।

द्रव्यस्वरूपोत्प्रेक्षा यथा ।

> न नित्यमस्मिन् परिपूर्णतेति[1]
> त्यक्त्वा नभः क्षोणितलावतीर्णः ।
> आनन्दयन्निन्दुरिव स्वधाम्ना
> विभाति लोके नवकाकतीन्द्रः ॥ ८८ ॥

द्रव्यस्वरूपाभावोत्प्रेक्षा यथा ।

> अनन्यसाधारणदानशौण्डे
> सद्यःकृतार्थीभवदर्थिसार्थे ।
> श्रीकाकतीन्द्रे भुवि राजमाने
> द्यौः पारिजातेन विनाकृतेव ॥ ८९ ॥

अत्र दिवः पारिजाताभाव उत्प्रेक्ष्यः[2] ।

द्रव्यहेतूत्प्रेक्षा यथा ।

---

इत्यर्थः । अवैरार्थमिवेति । विलासविमुखा मृगाङ्गना विलासिनीर्विलोक्य वैरायन्ते तन्निषेधार्थमिवेत्यर्थः । विभ्रमविमुखत्वमत्र निमित्तम् ।

नेति । अस्मिन् नभसि नवो गुणैरपूर्वः काकतीन्द्रः । अत्रेन्दोः क्षोणितलावतीर्णस्य कविकल्पितत्वादुत्प्रेक्षाविषयत्वमेकत्वाद् द्रव्यत्वं च ।

अनन्येति । दानशौण्डो बहुप्रदः । 'स्युर्वदान्यः स्थूललक्षदानशौण्डा बहुप्रदे' इत्यमरः । अस्यानन्यसाधारणत्वमर्थाद् दान इति लभ्यते । उभयोः खञ्जकुब्जादिवद्विशेषणसमासः । यद्वा तादृशदाने शौण्डो[3] मत्तः निःसीमवितरणे[4] निर्विचार इत्यर्थः । पारिजातस्तावदेक एव तस्य राजरूपतया भूलोके वर्तमानत्वात् कुतो दिवः पारिजात इति भावः ।

---

१ परिपूर्णिमेति M. २ R. omits उत्प्रेक्ष्यः; M. has पारिजाताभावाद्युत्प्रेक्ष्यः. ३ शौण्डो-द्यमः L. ४ दक्षिण इत्यर्थः L.

प्रतापरुद्रदेवेन क्ष्माभृत्पक्षविजृम्भितम् ।
समुन्मूलितमामूलादपरेणेव वज्रिणा ॥ ९० ॥

[1]द्रव्याभावहेतूत्प्रेक्षा यथा ।

काकतीयप्रतापोष्मविलीनाङ्गेन[2] मेरुणा ।
असुवर्णाचलेनेव विरिञ्चिर्व्याकुलीकृतः ॥ ९१ ॥

अत्रासुवर्णाचलेनेति हेत्वभावः ।

द्रव्यफलोत्प्रेक्षा यथा ।

दुग्धार्णवशतायेव कैलासाचलकोटये[3] ।
नूनं प्रतापरुद्रेण यशो दिक्षु प्रसारितम् ॥ ९२ ॥

अत्र दुग्धार्णवशतायेति फलत्वम्[4] ।

[5]द्रव्याभावफलत्वोत्प्रेक्षा यथा ।

---

प्रतापेति । क्ष्माभृत्पक्षविजृम्भितं वैरिभूपालबलविजृम्भणमन्यत्रपर्वतपक्षविजृम्भणम् । अत एवापरेणेव वज्रिणेति श्लेषाङ्गा द्रव्यहेतूत्प्रेक्षा । अत्रापरशब्दाप्रयोगे शब्दमात्रसाधर्म्याच्छ्लेष एव स्यात् । अथ सामर्थ्ये त्विन्द्रस्य सिद्धतया प्रतीतेरुपमैव । तत्प्रयोगे तु प्रकृतो राजैवापरवज्रित्वेनाध्यवसीयते तस्येवशब्देन साध्यत्वात् प्रतीतावप्युत्प्रेक्षैव । इवशब्दाप्रयोगे तु सिद्धत्वादध्यवसायस्यातिशयोक्तिः । इवापरशब्दयोरुभयोरप्यप्रयोगे रूपकमित्यादिविशेषा यथासंभवमूहनीयाः ।

काकतीयेति । [6]विलीनाङ्गेन द्रवीभूतावयवेन असुवर्णाचलेन सुवर्णाभावेनेत्यर्थः । अत्राभाववाचिनो नञः क्रियासापेक्षत्वेनासमर्थस्यापि 'सुडनपुंसकस्य' इति ज्ञापकात् क्वचित् समास इष्यते । यदाह कैयटः । 'असमर्थनञ्समासस्य क्वचित् साधुत्वज्ञापनायानपुंसकस्येति प्रसज्यप्रतिषेध आश्रीयते' इति ।

दुग्धार्णवेति । नूनमित्येतत् द्वितीयोत्प्रेक्षासाधकम् ।

---

१ द्रव्यहेत्वभावोत्प्रेक्षा R., T. २ °मलिनाङ्गेन T. ३ कैलासशतकोटये P. ४ द्रव्यस्य फलत्वम् T. ५ द्रव्यफलाभावोत्प्रेक्षा R.; क्वाचद्रव्यफलाभावोत्प्रेक्षा M. ६ विलीनाङ्गत्वेन P.

वीररुद्रनरेन्द्रस्य जयप्रस्थानसंभवम् ।
रजः पिहितदि[1]ग्गोलं निराकाशमिव[2] स्थितम् ॥ ९३ ॥

अत्र निराकाशमित्या[3]काशाभावाय इत्यर्थः ।

एवं भेदान्तरं यथासंभवमुदाहार्य्यम् ।

## इ[4]त्यौपम्यगर्भालंकारवि[5]वेकः ।

### अतिशयोक्त्यलंकारः ।

विषयस्यानुपादानाद्विषय्युपनिबध्यते ।
यत्र सातिशयोक्तिः स्यात् कविप्रौढोक्तिजीवि[6]ता ॥

य[7]त्र कविप्रौढोक्त्या विषयतिरोधानेन विषयी निबध्यते सातिशयोक्तिः। तस्याश्चातुर्विध्यम् । भेदेऽभेदः । अभेदे भेदः । संबन्धेऽसंबन्धः । असंबन्धे

---

वीररुद्रेति । आकाशस्याभावो निराकाशम् । अर्थाभावेऽव्ययीभावः । ततश्चतुर्थ्यां 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः' इत्यम्भावः 'कस्तूरीति[8]लककान्ति भालफलके देव्या मुखाम्भोरुहे' इत्यादावुपमोपक्रमोत्प्रेक्षा । 'यत्रोल्लसत्फेनततिच्छलेन मुक्ताट्टहासेव विभाति शिप्रा' इत्यादौ सापह्नवोत्प्रेक्षेत्यादिकं तु स्वयमूहनीयमित्याह । एवमिति ।

इत्थं साध्याध्यवसायमूलामुत्प्रेक्षां निर्णीय सिद्धाध्यवसायमूलामतिशयोक्तिं लक्षयति । विषयस्येति । यत्र विषय्यप्रकृतश्चन्द्रादिरुपनिबध्यते प्राधान्येनेति शेषः । कुतः । विषयस्य प्रकृतस्य मुखादेरनुपादानात् विषयिणा निगीर्णत्वादित्यर्थः । इदमत्रानुसंधेयम् । अध्यवसाये त्रयं संभवति । विषयो विषयी अध्यवसानव्यापारात्मकं स्वरूपं च । तत्र विषयस्य निगीर्णत्वेन स्वरूपप्रतिपत्तेरेवाभावादध्यवसाये न कुत्रापि प्राधान्यशङ्कावकाशः । नूनमादिशब्दैरध्यवसायेन व्यापारप्राधान्ये तूत्प्रेक्षा दर्शिता । नूनमादिशब्दाप्रयोगे विषयिण एव प्राधान्येऽध्यवसायस्य सिद्धत्वादतिशयोक्तिरिति । अत एवोक्तं रु[9]च्यकेन । 'अध्यवसितप्राधान्ये त्वतिशयोक्तिः' इति । इदं रजतमित्यस्यातिशयोक्तिता मा भूदित्युक्तम् । कविप्रौढोक्तिजीवितेति । विभागमाह । तस्या इति । ननु प[10]ञ्च-

---

१ °दिक्कालम् R. २ °मिवोत्थितम् R. ३ °त्याकाशाभाव इत्यर्थः P., R. ४ इति महामहोपाध्यायविद्यानाथकृतावलंकारशास्त्रे औपम्यगर्भालंकारः । R., M. ५ °विवेचनम् T. ६ °जीवितम् P., R. ७ P. drops the portion from यत्र कवि° to °शयोक्तिः. ८ °तिलकं ललाटफलके t. ९ t. drops रुच्यकेन. १० पञ्चमस्याप्य° t.

संबन्धश्चेति। कार्यकारणयोः पौर्वापर्यविपर्ययरूपा त्वनध्यवसायमूलत्वाद्व्यतिरिक्तैव। किं तु प्रौढोक्तिमूलत्वादतिशयोक्तिरिति कथ्यते।

तत्र भेदेऽभेदो यथा।

> स्थाने कल्पतरुर्जातः काकतीयमहोदधेः।
> लक्ष्मीपतिरसौ चित्रं मर्त्यरूपमहोत्सवः॥ ९४॥

अत्र प्रतापरुद्रकल्पवृक्षयोरभेदाध्यवसायः।

अभेदे भेदो यथा।

> औन्नत्यं महदन्यदेव महितः कोऽप्येष गम्भीरिमा
> काप्यन्या सरणिः प्रतापयशसोरन्यैव बाह्वोः प्रथा।
> सर्वं नूतनमेव रुद्रनृपतेर्जाने न तन्निर्मितौ
> सामग्री चतुराननेन कियती कीदृक्क्रमा कल्पिता॥ ९५॥

अत्रौन्नत्यादेर्वास्तवभेदाभावेऽपि भेदः कल्पितः। स्वतःसिद्धकविप्रौढोक्तिसिद्धयोरौन्नत्ययोरभेदेपि भेदाध्यवसायः।

---

मत्वातिशयोक्तिभेदस्य संभवात् कथं चातुर्विध्यमित्याशङ्क्याह। कार्यकारणयोरिति। काव्यप्रकाशकारोक्तवैषम्यं त्वस्मदुपाध्यायैरेकावलीतरले समाहितमिति नेह प्रपञ्च्यते। क्रमेणोदाहरति। स्थान इति। कल्पतरोरुदधेरुत्पत्तिरुचिता किं तु लक्ष्मीसोदरस्यामर्त्योपयोगिनस्तस्येदमद्भुतमिति भावः।

औन्नत्यमिति। व्याख्यातमेतत्। अत्र राजमेर्वादिसंबन्धिनोरौन्नत्ययोर्वास्तवाभेदेऽप्यन्यदेवेत्यादिना काल्पनिको भेदः प्रतिपाद्यत इत्याह। अत्रेति। तस्मिन् भेदे नाध्यवसायलक्षणानुगतिरित आह। स्वत इति। स्वतः सिद्धं यदौन्नत्यं तदेवान्यदेवेति कविप्रौढोक्त्या सातिशयम्। अतः स्वतःसिद्धप्रौढोक्तिसिद्ध-

---

१ °मूला R.; °रूपत्वेऽनध्यवसायमूलोक्तिस्तदव्याप्ति° P. २ कविप्रौढोक्ति° R. ३ °कुलोदधेः T. ४ चित्रं मर्त्यमहोत्सवः R.; मर्त्यरूपो महोत्सवः M. ५ °वास्तवाभेदेऽपि भेदः कथितः। ततः स्वतःसिद्ध° M.; for the whole prose passage P. has °वास्तवाभेदेऽपि भेदाध्यवसायः। ६ °सिद्धयोरभेदाध्यवसायः M. ७ °रौन्नत्ययोर्भेदेऽप्यभेदाध्यवसायः T. ८ I. drops अतः.

संबन्धेऽसंबन्धो यथा ।

> शिला चिन्तारत्नं तरुरमरशाखी पशुरसौ
> वियद्धेनुः सर्वं जगदपि तथा दोषविधुरम् ।
> न सृष्टिर्वैधात्री तदिह चतुरश्रीः कथमियं
> स्पृशेद्देवं रुद्रं सकल[1]गुणसाम्राज्यनिलयम् ॥ ९६ ॥

अत्र[2] विधातृसृष्टिसंबन्धेऽप्यसंबन्ध उक्तः । अतीतब्रह्मसृष्टिनेश्वरेणात्राभेदाध्यवसायः ।

असंबन्धे संबन्धो यथा ।

> ब्रह्मन् मेरुगिरौ कृतेऽपि किमिदं नैवंविधास्ते मुदः
> स्वामिन् सत्यमधिक्रियाद्य फलिता यद्वीरभद्रः कृतः ।

---

योरौन्नत्ययोः फलरूपयोर्भेदेऽप्यभेदाध्यवसायो न पुनः फलिनोस्तयोर्वास्तवभेदे सत्यभेदाध्यवसायकल्पनायोगात् । तदुक्तं चक्रवर्तिना ।

> ' अभेदाध्यवसायो हि फलेऽतिशयनादिह ।
> न पुनः फलिनोस्तत्र भेदेऽभेदो न सिध्यति ॥ ' इति ।

किं च प्रथमोदाहरणेऽपि स्वतःसिद्धप्रौढोक्तिसिद्धवदान्यत्वयोरेवाभेदाध्यवसायो न राजकल्पवृक्षयोः । अन्यथैकत्र फलयोरध्यवसायोऽन्यत्र फलिनोरिति वैरूप्यप्रसङ्गात् । एवं च प्रतापरुद्रकल्पवृक्षयोरभेदाध्यवसाय इति यत् पूर्वमुक्तं तत् फलगताभेदाध्यवसायविषयमिति द्रष्टव्यम् ।

शिलेति । यथा चिन्तारत्नादिकं शिलात्वादिदोषदुष्टं तथा सर्वमपि जगदिति दुष्टेयं ब्रह्मसृष्टिः कथमनवद्यमशेषगुणमेनं संस्पृशेदिति रुद्रदेवस्य ब्रह्मसृष्टिसंबन्धेऽप्यसंबन्धकथनम् । अत्राप्यध्यवसायं संपादयति । अतीतब्रह्मसृष्टिनेति । अयं च स्वतःसिद्धप्रौढोक्तिसिद्धगुणातिशयाध्यवसायमूल इति द्रष्टव्यम् ।

ब्रह्मन्निति । हरिवाक्यमेतत् । विरिञ्चिरुत्तरमाह । स्वामिन्निति । अधि-

---

१ कमलगुण॰ R. २ सिद्धेश्व R. ३ ॰सृष्टौनामीश्वरेण M. ४ ॰ध्यवसायं संपादयति I.

मिथ्या किं नु विकत्थसे त्रिजगतस्त्राणाय मत्प्रार्थितः
शंभुः क्ष्मामवतीर्णवानिति कथा जाता हरिब्रह्मणोः॥ ९७॥

अत्र हरिब्रह्मणोरेवंविधगौष्ठ्यसंबन्धेऽपि संबन्ध उक्तः। शंभुना सह काकतीन्द्रस्याभेदाध्यवसायः।

कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिर्यथा।

मातः कथं काकतिनाथदृष्टे-
रग्रेसराः कामशराः पतन्ति।
तद्रूपलावण्यजितः स्मरोऽपि
नूनं गतः किं करताममुष्य॥ ९८॥

अत्र कार्यभूतस्य स्मरशरपातस्य कारणभूतात् प्रियदृष्टिपातात् पूर्वकालत्वमुक्तम्।

---

क्रिया जगत्सर्जनाधिकारः। विष्णुर्विरिञ्चिकथनमन्यथा करोति। मिथ्येति। अत्रालौकिकौन्नत्यादिगुणयुक्तमेनं ब्रह्मापि निर्मातुं न शक्नोतीति भावः। असंबन्धे संबन्धं योजयति। अत्रेति। पूर्ववदभेदाध्यवसाय इत्याह। शंभुनेति।

पञ्चमं भेदमुदाहरति। मातरिति। कामशरपीडामसहमानायाः कस्याश्चिन्मात्रा सह वचनम्। तस्य काकतीन्द्रस्य। अभूषणेऽपि भूषितवद्भासमान आकारो रूपं लावण्यं कान्तिविशेषः। अनयोर्लक्षणमुक्तम्। अमुष्य काकतीन्द्रस्य। कारणं पूर्वमपरं कार्यमिति सर्वत्र नियमः। कविप्रौढोक्त्या तद्विपर्ययोऽलंकार इत्याशयेनाह। अत्रेति।

'अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः।
अयमागच्छति कालो हन्त हताः पथिकगेहिन्यः॥'

इत्यादि कार्यकारणयौगपद्यमपि पौर्वापर्यविपर्यय एवेति द्रष्टव्यम्।

---

१ त्रिभुवनत्राणाय M. २ °विरिञ्चयो° M. ३ °गोष्ठ्यामसं° M. ४ काकतिवीरदृष्टेः M.
५ अत्रेति I.

अथोक्तिसाम्यालंकारनिरूपणे[1]ऽतिशयोक्तिहेतुका सहोक्तिर्निरूप्यते ।

## सहोक्त्यलंकारः ।

> सहार्थेनान्वयो यत्र भवेदतिशयोक्तितः ।
> कल्पितौपम्यपर्यन्ता सा सहोक्तिरितीष्यते ॥

यत्र भेदेऽभेदरूपतया कार्यकारणपौर्वापर्यविपर्ययरूपया[2] चातिशयोक्त्या एकस्य प्राधान्येनान्वयेऽपरस्य सहार्थेन संबन्धे उपमानोपमेयभावः कल्प्यते[3] तत्र सहोक्तिः । प्राकरणिकाप्राकरणिकविषयत्वादुपमानोपमेयभावस्य सहार्थसंबन्धेन[4] द्वयोरपि प्रकृतत्वान्न तदात्मता ।

कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्तिमूला सहोक्तिर्यथा ।

> अन्धक्षमाभृत्सुभटासिधारा[5]
> रणेषु नीलोत्पलपत्रभासः ।

---

सहोक्तेः[6] संगतिमाह । अथेति । लक्षणमाह सहार्थेनेति । सहशब्दस्यार्थो यस्य तेन सहार्थेन तत्पर्यायेण चेत्यर्थः । 'अनेन सार्धं विहराम्बुराशेः' इत्यादौ सहोक्तिमात्रस्यालंकारता मा भूदित्युक्तमतिशयोक्तित इति । अत्राकाङ्क्षितमंशमध्याहारादिभिः पूरयन् व्याचष्टे । यत्रेति । एकस्य प्राधान्येनान्वय इति । तथा पुत्रेण सहागतः पितेत्यादौ पितुरागमनादिना शाब्दः संबन्धस्तद्वदिति भावः । अपरस्य सहार्थेन संबन्ध इति । तत्रैव पुत्रादिवदिति भावः । उपमानोपमेयभावः कल्प्यत इति । 'सहयुक्तेऽप्रधाने' इत्यप्रधाने तृतीयाविधानात् तदन्तस्य गुणभावादुपमानत्वम् । अर्थादितरस्य प्राधान्यादुपमेयत्वं च कल्प्यत इत्यर्थः । अत एवात्र भेदप्रधानं साधर्म्यमिति[7] द्रष्टव्यम् । सह शाखया प्रस्तरं प्रहरतीत्यत्र प्रहरणे शाखाप्रस्तरयोरिव शाब्द एवायं गुणप्रधानभावो न वास्तवः । पित्रा सहागतः पुत्र इत्यपि सुवचत्वात् । उपमानोपमेयभावश्चात्र काल्पनिको न वास्तव इत्यत्र निमित्तमाह । प्राकरणिकेति । तदात्मता अप्रकृतरूपता । उदाहरति । अन्धेति । अत्र दिव्यमाल्यानीव खड्गधाराः कण्ठेषु

---

१ °निरूपणातिशयोक्ति° M. २ °रूपयातिशयोक्त्या T. ३ प्रकल्प्यते P.; परिकल्प्यते R., M. ४ सहार्थेन संबन्धेन M. ५ अन्ध° M. ६ अथोक्त संगति° L. ७ °साधनं साधर्म्यं° L.

पतन्ति कण्ठेष्वरिभूपतीनां
  साकं सुरस्त्रीजनमुक्तमाल्यैः ॥ ९९ ॥

अत्र कृपाणपतनोत्तरकालभाविनो दिव्यमाल्यपतनस्य[1] सहकालत्व[2]-मिति पौर्वापर्यविपर्ययः ।

भेदेऽभेदरूपातिशयोक्तिमूलाश्लेषगर्भाभेदाध्यवसायरूपा[3] चा-रुतातिशयहेतुर्यथा[4] ।

दिने दिने रुद्रनराधिपस्य
  प्रतापलक्ष्मीरुदयं प्रयाति ।
प्रकाशिताशेषदिगन्तराला
  विवस्वता सार्धमनिन्द्यभासा ॥ १०० ॥

अत्रोदयं प्रयातीति श्लेषेणोदयपर्वताभ्युदययोरभेदाध्यवसायः ।

अथ सहोक्तिप्रतिपक्षरूपा[5] विनोक्तिर्निरूप्यते ।

---

पतन्तीत्येवं प्रतीयमानस्योपमानोपमेयभावस्य द्वयोः प्राकरणिकत्वात् वैवक्षिक-त्वम् । कण्ठपतनसाधर्म्यस्य भेदप्रधानत्वं चोपमानोपमेययोः सहार्थप्रयुक्तगुण-प्रधानभावनिबन्धनं चेत्यानुज्ञेयम् । अत्र कार्यकारणपौर्वापर्यविपर्ययरूपातिश-योक्तिमूलत्वमुपपादयति । अत्रेति[6] ।

दिने दिन इति । श्लेषभित्तिकाभेदाध्यवसायोऽत्र सहोक्तिमूलमित्याह । अत्रोदयमिति[7] । ‘कुमुददलैः सह संप्रति विघटन्ते चक्रवाकमिथुनानि’ इत्यत्र श्लेषभित्तिकाभेदाध्यवसायो मूलम् । अत्र विघटनं संबन्धिभेदाद् भिन्नं न तच्छ्लिष्टत्वमित्याह सर्वस्वकारः । ‘उच्छ्वसितं सह कौशिकस्य पुलकैः’ इत्यादौ इयं मालयापि दृश्यते । अत्र कर्मसाहित्यात् सहोक्तिः पूर्वत्र कर्तृसाहित्यादिति भेदः ।

---

१ दिव्यमालापतनस्य R. २ °कालत्वमुक्तमिति R. ३ °रूपश्लेषगर्भा° P. ४ °रूपा-तिशयोक्तिमूला यथा P.; °रूपत्वातिशयहेतुर्यथा M. ५ °रूपविनोक्ति° M. ६ अत्रेति t. ७ अत्र कृपाणेति t.

## विनोक्त्यलंकारः ।

विना संबन्धि यत् किंचिद्यत्रान्यस्य परा[1]भवेत् ।
अ[2]रम्यता रम्यता वा सा विनोक्ति[3]रिति स्मृता ॥

यत्र कस्यचिदसंनिधानाद्वस्तु रम्यमरम्यं वा भवेत् सा विनोक्तिः । सा द्विविधा अरम्यता रम्यता चेति ।

अ[4]रम्यता यथा ।

प्रतापरुद्रदेवस्य गुणवर्णनया विना ।
कीदृशी काव्यरचना संशृणुध्वं कवीश्वराः ॥ १०१ ॥

अत्र प्रतापरु[5]द्रस्य गुणवर्णनं विना काव्यश्रि[6]योऽशोभनत्वमुक्तम् । अनेन काव्यशोभामिच्छद्भिः क[7]विभिः [8]प्रतापरुद्रगुणा वर्णयितव्या इति विधिरेव [9]प्रकाश्यते ।

र[10]म्यता यथा ।

विनोक्तेः संगतिमाह । अथेति । लक्षणमाह । विनेति । यत्र संबन्धि यत् किंचिद्वस्तु विनान्यस्य प्रतिसंबन्धिनो रम्यता शोभनत्वमरम्यताशोभनत्वं वा पराभवेन्निवर्तेत सा विनोक्तिरित्यर्थः । फलितं व्याचष्टे । यत्रेति । रम्यमरम्यतारहितमरम्यं रम्यतारहितं वेत्यर्थः । व्याख्यानोक्तं व्युत्क्रमं परिहरन् विभजति । सेति । रम्यत्वाभावः अरम्यत्वाभावश्चेत्यर्थः । कस्मिंश्चित् सति कस्यचिद्रम्यत्वमरम्यत्वं वेति विधिमुखेनापि विच्छित्तिविशेषो नास्तीत्येवमे[11]भिधानमिति द्रष्टव्यम् । तदुक्तम् ।

'सदसत्त्वनिवृत्तिश्चेद्विवृत्त्यान्यस्य वर्ण्यते ।
तदा द्विधा विनोक्तिः स्याद्विधिरत्र फलं भवेत् ॥' इति ।

आद्यमुदाहरति । प्रतापेति । कीदृशी रम्या न भवतीत्यर्थः । संशृणुध्वं व्याख्यातम् । अलंकारफलं विधिमाह । अनेनेति ।

१ परापतेत् P., M. २ रम्यतारम्यता वा स्यात् सा विनोक्तिरिति स्मृता ॥ T'. ३ °रनुस्मृता M.; °विलोक्यताम् P. ४ अरम्यतया M. ५ °रुद्रगुणवर्णनेन R., M. ६ °श्रियाशोभनत्व° T'., M. ७ कवीश्वरैः R., M. ८ प्रतापरुद्रस्य R., M. ९ प्रकाशिता R., M. १० रम्यतया M. ११ °मभिदधानमिति P.

कलापूर्णे नित्यं जयति जगतीन्दौ त्रिजगतो
वपुष्मत्यानन्दे विमलविभवे रुद्रनृपतौ ।
विना लक्ष्मप्रोस्या प्रतिदिवसपूर्णो निजतनुं
प्रकाशः स्यादिन्दुर्यदि दिवि भवेत् सोऽपि सुभगः ॥१०२॥

अत्र प्रतापरुद्रे प्रकाशमाने चन्द्रमसः कलङ्केन विना शोभनत्वमुक्तम् । सकलगुणशालिनः प्रतिपक्षस्य पुरस्तात् तादृशगुणवत्तयैव रम्यता नान्यथेति ।

## समासोक्त्यलंकारः ।

विशेषणानां तौल्येन यत्र प्रस्तुतवर्त्तिनाम् ।
अप्रस्तुतस्य गम्यत्वे सा समासोक्तिरिष्यते ॥

यत्र प्रकृतविशेषणसाम्यादप्रस्तुतं गम्यते सा समासोक्तिः । तत् त्रिविधम् । श्लिष्टविशेषणसाम्यं साधारणमौपम्यगर्भं चेति ।

श्लिष्टविशेषणेन यथा ।

---

द्वितीयमुदाहरति । कलेति । जगतीन्दौ भूलोकचन्द्रे रुद्रनृपतौ कलापूर्णत्वादिविशेषणैः प्रतीयमानेन चन्द्रादुत्कर्षेण जयति सति इन्दुः कलङ्करहितेन नित्यं पूर्णः प्रकाशत इति प्रकाशः प्रकाशमानो दिवि यदि स्याद्भूलोके स्वेतरसंनिधानेन तथाविधोऽपि न शोभत इति भावः । स चन्द्रोऽपि सुभगो भवेदित्यशोभनत्वाभावकथनं तदेवाह । अत्रेति । सहोक्तिविनोक्त्योः सहार्थविनार्थयोरभावेऽपि तदर्थविवक्षायामुदाहरणमलंकारसर्वस्वादौ द्रष्टव्यम् ।

उक्तिसाम्यात् समासोक्तिं लक्षयति । विशेषणानामिति । स्पष्टम् । समासेन संक्षेपेणार्थद्वयकथनात् समासोक्तिः । विशेषणसाम्यं विभजते । तदिति । यत्र सकृदुच्चारितशब्देनार्थद्वयं प्रतीयते तच्छ्लिष्टम् । यत्रोभयप्रवृत्तिनिमित्तैक्यं तत् साधारणम् । यत्रौपम्यगर्भसमासविशेषाश्रयणं तदौपम्यगर्भम् । तेन समासो-

---

१ प्राप्य M. २ चन्द्रस्य विना कलङ्केन R. ३ °वर्णना R. ४ °साम्यसाधारणाद° R. ५ °विशेषणसाम्यं यथा T.; °विशेषणे यथा M. ६ तत्रेति । t. ७ प्रतिपाद्यते t. ८ तच्छ्लेषः t.

सद्यो विश्लथमेखलापुलकितामृज्वीं तनुं बिभ्रती
रागादन्ध्रपतेः कृपाणलतिका गृह्णाति कण्ठेष्वरीन् ।
तद्योगादनुरक्तभावविवशाः संमीलिताक्षाश्चिरं
शून्यान्तःकरणा भजन्ति खलु ते भावस्थितिं कामपि ॥१०३॥

अत्र विश्लथमेखलापुलकितामिति श्लिष्टविशेषणमहिम्ना कृपाणलतिकाया नायिकात्वप्रतीतिः । अनुरक्तभावविवशा इत्यादिविशेषणद्वारा रिपूणां नायकत्वप्रतीतिः ।

साधारणविशेषणेन यथा ।

वीतव्रीडमपास्तमौनमुदयद्भैस्वर्यमाविर्भवत्-
स्वेदं निर्भरगात्रवेपथुमिलन्मूर्च्छं गलद्बाष्पकम् ।
संजातप्रलयं च काकतिमहीनाथ स्मरोद्वेजिता
भूपाः शैलगुहासु यान्ति विजनं भीत्या समालिङ्गिताः ॥१०४॥

---

क्तिरपि द्विविधा । तत्राद्यं भेदमुदाहरति । सद्य इति । विश्लथा प्रयोगानुकूला मेखला कण्ठरज्जुर्यस्यास्तां तथोक्तां शिथिलकाञ्चीगुणां च । पुलकाश्छाया अस्याः संजाताः पुलकिता रोमाञ्चिता च ताम् । ऋज्वीमकुटिलां रतावधामां च । तद्योगात् कृपाणलतिकासंबन्धात् । अनुरक्तोऽनुवृत्तरक्तो भावः स्वरूपं येषां ते तथोक्ताः अत एव विवशाः परवशाः । अन्यत्र तद्योगान्नायिकासंबन्धादनुरक्तभावेनानुरक्तत्वेन विवशा मीलिताक्षाः मूर्च्छया सुखपारवश्याच्च । तथा शून्यान्तःकरणा गतमनसो विगलितवेद्यान्तःकरणाश्च । कामपि वक्तुमयोग्यां साक्षादुक्तावमङ्गलत्वेनाश्लीलत्वादिति भावः । भावस्थितिं षड्भावविकारं विनाशनिमित्तमित्यर्थः । अन्यत्र कामपि वक्तुमशक्यां भावस्थितिं प्रेमानुबन्धं भजन्ति । अत्र श्लिष्टविशेषणसाम्यात् खड्गलतायामरिषु नायिकानायकव्यवहारसमारोप इत्याह । अत्रेति ।

द्वितीयमुदाहरति वीतेति । व्याख्यातमेतत् । अत्र वीतव्रीडादिविशेषणानामुभयत्रैकार्थत्वं साम्यं तद्बलाद्भीरूणां शृङ्गारनायकव्यवहारसमारोप इत्याह ।

---

१ °मेखलाम् M. २ संमीलिताक्षाः परम् M. ३ मेखलाम् M. ४ °नाथेन संतर्जिता T. ५ विनाशमित्यर्थः ६. ६ °मशक्यं P.

अत्र शृङ्गारभयानकसाधारणविशेषणबलाद् भीत्या समालिङ्गिता इति नृपाणां[1] नायकत्वप्रतीतिः।

औपम्यगर्भविशेषणेन[2] यथा।

> भृतात्मगुणरत्नौघैः[3] पूर्णः सौजन्यवारिणा।
> प्रतापरुद्रनृपतिर्धत्ते विश्वंभराश्रियम्॥ १०५॥

---

अत्रेति। व्रीडव्यथादिधर्मसमारोपोऽत्र निमित्तम्। 'धामालिलिङ्ग मुखमाशु दिशां चुचुम्ब' इत्यत्रेक्षणाग्नौ युवनायकव्यवहारारोपे आलिङ्गनादिकार्यसमारोपः कारणम्। साधारणविशेषणसाम्ये धर्मकार्ययोरन्यतरारोपं विना व्यञ्जनव्यापारोद्भेदेनाप्रकृतप्रतीतेरसंभवात्। एवं च द्विविधो भेदो द्विविधो जातः।

तृतीयमुदाहरति। भृतात्मेति। गुणा रत्नानीवेत्युपमितसमासस्य गुणा एव रत्नानीति रूपकसमासस्य च साधकबाधकाभावात् संदेहसंकरः। ततो गुणसंदृशै रत्नैरिति मध्यमपदलोपी समासः। एवमुत्तरत्रापि। इत्थमौपम्यगर्भविशेषणसाम्येन प्रतापरुद्रे समुद्रव्यवहारप्रतीतेः समासोक्तिः। यत्रोपमासमासे साधकमस्ति यथा

> दन्तप्रभापुष्पचिता[4] लोलाक्षी चारुहासिनी।
> केशपाशालिवृन्देन सुवेषा हरिणेक्षणा॥

इत्यत्र सुवेषत्वं तत्रोपमासमासानन्तरं मध्यमपदलोपिसमासो द्रष्टव्यः। तथा च तृतीयभेदस्यापि द्वैविध्यं सिध्यतीत्येवं पञ्चप्रकारा समासोक्तिः। तदुक्तमलंकारसर्वस्वे। 'तदेवं श्लिष्टविशेषणसमुत्थापितैका। साधारणविशेषणसमुत्थापिता धर्मकार्यसमारोपाभ्यां द्विधा। औपम्यगर्भविशेषणसमुत्थापिता तूपमासङ्करसमासाभ्यां द्विभेदा' इति। यत्र 'निरीक्ष्य विद्युन्नयनैः पयोद' इत्यादौ निरीक्षणादिकं रूपके साधकमस्ति तत्रैकदेशविवर्तिरूपकमेव न समासोक्तिरित्यादिविशेषा अपि तत्रैव द्रष्टव्याः।

---

१ R. drops नृपाणाम्. २ °विशेषणे M. ३ भृतः स्वगुण° P.; भृतात्मा गुण° R. ४ °पुष्पयता P.

अत्र समासोक्तौ सर्वत्र व्यवहारसमारोप[1] एव जीवितम् । स चतुर्विधः । लौकिके वस्तुनि लौकिकव्यवहारसमारोपः शास्त्रीयवस्तुव्यवहारसमारोपश्चेति द्विविधः । तथा शास्त्रीयवस्तुनि शास्त्रीयव्यवहारसमारोपः लौकिकव्यवहारसमारोपश्चेति । एवं चतुर्विधः ।

यथाक्रममुदाहरणानि ।

[2]सत्ताङ्गस्फुरदुद्दामदानलक्ष्मीविराजितः ।
प्रतापरुद्रो भद्रात्मा तनुते सार्वभौमताम् ॥ १०६ ॥

---

विशेषान्तरमाह । अत्रेति । व्यवहारसमारोप एवेत्येवकारो रूपसमारोपव्यवच्छेदार्थः । तथा हि यदा विशेषणसाम्यादप्रस्तुतं प्रस्तुतविशेष्यत्वेन प्रतीयते न तु प्रयुज्यते तदा निष्प्रतियोगिकत्वेनापरित्यक्तस्वरूपस्य प्रस्तुतस्य राजादेर्विशेषणसाम्यावगमितेनाप्रस्तुतसमुद्रत्वादिधर्मेण विशिष्टतया प्रतीतेः व्यवहारसमारोपः । यदा त्वप्रस्तुतमपि विशेष्यं प्रयुज्यते तदा तत् प्रस्तुतमर्थं स्वेन रूपेण रूपवन्तं कृत्वा न्यग्भवति । प्रस्तुतमपि स्वरूपं परित्यज्याप्रस्तुततादृूप्यमुपगृह्णाति अतस्तत्र रूपकसमारोप एव । तदुक्तम् ।

'अप्रस्तुतं प्रतीतं चेद् [3]भेदकांशैकसाम्यतः ।
व्यवहारं समारोप्य प्रस्तुते न्यग्भवत्यथ ॥
तेनाप्रस्तुतवृत्तान्तारोपेणाप्रस्तुतं स्वयम् ।
संक्षेपेणोच्यते यस्मात् समासोक्तिरियं तदा ॥
स्याद्विशेष्यांशसाम्यं चेत् प्रस्तुताकाररूपितम् ।
भवेदप्रस्तुतं वेद्यं रूपकालंकृतिस्तदा ॥' इति ।

अत्राप्रस्तुतस्य प्रतीयमानत्वाद् व्यवहारसमारोप एवेति भावः । तं चतुर्धा विभजति । स इति । वस्तुनि जात्यादौ । क्रमेणोदाहरति । सत्ताङ्गेति । स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि सप्ताङ्गानि तद्गोचरया दानलक्ष्म्या त्यागवैभवेन विराजितः । अदेयमस्य किमपि नास्तीति भावः । अन्यत्र सप्ताङ्गानि करादीनि तत्र स्फुरन्त्या स्रवन्त्या दानलक्ष्म्या मदवैभवेन विराजितः । तदुक्तम् ।

'करात् कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः' इति पालकाव्ये । करात् नासारन्ध्राभ्यामित्यर्थः । भद्रात्मा मङ्गलमूर्तिः । अन्यत्र भद्रजातिः । तल्लक्षणं

---

१ °समारोपणमेव M. २ सप्ताङ्गः स्फुर° P.; सत्ताङ्गः स्फुर° R. ३ भेदकांशोक्तिसाम्यतः p. ४ भेदः t.

अत्र लौकिके प्रकृतवस्तुनि लौकिकस्य सार्वभौमनामधेयस्य दिग्गजस्य व्यवहारप्रतीतिः ।

तथा ।

गुरुप्रमाणेन निजेन सद्य-
स्तिरस्कृतोद्यत्प्रतिपक्षहेतौ ।
प्रतापरुद्रस्य समित्युदग्रे
खड्गे महत्खण्डनपण्डितत्वम् ॥ १०७ ॥

अत्र लौकिके खड्गे तर्कशास्त्रप्रसिद्धवस्तुर्व्यवहारसमारोपः ।

तथा ।

---

मतङ्गज इति प्रतीयते । सर्वभूमेरीश्वरः सार्वभौमः । 'तस्येश्वरः' इत्यण्प्रत्ययः । अनुशतिकादित्वात् उभयपदवृद्धिः । तत्तां चक्रवर्त्तित्वम् । अन्यत्र सार्वभौमत्वं दिग्गजविशेषत्वं तनुते । अत्र श्लिष्टविशेषणैः प्रकृतप्रतापरुद्रेऽप्रकृतभद्रगजव्यवहारसमारोपः ।

लौकिके वस्तुनि शास्त्रीयव्यवहारसमारोपमुदाहरति । गुर्विति । गुरुणा श्रेष्ठेन प्रमाणेन ध्वजादिशुभायविशिष्टप्रमाणेनेत्यर्थः । आयुधानां ध्वजाद्याया जयावहा इति तद्विदः । अन्यत्र प्रमाणेनानुमानेन तस्यैव कथासाधनत्वात् । गौरवं चास्य व्याप्तिपक्षधर्मतावैशिष्ट्यनिबन्धनं द्रष्टव्यम् । प्रतिपक्षस्य शत्रोः प्रतिवादिनश्च । हेतीरायुधं हेतुरनुमानं चेति । इकारयोकारयोः श्लेषः । उद्यदिति । शत्रा प्रयोगप्रारम्भ एवानयोः पराभव इति लभ्यते । समिति युद्धे सभायां च । खण्डनपण्डितत्वं विदारणकौशलम् । अन्यत्र दूषणनैपुण्यम् । अत्र विशेषणसाम्याद्वैतण्डिकः प्रतीयते ।

---

१ दिग्गजस्य प्रतीतिः R. २ लौकिकखड्गे R. ३ तर्कशास्त्रे प्रसिद्ध° M. ४ °व्यवहारारोपः M, ५ सार्वभौमता t. ६ शास्त्रीयवस्तुव्यव° t. ७ गुर्विति p. ८ मायुधेषु t. ९ उद्यच्छब्दप्रयोग° t.

अपूर्वार्थश्लाघागुरुभणितिसारस्यपदवी
श्रुतिग्राह्यं तत्त्वं किमपि कलयन्ती प्रतिपदम्[1]।
प्रबन्धश्रीर्वीरक्षितिभुजि[2] कवीनां विजयते
बुधश्रेणी यस्यां निपुणमधिकर्त्तुं प्रभवति ॥ १०८ ॥

---

शास्त्रीये वस्तुनि शास्त्रीयव्यवहारसमारोपमुदाहरति । अपूर्वेति । अपूर्वस्यानुच्चितस्यार्थस्य श्लाघया कथनेन गुरूणां श्लाघ्यानां भणितानां वाक्यानां यत् सारस्यमभिमुखीकरणयोग्यत्वं तस्य पदवी स्थानमित्यर्थः । पदे पदे प्रतिपदम् । श्रुतिग्राह्यं श्रोत्रेन्द्रियग्राह्यम् । किमप्यनिर्वचनीयम् । तत्त्वं माधुर्यरूपम् । कलयन्ती धारयन्ती । श्रुतिकट्वादिदोषराहित्येन श्लेषादिगुणसाहित्येन च । स्वचस्सुधाममधुरशब्दार्थशरीरेत्यर्थः । प्रबन्धश्रीः काव्यनाटकादिप्रबन्धलक्ष्मीः विजयते । यस्यां बुधश्रेणी विदग्धपरिषत् निपुणमधिकर्त्तुं रसमास्वादयितुं प्रभवति । अधिकारस्य फलस्वाम्यलक्षणत्वात् सहृदय एवात्राधिकारी नान्य इत्यर्थः । अपूर्वाणामर्थानां चोदनैकसमधिगम्यत्वेन प्रमाणान्तरागोचराणामग्निहोत्रादीनां श्लाघया कथनेन गुरूणां श्रेष्ठानां भणितानां विधिवाक्यानां यत् सारस्यमर्थवादप्रयुक्तं प्रवर्त्तनीन्मुख्यं तस्य पदवी स्थानं विधादिविचारसध्रीचीनेत्यर्थः । श्रुतिशब्देन श्रुत्येकदेशो गृह्यते । तेन श्रुतिग्राह्यं लिङादिप्रत्ययवेद्यमत एव किमप्यलौकिकं तत्त्वं श्रेयःसाधनतारूपं धर्मम् । अत एवोक्तमाचार्यैः ।

'श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥' इति ।

पद्यते गम्यते प्रामाण्यादिकमेभिरिति पदानि न्यायाः । प्रतिपदं सहस्रेणापि न्यायैरित्यर्थः । कलयन्ती इतिकर्त्तव्यतारूपेण प्रतिपादयन्तीत्यर्थः । मीमांसेति गम्यते । तदुक्तमाचार्यैः ।

'धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति ॥' इति ।

यस्यां मीमांसायां बुधश्रेणिः निगमनिरुक्तादिविद्यानिष्णातविद्वत्सङ्घ एवाधिकर्त्तुं प्रभवति तस्यैवात्राधिकारादिति भावः । तदुक्तं जिज्ञासाप्रस्तावे ।

---

१ प्रतिदिशम् M. २ क्षितिपतौ R., T.

अत्रालंकारशास्त्रीये[1] वस्तुनि तन्त्रशास्त्रप्रसिद्ध[2]वस्तुव्यवहारसमारोपः तथा ।

सालंकारा[3] लसद्वर्णा सुगुणा रसनिर्भरा ।
भावानुबन्धिनी भाति भारती काकतीश्वरे ॥ १०९ ॥

अत्रालंकारशास्त्रीये[4] वस्तुनि भारत्याख्ये लौकिकनायिकाव्यवहारस[5]मारोपः ।

---

'जिज्ञासैकोपनीतस्य द्वितीया पठितश्रुतेः ।
ज्ञातविद्यान्तरस्यान्या या मीमांसा पुरस्सरी ॥'

इति । अथवा मतान्तरेणार्थान्तरं तु क्रियादिव्यतिरिक्तं स्थायिकार्यं प्रमाणान्तर गोचरमपूर्वम् । तदुक्तं शारिकानाथेन ।

'क्रियादिभिन्नं यत् कार्यं वेद्यं मानान्तरैर्न तत् ।
अतो मानान्तरापूर्वमपूर्वमिति गीयते ॥' इति ।

तदेवार्थो वाक्यार्थः । प्रधानत्वात् । तदुक्तम् ।

'कार्यस्यैव प्रधानत्वाद्वाक्यार्थत्वं च युज्यते ।' इति ।

एवमादेः श्लाघा कत्थनम् । तत्प्रधानानां गुरुभणितानां निबन्धनविवरणादिप्रभाकरग्रन्थानां यत् सारस्यं प्रसन्नगम्भीरत्वं तस्य पदवी स्थानं तथाविधग्रन्थयुक्तेत्यर्थः । श्रुतिग्राह्यं[6] लिङादिवाच्यम् । एवं कार्यात्मके[7] ह्येते[8] व्युत्पद्यन्ते[9] लिङादय इति शारिकोक्तेः किमप्यलौकिकं तत्त्वम् ।

'कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ ।
नियोग इति मीमांसानिष्णातैरभिधीयते ॥'

इत्युक्तलक्षणनियोगापरपर्यायं धर्मं प्रतिपदं कलयन्तीत्यादि पूर्ववत् । लक्ष्ये लक्षणं योजयति । अत्रालंकारेति । तन्त्रशास्त्रमत्र भाट्टं प्राभाकरं चेत्युभयं विवक्षितम् ।

शास्त्रीये वस्तुनि लौकिकव्यवहारसमारोपमुदाहरति । सालंकारेति । अलंकारैरुपमादिभिः । कटकादिभिश्च सहिता सालंकारा । लसद्वर्णा मधुराक्षरा मनोज्ञका-

---

[1] °शास्त्रीयवस्तुनि R., P.; R. drops अत्रालंकार. [2] °सिद्ध P., R. [3] सालंकारलसद्वर्णसु° P. [4] °शास्त्रीयवस्तुनि P. [5] भारताख्यलौकिकव्यवहार° R. [6] वस्तुनि:गद्यम् for श्रुतिग्राह्यम् t. [7] वाक्यात्मके t. [8] स्वर्थे t. [9] व्युत्पद्यन्ति t.

समासोक्तौ विशेषणविशेष्ययोर्द्वयोरुपादानाभावाच्छ्लेषाद्विशेषः ।

अन्येषामप्यलंकाराणामुक्तिसाम्येऽपि श्लेषगर्भत्वविशेषाद् वक्रोक्ति-रुच्यते ।

वक्रोक्त्यलंकारः ।

अन्यथोक्तस्य वाक्यस्य काका श्लेषेण वा भवेत् ।
अन्यथा योजनं यत्र सा वक्रोक्तिर्निगद्यते ॥

यत्र कयाचिद् विवक्षया केनचित्प्रयुक्तस्य वाक्यस्यान्येन विवक्षया-न्यथा योजनान्या क्रियते सा वक्रोक्तिः । उक्तिवक्रत्वे कथंचित् संभव-त्यप्येवंविधलक्षणाभावात् सर्वालंकारेभ्यो भिद्यते ।

---

न्तिश्च । सगुणा श्लेषादिगुणयुक्ता गाम्भीर्यादिगुणयुक्ता च । रसेन शृङ्गारा-दिनानुरागेण च । निर्भरा पूर्णा । काकतीश्वरे विषये । भावोऽभिप्रायः प्रेमा च । तस्यानुबन्धो विच्छेदाभावः । तद्वती भारती वाणी । नायिका तु गम्यते । ननु यत्र श्लिष्टविशेषणसाम्यं तत्र श्लेष एवालंकारः कस्मान्न भवतीत्याह । समासो-क्ताविति । अप्रकृतविशेष्यस्यापि पृथगुपादाने श्लेषः । तदभावादत्र न श्लेषत्व-मिति भावः ।

वक्रोक्तेः संगतिपूर्वं लक्षणमाह । उक्तिसाम्य इत्यादिना अन्यथोक्तस्येति । केनचिदिति शेषः । अन्यथा योजनमिति । अपरेणेति शेषः । तदेतद् व्याचष्टे । यत्रेति । सर्वेभ्यो भेदमाह । उक्तीति । वक्रत्वे वैचित्र्यम संभवत्यपीति । सर्वालंकारेष्विति शेषः । विच्छिन्नमात्रवाचिनो वक्रशब्दस्योक्तिविशेषे पर्यवसानात्

---

१ अन्येषामलंकाराणाम् is omitted in R. २ °निरुच्यते T'., M. ३ केन-चिदुक्तस्य P.; केनचित्प्रयुक्त° M. ४ R. omits अन्येन. ५ °नान्यथाविवक्षया P., M. ६ M. drops अन्या. ७ वैलक्षण्यम् M.

काका यथा ।

> [1]बहुवल्लहो खु राआ सहि तस्स सिरिम्मि णिब्भरासत्ती ।
> णूणा सिरिएवि तुमं अप्पाणं किं णु लहुएसि ॥ ११० ॥

अत्र त्वमपि श्रियो न्यूनगुणा न भवसि । अतस्त्वय्यपि नृपतिरासक्त एवेति किमित्यात्मानं लघूकरोषीति काका प्रतीयते ।

श्लेषेण यथा ।

> कस्ते सुन्दरि वर्त्तते हृदि सदा राजा किमिन्दुर्न हि
> क्षोणीभृत्तिलकः सुमेरुरपि किं नो रुद्रदेवो विभुः ।
> ईशः किं सखि सत्यमात्थ सुभगे त्वं गोत्रसारोद्भवे-
> त्याल्यां खेल्वपहासवाचि विरहं किंचिद्वधूर्व्यस्मरत् ॥ १११ ॥

---

सर्वविलक्षणत्वमिति भावः । काकुमूलां वक्रोक्तिमुदाहरति । बह्विति । अप्पाणमित्यत्र 'आत्मनि पः' इति सूत्रेणात्मशब्दे युक्तवर्णस्य पकारादेशः । अत्र प्रथमार्धे नायिकया संभावितस्यात्मन्यूनत्वस्य द्वितीयार्धे सेर्ष्यां श्रियो न्यूनेत्यत्र काका निषेधयोजनाद् वक्रोक्तिः ।

श्लेषमूलामुदाहरति । क इति । अत्र सखीनायिकयोरुक्तिप्रत्युक्तितया नव वाक्यानि योजनीयानि । राजा नृपश्चन्द्रश्च । क्षोणीभृत्तिलको राजश्रेष्ठः पर्वतोत्तमश्च । रुद्रदेवः प्रतापरुद्रो रुद्रश्च । सत्यमात्थ ब्रूषे । गोत्रसारोद्भवा सत्कुलप्रसूता पर्वतराजपुत्री च । अपहासप्रधाना वाचो यस्यास्तस्यामपहासवाचि विरहं वियोगदुःखं किंचिद् व्यस्मरत् ।

---

छाया ।

> 1 बहुवल्लभः खलु राजा सखि तस्य श्रियां निर्भरासक्तिः ।
> न्यूना श्रियोऽपि त्वमात्मानं किं नु लघयसि ॥

१ खु P. २ राओ M. ३ सिरिए M. ४ णिब्भरा° P. ५ नूणा T. ६ वि मं M. ७ किं णु P. ८ त्वमपि न्यूना न भवसि R. ९ सुमेरु° R. १० खल्वपहास° P. ११ सख्या ϵ. १२ °प्रत्युक्तितया ϵ.

## अथ स्वभावोक्तिः ।

**स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् ।**

यत्र चारुतया वस्तुनो यथावद्वर्णनं निबध्यते सा स्वभावोक्तिः । यथा ।

> मदश्च्युता नर्त्तितकर्णताल-
> मुद्धूतमूर्ध्ना त्रिपदस्थितेन ।
> लीलाग्रहस्तेन गजेन जातो
> नित्योत्सवः काकतिवीररुद्रः ॥ ११२ ॥

## व्याजोक्त्यलंकारः ।

**अर्थोक्तिसाम्याद् व्याजोक्तिरुच्यते ।**
**व्याजोक्तिः सा समुद्भूतं वस्तु यत्र निगूह्यते ।**

यत्र प्रकाशं वस्तु सौम्यगर्भत्वेन निगूहनार्हत्वात् केनचिद् व्याजेन प्रच्छाद्यते व्याजोक्तिः ।

---

वक्रोक्तिविपर्ययेण स्वभावोक्तिं लक्षयति । स्वभावेति । यत्र चारु सम्यग-ग्राम्यम् । यथावदन्यूनातिरिक्तेण वस्तुनो वर्णक्रियासंस्थानरूपस्य वस्तुस्वभावस्य कविप्रतिभैकगोचरस्य वर्णनमसौ स्वभावोक्तिः । अत एवेदं ग्राम्यं नालंकार इत्युक्तं दोषप्रकरणे । उदाहरति । मदेति । मदश्च्युता मदस्राविणा नर्त्तितकर्णतालं यथा भवति तथा । उद्धूतमूर्ध्ना कम्पितकुम्भस्थलेन । त्रिभिः पदैः स्थितं स्थितिर्यस्य तेन त्रिपदस्थितेन । अग्रं चासौ हस्तश्चेत्यवयवावयविनोरभेदविवक्षायां विशेषणसमासः । यदाह वामनः । 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात्' इति । अत्र क्रियास्वभाववर्णनम् । एवं वर्णसंस्थानयोरुदाहार्यम् ।

व्याजोक्तेः संगतिमाह । उक्तीति । लक्षणमाह । व्याजोक्तिरिति । व्याचष्टे । यत्रेति । प्रकाशं निगूढचरं कुतश्चिन्निमित्तात् प्रकटमित्यर्थः । अत्र वस्त्वन्तर-

---

१ R. omits सा. २ काकतिरुद्रदेवः R. ३ R. omits अथ. ४ यत्र वस्तु R. ५ साम्यगर्भनिगूहनार्थम् P.

क्षोणीपाणिग्रहणसमये संमदाद्रोमहर्षे
सर्वाङ्गीणे नृपतितिलकः काकतीयान्वयेन्दुः ।
धीरोदात्तः शिशिरसलिलैः किं नु राज्याभिषेकः
कर्त्तव्यः स्यादिति मृदु हसन् वीक्षते मन्त्रिवृद्धान् ॥११३॥

अत्र क्षोणीपाणिग्रहणजनितं [1] रोमहर्षं धीरोदात्ततया प्रतापरुद्रदेवेन महाभिषेकसलिलशैत्यव्याजेन प्रच्छादयता मन्त्रिणो वीक्ष्यन्ते ।

## मीलनालंकारः ।

व्याजोक्त्युत्तरं किंचित्साम्यान्मीलनमुच्यते ।
मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम् ॥

यत्र वस्तुना वस्त्वन्तरं प्रच्छादितं भवति स मीलनालंकारः । स द्विविधः । सहजेनागन्तुकतिरोधानमागन्तुकेन सहजतिरोधानं च [4] ।

यथाक्रममुदाहरणम् [5] ।

उग्रैः काकतिवीररुद्रनृपतेर्दोर्दण्डविस्फूर्जितै-
र्युद्धप्राङ्गणवर्जितेषु [6] पतिषु क्वापि प्रलीनात्मसु ।
विष्वक्तीव्रतरस्मरज्वररुजामङ्के द्विषद्योषितां
संक्रान्तोऽपि [7] न लक्ष्यते पथि महानूष्मा चिरं मारवः ॥ ११४ ॥

---

प्रक्षेपरूपस्य व्याजस्य वचनाद् व्याजोक्तिरित्यर्थः । उदाहरति । क्षोणीति । सर्वाण्यङ्गानि व्याप्नोतीति सर्वाङ्गीणः । 'तत्सर्वादेः' इति खप्रत्ययः । अत्र निगूढः क्षोणीपाणिग्रहणजन्यो हर्षो रोमहर्षेण प्रकाशितः सलिलशैत्येनाच्छाद्यत इत्याह । अत्रेति । धीरोदात्ततया गाम्भीर्येणाच्छादितस्यापि हर्षस्य मृदुहासेन पुनः प्रकाशनं लक्षणान्तःपातीति रहस्यम् ।

मीलनं संगमयति । व्याजोक्तीति । लक्षयति । मीलनमिति । उत्कृष्टवस्तुनापकृष्टवस्तुनिगूहनं मीलनमित्यर्थः । अत एव गुणसामान्यनिबन्धनात् सामान्यादस्य भेद इति द्रष्टव्यम् । सहजेनागन्तुकतिरोधानमुदाहरति । उग्रैरिति । दोर्दण्डविस्फूर्जितैः भुजविजृम्भितैः । युद्धप्राङ्गणवर्जितेषु वर्जितयुद्धप्राङ्गणेष्वित्यर्थः । 'वाहिताग्न्यादिषु' इति परनिपातः । लक्षणं योजयति । अत्रेति ।

---

१ °ग्रहणसमयजनितम् T'.; °परिग्रहणजनितम् M. २ रोमहर्षणम् T'. ३ व्याजोक्त्या किंचित्साम्यात् M. ४ T'. and M. omit it. ५ °मुदाहरणे P. ६ °वर्जितेषु R. ७ संक्रान्तो न हि P. ८ °तिरोधानं लक्षयति t.

अत्र सहजेन रिपुकामिनीगतेन स्तपनलोष्मणा मार्गवशादागन्तुको मरूष्मा तिरोधीयते।

तथा।

प्रतापरुद्रस्य भुजप्रभावा-
दन्तर्भयाद्भूमिभुजामजस्रम्।
स्वेदाश्रुकम्पाद्युदयेऽप्यनङ्ग-
गोष्ठ्यां स्त्रियः प्रेम्णि न विश्वसन्ति॥ ११५॥

अत्र भयजनितेन कम्पादिनागन्तुकेन सहजस्य प्रेमजनितस्य कम्पादेस्तिरोधानम्।

सामान्यालंकारः।

सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता।

यत्र कस्यापि वस्तुनो गुणसाम्येन वस्त्वन्तरैकात्म्यं भवति स सामान्यालंकारः।

यथा।

कैलासदुग्धार्णवयानहंसे-
ष्वलक्षितेष्वन्ध्रनरेन्द्रकीर्त्तौ।

---

आगन्तुना सहजतिरोधानमुदाहरति। प्रतापेति। भुजप्रभावात् पराक्रमात् भयहेतोः। अन्तर्गतं भयमन्तर्भयमाकारगोपनेनानभिव्यक्तमित्यर्थः। तस्माद्धेतोः भूमिभुजां संबधिनि प्रेम्णि विषये न विश्वसन्ति। प्रेममूलानामपि स्वेदादीनां भयानुभावत्वशङ्कयेति भावः।

मीलनसाधर्म्यात् तदनन्तरं सामान्यं लक्षयति। सामान्यमिति। यत्र गुणसाम्यात् प्रस्तुतस्य वस्तुनोऽप्रस्तुतवस्त्वन्तरैकात्म्यं निबध्यते तत् समानगुणसंबन्धात् सामान्यमित्यर्थः। कैलासेति। प्रथमे पुंसः शिवकेशववि॰

---

१ यत्रैकस्य वस्तुनो T. २ °कीर्त्यां R. ३ भयमूलत्वाशङ्कयेति ६.

> श्रेयः पुमांसः प्रथमे स्मयन्ते
> स्वसेवकान् संभ्रमतो विलोक्य ॥ ११६ ॥

अत्र प्रतापरुद्रकीर्त्यां जगत्सु विजृम्भितायां कैलासप्रभृतीनां विमलवस्तूनां तदैकात्म्यम् ।

### तद्गुणालंकारः ।

इतरगुणसंनिधानातिशयसाम्यात् तद्गुण उच्यते ।

तद्गुणःस्वगुणत्यागादन्योत्कृष्टगुणाहृतिः ।

यत्र न्यूनं स्वगुणं विहाय संनिहितवस्तुनः सकाशादुत्कृष्टगुणः स्वीक्रियते स तद्गुणालंकारः ।

यथा ।

> प्रतापरुद्रदेवाङ्घ्रिनखज्योत्स्नाविजृम्भितैः ।
> नमन्नृपतिमाणिक्यमौलयः शुचयः कृताः ॥ ११७ ॥

अत्र प्रणमतां भूपतीनां पद्मरागमुकुटाः स्वां शोणप्रभां मुक्त्वा काकतिवीररुद्रपदनखज्योत्स्नागतं धवलिमानमुद्वहन्ति स्म ।

### अतद्गुणालंकारः ।

---

रिष्ठाः । संभ्रमतः संभ्राम्यतः क्वचिदप्यनवतिष्ठमानान् स्मयन्ते मन्दं हसन्ति । लक्षणं योजयति । अत्रेति ।

तद्गुणं संगमयन् लक्षयति । तद्गुण इति । मीलने वस्त्वन्तरनिगूहनम् । इह पुनरनिगूहितस्यैवान्यगुणेनोपराग इत्यनयोर्भेद इति सर्वस्वकारहृदयम् । तस्याप्रकृतस्य गुणोऽत्रास्तीति तद्गुणः । उदाहरणं स्पष्टम् ।

---

१ भयस्य देवाः प्रथमम् R. २ कैलासादिविमलवस्तूनाम् P. ३ तादात्म्यम् R. ४ °गुणग्रहः M. ५ °मौक्तिकाः R. ६ भूमिपतीनाम् T. ७ °पादनख° B. ८ °ज्योत्स्नाधवलिमानं भजति P. ९ °स्यान्यस्य ८. १० कविहृदयम् ६

तत्प्रातिपक्ष्यादतद्गुणो निरूप्यते ।

सति हेतावसद्रूपस्वीकारः स्यादतद्गुणः ।

अत्र संनिधानरूपहेतौ सत्यप्यन्यगुणस्वीकारो नास्ति असावतद्गुणालंकारः ।

यथा ।

> ईशानं समया जगत्यटति तल्लीलाट्टहासोज्ज्वले
> दैत्यारिं परितस्तदङ्गविलसन्नीलद्युतिद्योतिते ।
> ब्रह्माणं निकषा च तत्तनुमिलत्स्वर्णप्रभाभास्वरे
> पुष्णन् रुद्रनरेन्द्रकीर्त्तिविभवः स्वामेव शुभ्रां छविम् ॥११८॥

अत्र हरिहरविरिञ्चीनां समीपवर्त्तिषु जगत्सु तत्तन्नानाप्रभासमग्रेष्वपि निरन्तरं विहरमाणस्य प्रतापरुद्रयशसो निरङ्कुशः स्वकीय एव धवलिमा विजृम्भते ।

## विरोधालंकारः ।

अतद्गुणे किंचित् प्रक्रान्तत्वाद् विरोधस्य विरोधालंकारो निरूप्यते ।

आभासत्वे विरोधस्य विरोधालंकृतिर्मता ।

यत्र प्रथममाभासतया प्रतीतो विरोधः पर्यवसाने परिह्रियते स विरोधालंकारः । तत्र जातेर्जात्यादिना सह विरोधे चत्वारो भेदाः । क्रियायाः क्रियागुणद्रव्यैः सह विरोधे त्रयो भेदाः । गुणस्य गुणद्र-

---

अतद्गुणमाह । तत्प्रातिपक्ष्यादित्यादिना । ईशानमिति । अत्रेशानादिसमीपवर्त्तिनि तत्तद्वर्णविशिष्टे जगति कीर्तिविभवः स्ववर्णमजहदेवाटतीत्यर्थः । अत एवातद्गुण इत्याह । अत्रेति । ईशानमित्यादौ 'अभितः परितः—' इत्यादिना द्वितीया ।

विरोधं संगमयति । अतद्गुण इति । विरोधस्य सत्यपि संनिधानेऽन्यगुणस्वीकाराभावलक्षणस्येत्यर्थः । लक्षयति । आभासत्व इति । व्याचष्टे । यत्रेति । अत्र विशेषतो विभागमाह । तत्र जातेरिति । क्रियायास्त्रयो भेदा इति ।

---

१ हेतावतद्गुणस्वीकार° R., P. २ °रूपे हेतौ R. ३ °द्योतितः P. ४ चरत्यनुमिलत् M. ५ °भासुरे P. ६ हरहरि° T'. ७ अतद्गुणेन T'. ८ विरोधाभास इष्यते P. ९ P. drops कीर्त्ति-

व्याभ्यां विरोधे द्वौ भेदौ। द्रव्यस्य द्रव्येण सह विरोधे एको भेदः। एवं दश विरोधाः।

जातेर्जात्या क्रियया च यथा।

> पद्माकरोऽपि विलसति नितरामजडाशयोऽयमुर्वीशः।
> विमलतरवारिधाराप्यासीद्वैरिक्षितीशतापकरी॥ ११९॥

अत्र पूर्वार्धे जात्योर्विरोधः। कमलाकरोऽप्यजडाशय इति विरोधात्। उत्तरार्धे जातिक्रिययोर्विरोधः। विमलतरवारिधारायाः संतापकरणविरोधात्। अत्र श्लेषमूलो विरोधः।

जातेर्गुणद्रव्याभ्यां विरोधो यथा।

> अमदः सार्वभौमोऽपि भास्वानपि कलानिधिः।
> वीररुद्रनरेन्द्रोऽयमद्भुतानां विहारभूः॥ १२०॥

अत्र सार्वभौमोऽप्यमद इति जातिगुणयोर्विरोधः। भास्वानपि कला-

---

जात्या सहैतस्या विरोधस्य जातेरेतया विरोधेन गतार्थत्वादिति भावः। एवं यथोत्तरमेकैकन्यूनता द्रष्टव्या। अत्रायं संग्रहः।

> 'क्रमाज्जातिगुणद्रव्यक्रियाणां तत्तदादिभिः।
> विरोधे दश भेदाः स्युश्चतुस्त्रिद्व्येकभेदतः॥' इति।

पद्माकर इति। पद्माकरः सरोऽप्यजडाशय इति लडयोरभेदाज्जडाशयो जलस्थानं न भवतीति विरोधस्य लक्ष्मीनिवासोऽयममन्दबुद्धिरिति परिहारः। विमलतरा अतिनिर्मला वारिधारापि तापकरीति जातिक्रिययोर्विरोधस्य तरवारिरायुधविशेषस्तस्य धारा कोटिरिति परिहारः। सर्वत्रापिशब्दो विरोधद्योतकः। नायमौद्भटानामिव विरोधबाधकः श्लेषः किं तु श्लेषविरोधयोरङ्गाङ्गिभावेन संकर इत्याशयेनाह। अत्र श्लेषमूलो विरोध इति। उत्तरत्राप्येवंविधोदाहरणेष्वेवमेव [4]विरोध इति द्रष्टव्यम्।

अमद इति। सार्वभौमो दिग्गजोऽप्यमदो मदरहित इति जातिगुणयोर्विरोधः सर्वभूमीश्वरोऽपि निरहंकार इति परिह्रियते। भास्वान् सूर्योऽपि कला-

---

१ कमला° P. २ संतापकारण° P. ३ यं मन्द° t. ४ t. drops विरोध इति.

निधिरिति जातिद्रव्ययोर्विरोधः। कलानिधेरेकत्वाद् द्रव्यत्वम्। अत्रापि श्लेषमूलता।

क्रियायाः क्रियाविरोधो यथा।

> धर्मद्विषामर्थमुषां च भङ्ग-
> मुत्पादयन् काकतिवीररुद्रः।
> त्रिवर्गसाधारणगोचरोऽपि
> करोति कामद्विपि भावमार्द्रम्॥ १२१॥

अत्र त्रिवर्गसाधारणवृत्तेर्धर्मार्थविरोधिषु भङ्गकरणं कामारौ स्नेहकरणं च विरुद्धम्।

क्रियाया गुणद्रव्याभ्यां विरोधो यथा।

> एष जिष्णुविहारोऽपि गोत्रवात्सल्यलालसः।
> करोति कमलोल्लासं राजाप्यन्ध्रनरेश्वरः॥ १२२॥

अत्र जिष्णुविहारस्य गोत्रवात्सल्यमिति क्रियागुणयोर्विरोधः। कमलोल्लासं कुर्वन्नपि राजेति क्रियाद्रव्ययोर्विरोधः। अत्रापि श्लेषमूलतैव।

गुणस्य गुणेन विरोधो यथा।

---

निधिश्चन्द्र इति जातिद्रव्ययोर्विरोधः तेजस्वी चतुःषष्टिकलाकुशल इति परिह्रियते।

धर्मद्विषामिति। त्रयाणां धर्मार्थकामानां वर्गस्त्रिवर्गः। 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः। त्रिवर्गः साधारणो वैषम्यरहितः गोचरः सेव्यत्वेन विषयो यस्य स तथोक्तः। 'न बाध्यतेऽस्य त्रिगुणः परस्परम्' इति भावः। कामद्विपि कामपुरुषार्थद्वेषिणि स्मरहरे च। अत एव क्रिययोर्विरोधः समाधीयत इत्याह। अत्र त्रिवर्गेति। पूर्वत्र द्वयोरपि विरोधिनोः श्लिष्टत्वमत्र पुनरेकस्यैवेति विशेषः।

एष इति। जिष्णोरिन्द्रस्य विहार इव विहारो व्यापारो यस्य स तथोक्तः। तथापि गोत्रवात्सल्यलालसः पर्वतानुरक्त इति क्रियागुणौ विरुद्धौ। जयशीलव्यापारः कुलानुकूलश्चेति समाहितौ। राजा चन्द्रोऽपि कमलोल्लासं करोतीति विरोधस्य क्रियाद्रव्यगतस्य नृपतिर्लक्ष्मीविलासमिति परिहारः।

---

१ °मुत्पादयन् P., B. २ कामद्विषि M.

[4]रञ्जंतो भुवणमिणं राअेत्ति जए सलाहणिज्जो सि ।
कह णरिंद कहं [2]सा रत्ता वि अ [3]पंडुरा जाआ ॥ १२३ ॥

अत्र रक्तत्वपाण्डुरत्वयोर्विरोधः ।

गुणस्य द्रव्येन विरोधो यथा ।

ज्वलत्प्रतापरौद्रोऽपि काकतीयनरेश्वरः ।
भूत्वा जैवातृको भाति शश्वद्विश्वप्रियंकरः ॥ १२४ ॥

अत्र प्रतापरौद्रोऽपि जैवातृक इति गुणद्रव्ययोर्विरोधः ।

द्रव्यस्य द्रव्येन विरोधो यथा ।

विभाति काकतीन्द्रोऽयं रुद्रोऽपि चतुराननः ।
तथा च विष्णुरित्येव कथ्यते पुरुषोत्तमः ॥ १२५ ॥

एवं दश भेदा दर्शिताः ।

अयमश्लेषेणापि भवति यथा ।

---

रञ्जन्त इति । 'न्तमाणौ शतृशानचोः' इति शतन्तादेशः । 'सलाहणिज्जोसि—' इत्यत्र 'अः क्ष्माश्लाघयोः' इति श्लाघाशब्दे युक्तवर्णस्य विप्रकर्षः । पूर्वस्याकारयुक्तता चेति वेदितव्यम् ।

ज्वलदिति । प्रतापरुद्रोऽपि जैवातृकश्चन्द्र इति गुणद्रव्ययोर्विरोधः । जैवातृक आयुष्मानिति परिहारः ।

विभातीति । रुद्रोऽपि चतुराननो ब्रह्मेति विष्णुरिन्द्रोऽपि पुरुषोत्तमो विष्णुरिति च द्रव्ययोर्विरोधो रुद्र इति नामादिभिः प्रसिद्धैरर्थान्तरैः परिह्रियते ।

---

छाया ।

1 रञ्जयन् भुवनमिदं राजेति यथा श्लाघनीयोऽसि ।
तद् नरेन्द्र कथं सा रक्तापि च पाण्डुरा जाता ॥

१ सलाह° P. २ सा रत्ता P. ३ पंडुरा P. ४ L. has before this रञ्जयन् भुवनमिदं &c.

स्वभावशिशिरा दृष्टिरपि काकतिभूपतेः ।
सर्वाङ्गतापिनी जाता प्रतिपक्षमहीभृताम् ॥ १२६ ॥

अत्र स्वभावशिशिरापि तापिनीति विरोधः ।

विशेषालंकारः ।

अथ विरोधगर्भालंकारा निरूप्यन्ते ।

आधाररहिताधेयमेकं चानेकगोचरम् ।
अशेषवस्तुकरणं विशेषालंकृतिस्त्रिधा ॥

यत्राधारमन्तरेणाधेयो निबध्यते स एको विशेषः । एकस्यानेकगोचरत्वे द्वितीयो विशेषः । प्रकृतादशक्यवस्त्वन्तरकरणे तृतीयः ।

यथाक्रममुदाहरणानि ।

नलनहुषदिलीपधर्मपुत्र-
प्रभृतिनरेश्वरसंश्रिता यशश्रीः ।
अनुदिनमधुनाप्युपेत्य मैत्रीं
विलसति काकतिवीररुद्रकीर्त्या ॥ १२७ ॥

अत्र प्राचां भूपतीनामाधारभूतानां तिरोधानेऽप्याश्रितायाः कीर्तेरवस्थानम् ।

---

स्वभावेति । शैत्यसन्तापयोर्गुणयोरश्लिष्टयोर्विरोधो विषयभेदेन परिह्रियते । विरोधमूलेष्वनेकभेदं विशेषमाह । आधारेति । प्रसिद्धाधाररहितमाधेयमेकं परिमितं वस्तु युगपदेवानेकगोचरं तथा किंचिद् वस्त्वारभमाणस्तेनैव यत्नेनाशक्यवस्त्वन्तरमारभत इति त्रयो विशेषभेदाः । क्रमेणोदाहरति । नलेति । अधुनापि नलादीनामभावसमयेऽपीत्यर्थः । नलादिसदृशकीर्तिरयं राजेति भावः । योजयति । अत्रेति ।

---

१ °भुभुजः R., M. २ °महीक्षिताम् R. ३ चानेक° R. ४ प्रकृतस्याशक्य° R. ५ °संश्रिता R. ६ °मधुनाप्यपैति R. ७ कीर्त्यां अवस्थानम् M.

यथा[1] च ।

> पश्यन्तो भयविह्वलाः प्रतिनृपाः पश्चात् पुरः पार्श्वयो-
> रप्यन्तर्बहिरन्ध्रपार्थिवपतिं प्रोत्क्षिप्तकौक्षेयकम्[2] ।
> निःसीमोल्वणधावनव्यतिकरप्रभ्रष्टदोरायुधाः
> [3]शैलाच्छैलमटन्ति कम्पविगलद्[4]गाम्भीर्यशौर्यश्रियः[5] ॥१२८॥

अत्र भयभ्रान्तानां शत्रुनृपतीनां[6] प्रतापरुद्रनृपतिरेकोऽप्यनेकत्र प्रतीयते ।

तथा च ।

> अपारकरुणानिधेः सदसि वीररुद्रप्रभोः
> प्रसादमधुरक्रमा लगति यत्र दृष्टिर्जने ।
> अतीन्द्रमतिकिंनराधिपमशेषलोकोन्नतं
> न किं किमधितिष्ठति त्रिभुवने स सर्वाधिकः ॥ १२९ ॥

अत्र साधारणो जनः प्रतापरुद्रदृष्टिप्रसादपात्रीकृतः किं किं न लभत इत्यशक्यवस्त्वन्तरकरणम् ।

## अधिकालंकारः ।

आधाराधेयवैचित्र्यादधिकालंकारो निरूप्यते ।

> आधाराधेययोरानुरूप्याभावोऽधिको[7] मतः ।

---

पश्यन्त इति । धावनव्यतिकरः पलायनसंबन्धः । कम्पेति । कम्पेन विगलन्त्यौ मूर्तद्रव्यवत् पतन्त्यौ गाम्भीर्यशौर्यश्रियौ येषां ते तथोक्ता इत्यतिशयोक्तिः । योजयति । अत्रेति ।

अपारेति । सदस्यास्थाने यत्र जने साधारणे प्रसादमधुरक्रमा प्रसन्नेत्यर्थः । दृष्टिर्लगति स जनः सर्वाधिको लोकोत्तरः सन्नलौकिकं वैभवमनुभवतीत्यर्थः । अत्र पृथग्जनेऽपि प्रसादमारभमाणा दृष्टिरैश्वर्यविशिष्टतामारभते[8] किल किमुत विशिष्टे जन इत्यर्थापत्तिर्व्यज्यते ।

संगतिपूर्वकमधिकं लक्षयति । आधारेत्यादिना । तस्य द्वेधा विभागमाह ।

---

१ यथा M.; तथा च R. २ °कौक्षेयकैः T². ३ शैलाः शैल° M. ४ °विलसद्° T². ५ °शौर्यक्रियाः P., M. ६ P. drops शत्रुनृपतीनाम्. ७ °रूप्याभावेऽधिको° R. ८ °विशिष्टतां विधत्ते P.

यत्राश्रयाश्रयिणोरानुरूप्यं नास्ति सोऽधिकालंकारः। स द्विविधः। आश्रयस्याल्पत्वमहत्त्वाभ्याम्।

प्रथमो यथा।

स्तोके ब्रह्माण्डखण्डे विपुलतरतया स्वैरसंचारहेला-[2]
संकोचादेकराशीभवदतुलरुचौ काकतीन्द्रस्य कीर्त्तौ।
एतैः प्रालेयपृथ्वीधररजतगिरिस्वर्णदीशीतभानु-
क्षीराम्भोराशिमुख्यैः प्रकटितमधुना तद्घनीभावरूपम् ॥१३०॥

अत्राश्रयस्य रोधःकुहरस्याल्पत्वम्। आश्रितस्य प्रतापरुद्रयशसो वैपुल्यम्।

द्वितीयो यथा।

क्वापि क्वापि कलिङ्गमालवमहाराष्ट्राङ्गवङ्गादया
भूपास्तादृशसैन्यवैभवसमाक्रान्ताखिलाशान्तराः।
लीनाः काकतिवीररुद्रनृपतेर्व्यूहप्रपञ्चश्रिया
निःसीमे बलवारिधौ विदधते पूर्त्ति न कोणेऽप्यहो ॥ १३१ ॥

---

स इति। आद्यमुदाहरति। स्तोक इति। स्वैरसंचारस्य स्वेच्छाविहारस्य हेलाया विस्रम्भस्य संकोचात्। प्रालेयपृथ्वीधरादिभिस्तद्घनीभावरूपं प्रकटितम्। अत्राधारे ब्रह्माण्डेऽल्पतमे आधेयायाः कीर्त्तेराधिक्येन संचारसंकोचात् तत्र तत्र पिण्डीभूताः कीर्त्तिखण्डा एवामी न तु हिमाचलप्रभृतय इत्यनयोरानुरूप्याभावः।

द्वितीयमुदाहरति। क्वापीति। व्यूहानां मकरादिसंज्ञितानां सेनासंनिवेशविशेषाणां प्रपञ्चस्य श्रिया समृद्ध्या निःसीमे उद्वेले बलवारिधौ कलिङ्गमालवादिसेनाः सेवार्थमागताः सरित इव समुद्रे यत्र कुत्रापि कोणे विलीयन्त इत्यर्थः।

---

१ °खण्डे T. २ °लीला° R. ३ °भवदतनुरुचः M. ४ रोदःकुहरस्य M. ५ °रुद्रयशो R. ६ °श्रियो M.; °श्रियाम् R.

अत्राश्रयस्य प्रतापरुद्रसैन्याम्बुधेर्वैपुल्यम्। आश्रितानामङ्गवङ्गकेलिङ्गप्रभृतिराजकानीकिनीनामल्पत्वम्।

अथ विभावनाविशेषोक्तिश्च।

कारणेन विना कार्यस्योत्पत्तिः स्याद् विभावना।
तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते॥

यत्र प्रसिद्धकारणपरित्यागेन कार्यस्योत्पत्तिर्निगद्यते सा विभावना। यत्र कारणसाकल्ये सत्यपि कार्यस्यानुत्पत्तिः सा विशेषोक्तिः।

यथा।

प्रतापरुद्रेण पराजितानां
प्रत्यर्थिनां विन्ध्यगुहागतानाम्।
तमांस्यरात्रीणि समुद्भवन्ति
तेजांसि घस्रेष्वपि नोद्भवन्ति॥ १३२॥

---

अत्राधारस्याधिक्यमाधेयस्याल्पत्वं च न प्रमाणविरुद्धं किं तु महोदनमध्ये भिक्षाकवल इव नानुरूपम्। अत एवोक्तम्। आधाराधेययोरानुरूप्याभाव इति।

अत्रानुरूप्यसारूप्यादधिकानन्तरं विभावनां तद्विपर्ययरूपां विशेषोक्तिं चोदाहरणलाघवार्थं युगपल्लक्षयति कारणेनेत्यादिना। यदि कारणमात्रेण विना कार्योत्पत्तिरुच्यते तदा विरोधो दुष्परिहारः स्यात्। कारणान्वयव्यतिरेकानुविधायित्वात् कार्यस्येत्यतस्तत्परिहारार्थमाह। प्रसिद्धेति। अत एव वैशिष्ट्येन कार्यस्य भावनाद् विभावना। साकल्य इति। कारणानामिति शेषः। अत्रादिविरोधपरिहारार्थं सामग्रीवैगुण्यमुन्नेयम्। विभावनायां कार्योत्पत्तौ विरोधः विशेषोक्तौ कारणसत्तायामित्युभयविरोधानुप्राणिताद्विरोधादेकैकविरोधानुप्राणितयोरनयोर्भेदः। उदाहरति। प्रतापेति। अविद्यमाना रात्रिः प्रसिद्धकारणं येषां तान्यरात्रीणि। तमांस्यन्धकारा मोहाश्च। घस्रेषु दिनेष्वपि। तेजांसि प्रकाशा

---

१ °त्राश्रयस्य P. २ R. drops कलिङ्ग. ३ °प्रभृतीनाम् P. ४ °राजानीकिनी° R. ५ °स्योत्पत्तिश्च P.; M. ६ यत्र च कारणे P., M. ७ नो भवन्ति M. ८ इतिविरोधः E. ९ °न्तातानामि° E.

अत्र तमःप्रादुर्भावस्य प्रसिद्धकारणं रात्रिः। तया विनापि तस्योत्पत्तिर्निबद्धा। अप्रसिद्धं कारणं शोकाद्यस्त्येव। तेयाहस्तु कारणेषु सत्स्वपि तेजसोऽनुत्पत्तिरिति। निष्प्रतापत्वादिनिमित्तमस्त्येव।

असंगत्यलंकारः।

कार्यकारणविरोधप्रस्तावादसंगतिरुच्यते।

**कार्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः।**

यत्रैकदेशवर्त्तिनोरपि कार्यकारणयोर्भिन्नदेशस्थितिर्निबध्यतेऽसावसंगत्यलंकारः।

यथा।

> बिभ्रत्युर्वीधुरां गुर्वीं वीररुद्रनरेश्वरे।
> भवन्त्यतितरां शश्वन्नम्राः सामन्तमौलयः॥ १३३॥

अत्र राज्ञि भूभारः शत्रुषु नमनमिति।

विचित्रालंकारः।

विरोधप्रस्तावाद्विचित्रं निरूप्यते।

**विचित्रं स्वविरुद्धस्य फलप्राप्त्यर्थमुद्यमः।**

---

विवेकाश्च। योजयति। अत्रेति। अत्र तमसां द्वैविध्येऽप्यभेदाध्यवसायादेकत्वमतिशयोक्त्या। सा चास्यामव्यभिचारिणीति न तद्बाधेनास्या उत्थानम्। अपि तु तदनुप्राणितत्वेनेत्यादिविशेषा अवान्तरभेदाश्च सर्वस्वे द्रष्टव्याः।

असंगतेः संगतिपूर्वकं लक्षणमाह। कार्येत्यादिना। धूमाग्न्योरिव कार्यकारणयोः समानदेशत्वं न्यायसिद्धं तदन्यथाकृतं चेदुचितसंगतिनिवृत्तेरसंगतिर्नामालंकारः। उदाहरति। बिभ्रतीति। स्पष्टम्।

विचित्रं संगमयन् लक्षयति। विरोधेत्यादि। स्वस्य हेतोर्विरुद्धस्य विपरीतस्य फलस्याप्त्यर्थमुद्यम उत्साहो विचित्रालंकारः। न चेदं विषमाद्यभे-

---

१ तथाहःसु रविकिरणेषु सत्स्वपि T'. २ अत्र निष्प्रताप° T'., M. ३ °निगद्यते R. ४ चान्ये नम्राः T'. ५ राज्ञो T'. ६ अन्यत्र तु नमनम् R.; अन्यत्र शत्रुषु नमनमिति T'., M. ७ °मित्यतिशयोक्तिः I. ८ विचित्रम् I. ९ चायम् I.

यत्र स्वविरुद्धफलप्राप्त्यर्थमुद्योगः क्रियते स विचित्रालंकारः[1] ।

यथा ।

प्रतापरुद्रनृपतेरग्रे दूरान्नरेश्वराः ।
अवरोहन्ति हस्तिभ्यस्तानारोढुमनर्गलम् ॥ १३४ ॥

अत्रारोढुमवरोहन्तीति विपरीतफलप्राप्त्यर्थं प्रयत्नः ।

अन्योन्यालंकारः ।

अथान्योन्यं निरूप्यते । तस्यापि विरोधमूलता ।

तदन्योन्यं मिथो यत्रोत्पाद्योत्पादकता भवेत् ।

यत्र परस्परं क्रियाद्वारकमुत्पाद्योत्पादकत्वं तदन्योन्यालंकारः[2] ।

यथा ।

आरोहता रुद्रनरेश्वरेण
विराजते काकतिराजपीठम्[3] ।
आरुह्य तेनोज्ज्वलरत्नभाजा
राजापि लक्ष्मीमधिकां बिभर्ति ॥ १३५ ॥

अत्र प्रतापरुद्रभद्रासनयोरन्योन्यालंकारालंकार्यत्वम्[4] ।

विषमालंकारः ।

अथ विरोधमूलो विषमालंकारः कथ्यते[5] ।

---

देऽन्तर्भवति । इह हि स्वनिषेधो वैपरीत्यं गमयति । विषमे तु व्यत्यय इति भेदस्य रुचकेनोक्तत्वात् । उदाहरति । प्रतापेति । योजयति । अत्रेति । अन्योन्यं निरूपयति । अथेत्यादिना । विरोधमूलतेति संगतिकथनम् । क्रिया-द्वारकमिति साक्षात् परस्परजन्यजनकभावस्य विरुद्धत्वादिति भावः । आरो-हतेति । अत्रालंकारद्वारा रुद्रभद्रासनयोर्जन्यजनकभाव इत्याह । अत्रेति ।

---

१ °प्राप्त्यर्थः M. २ °लंकारः कथ्यते P. ३ राज्यपीठम् M. ४ °पीठः R. ५ M. omits कथ्यते.

विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत् ।
विरूपघटना चासौ विषमालंकृतिस्त्रिधा ॥

यत्र कारणाद्विरुद्धकार्यस्योत्पत्तिस्तदेकं विषमम् । अकार्यभूतस्यानर्थस्योत्पत्तिर्द्वितीयम् । विरूपयोर्वस्तुनोः संघटने तृतीयम् ।

प्रथमं यथा ।

राज्ञः काकतिवीररुद्रनृपतेः खड्गात् तमालप्रभा-
दुद्भूतां शरदिन्दुकान्तिधवलां कीर्तिश्रियं पश्यताम् ।
लोकानां मुरवैरिपादकमलाज्जातां वियन्निम्नगां
श्रुत्वा संप्रति विस्मयाद्विरमति प्राप्तानुभावं मनः ॥ १३६ ॥

अत्र नीलवर्णात् खड्गादिन्दुधवलस्य यशसः समुत्पत्तिः ।

द्वितीयं यथा ।

आस्तां जयाशा रिपुभूपतीनां
संग्राममसीमानमुपागतानाम् ।
प्रतापरुद्रस्य विलोकनेन
भ्रश्यन्ति जीवैः सममायुधानि ॥ १३७ ॥

अत्र समरोद्योगफलस्य न केवलं जयस्यानुत्पत्तिर्यावज्जीवितभ्रशरूपानर्थोत्पत्तिरपि ।

---

संगतिपूर्वकं विषमं लक्षयति । विरुद्धेति । कारणविरुद्धकार्यस्येत्यर्थः । अनर्थस्य वेति । उत्पत्तिरिति शेषः । आद्यमुदाहरति । राज्ञ इति । अनुगतो भावो दार्ष्टान्तिकधर्मो यस्यासावनुभावो दृष्टान्तः प्राप्तानुभावमनुभूतदृष्टान्तं लोकानां मनो विस्मयात् विरमति । अद्वितीयमेव वस्तु विस्मयावहं न पुनः सद्वितीयमिति भावः । 'जुगुप्साविराम—' इत्यादिना विस्मयादिति पञ्चमी । योजयति । तत्रेति ।

द्वितीयोदाहरणं स्पष्टम् ।

---

१ सा P. २ °स्तथा R. ३ °स्योत्पत्तौ R. ४ तृतीयं विषमम् M. ५ पश्यता R. ६ P. omits इन्दु. ७ °फलस्योत्पत्तौ न केवलं M.; समरोद्योगस्य फलस्य न केवलम् R.; समरोद्योगेन केवलम् P. ८ विजय° R.; M. ९ °नुत्पत्तिः किं त्वायुषाञ्जीवभ्रंश° R.

तृतीयं यथा[1] ।

क्व भूपालास्ताद‍ृग्विभवमहनीयप्रकृतयः
क्व चेयं कान्तारस्थितिरशिववृत्त्येकनिलया ।
इति प्रेक्षं प्रेक्षं वनभुवि रिपून् रुद्रनृपतेः
प्रतापं श्लाघन्ते शबरपुरवीराः प्रतिदिशम् ॥ १३८ ॥

अत्र महानगरनिवासयोग्यानां राज्ञामशिवानां वनप्रदेशानां विरूपाणां संघटनम् ।

एवं विरोधगर्भालंकारा निर्णीताः ।

समालंकारः ।

अधुना विषमवैधर्म्यात् समं निरूप्यते[2] ।

**सा समालंकृतिर्योगो वस्तुनोरनुरूपयोः ।**

यत्रान्योन्यानुरूपपदार्थसंघट्टना क्रियते स समालंकारः ।

यथा ।

[1]विज्जाओ[3] सअलाओ[4] लच्छीए समं पआवरुद्दमि[5] ।
संघटिऊण सुसरिसं[6] होइ कअच्छो[7] सअं बह्मा ॥ १३९ ॥

---

तृतीयमुदाहरति । क्वेति । अशिववृत्तानाममङ्गलचरितानामेकनिलयः । प्रेक्षं प्रेक्षं पुनः प्रेक्ष्य । आभीक्ष्ण्ये णमुलि द्विर्भावः । दिशि दिशि प्रतिदिशम् । यथार्थेऽव्ययीभावः । 'अव्ययीभावे चाशरत्प्रभृतिभ्यः' इति समासान्तः ।

अथ विरोधगर्भालंकारान् निगमयन् समालंकारं संगतिपूर्वकं लक्षयति । एवमित्यादिना । विषमवैधर्म्यादिति । विषमतृतीयभेदवैधर्म्यादित्यर्थः । अयं चालंकारः संबध्यमानवस्तुनोः श्लाघ्यत्वाश्लाघ्यत्वाभ्यां द्विविध इत्यनुसंधेयम् । विज्जाओ इति । 'स्त्रियां शस इदोतौ' इति स्त्रीलिङ्गे विद्याशब्दे वर्तमानस्य

---

छाया ।

1 विद्याः सकला लक्ष्म्या समं प्रतापरुद्रे ।
संघट्य सुसदृशं भवति कृतार्थः स्वयं ब्रह्मा ॥

१ यथा omitted in R. २ समालंकारो निरूप्यते T. ३ विज्जाए P. ४ सअलाए P. ५ पआवरुद्देम्मि P. ६ सुरसरिसं M. ७ कअच्छो M. ८ निरूपयन् L.

अत्र प्रतापरुद्रे [2]सकलविद्यानां लक्ष्म्याश्च योगः ।

तुल्ययोगितालंकारः ।

अथ गम्यमानौपम्यालंकारवर्ग[3]प्रस्तावः ।

> प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः ।
> औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥

यत्र केवल[4]प्रस्तुतानां केवलाप्रस्तुतानां वा समानधर्मसंबन्धादौपम्यं [5]गम्यं सा तुल्ययोगिता ।

प्रस्तुतानां यथा ।

> भद्रासनाध्यासिनि वीररुद्रे
> [6]तत्कीर्तयश्च द्विषदङ्गनाश्च ।
> [7]अनारतं भ्रान्तिविशेषभाजः
> प्रतिक्षणं [8]पाण्डुरतां भजन्ते ॥ १४० ॥

अत्र कीर्तीनां द्विषदङ्गनानां च प्राकरणिकत्वम् । पाण्डुरतां भजन्त इति समानधर्मः ।

अप्राकरणिकानां यथा ।

---

शस ओदादेशः । अत्र श्लाघ्ययोः लक्ष्मीसरस्वत्योर्योगः । अश्लाघ्ययोस्तु 'धात्रा निम्बफलास्वादे काकलोको हि कल्पितः' इत्यादौ द्रष्टव्यः ।

गम्यौपम्यानलंकारान् प्रस्तौति । अथेति । तत्र प्रस्तुताप्रस्तुतव्यासाश्रयां तुल्ययोगितामाह । प्रस्तुतानामिति । केवलमित्युभयत्र संयोज्य व्याचष्टे । यत्रेति । तुल्यस्य योगोऽस्यां संजात इति तुल्ययोगितेत्यर्थः । सा च प्रस्तुतानामप्रस्तुतानां च प्रतिस्वं गुणेन क्रियया च संबन्धे चतुर्विधा । तत्र केवलप्रस्तुतविषयां गुणाश्रयामुदाहरति । भद्रासनेति ।

---

१ °रुद्रेण M. २ R. drops सकल. ३ °प्रस्तावना M. ४ प्रस्तुतानां केवलाप्रस्तुतानाम् M. ५ गम्यते T. ६ तत्कीर्तयश्च M. ७ अनारतभ्रान्ति° T. ८ पाण्डरताम् M.

कूर्मेन्द्रपन्नगाधीशा[1] हरित्करिकुलाद्रयः ।
मिथो निःसारतां प्राप्ताः काकतीन्द्रे महीभृति ॥ १४१ ॥

अत्र कूर्मेन्द्रप्रभृतीनामप्राकरणिकत्वम् । निःसारतां प्राप्ता इति समानधर्मः ।

अत्र गम्यमानौपम्यं [2]वैवक्षिकं न वास्तवम् ।

### दीपकालंकारः ।

अथ दीपकम् ।

प्रस्तुताप्रस्तुतानां तु सामस्त्ये तुल्यधर्मतः ।
औपम्यं गम्यते यत्र दीपकं तन्निगद्यते ॥

यत्र प्रस्तुताप्रस्तुतानां समस्तानामेव समानधर्मसंबन्धेनौपम्यं गम्यते तद्दीपकम् । तस्य धर्मस्यादिमध्यान्तगतत्वेन [3]त्रैविध्यम् ।

आदिदीपकं यथा ।

---

अन्योदाहरणमाह । कूर्मेन्द्रेति । हरित्करिणो दिग्गजाः । एवमुभयत्र क्रियाश्रयत्वेनाप्युदाहार्यम् । ननु प्रस्तुताप्रस्तुतविषयस्यौपम्यस्य कथमत्रोपपत्तिस्तत्राह । अत्रेति । केवलप्रस्तुतेषु कस्यचिदुपमानत्वस्य केवलाप्रस्तुतेषु कस्यचिदुपमेयत्वस्य कल्प्यमानत्वादिति भावः ।

अथ प्रस्तुताप्रस्तुतसमाश्रयं दीपकमाह । प्रस्तुतेति । अत्र प्रस्तुताप्रस्तुतानां सामस्त्यमत एवौपम्यं वास्तवमिति तुल्ययोगितातो विशेषः । गम्यत्वं पुनरस्य पूर्ववदत्रापि इवाद्यभावात् । प्राकरणिकाप्राकरणिकमध्ये कुत्रचिन्निविष्टः समानो धर्मः प्रयुज्यमानः प्रयाजादिः पुरोडाशस्येवेतरांशस्योपकरोति । अत एव दीपसादृश्यात् दीपकमित्युच्यते । ' संज्ञायां च ' इतीवार्थे कन्प्रत्ययः । तत्र विशेषमाह । तस्येति । आदिमध्यान्तगतत्वेन आदिमध्यान्तवाक्यगतत्वेनेत्यर्थः ।

---

१ °नागेश P. २ न वास्तवं किं तु वैवक्षिकम् T. ३ p. drops त्रै.

[1]भाइ णलेण कॆअजुअं रहुउलदीवेण सोरिणा तेता[2]।
दावारो तवजणिणा कॆलिजुअं[3] वीररुद्देण ॥ १४२ ॥

अत्र नॆलरामधर्मपुत्रैः[4][5] कृतत्रेताद्वापाराः शोभन्ते तथा वीररुद्रेण कलियुगं शोभत इत्यौपम्यं गम्यते ।

मध्यदीपकं यथा ।

[6]भाईरहिए जलणिही रॆअइ[7] जोण्हाइ[8] पुण्णिमाअंदो[9] ।
सुत्तीए कमलभॆवो[10] कित्तीए[11] पआवरुद्दो वि ॥ १४३ ॥

अत्र भागीरथ्यादिभिः समुद्रादयो यथा तथा कीर्त्या प्रतापरुद्रो रॆजत[12] इत्यौपम्यं गम्यते ।

[13]अॆन्तदीपकं यथा ।

---

भाईति । रॆघुकुलदीपेन[14] रामेण । तपसो जनिरुत्पत्तिर्यस्य तेन तपोजनिना धर्मपुत्रेण । अत्र भातीति समानधर्मस्यादिवाक्यगतत्वादादिदीपकम् ।

भाईरहिए इति । अॆत्र[15] राजत इत्यस्य द्वितीयवाक्यगतत्वान्मध्यदीपकम् ।

---

छाया ।

1 भाति नलेन कृतयुगं रघुकुलदीपेन शौरिणा त्रेता ।
द्वापारस्तपोजनिना कलियुगं वीररुद्रेण ॥

2 भागीरथ्या जलनिधी राजते ज्योत्स्नया पूर्णिमाचन्द्रः ।
श्रुत्या कमलभवः कीर्त्या प्रतापरुद्रोऽपि ॥

१ किअजुअओ M. २ तेदा M. ३ कलीजुअअं M. ४ यथा नल° R. ५ युधिष्ठिरैः R. ६ °रहीए M. ७ रेहइ P. ८ जोण्हए P. ९ °चंदो T', M. १० °हवो T'. ११ कित्तीए P. १२ विराजत M. १३ अन्त्यदीपकम् T'. १४ t. has before this भाति नलेन &c. १५ Before this t. has भागीरथ्या जलनिधी &c.

[1]सुरलोअं सुरणाहो णरलोअं वीररुद्दणरणाहो ।
फणिलोअं फणिणाहो रक्खइ णिरुपद्दवोव्वेअं ॥ १४४ ॥

अत्र यथा सुरलोकफणिलोकौ सुरनाथफणिनाथाभ्यां रक्षितौ तथा वीररुद्रेण नरलोको रक्षित इत्यौपम्यं गम्यते ।

अथ पदार्थगतालंकारद्वयानन्तरं वाक्यार्थगतमलंकारद्वयं निरूप्यते ।

प्रतिवस्तूपमालंकारः ।

यत्र सामान्यनिर्देशः पृथग्वाक्यद्वये यदि ।
गम्यौपम्याश्रिता सा स्यात् प्रतिवस्तूपमा मता ॥

---

सुरेति । अत्र रक्षणस्यान्तवाक्यगतत्वादन्तदीपकम् । एषूदाहरणेष्वनेककारकगतत्वेनैकक्रियादीपकम् । एवमनेकक्रियागतत्वेनैककारकमपि दीपकमस्ति । यथा ।

'साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम् ।
न कुतूहलि कस्य मनश्चरितं च महात्मनां श्रोतुम् ॥' इति ।

अनन्तरालंकारयोः संगतिमाह । अथेति । समानधर्मस्य पदार्थगतत्वात् । दीपकतुल्ययोगिते पदार्थगते । तन्निरूपणानन्तरं तदारब्धवाक्यार्थमूलालंकारद्वयमुच्यत इत्यर्थः । तत्रापि पूर्वोक्तरीत्यान्तरङ्गवस्तुभावमूलां प्रतिवस्तूपमामाह । यत्रेति । फलतो व्याचष्टे । यत्र वस्त्विवति । गम्यौपम्ये इवाद्यप्रयोगादिति भावः । अन्यथेयमुपमैव स्यादिति हृदयम् । तेन प्रतिवस्तु प्रतिवाक्यार्थमुपमा

---

छाया ।

1 सुरलोकं सुरनाथो नरलोकं वीररुद्रनरनाथः ।
फणिलोकं फणिनाथो रक्षति निरुपद्रवोद्वेगम् ॥

१ °नरनाथः P. २ णिरुवद्दुव्वोअं M. ३ T'. omits अत्र. ४ °फणिभ्याम् P. ५ रक्ष्यत T'. ६ रुद्रेण M. ७ °द्वयमुच्यते B. ८ Before this t. has सुरलोकं सुरनाथो &c.

यत्र वस्तुप्रतिवस्तुभावेन सामान्यं वाक्यद्वये निर्दिश्यते तत्र गम्यौपम्या प्रतिवस्तूपमा । सा साधर्म्यवैधर्म्याभ्यां द्विविधा ।

प्रथमा यथा ।

> मन्थनाचल एवैकः क्षमः सिन्धुविलोडने ।
> प्रतापरुद्र एवैकः शक्तः शत्रुविलोडने ॥ १४५ ॥

अत्र[1] यथा समुद्रविलोडने मन्थनाचलः क्षमस्तथा शत्रुविलोडने प्रतापरुद्रः शक्त इत्यौपम्यं गम्यते ।

द्वितीया यथा ।

> प्रतापरुद्र एवैकः पटीयान् जनरञ्जने ।
> चन्द्रादृते क्षमो नान्यश्चकोरपरितोषणे ॥ १४६ ॥

अत्र चन्द्रेण[2] यथा चकोरपरितोषः[3] क्रियते तथा वीररुद्रेण जनरञ्जनं क्रियत इति वैधर्म्येणौपम्यं गम्यते ।

दृष्टान्तालंकारः

अथ दृष्टान्तः[4] ।

> यत्र वाक्यद्वये[5] बिम्बप्रतिबिम्बतयोच्यते ।
> सामान्यधर्मो वाक्यज्ञैः स दृष्टान्तो निगद्यते ॥

यत्र बिम्बप्रतिबिम्बभावेन सामान्यं[6] वाक्यद्वये निर्दिश्यते स दृष्टान्तालंकारः । सोऽपि साधर्म्यवैधर्म्याभ्यां द्विविधः ।

आद्यो यथा ।

---

सामान्यं यस्यां सा प्रतिवस्तूपमा इत्यन्वर्थेयमजनि । तस्या द्वैविध्यमाह । साधर्म्येति । साधर्म्येणोदाहरति । मन्थानेति । अत्र संबन्धिभेदेन क्षमशक्तशब्दाभ्यां समानधर्मस्य कथनाद्वस्तुप्रतिवस्तुभावः ।

वैधर्म्येणोदाहरति । प्रतापेति । पटीयानतिपटुः ।

दृष्टान्तं लक्षयति । यत्रेति । द्वयोः सदृशयोरर्थयोरुपादानं बिम्बप्रतिबिम्बभाव इत्युक्तम् । अत्रापीवाद्युपादाने पूर्ववदुपमैव स्यादिति द्रष्टव्यम् । दृष्टोऽन्तो

---

१ R. and T. drops अत्र. २ यथा चन्द्रेण R., M. ३ °परितोषणम् T. ४ दृष्टान्तालंकारः T. ५ वाक्यद्वय° R. ६ साम्यम् M.

क्षोणीं बिभ्रतु भूभृतः कतिपये कापि प्रतिष्ठा पुनः
स्वर्णाद्रेर्दिगधीशवासनगरीसंदिग्धकुञ्जश्रियः ।
राजानो जनरञ्जनं विदधतां श्रीवीररुद्रप्रभोः
कोऽप्यन्यो महिमा जगत्त्रयधुराधौरेयदोःशालिनः ॥१४७॥

अत्र प्रतापरुद्रस्य मेरोश्च बिम्बप्रतिबिम्बभावादौपम्यं गम्यते ।

वैधर्म्येण यथा ।

काकतीन्द्रकृपादृष्टिमात्राज्ञाप्रति संपदः ।
तावदब्जानि निद्रान्ति यावन्नोदेति भानुमान् ॥ १४८ ॥

अत्र यथा भास्वदुदयमात्रेण पद्मानि समुन्मिलन्ति तथा प्रतापरुद्रदयाविलोकनमात्रेण संपदः संभवन्तीति वैधर्म्येण बिम्बप्रतिबिम्बनम् ।

## निदर्शनालंकारः ।

अथ गम्यमानौपम्यप्रस्तावान्निदर्शनालंकारो निरूप्यते ।

असंभवद्धर्मयोगादुपमानोपमेययोः ।
प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना ॥

यत्रोपमानधर्मस्योपमेयगतत्वेन निबद्धस्यान्वयासंभवात् तत्संबन्धार्थं बिम्बप्रतिबिम्बकरणमाक्षिप्यते सैका निदर्शना । तद्विपर्यये द्वितीया निदर्शना ।

---

निश्चयो यत्र स दृष्टान्त इत्यर्थः । साधर्म्येणोदाहरति । क्षोणीमिति । भूभृतः पर्वताः । दिगधीशानामिन्द्रादीनां वासनगरीत्वेन संदिग्धाः संदेहविषयीकृताः कुञ्जश्रियो यस्य तस्य तथोक्तस्य । तत्र कुञ्जेष्वेव नगरबुद्धिरुदेतीति भावः । संपूर्वको दिहिः सकर्मकोऽपि दृश्यते । यथा 'नानुपलब्धेन निर्णीतेऽर्थे न्यायः प्रवर्तते अपि तु संदिग्धे' इति । जगत्त्रयधुरायां धौरेयाभ्यां धुरन्धराभ्यां दोर्भ्यां शालते ताच्छील्येन तथोक्तस्य । धौरेयशब्दो व्याख्यातः ।

वैधर्म्येणोदाहरति । काकतीन्द्रेति ।

निदर्शनायाः संगतिमाह । अथेति । अत्र बिम्बप्रतिबिम्बभावोऽभ्युच्चयः । लक्षणमाह । असंभवदिति । उपमानधर्मस्योपमेयगतत्वेनोपमेयधर्मस्योपमानगतत्वेन वा संबन्धासंभवादसंभवद्वाक्यार्थसंबन्धा निदर्शना द्विविधेत्यर्थः ।

---

१ प्रतापरुद्रभावविलोकन° B.; प्रतापरुद्रावलोकन° M. २ वैधर्म्ये M. ३ अत्र P.
४ क्षोणीभृतः t.

प्रथमा यथा ।

> रिपुतिमिरमुदस्यन् रत्नसिंहासनस्थ-
> स्त्रिभुवनमहनीयः काकतीयक्षितीशः ।
> वहति भुवनविश्वोल्लासलीलामभिख्या-
> मुदयशिखरिचूडाचुम्बिनस्तीव्रभानोः ॥ १४९ ॥

अत्र तीव्रभानोरभिख्यायाः प्रकृतेऽसंभवादभिख्यासदृशीमभिख्यां वहतीति प्रतिबिम्बकरणाक्षेपः ।

उपमेयधर्मस्योपमानेऽसंभवाद्यथा ।

> वीररुद्रनरेन्द्रस्य यशोवैशद्यसंपदः ।
> लक्ष्यन्ते क्षीरवाराशिलीलादर्पणमण्डले ॥ १५० ॥

अत्र यशोवैशद्यस्य दुग्धार्णवेऽसंभवात् सादृश्योपगमेन बिम्बप्रतिबिम्बनं गम्यते ।

क्वचिन्निषेधवशादाक्षिप्तया प्राप्त्या बिम्बकरणाक्षेपो यथा ।

> काकतीन्द्रद्विषत्कान्ता धावन्त्यः प्रतिकाननम् ।
> पद्भ्यां मुञ्चन्त्यलाक्षाभ्यां स्थले रक्तोत्पलश्रियम् ॥ १५१ ॥

अत्र मुञ्चतीति निषेधात् पूर्वं रक्तोत्पलश्रीप्राप्तिराक्षिप्ता ।

## व्यतिरेकालंकारः

अथ व्यतिरेकः ।

---

व्याचष्टे । यत्रेति । तद्विपर्यय इति । उपमेयधर्मस्योपमानगतत्वेनेत्यर्थः । रिपुतिमिरमिति । उदयशिखरिचूडाचुम्बिनः प्राचीनपर्वताग्रवर्त्तिनस्तीव्रभानोर्विश्वोल्लासिलीलां लोकानन्दिस्वरूपामभिख्यां शोभां वहति । योजयति । अत्रेति ।

वीररुद्रेति । अत्रोपमेयधर्मस्योपमानेऽसंभवात् प्रतिबिम्बक्रियाक्षेप इत्याह । अत्र यश इति ।

अत्र च विशेषान्तरमाह । क्वचिदिति । काकतीन्द्रेति । अलाक्षाभ्यामलक्तकरहिताभ्याम् । पूर्वं राज्यसमय इत्यर्थः । संभवद्वाक्यार्थसंबन्धापीयमन्यैरङ्गीकृता । तदुक्तम् ।

---

१ काकतीयः क्षितीशः P. २ °विश्वोल्लासिलीला° T. ३ °लम्बिन° R., T. ४ दुग्धार्णवादावसंभवात् P. ५ तत्सादृश्यो° M. ६ मुञ्चतीति R., M. ७ उपमानधर्मस्योपमेयगतत्वेनेत्यर्थः p. ८ स्वराज्यभाग्यामित्यर्थः t.

भेदप्रधानसाधर्म्यमुपमानोपमेययोः ।
आधिक्याल्पत्वकथनाद् व्यतिरेकः स उच्यते ॥

यत्रोपमानादुपमेयस्याधिक्येन न्यूनत्वेन वा प्रतिपादनेन भेदप्रधानं साधर्म्यमवगम्यते स व्यतिरेकालंकारः ।

यथा ।

दिनकृति कुमुदैर्धृतो न रागः
शशिनि पराञ्चि परं सरोरुहाणि ।

---

'अभवन् वस्तुसंबन्धो भवन् वा यत्र कल्पयेत् ।
उपमानोपमेयत्वं कथ्यते सा निदर्शना ॥' इति ।

उदाहरणं तु

'चूडामणिपदे धत्ते यो देवं रविमागतम् ।
सतां कार्यातिथेयीति बोधयन् गृहमेधिनः ॥' इति ।

अत्र चक्रवर्ती व्याचक्रे[2] । 'बोधयन्निति कारीषोऽग्निरध्यापयतीतिवद् गिरिगृहमेधिनो बोधनक्रियासमर्थान् करोतीति तत्समर्थाचरणे णिचः प्रयोगात् संभवति वस्तुसंबन्धः' इति । ततस्तत्सदृशबोधनाक्षेपः । सैषा सर्वापि पदार्थवृत्तिः । वाक्यार्थवृत्तिर्यथा ।

'त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥' इति ।

न चायं दृष्टान्तः । अत्र वाक्ययोः सापेक्षत्वात् । यत्र निरपेक्षवाक्यद्वये बिम्बप्रतिबिम्बभावः स दृष्टान्तः । यत्र सापेक्षवाक्यद्वये सोऽसौ निदर्शनेति महाननयोर्भेदः । अत्र मालावैचित्र्यमपि द्रष्टव्यम् ।

अथ गम्यौपम्यप्रस्तावाद् व्यतिरेकं लक्षयति । भेदेति । भेदो वैलक्षण्यं तत्प्रधानं साधर्म्यं गम्यत इत्यध्याहृत्य व्याचष्टे । यत्रेति । उदाहरति । दिनकृतीति । रागोऽनुरागः । पराञ्चि प्रतिकूलानि । अयं तु कुवलयेन भूमण्डलेन[6]

---

१ पराञ्चिपरम् M. २ व्याचष्टे t. ३ तत्पाद° t. ४ पाण्डरी° p. ५ इत्यभिप्रेत्य t.
६ भूमण्डलेन is dropped in t.

कुवलयकमलादृतप्रकाशः
प्रभवति विश्वसुहृन् प्रतापरुद्रः ॥ १५२ ॥

अत्र रविशशिनोरसंभवेन सर्वप्रियंकरत्वेनोपमेयभूतस्य प्रतापरुद्रस्याधिक्यं कुवलयकमलादृतप्रकाश इति श्लेषसमुत्थापितो व्यतिरेकः ।

श्लेषालंकारः ।

अथ श्लेषालंकारो निरूप्यते ।

प्रकृताप्रकृतोभयगतमुक्तं चेच्छब्दमात्रसाधर्म्यम् ।
श्लेषोऽयं श्लिष्टत्वं सर्वत्राद्यद्वये नान्त्ये ॥

यत्र केवलप्रकृतयोः केवलाप्रकृतयोश्च श्लेषः कथ्यते तत्र प्रकारद्वये विशेषणविशेष्यश्लिष्टता । प्रकृताप्रकृतविषयेऽन्त्यभेदे विशेषणमात्रश्लिष्टता। विशेषणविशेष्ययोरपि श्लिष्टत्वे शब्दशक्तिमूलध्वनिप्रसङ्गात् । के-

---

कमलया लक्ष्म्या च अभेदाध्यवसितैः कुवलयकमलैरादृतप्रकाश इत्युपमानादुपमेयस्याधिक्यकथनं श्लेषमूलम् । उपमानादुपमेयस्याल्पत्वपक्षे सहृदयानधिरोहादुदाहरणं नोक्तम् । भेदद्वयलक्षणं तु सर्वस्वकारानुसारादिति रहस्यम् । तदीयोदाहरणं तु काव्यप्रकाशकारः समदूषयत् । तत्प्रकारो व्यतिरेकः प्रपञ्चश्च तत्रैव द्रष्टव्यः । 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति तल्लक्षणमेव साधीयः ।

व्यतिरेकस्य श्लेषगर्भत्वात् तत्प्रसङ्गानन्तरं श्लेषं प्रतिज्ञापूर्वकं लक्षयति । अथेति । यत्र केवलप्रकृतयोः केवलाप्रकृतयोः प्रकृताप्रकृतयोश्च शब्दमात्रसाधर्म्यमुक्तं चेच्छ्लिष्टपदोपनिबन्धः कृतश्चेदित्यनेनोपमाव्यवच्छेदः । अयं श्लेषालंकारः । अत्राद्यद्वये केवलप्रकृतश्लेषे केवलाप्रकृतश्लेषे चेत्यर्थः । सर्वत्र श्लिष्टत्वं विशेषणेषु विशेष्येषु च श्लेष इत्यर्थः । अन्त्ये उभयश्लेषे न सर्वत्र श्लिष्टत्वं किं तु विशेषणेष्वेवेत्यर्थः । विशेष्ययोरपि श्लिष्टत्वे शब्दशक्तिमूलध्वनिप्रसंगः । तदेतदाह । अत्रेति । ननूभयश्लेष एव विशेष्यश्लिष्टत्वे ध्वनिशङ्का नेतरभेदद्वय इत्यत्र किं

---

१ °रसंभवि° P. २ इत्युक्तमिति P. ३ यच्छ्लेषमात्र° P. ४ °नान्ते R., M. ५ R. drops च.

वलप्रकृतयोः केवलाप्रकृतयोश्चैकशब्दगोचरत्वेन न ध्वनिशङ्का । तत्रार्थ-द्वयप्रतिपादनेऽप्रस्तुतत्वेन प्रस्तुतत्वेन वा वैषम्याभावादभिधैव समर्था । प्रस्तुताप्रस्तुतविषये तु अभिधायाः प्रस्तुतैकपरतन्त्रत्वादप्रस्तुतार्थप्र-तिपत्तिर्व्यञ्जनव्यापारायत्तैव । तथा चोक्तं काव्यप्रकाशे ।

> 'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
> संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ॥' इति ।

तदेवं त्रिधा श्लेषः ।

तत्र केवलप्राकरणिकयोर्यथा ।

---

नियामकमत आह । केवलप्रकृतयोरिति । आद्यभेदद्वये विशेष्ययोरपि श्लिष्टत्वे अर्थद्वयस्य प्रस्तुतत्वाविशेषादप्रस्तुतत्वाविशेषाद्वा अभिधाया अकुण्ठितसंचा-रित्वात् प्रस्तुताप्रस्तुतौ द्वावप्यर्थौ वाच्यावेव । अतो नाद्यभेदद्वये ध्वनिशङ्केति भावः । उभयश्लेषे कथं ध्वनेरवकाश इत्याकाङ्क्षायामाह । प्रस्तुताप्रस्तुत-विषये त्विति । प्रकरणादिकं प्रस्तुतार्थ एवाभिधां नियच्छति नाप्रस्तुतार्थे । अतस्तस्य न वाच्यत्वमिति भावः । ननु मा भूद् वाच्यत्वं व्यङ्ग्यत्वं तु कुतो लभ्यते इत्यत आह । अप्रस्तुतेति । अर्थान्तरस्य व्यञ्जनैकव्यापारविषयत्वे वृद्धसं-मतिमाह । अनेक इति । अनेकार्थस्याक्षादिशब्दस्य संयोगाद्यैः 'संयोगो विप्रयो-गश्च—' इत्यादि वाक्यपदीयोक्तैरर्थनिश्चायकैर्वाच्यत्वे नियन्त्रिते प्रस्तुतपरत्वेन नियमिते सति अवाच्यार्थधीकृदर्थान्तरप्रतीतिकृद् व्यापृतिरञ्जनं व्यञ्जनव्यापार इत्यर्थः । तदेवमिति । प्रकृताप्रकृतोभयगतत्वेनेत्यर्थः । अयं च श्लेषः प्रकारा-न्तरेणापि त्रिविधः । तथा हि जतुकाष्ठन्यायेन सभङ्गपदः शब्दश्लेषः । एकना-लावलम्बिफलद्वयन्यायेनाभङ्गपदोऽर्थश्लेषः । उभयनिबन्धे तूभयश्लेष इति । काव्यप्रकाशकारः पुनरिममर्थश्लेषं शब्दश्लेषमेवोक्त्वान्यथार्थश्लेषमवोचत् ।

---

१ °श्चैकार्थशब्द° R. २ °गोचरत्वे तु न R., T. ३ अत्रार्थ° T. ४ °प्रतिपादनेन M. ५ त्रिविधः T., M. ६ °तत्वाविशेषात्र अभिधाया t. ७ °व्यापारत्वात् t. ८ प्रकृताप्रकृतौ t. ९ प्रकरणार्थम् t. १० °व्यापारैकविषयत्वे t. ११ प्रकृत° t.

राज्ञः पूजाविधिं धत्ते सकलोमाधवेतिथिः ।
नीलकण्ठकलापाङ्के स्फुरदब्जमणित्विषि ॥ १५३ ॥

अत्र पूजाविषयतया हरिहरयोः प्राकरणिकत्वम् ।

अप्राकरणिकयोर्यथा ।

सदृशः काकतीन्द्रोऽयं महाकुलमहीभृताम् ।
शिरोगृहीतसन्मार्गस्फुरत्कटकसंपदाम् ॥ १५४ ॥

अत्र महाकुलानां हरिश्चन्द्रप्रभृतीनां कुलपर्वतानां चोपमानत्वेनाप्राकरणिकत्वम् ।

प्राकरणिकाप्राकरणिकयोर्यथा ।

---

तद्विवेकस्तु तत्रैव द्रष्टव्यः । केवलप्रकृतिश्लेषमुदाहरति । राज्ञ इति । नीलकण्ठकलापाङ्के मयूरपिच्छचिह्ने स्फुरन्ती अब्जमणेः कौस्तुभस्य त्विड् यस्य तस्मिन् माधवे सकलस्तिथिः प्रतिपदादिः राज्ञः पूजाविधिं धत्ते । नीलः कण्ठो यस्यासौ नीलकण्ठः । कलाः षोडश पातीति कलापश्चन्द्रोऽङ्कः शेखरो यस्य स तथोक्तः । उभयोर्विशेषणसमासः तस्मिन् स्फुरन्ती अब्जमणेश्चन्द्रकान्तस्य त्विडिव त्विड् यस्य तस्मिन्नुमाधवे सकलातिथिः पूजाविधिं धत्ते । 'तदाद्यास्तिथयोर्द्वयोः' इत्यमरः । सर्वेष्वपि तिथिषु हरिहरौ पूजनीयावित्यर्थः । सकलोमाधवेतिथिरित्यत्र सभङ्गपदत्वाच्छब्दश्लेषत्वम् । अन्यत्राभङ्गपदत्वादर्थश्लेषत्वं च यथासंभवं द्रष्टव्यम् ।

केवलाप्रकृतश्लेषमुदाहरति । सदृश इति । शिरसा गृहीतो गौरवेण स्वीकृतः सन्मार्गः साधुमार्गो येषां ते तथोक्ताः । स्फुरन्त्यः कटकानामलंकाराणां संपदो येषां ते तथोक्ताः । उभयोर्विशेषणसमासः । महत् कुलं येषां ते महाकुलाः । ते च ते महीभृतो राजानो हरिश्चन्द्रादयः पर्वताश्च । शिरोभिः शिखरैर्गृहीतः सन्मार्गो नक्षत्रमार्गो येषां ते तथोक्ताः । स्फुरन्त्यः सानुसंपदो येषां तेषां महतां कुलमहीभृतां कुलपर्वतानां च सदृशः ॥

---

१ माधवो P. २ °कलापान्ते P.; °कलापाङ्के $M_3$.

विजितारिपुरो मूर्त्तौ विलसत्सर्वमङ्गलः ।
राजमौलिः प्रतापाङ्करुद्रो रुद्र इव स्थितः ॥ १५५ ॥

अत्र प्रतापरुद्ररुद्रयोःप्राकरणिकाप्राकरणिकत्वम् ।

परिकरालंकारः ।

विशेषणमूलवैचित्र्यमूलत्वात् परिकर उच्यते ।

यत्राभिप्रायगर्भा स्याद्विशेषणपरम्परा ।
तत्राभिप्रायविदुषामसौ परिकरो मतः ।

यत्र विशेषणानि साभिप्रायाणि निबध्यन्ते स परिकरालंकारः ।

यथा ।

राज्ञो यादववंशपार्थिवमणेः प्रख्यातशौर्यश्रिय-
स्त्वङ्गत्तुङ्गतुरङ्गसैन्यमहतो मानैकवित्तस्य च ।
सद्यो रुद्रनरेन्द्रनायकचमूनाथेन केनाप्यधि-
क्षिप्तस्याचरितानि सेवणपतेर्जानाति सा गौतमी ॥ १५६ ॥

अत्र राज्ञ इत्येवमादिविशेषणान्यभिप्रायगर्भाणि ।

---

उभयश्लेषमुदाहरति । विजितेति । विजितारिपुरो निर्जितशत्रुनगरस्त्रिपुरान्तकश्च मूर्तौ विलसन्ति सर्वाणि मङ्गलानि विलसन्ती सर्वमङ्गला पार्वती च यस्य सः । राजमौली राजश्रेष्ठश्चन्द्रशेखरश्च । अत्र रुद्रप्रतापरुद्रयोर्विशेष्ययोः पृथगुपादानमत उभयश्लेषः ।

संगतिपूर्वकं परिकरं लक्षयति । विशेषणेति । अभिप्रायगर्भा व्यङ्ग्यगर्भा । व्यङ्ग्यस्य वाच्योन्मुखत्वेन वाच्यातिशायित्वाभावात् परिकर इत्यन्वर्थोऽलंकारः । उदाहरति । राज्ञ इति । राज्ञो न तु यस्य कस्यचित् । यादववंशपार्थिवमणेर्महाकुलीनस्य न म्लेच्छस्य । प्रख्यातशौर्यश्रियोऽनेकधा विहितपराक्रमस्य न त्वनाघ्रातरणगन्धस्य । त्वङ्गत्तुङ्गतुरङ्गसैन्यमहतो नैकाकिनः । मानैकवित्तस्य न तु यथा कथंचित् प्राणपरायणस्य । सेवणपतेः केनाप्यन्यचमूपतिना अधिक्षिप्तस्य सतः । आचरितान्यायुधसन्न्यासादीनि । सा कवलितसेवणपतिसर्वस्वा गौतमी जानातीत्येवं साभिप्रायविशेषणत्वम् । उत्प्रासगर्भाण्यभिप्रायगर्भाणीत्यर्थः ।

---

१ °वैचित्र्यात् R. २ P. drops निबध्यन्ते. ३ °मुत्प्रास° T., M.

## आक्षेपालंकारः ।

अथाक्षेपालंकारः ।

विशेषबोधायोक्तस्य वक्ष्यमाणस्य वा भवेत् ।
निषेधाभासकथनमाक्षेपः स उदाहृतः ॥

यत्र विशेषप्रतिपत्त्यर्थमुक्तवक्ष्यमाणयोः प्राकरणिकयोर्निषेधाभासः कथ्यते स आक्षेपः । उक्तविषये वस्तु वा कथनं वा निषिध्यते । वक्ष्यमाणविषये कथनमेव निषिध्यते । तत्रापि सामान्यरूपेण प्रतिज्ञा विशेषरूपेण निषेधः । अंशोक्तावंशान्तरस्य वा निषेधः । एवं चतुर्विधोऽयमाक्षेपः । क्रमेणैषामुदाहरणानि ।

नरेन्द्रमौले न वयं तव संदेशहारिणः ।
जगत्कुटुम्बिनः कश्चिन्न शत्रुरिति कथ्यते ॥ १५७ ॥

अत्र राजसन्धिविग्रहकारिणायुक्तौ न वयं संदेशहारिण इति वस्तुनिषेधः । स चानुपपद्यमानः संधिविग्रहकालोचितकैतववचनपरिहारेण तत्त्ववादित्वे पर्यवसितः । सर्वजगत्पालकस्य तव शत्रुभावेन नालोकनीया राजानः किं तु भृत्यरूपेण संरक्षणीया इत्येवमादिविशेषमाक्षिपति ।

---

गम्यत्वप्रस्तावात् परिकरानन्तरं विशेषगम्यत्वाश्रयमाक्षेपं लक्षयति । विशेषेति । यत्रोक्तस्य वक्ष्यमाणस्य वा प्राकरणिकत्वेन विधातुमिष्टस्य अत एव निषेधानर्हस्य यो निषेधो विशेषबोधार्थमभिधीयमानः सन्नाभासी भवति स आक्षेप इत्यर्थः । तस्य चतुर्धा विभागमाह । उक्तविषय इत्यादिना । तत्रोक्तवस्तुविषयनिषेधमुदाहरति । नरेन्द्रेति । अजातशत्रोः किमर्थं संधिविग्रहकारिण इति भावः । वस्तुनिषेधं योजयति । अत्रेति । तत्फलं विशेषमाह । स चेति । संदेशहारिषु तत्त्वनिषेधोऽनुपपद्यमानः सर्वमदीया राजानो भृत्यरूपेण भरणीया इत्यादिविशेषं बोधयतीत्यर्थः ।

---

१ आक्षेपालंकारः T. २ P. drops प्रतिज्ञा विशेषरूपेण निषेधः. ३ क्रमेण यथा R. ४ °मौलेर्न P. ५ राजसंदेश° T. ६ °वादित्वपर्य° M. ७ पर्यवसितः T.

कथननिषेधो यथा ।

> वयमशरणा इत्येषोक्तिः कथं घटते जगत्-
> त्रितयशरणे त्रायस्वास्मानिति स्फुटमब्रुता ।
> सकलजनतारक्षादक्षे त्वयि प्रणता इति
> त्रिभुवननमस्कार्ये सिद्धं प्रतापमहीपते[5] ॥ १५८ ॥

अत्र वयमशरणा इत्येवमात्मोक्तिकथन[1]निषेधादाभासरूपाद[2]वश्यं प-रिपालनीयत्वादि[3]विशेषः प्रतीयते ।

वक्ष्यमाणविषये सामान्यं प्रतिज्ञाय कथननिषेधो यथा[4] ।

> विज्ञापयामस्ते किंचित् काकतीयकुलोद्वह[5] ।
> विज्ञाप्यते किमथवा सर्वज्ञे रक्षके त्वयि ॥ १५९ ॥

विज्ञापयाम[6] इति सामान्यं प्रतिज्ञाय[7] कथननिषेधाभासात् सर्वथा वयं रक्षणीया इति विशेष आक्षिप्यते ।

अंशोक्तावंशान्तरस्य निषेधो यथा ।

> प्रतापरुद्रः स्वयमिद्धतेजा
> दैवं च तद्विक्रमदत्तहस्तम् ।

---

कथननिषेधमुदाहरति । वयमिति । सर्वेषां नाथे रक्षके नमस्कार्ये च त्वयि दीप्यमाने सर्वान्तर्भूतानामस्माकमशरणात्वाद्यस्य प्रणता इत्यादीनि वचनानि व्यर्थानीत्यर्थः । योजयति । अत्रेति । वयमशरणा इत्येवमाद्युक्तिभिः यः कथननिषेधस्तस्मादाभासरूपादविषयप्रवृत्त्या निषेधस्य प्ररोहाभावादाभासत्वमिति भावः ।

वक्ष्यमाणविषये सामान्यं प्रतिज्ञाय विशेषनिषेधमुदाहरति । विज्ञापयाम इति । अत्र प्रथमार्धे सामान्येन प्रतिज्ञा यत् द्वितीयार्धे वयं रक्षणीया इति विशेषबोधार्थं विशेषकथननिषेधादाक्षेपः ।

अंशोक्तावंशान्तरनिषेधमुदाहरति । प्रतापेति । इद्धतेजाः समृद्धप्रतापः ।

---

१ इत्याद्युक्तिकथन° R. २ °दस्मत्परि° R. ३ परिपाल्यत्वादि° P. ४ सामान्यप्रतिज्ञया विशेषनिषेधो यथा R. ५ °कुलोद्भव R.; °महीपते M₂. ६ अत्र विज्ञापयाम R. ७ कथनसामान्यप्रतिज्ञया R.

यूयं च तूलोपमसारभाज-
स्तद्युक्तमेवं यदि वा किमुच्चैः ॥ १६० ॥

अत्र प्रतापरुद्रो महीयान् यूयमल्पा इत्यंशोक्त्या यदि वा किमुच्चैरित्यंशान्तरनिषेधाभासेन सर्वथा प्रणामैः प्रसादनीयोऽयं न तु[1] प्रातिपक्ष्यमवलम्बनीयं[2] युष्माभिरिति शत्रुस्त्रीवचनभङ्ग्या विशेष आक्षिप्यते ।

समानार्थतया[3]ऽनिष्टविध्याभासोऽप्याक्षेप इत्यभ्युपगम्यते[4] ।

यथा चेष्टनिषेधस्यानुपपद्यमानतयाभासत्वं तथानिष्टविधेरप्यनुपपद्यमानतयाभासत्वम् ।

यथा ।

नाथ प्रतापरुद्रस्य सेवां त्यजसि चेत्त्यज ।
अरण्यगृहमेधिन्या रीतिरभ्यस्यते मया ॥ १६१ ॥

अत्रानिष्टभूतं[5] प्रतापरुद्रसेवात्यजनं[6] तद्रिपुकामिन्या विधीयते । स[7] विधिरनुपपद्यमान आभासे पर्यवस्यति । अरण्यगृहमेधिन्या रीतिरभ्यस्यत इत्यनेन विध्याभास एव उपबृंहितः ।

व्याजस्तुत्यलंकारः ।

अथ गम्यप्रस्तावाद् व्याजस्तुतिरुच्यते ।

---

दत्तहस्तमनुकूलम् । तूलोपमसारभाजो निःसारा इत्यर्थः । तदेवं युक्तमित्यंशोक्त्या किमुच्चैरित्यंशान्तरनिषेधः । तस्य व्यङ्ग्यं विशेषमाह । सर्वथेति ।

आक्षेपान्तरमुपक्षिपति । समानेति । समानार्थतया समानन्यायतयेत्यर्थः । तदेवाह । यथा चेति । अनुपपत्तिवशादिष्टनिषेधस्येवानिष्टविधेरप्याभासत्वादाक्षेपत्वमिति भावः । उदाहरति । नाथेति । अनिष्टविध्याभासं योजयति । अत्रेति ।

अथ गम्यत्वप्रस्तावाद्वाच्याभासत्वप्रसङ्गेनाक्षेपानन्तरं व्याजस्तुतिं लक्षयति ।

---

१ T. omits तु. २ प्रातिपक्ष्येणावलम्बनीयः P., R. ३ समर्थतया R. ४ इत्युपगम्यते P. ५ तत्रानिष्ट° M. ६ प्रतापरुद्रपादसेवा° M.; प्रतापरुद्रस्य पादसेवा° T. ७ स च विधि° T.

निन्दया वाच्यया यत्र स्तुतिरेवावगम्यते।
स्तुत्या वा गम्यते निन्दा व्याजस्तुतिरसौ मता॥

यत्र निन्दाकथनमुखेन स्तुतिर्गम्यते एका सा। यत्र स्तुतिमुखेन निन्दा गम्यते सा द्वितीया व्याजस्तुतिः।

क्रमेण यथा।

काकतीयविभोः कीर्त्या किं वाद्य धवलीकृतम्।
यत्तदीयारिवक्त्रेषु दृश्यते कालिमा महान्॥ १६२॥

स्तुत्या निन्दा यथा।

प्रतापरुद्रनृपतेरहो साहसिका द्विषः।
यद्विशन्त्युदर्धान् शैलानारोहन्ति समन्ततः॥ १६३॥

अप्रस्तुतप्रशंसालंकारः।

अथ गम्यत्वप्रस्तावादप्रस्तुतप्रशंसोच्यते।

अप्रस्तुतस्य कथनात् प्रस्तुतं यत्र गम्यते।
अप्रस्तुतप्रशंसेयं सारूप्यादिनियन्त्रिता॥

यत्र सारूप्येण सामान्यविशेषभावेन कार्यकारणभावेन वाप्रस्तुतकथनात् प्रस्तुतप्रतीतिस्तत्राप्रस्तुतप्रशंसा। अप्रस्तुतात् प्रस्तुतप्रतीति-

---

निन्द्येति। यत्र निन्दया स्तुत्या वा वाच्यया प्रमाणान्तरबाधितस्वरूपया यथाक्रमं स्तुतिनिन्दावगम्यते सा व्याजेन व्याजरूपा वा स्तुतिरिति द्विविधाप्यन्वर्था व्याजस्तुतिरित्यर्थः। काकतीयेति। विशेषनिषेधे शेषाभ्यनुज्ञानमिति न्यायेनारिवक्त्रव्यतिरिक्तं विश्वं कीर्त्या धवलीकृतमिति निन्दया स्तुतिर्गम्यते।

प्रतापेति। अत्र शत्रूणां साहसप्रशंसया भीरुत्वं व्यज्यते।

स्तुतिप्रसङ्गाद्व्याजस्तुत्यनन्तरमप्रस्तुतप्रशंसामाह। अथेति। यद्यप्यप्रस्तुतमप्रस्तुतत्वादेव न कथनीयं तथापि प्रस्तुतार्थप्रतीत्यर्थत्वादविरोधः। तत्र गम्यागम्ययोः प्रस्तुताप्रस्तुतयोर्नियामकं संबन्धमाह। सारूप्येति। आदिग्रहणात् सामान्यविशेषभावः कार्यकारणभावश्च गम्यते। तेषामेवार्थान्तरप्रतीतिहेतुत्वात् तेन सामान्यं विशेषः कार्यं कारणं सरूपं च प्रस्तुतं स्वस्वप्रतियोगिनोऽप्रस्तुतस्य

---

१ R. and M. drop सा. २ निन्दाप्रतीतिः सा M. ३ कीर्त्याम् P. ४ सारूप्यादे, नियन्त्रिता R. ५ वा° M. ६ 'प्रतीतेः समा' P. ७ गृह्यते t.

रित्यनेन समासोक्तेर्व्यावृत्तिः । न च कार्यात् कारणप्रतीतावनुमानाविर्भावशङ्का । अनुमानालंकारे प्रत्याय्यप्रत्यायकयोर्द्वयोरपि प्राकरणिकत्वाभ्युपगमात् । अनेन पर्यायोक्तस्य व्यावृत्तिरपि । न चायं ध्वनिः । प्रतीयमानस्य वाच्यसिद्ध्यङ्गत्वात् ।

तत्र सारूप्येण यथा ।

> आशासु प्रशमितवासनोदयेभ्यः
> किं लब्धं भ्रमरगणैर्जरत्तरुभ्यः ।
> पुन्नागो नवनवसौरभप्रसूनै-
> रामोदं दिशति निवासमारभध्वम् ॥ १६४ ॥

अत्र भ्रमरवृत्तान्तेनाप्रस्तुतेन सर्वानसंपूर्णविभवानुर्वीश्वरान् विहाय सकलगुणपरिपूर्णः सर्वजनानन्दी प्रतापरुद्र एक एव सर्वेषां विदुषां सेव्य इति प्रस्तुतं प्रतीयते ।

सामान्याद्विशेषप्रतीतिर्यथा ।

---

कथनात् प्रतीयत इति पञ्चाप्रस्तुतप्रशंसाभेदाः । न चेयं समासोक्तिः । तद्विपर्ययेण प्रवृत्तेरित्याह । अप्रस्तुतादिति । कार्यात् कारणप्रतीतिभेदस्यानुमानेऽन्तर्भावं वारयति । न चेति । अत एव पर्यायोक्तव्यावृत्तिरपीत्याह । अनेनेति । तत्राप्युभयोः प्रकृतत्वादिति भावः । व्यङ्ग्यमत्रालंकार्यमत आह । न चेति । तत्र हेतुमाह । प्रतीयमानस्येति । वाच्यसिद्ध्यङ्गत्वादप्रस्तुतस्य वाच्यत्वमेवायुक्तमिति कृत्वा प्रस्तुतं प्रतीयमानं तत्साधनत्वेनोपकरोतीति वाच्यसिद्ध्यङ्गं नाम गुणीभूतव्यङ्ग्यं न प्रधानमतो न ध्वनिरिति भावः । तत्र सारूप्येणोदाहरति । आशास्विति । प्रशमितवासनोदयेभ्यो निवर्तितपरिमलप्रचारेभ्यो जरत्तरुभ्यो जीर्णवृक्षेभ्यः । अत्राप्रस्तुतभ्रमरवृत्तान्तेन प्रस्तुतप्रतापरुद्रवृत्तान्तः सारूप्येण प्रतीयते । साधर्म्येणेदमुदाहरणम् । वैधर्म्यादिनिबन्धनास्त्वन्यतो द्रष्टव्याः ।

---

१ P. drops द्वयोः. २ प्राकरणिकोपगमात् P. ३ पर्यायोक्तव्यावृत्ति° M. ४ °नुर्वीश्वरान् M. ५ सर्वगुण° R. ६ प्रतापरुद्र एव सेव्य R. ७ °प्रतिपत्तिर्यथा P.

यशस्विनी पद्मभवस्य सृष्टि-
रुत्पादयित्री नृपशेखराणाम्[1] ।
तत्पालनाह्लालनभाग्ययोग्यो
जातश्चिरान्मध्यमलोक एषः ॥ १६५ ॥

अत्र प्रतापरुद्रस्य गुणमहत्त्वे प्रस्तुते सामान्यमभिहितम् ।

विशेषात् सामान्यप्रतीतिर्यथा[2] ।

[10]दट्ठुमणा वि ण पेक्खइ[3] ण भणइ वॅत्तुं[4] सेकोऊहला[5] वि ।
पॅरिसासआ वि णॅ[6] प्पसइ[7] वणिआए कीरिसी सिंट्ठी[8] ॥ १६६ ॥

अत्र मुग्धानां संगमे महती लज्जेति सामान्ये प्रस्तुते विशेषोऽभिहितः ।

कार्यात् कारणप्रतीतिर्यथा ।

गाधा इवार्णवा जाता नीचा इव महाद्रयः ।
महीमवतरत्यस्मिन् काकतीयकुलेश्वरे[9] ॥ १६७ ॥

अत्रार्णवादीनां गाधत्वादिभिः कार्यभूतैरप्रस्तुतैः कारणभूतं प्रतापरुद्र-
गाम्भीर्यादि प्रतीयते ।

---

यशस्विनीति । अत्राप्रस्तुतराजसामान्यवृत्तान्तवर्णनया प्रस्तुतराजविशेषप्र-
तापरुद्रगुणमहिमप्रतीतिः ।

दट्ठुमणावीति । अत्र दर्शनाद्युत्कण्ठायामप्यदर्शनादीनामप्रस्तुतानां लज्जा-
विशेषाणामुक्त्या प्रस्तुतलज्जासामान्यप्रतीतिः । लज्जाकार्याणां लज्जात्वमौपचा-
रिकम् ।

गाधा इति । अत्राप्रस्तुतार्णवगाधादिकार्यवर्णनया प्रस्तुतप्रतापरुद्रगाम्भीर्य-
प्रतीतिः ।

---

छाया ।

1 द्रष्टुमना अपि न पश्यति न भणति वक्तुं सकुतूहलापि ।
स्पर्शाशयापि न स्पृशति वनितायाः कीदृशी सृष्टिः ॥

१ नृपशेखराणि R., नृपशेखरस्य P. २ प्रतिपत्तिर्यथा P. ३ प्रकलइ P. ४ वक्तुम् M. ५ सकोउहला वि M. ६ पासुसआ वि ण छिवइ M. ७ णा छिवइ P. ८ सिट्ठि P. ९ °कुलोद्वहे M., १० Before this t. has द्रष्टुमना अपि &c.

रूपकहेतुत्वेन तर्कानुमानवैलक्षण्यम् ।

यथा ।

रजोधूमः सेनाव्यतिकरभवो यत् प्रसरति
स्फुलिङ्गा दृश्यन्ते भटघटितकौक्षेयकभुवः ।
ततो मन्ये यात्राशुचिसमयजो रुद्रनृपतेः
प्रसूतः कोपाग्निर्दहति रिपुभूपालनगरीः ॥ १७२ ॥

काव्यलिङ्गालंकारः ।

अथ काव्यलिङ्गम् ।

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।

यत्र हेतुर्वाक्यगतत्वेन पदगतत्वेन वा प्रतिपाद्यते तत् काव्यलिङ्गम् ।

यथा ।

प्रतापरुद्र इत्येषा कापि पञ्चाक्षरी शुभा ।
हृदिस्थां बिभ्रतो भूपा वशीकुर्वन्ति संपदः ॥ १७३ ॥

अत्र वाक्यार्थगतो हेतुः ।

---

धर्मत्वं सपक्षे सत्त्वं विपक्षाद् व्यावृत्तिरित्येतद्रूपत्रयसहितो हेतुः साधनम् । यत्र साध्यप्रतीतये साध्यं निर्दिश्यते सोऽनुमानालंकार इत्यर्थः । तर्कानुमानवैलक्षण्यं दर्शयति । रूपकहेतुकत्वेनेति । उदाहरति । रजोधूम इति । यात्रैव शुचिसमय आषाढमासो ग्रीष्म इत्यर्थः । अत्र क्रोधाग्नौ साध्ये रजोधूमः खड्गभुवः स्फुलिङ्गाश्च लिङ्गम् । सर्वसंप्रतिपन्ना रूपत्रयसम्पन्नयोर्धूमाग्न्यो रूपकगर्भत्वादनुमानालंकारत्वम् ।

अनुमानप्रसङ्गादनन्तरं काव्यलिङ्गमाह । हेतोरिति । वाक्यार्थहेतुकं विशेषणगत्या पदार्थहेतुकं वा काव्यलिङ्गं द्विविधमित्यर्थः । काव्यग्रहणं तर्कवैलक्षण्यार्थम् । तेन व्याप्तिपक्षधर्मतादयो न क्रियन्त इति रुचकः । अत एवानुमानादस्य वैधर्म्यमिति लभ्यते । प्रतापेति । अत्र संपद्वशीकरणे वाक्यार्थे प्रतापरुद्रपञ्चाक्षरीप्राशस्त्यलक्षणो वाक्यार्थो हेतुः ।

---

१ °हेतुकत्वेन R. २ मतोऽयं प्रस° P. ३ करकलितकौक्षे° M. ४ नगरीम् M. ५ तत्र R. ६ सन्ततम् M. ७ °संप्रतिपन्नरूपत्रय° I.

पदार्थगतो यथा ।

म्लानापि भूभृतां भाललिपिरुच्छ्वसिता पुनः ।
प्रतापरुद्रदेवाङ्घ्रिनखज्योत्स्नामृतोक्षिता ॥ १७४ ॥

अत्र पूर्वं परिम्लानाया भूपाललिपेः पुनरुच्छ्वासे प्रतापरुद्रनरेन्द्रचरणनखचन्द्रिकासेचनं हेतुः । तस्य विशेषणगतत्वात् पदार्थगतत्वोक्तिः ।

अर्थान्तरन्यासालंकारः ।

अथार्थान्तरन्यासः ।

कार्यकारणसामान्यविशेषाणां परस्परम् ।
समर्थनं यत्र सोऽर्थान्तरन्यास उदाहृतः ॥

यत्र कार्यकारणभावेन सामान्यविशेषभावेन वा प्रकृतसमर्थनं क्रियते सोऽर्थान्तरन्यासः ।

---

म्लानेति । अत्र शत्रुभूपालभाललिपेः पुनरुच्छ्वासे नरेन्द्रनखज्योत्स्नामृतोक्षितत्वपदार्थो हेतुः । यत्र नखज्योत्स्नामृतोक्षितत्वादिति त्वतलादिशिरस्कतया पदार्थस्य हेतुत्वेनोपादाने वाक्यार्थहेतुके हेतुत्वप्रतिपादकपञ्चम्यादिप्रयोगे च नालंकारः । तथाहेतुहेतुमद्भावस्य लौकिकत्वेन विच्छित्तिविशेषाभावात् । यत्र तूपात्तस्य हेतुत्वं यथोदाहृते विषये तत्र न कश्चिद्विरोध इति सर्वस्वरहस्यम् । तदेतन्मनसि निधायाह । तस्य विशेषणगतत्वात् पदार्थगतत्वोक्तिरिति ।

कश्चित्काव्यलिङ्गसाम्यात् तदनन्तरमर्थान्तरन्यासं लक्षयति । कार्येति । व्याचष्टे । यत्रेति । प्रकृतसमर्थनमिति । समर्थनार्हत्वेनाभिहितस्य प्रकृतस्य यत् समर्थनमुपपादनं न स्वपूर्वत्वेन प्रतीतिरित्यनुमानव्यवच्छेदः । समर्थ्यसमर्थकभावे समानेऽपि ताटस्थ्येन हेतुत्वात् काव्यलिङ्गाद् भेदः । ननु ताटस्थ्येन हेतुत्वं सामान्यविशेषभाव एव न तु कार्यकारणभावे । अतस्तत्र का गतिरिति चेत् लक्षणान्तरमस्तु यथायोगमन्यत्र वान्तर्भवत्विति समाधेयम् । तदुक्तं चक्रवर्त्तिना ।

---

१ म्लाना महीभृताम् $M_{3}$. २ °मृताङ्किता R. ३ °नखज्योत्स्ना° T. ४ °सेचना M. ५ विशेषणयोग्यत्वात् R. ६ पदार्थगतत्वम् P. ७ °मुपादानं t. ८ p. drops न तु कार्यकारणभावे.

कार्यकारणभावेन यथा ।

भूपाः प्रतापरुद्रस्य नता भवत नोन्नताः ।
उन्नतान् नमयत्येष नतानुन्नमयत्यसौ ॥ १७५ ॥

अत्र फलरूपेणौन्नत्येन नम्रत्वकारणं समर्थितम् ।

सामान्याद्विशेषसमर्थनं यथा ।

उद्वेजिता रुद्रनरेश्वरस्य
रणापदानैः प्रतिपक्षभूपाः ।
बिभ्रत्यमी चित्रमचेतनेभ्यो
भीतस्य सर्वं भयकारि नूनम् ॥ १७६ ॥

अत्र भीतस्य सर्वं भयकारीति सामान्यमचेतनेभ्यो रिपुभूपा बिभ्यतीति विशेषं समर्थयति ।

विशेषात् सामान्यसमर्थनं यथा ।

दुष्टोऽपि महतां संगाद्भवत्येव हि सज्जनः ।
प्रतापरुद्रमभ्येत्य कलिः कृतयुगायते ॥ १७७ ॥

अत्र प्रतापरुद्रसंगतिमहिम्ना कलिः कृतयुगसदृश इति विशेषेण सामान्यसमर्थनम् ।

---

'अप्रतीतप्रतीतौ स्यादनुमानव्यवस्थितिः ।
पदार्थाद्वाथ वाक्यार्थान्निर्देशे सति हेतुतः ॥
समर्थनं प्रतीतस्य काव्यलिङ्गद्वयं मतम् ।
भवेदर्थान्तरन्यासस्ताटस्थ्ये हेतुभावतः ।
कार्यकारणभावे तु तस्योक्तं लक्षणान्तरम् ॥'

इति । उदाहरति । भूपा इति । कार्येण कारणसमर्थनं योजयति । अत्रेति ।

उद्वेजिता इति । रणैरेवापदानैरद्भुतकर्मभिः । सामान्येन विशेषः समर्थ्यत इत्याह । अत्र भीतस्येति ।

दुष्टोऽपीति । अत्र विशेषेण सामान्यसमर्थनं योजयति । अत्र प्रतापेति ।

---

१ °न्नमयत्यपि P. २ रिपुभूपाला M.

कार्यकारणभावेऽपि कारणात् कार्यसमर्थनं काव्यलिङ्गेऽन्तर्भूतमिति तन्नोक्तम् । अतः प्रकारत्रयमर्थान्तरन्यासस्य ।

तर्कन्यायमूलालंकारानन्तरं वाक्यन्यायमूलालंकारा निरूप्यन्ते ।

यथासंख्यालंकारः ।

उद्दिष्टानां पदार्थानां पूर्वं पश्चाद्यथाक्रमम् ।
अनूद्देशो भवेद्यत्र तद्यथासंख्यमिष्यते ॥

यत्र येन क्रमेणोद्दिष्टाः पदार्थास्तेनैव क्रमेणानूद्दिश्यन्ते तत्र यथासंख्यालंकारः ।

यथा ।

गाम्भीर्यमौन्नत्यमनर्गलत्वं
प्रतापरुद्रे समवेक्ष्य धाता ।
अम्भोनिधिष्वद्रिषु दिग्गजेषु
सृष्टिं प्रयासैकफलाममंस्त ॥ १७८ ॥

अर्थापत्त्यलंकारः ।

अथार्थापत्तिः ।

---

कारणेन कार्यसमर्थनं काव्यलिङ्गेऽन्तर्भूतत्वान्नोदाहृतमित्याह । कार्येति । वैधर्म्याश्रयणे षड् भेदा द्रष्टव्याः ।

तर्कपरिशुद्धबुद्धेरेव मीमांसायामधिकारात् तन्मूलानन्तरमेतन्मूलानां प्रस्ताव इत्याह । तर्केति । यथासंख्यं लक्षयति । उद्दिष्टानामिति । पूर्वं निर्दिष्टा उद्दिष्टाः । पश्चान्निर्देशोऽनूद्देशः । तेनात्र पूर्वपश्चात्पदे स्फुटार्थे । व्याचष्टे । यत्रेति । आग्नेयादीनामग्नेरहं देव यज्ययेत्याद्यनुमन्त्रणमन्त्रवद्यत्रोद्दिष्टक्रमेणानूद्देशः स यथासंख्यालंकार इत्यर्थः ।

गाम्भीर्यमिति । समुद्रादिभ्योऽधिकमस्य गाम्भीर्यादिकमिति भावः । गाम्भीर्याद्युद्दिष्टक्रमेण समुद्रादीनामनूद्देशाद्यथासंख्यालंकारः । क्रमालंकारोऽयमिति केचित् ।

---

१ °मुच्यते

एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यदापतेत्।
कैमुत्यन्यायतः सा स्यादर्थापत्तिरलंक्रिया॥

यत्र कस्यचिदर्थस्य निष्पत्तौ तत्समानन्यायात् कैमुत्येनार्थान्तरमापतति सोऽर्थापत्तिरलंकारः। न चात्रानुमानशङ्का। कैमुत्यन्यायसंबन्धरूपत्वात्।

यथा।

समन्तादुद्वेलैर्विविधहयधाटीकलकलै-
र्जगत्यां क्रामन्नप्यजनि विधुरः सेवणपतिः।
मनाक् क्रोधोदञ्चद्भ्रुकुटिकुटिले रुद्रनृपतौ
नृपाणामन्येषां विफलितरुषां क्वैव गणना॥ १७९॥

अपि च।

त्रैलोक्यसारोऽपि सुवर्णशैलः
प्रतापरुद्रेण नृपेण तुल्यम्।
तुलां समारोढुमपूर्ण एव
महीभृतां का गणनेतरेषाम्॥ १८०॥

---

वाक्यविदामर्थापत्तिश्च न्याय इति कृत्वा संप्रत्यर्थापत्तिं लक्षयति। एकस्येति। यत्रैकस्य वस्तुनः कस्यचिदर्थस्य भावान्निष्पत्तेः। किमुतैव कैमुत्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययः। तन्न्यायतोऽन्यद्वस्तु वस्त्वन्तरमापतेत् सार्थापत्तिः स्यादित्यर्थः। व्याचष्टे। यत्रेति। यथा दण्डभक्षणादपूपभक्षणमर्थादापतितं तद्वत् कस्यचिदर्थस्य निष्पत्तौ तत्सामर्थ्यरूपात् समानन्यायादर्थान्तरमापतति सोऽर्थापत्त्यलंकार इत्यर्थः। अत एव सर्वस्वसूत्रं 'दण्डापूपिकयार्थान्तरापतनमर्थापत्तिः' इति। अनुमानान्तर्भावं वारयति। न चेति। उदाहरति। समन्तादिति। अत्र प्राकरणिकः सेवणपतिवृत्तान्तो नृपान्तरवृत्तान्तमप्राकरणिकमाक्षिपति।

त्रैलोक्येति। तुलां सादृश्यम्। महीभृतां राज्ञामद्रीणां च। अत्राक्षेप्याक्षेपक-

---

१ वस्त्वन्यथा T. २ °संबन्धि° P. ३ तुल्यः R. ४ °दाहृते L.

अथ प्रतापरुद्रापेक्षया मेरावप्यसारेऽन्येषां महीभृतामर्थादसारत्वं कैमुत्यादापतति।

परिसंख्यालंकारः।

अथ परिसङ्ख्या।

एकस्य वस्तुनः प्राप्तावनेकत्रैकदा यदि।
एकत्र नियमः सा हि परिसङ्ख्या निगद्यते॥

यदेकं वस्तु युगपदनेकत्र संभाव्यमानमेकत्रैव नियम्यते सा परिसंङ्ख्या। सा प्रथमं प्रश्नपूर्विका तदन्यथा चेति। तयोर्द्वयोर्वर्जनीयस्य शाब्दत्वार्थत्वाभ्यां द्वैविध्ये चातुर्विध्यम्।

तत्र।

शाब्दवर्जनीया प्रश्नपूर्विका यथा।

किं मण्डनं त्रैलोक्याः काकतितिलको न हाटकक्षितिभृत्[1]।
स्तोतव्यः कः सुधियां रुद्रनरेन्द्रो न मन्दारः[2]॥ १८१॥

आर्थवर्जनीया[3] प्रश्नपूर्विका यथा।

---

योरुभयमहीभृद्वृत्तान्तयोरप्राकरणिकत्वम्। महीभृतामित्यत्र श्लेषो विशेषः। एवमप्राकरणिकस्य प्राकरणिकाक्षेपेऽप्युदाहार्य्यम्।

परिसङ्ख्यां लक्षयति। एकस्येति। एकस्य वस्तुनोऽनेकत्रैकदा युगपत्प्राप्तावन्यतो निवृत्त्यर्थमेकत्र नियमनं परिसङ्ख्येत्यर्थः। एतेन

'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति गीयते॥'

इति मीमांसोक्तनियमपरिसङ्ख्ययोर्भेदो नालंकारिकैरङ्गीकृत इति द्रष्टव्यम्। परिवर्जनेन कस्यचिद्वर्जनेन कुत्रचित् सङ्ख्यानं वर्णनीयत्वेन गणनं परिसङ्ख्येत्यन्वर्थेयम्। तस्या विभागमाह। सेति। तयोरिति प्रश्नपूर्विकाप्रश्नपूर्विकयोरित्यर्थः। क्रमेणोदाहरति। किमिति। अत्र मण्डनत्वेन प्राप्तयोः काकतीन्द्रकनकाचलयोः कनकाचलं कण्ठोक्त्या वर्जयित्वा काकतीन्द्रे नियमनात् शाब्दवर्जनीया प्रश्नपूर्विका परिसङ्ख्येत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्।

---

१ °क्षितिभृतः R. २ मन्दरः क्षितिभृत् P. ३ आर्थि° T.; अर्थ° M., $M_2$.

किं वा क्षौमवितानं लोकानां काकतीयकुलकीर्तिः ।
किं सौख्यं वसुमत्या रुद्रनरेन्द्रस्य भुजवासः ॥ १८२ ॥

अप्रश्नपूर्विका शाब्दवर्जनीया यथा ।

रागो धर्मे न विषयसुखे संगतिः सत्सभायां
न स्त्रीगोष्ठ्यां व्यसनमनिशं नीतिशास्त्रे न चाक्षे ।
कीर्त्यां नित्यार्जनचतुरता नार्थजाते विनोदो
विद्याभ्यासे न च परिजने रुद्रदेवस्य राज्ञः ॥ १८३ ॥

आर्थवर्जनीया अप्रश्नपूर्विका यथा ।

भूरेव भुवनं देवः स्वयंभूरेव पार्थिवः ।
प्रतापरुद्र एवैकशिलैव नगरी शुभा ॥ १८४ ॥
क्षोणीं रुद्रनराधीशो रक्षति क्षतविद्विषि ।
बलिसद्मन्यहिभयं त्रिदिवे गोत्रभित्कथा ॥ १८५ ॥

अलंकारस्यास्य श्लेषेण चारुत्वातिशयः ।

उत्तरालंकारः ।

उत्तरात् प्रश्न उन्नेयो यत्र प्रश्नोत्तरे तथा ।
बहुधा च निबध्येते तदुत्तरमुदीर्यते ॥

---

किं वेति । अत्र वर्जनीयस्य चन्द्रिकादेरार्थत्वम् ।

राग इति । अक्षे द्यूते । अत्र विषयसुखादि वर्जनीयं शाब्दम् । प्रश्नस्तु नास्ति ।

भूरेवेति । न स्वर्गादिरित्यार्थवर्जनीया प्रश्नरहिता परिसङ्ख्या ।

क्षोणीमिति । बलिसद्मनि पाताले । अहिभयं सर्पभयं । स्वपक्षप्रभवं भयं च । 'महीभुजामहिभयं स्वपक्षप्रभवं भयम्' इत्यमरः । त्रिदिवे गोत्रभित्कथा इन्द्रप्रसङ्गः कुलघातुकप्रसङ्गश्च । अत्राभ्युच्चयमाह । अलंकारस्येति ।

परिसङ्ख्यायां प्रश्नप्रसङ्गात् तदनन्तरमुत्तरं लक्षयति । उत्तरादिति । यत्रोत्तरादुपनिबध्यमानः प्रश्न उन्नीयते तदेकमुत्तरम् । न चेदमनुमानम् । पक्षधर्मत्वादिनिर्देशाभावात् । तथा प्रश्नपूर्वकं लोकोत्तरमुत्तरं बहुधा निबध्यते तदप-

---

१ न चाक्षे R.; न कामे $M_3$. २ धर्मे $M_3$. ३ आर्थि° T.; अर्थ° $M_1$, $M_2$.
४ राधिक्ष° P. ५ रक्षके P., M. ६ क्षितविद्विषि P. ७ निवर्त्येते M.

यत्रोत्तरान्निबध्यमानात् प्रश्न उन्नीयते तदेकमुत्तरम् । चारुत्वार्थमसकृल्लोकोत्तरं प्रश्नप्रतिपादनपूर्वमुत्तरं द्वितीयमुत्तरम् ।

क्रमेण यथा ।

किमद्य व्युत्पत्तिस्तव सुजनलोकव्यवहृता
यदद्य ज्ञातव्यं प्रभवति यदा रुद्रनृपतिः ।
तदारभ्योन्मूर्धा जयति विशदो धर्मविभवो
महीदेवाश्चोचद्विविधविभवारम्भमुदिताः ॥ १८६ ॥

अत्र प्रतापरुद्रो यदा भवति तदारभ्य पूर्णा धर्मप्रतिष्ठा महीदेवा अपि तथाविधसंतोषभाजः । किमधुना पृच्छसीत्युत्तरात् प्रतापरुद्रराज्ये किं धर्मप्रतिपालनमस्ति किं सुखिनो भूसुरा इत्युन्नीयते प्रश्नः ।

द्वितीयो यथा ।

[1]किं णु धर्णं कुलविज्ञा को लाहो सज्जणेण सहवासो ।
का णअरी एअशिला को रौआ वीररुद्दणरणाहो ॥ १८७ ॥

---

रम् । सकृच्चारुत्वं नास्तीति बहुधा ग्रहणम् । नेयं परिसङ्ख्या । तद्वदत्र व्यवच्छेद्यव्यवच्छेदकभावस्याविवक्षितत्वात् । क्रमेणोदाहरति । किमद्येति । सुजनलोकव्यवहृता साधुजनप्रसिद्धा व्युत्पत्तिर्धार्मिकत्वादिज्ञानं तवाद्य किं यदद्य तव च ज्ञातव्यं भवतीति शेषः । किं तदित्याकाङ्क्षायामाह । प्रभवतीति । प्रभुर्भवतीत्यर्थः । उन्मूर्धा परिपूर्णः । विशदो निर्मलो निरुपाधिक इत्यर्थः । महीदेवा ब्राह्मणाश्च उद्यद्भिर्विविधैर्विभवारम्भैरैश्वर्यविजृम्भणैर्मुदिताः । अत्रोत्तरात् प्रश्नोन्नयनं योजयति । अत्रेति ।

द्वितीयमुदाहरति । किं ण्विति । अत्र व्यवच्छेद्यव्यवच्छेदकभावमविवक्षित्वा बहुधा प्रश्नोत्तरनिबन्धनादुत्तरालंकारः ।

---

छाया ।

1 किं नु धर्म्यं कुलविद्या को लाभः सज्जनेन सहवासः ।
का नगरी एकशिला को राजा वीररुद्रनरनाथः ॥

१ व्युत्पादं तव P. २ °विविधारम्भ° M. ३ तदामभृति M. ४ धर्मप्रतिष्ठा पूर्णा P., M. ५ किम् is dropped in T. ६ इति प्रश्नद्वयमुन्नीयते R.; इति प्रश्न उन्नीयते M. ७ राओ M.

विकल्पालंकारः ।

वाक्यन्यायप्रस्तावाद्विकल्प उच्यते ।

विरोधस्तुल्यबलयोर्विकल्पालंकृतिर्मता ।

यत्र तुल्यप्रमाणानुशिष्टयोर्विरुद्धयोर्द्वयोर्युगपत्प्राप्तौ एकस्यासंभव-स्तत्र विकल्पः । औपम्याच्चारुत्वम् ।

यथा ।

भूपालाः क्रियतां मूर्ध्नां धनुषां वा विनम्रता ।
पादच्छायाऽन्ध्रनाथस्य विन्ध्याद्रेर्वा निषेव्यताम् ॥ १८८ ॥

अत्र प्रतापरुद्रे प्रभवति राज्ञां संधिविग्रहाभ्यां तुल्यप्रमाणाभ्यां शिरो नमनधनुर्नमने युगपदेव प्राप्ते तयोर्विरुद्धत्वाद्यौगपद्यासंभवे विकल्पः ।

समुच्चयालंकारः ।

विकल्पप्रतिपक्षभूतः समुच्चयो निरूप्यते ।

गुणक्रियायौगपद्यं समुच्चय उदाहृतः ।

यत्र गुणानां वैमल्यादीनां क्रियाणां च दर्शनादीनां युगपदवस्थानं तत्र समुच्चयालंकारः ।

---

विकल्पं संगतिपूर्वकं लक्षयति । वाक्यन्यायेत्यादिना । तुल्यप्रमाणविशिष्ट-त्वात्तुल्यबलयोरेकत्र युगपत्प्राप्तौ विरुद्धत्वाद्यौगपद्यासंभवे विकल्प इत्यर्थः । लौकिकविकल्पाद्वैलक्षण्यं दर्शयति । औपम्याच्चारुत्वमिति । भूपाला इति । पदच्छाया चरणच्छाया । अन्यत्र प्रत्यन्तपर्वतच्छाया । अत्र श्लेषो विशेषः । लक्षणं योजयति । अत्रेति ।

समुच्चयस्य संगतिमाह । विकल्पेति । लक्षणमाह । गुणेति । व्याचष्टे । यत्रेति । यत्र गुणानां क्रियाणां च व्यस्तानां समस्तानां वा युगपदवस्थानं समु-

---

१ काव्यन्यायमूलप्रस्तावात् R.; वाक्यन्यायमूलप्रस्तावात् M. २ विरोधे तुल्य° T. ३ औपम्यगर्भता° M. ४ भूपालैः M. ५ चापि वा नतिः R. ६ संधिविग्रहवाक्याभ्याम् M., P. ७ P. drops तुल्यप्रमाणाभ्याम्; T. has तुल्यबलप्रमाणाभ्याम्. ८ संभवेन P. ९ क्ष समु T.

यथा ।

प्रतापरुद्रनृपतौ भद्रासनमुपेयुषि ।
सतां प्रसन्नं हृदयमसतां कलुषं मनः ॥ १८९ ॥

क्रियासमुच्चयो यथा ।

[1]पेच्छइ [2]इमां णरिन्दो पविसइ मअणो [3]अ गलइ माणो अ ।
घुण्णइ मणो [3]अ सुण्णं किं एदं उवह सहिआओ ॥ १९० ॥

एते भिन्नविषये उदाहरणे ।

एकविषयत्वे यथा ।

त्रैलोक्य[5]प्रथमानकीर्तिमहितश्रीवीररुद्रप्रभोः
सेवार्थं चिरयत्सु काकतिपुरे भूपेषु तद्योषितः ।
द्वारं यान्ति विलोकयन्ति पुरतो निश्वासमातन्वते
शुष्यन्ति प्रलपन्ति यान्ति तनुतां मुह्यन्ति मूर्च्छन्ति च ॥१९१॥

---

चयालंकार इत्यर्थः । विषयभेदेन गुणसमुच्चयमुदाहरति । प्रतापेति । तथैव क्रियासमुच्चयमुदाहरति । पेच्छईति[7] ।

विषयभेदाभावेन क्रियासमुच्चयमुदाहरति । त्रैलोक्येति । तद्योषितः प्रोषितभर्तृकाः उत्कण्ठया द्वारं यान्ति पुरतो विलोकयन्ति यावद्दृष्टिः प्रसरतीति भावः । निश्वासमातन्वते प्रियमदृष्ट्वा चिन्तयेति भावः । ज्वरेण शुष्यन्ति मुह्यन्ति जडीभवन्ति इतिकर्तव्यतामूढमनसो भवन्तीत्यर्थः । यद्वा मोहमूर्च्छयोः संचार्यवस्थाभेदेन भेदः । अत्रावस्थानामविवक्षितः क्रमः ।

---

छाया ।

1 प्रेक्षते इमां नरेन्द्रः प्रविशति मदनश्च गलति मानश्च ।
घूर्णति मनश्च शून्यं किमेतत् पश्यत सख्यः ॥

१ पच्छइ P.; पेक्खइ R. २ इमं T.; असं M. ३ P. drops अ. ४ स्सुंण P. ५ °प्रथिमान° R. ६ °मह्तः M. ७ t. After this t. has प्रेक्षते इमां नरेन्द्रः &c. ८ विशमन° t.

गुणक्रियासामस्त्येन यथा ।

देवे काकतिवीररुद्रनृपतौ जैत्रप्रयाणोन्मुखे
माद्यद्दन्तिचलत्पदातिविचलद्वाजिप्रधावद्रथम् ।
विच्छायाननमाकुलाक्षमुदयत्कार्पण्यमाविर्भवत्-
कम्पं भ्राम्यति सर्वतः प्रतिवनं प्रत्यर्थिभूभृद्गणः ॥ १९२ ॥

द्वितीयः समुच्चयः ।

खलेकपोतन्यायेन बहूनां कार्यसाधने ।
कारणानां समुद्योगः स द्वितीयः समुच्चयः ॥

यत्रैकं कार्यं साधयितुमहमहमिकया बहूनां कारणानामुद्यमः सोऽपि समुच्चय एव । युगपदनेकेषामवस्थानात् ।

यथा ।

---

गुणक्रिययोः सामस्त्येन समुच्चयमाह । देव इति । माद्यद्दन्तीत्यादीनि चत्वारि प्रयाणक्रियाविशेषणानि । अत्र कम्पः क्रिया । अन्ये गुणाः ।

समुच्चयत्वसाम्यात् द्वितीयसमुच्चयं लक्षयति । खलेकपोतेति । पुरा किल कुत्र खले लुब्धकेन प्रसारिते जाले चित्रग्रीवो नाम कश्चित् कपोतराजः सपरिवारो धान्यलोभादागत्य बद्धः परस्परं मन्त्रयित्वा सर्वेऽपि संभूय जालेन सहोड्डीय लुब्धकाददृश्यतां गत्वा कुत्रचित् प्रदेशे हिरण्यकनाम्नो मूषिकराजान्मित्रात् पाशच्छेदं लब्ध्वा सपरिवारः स्वगृहं प्रविष्ट इति पञ्चतन्त्रकथां मनसि निधायाह । खलेकपोतन्यायेनेति । यथा पाशच्छेदं प्रति सर्वेषां कपोतानामुद्यमः एवं कस्यचित् कार्यस्य साधने बहूनां कारणानामुद्यमे सोऽपि समुच्चय एवेति । व्याचष्टे । यत्रेति । अहमहमिका व्याख्याता । समुच्चयत्वे हेतुमाह । युगपदिति । अस्यैव तत्करमिति संज्ञान्तरम् । तदुक्तम् ।

---

१ °सामस्त्ये R. २ °प्रयाणो° R.; °प्रयाणो° P. ३ °पतत्पदाति° M. ४ M. drops एव. ५ L omits कारणानाम्.

शुभ्रं यशः शौर्यमहच्च वृत्तं
विद्यानवद्या विमलं कुलं च ।
प्रतापरुद्रस्य नरेश्वरस्य
लोकोत्तरां रीतिमुदश्चयन्ति ॥ १९३ ॥

अत्र यशःप्रभृतीनां लोकोत्तरकीर्तिसंपादने प्रत्येकं हेतुत्वेऽपि युगपत्खलेकपोतन्यायसंबन्धः ।

समाध्यलंकारः ।

अथ समाधिरुच्यते ।

एकस्मिन् कारणे कार्यसाधनेऽन्यत् परापतेत् ।
काकतालीयनियतः स समाधिरुदीर्यते ॥

यत्रैकस्मिन् कारणे कार्यसाधनाय प्रवृत्ते काकतालीयतयान्यत् कारणमागत्य तत्कार्यं सुकरं करोति स समाध्यलंकारः ।

यथा ।

---

'तत्सिद्धिहेतावेकस्मिन् यत्रान्यत् तत्करं भवेत् ।' इति । उदाहरति । शुभ्रमिति । सद्योगे चेदमुदाहरणम् । शुभ्रत्वेन शोभनस्य यशसो लोकोत्तररीतिसंपादने शौर्यमहत्तादिना शोभनैकवृत्तादिभिः समुच्चयात् । 'दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽप्युत्सुकम्—' इत्यादौ स्मरमार्गणानां दुर्वारत्वेनाशोभनानां तादृशैरेव प्रियतमादिभिः समुच्चय इत्यत्रासद्योगः । प्रियतमादीनां स्वतः शोभनत्वेऽपि विरहिविषयत्वेनात्राशोभनत्वं ज्ञेयम् । 'शशी दिवसधूसरो गलितयौवना कामिनी' इत्यादौ शशिनः शोभनस्यापि दिवसधूसरत्वादशोभनत्वेन सदसत्त्वात्तादृशैरेव कामिनीप्रभृतिभिः समुच्चय इति सदसद्योगोऽत्र द्रष्टव्य इति त्रिविधोऽयं समुच्चयः ।

तत्करसादृश्यात् तदनन्तरं समाधिं लक्षयति । एकस्मिन्निति । व्याचष्टे । यत्रेति । केनचिदारब्धस्य कार्यस्य काकतालीयन्यायेन कारणान्तरेण समाधानात् समाधिरित्यर्थः । काकतालीयेति वृत्तिविषये काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ । तेन काकागमनमिव तालपतनमिव काकतालमितिवार्थे 'समा-

---

१ कीर्तिषु° M.; २ °नीतिसंपा° T. ३ °कपोतिकया संरम्भः M.; °कपोतन्यायेन संरम्भः R. ४ सति कार्यस्य R. ५ °नियतम् P.

रणाङ्गणे रुद्रनरेन्द्ररोष-
शमाय राज्ञां विहितस्तुतीनाम् ।
वक्त्रेषु यद्वायुवशात् पतन्ति
तृणानि देवस्य स पक्षपातः ॥ १९४ ॥

अत्र प्रतापरुद्रनरेन्द्रक्रोधशान्त्यर्थं[1] रणाग्रे प्रक्रान्तस्तुतीनां राज्ञां वक्त्रेषु वायुवशात् काकतालीयतया पतितैस्तृणैः कोपशान्तिलक्षणकार्यसुकरत्वम्[2] ।

## अथ लोकन्यायमूलालंकारा निरूप्यन्ते ।

### भाविकालंकारः ।

अतीतानागते यत्र[3] प्रत्यक्षे इव लक्षिते[4] ।
अत्यद्भुतार्थकथनाद्भाविकं तदुदाहृतम् ॥

साच तद्विषयात्' इति ज्ञापनात् सुप्सुपेति समासः । उभयत्रोपमेयं क्रमेणोभयत्र[5] देवदत्तागमनं दस्यूपनिपातश्च तेन देवदत्तदस्युसमागमः काकतालसमागमसदृश इति लभ्यते । ततः काकतालमिव काकतालीयमिति द्वितीयस्मिन्निवार्थे 'समासाच्च तद्विषयात्' इति छप्रत्ययः । यथा पतता तालफलेन काकवधस्तद्वदुपनिपतितैर्दस्युभिर्देवदत्तस्य वध इत्यर्थः । यदाह भगवान् भाष्यकारः । 'एवं तर्हि द्वाविवार्थौ काकागमनमिव तालपतनमिव काकतालं काकतालमिव काकतालीयम्' इति । तच्च व्याख्यातं कैयटेन । 'तत्र काकागमनं देवदत्तागमनस्योपमानं तालपतनं दस्यूपनिपातस्य । तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानमिति वधादिः काकतालीयादिशब्दवाच्यः संपद्यते' इति । तेन काकतालीयं नामातर्कितोपनतं चित्रीकरणमुच्यत इति वृत्तिकारः । एवं चानुषङ्गिककारणान्तरस्य समाधेः समप्रधानसर्वकारणात् समुच्चयाद् भेद इति द्रष्टव्यम् । उदाहरति । रणाङ्गण इति । अत्र क्रोधशान्तौ स्तुतिः प्रधानकारणम् । वक्त्रे वायुवशात् तृणपतनं काकतालीयमिति समाधिः ।

लोकन्यायमूलेषु चमत्कारातिशयनिदानं भाविकं लक्षयति । अतीतेति । अत्यद्भुतार्थकथनादिति । तथाविधशब्दसंदर्भेणेति शेषः । व्याचष्टे । यत्रेति ।

१ °कोपशान्त्यर्थम् M. २ °कार्यस्य सुकरत्वम् R. ३ अतीतानागतं यत्र R. ४ प्रत्यक्षमिव लक्ष्यते R. ५ क्रमेण देवदत्ता° t.

यत्राद्भुतचरितोपवर्णनेन भूतभाविनोर्वस्तुनोः प्रत्यक्षायमाणत्वं भवति स भाविकालंकारः। न च भूतभाविनोः प्रत्यक्षवदवभासो विरुद्धः। अत्यद्भुतवस्तुवर्णनया भाविकानां हृदि भावनोदयात्। तथा च भावनया पुनश्चेतसि निदर्शनात् प्रत्यक्षायमाणत्वं घटत एव। यथा पान्थस्य कामिनीभावनया तस्याः प्रत्यक्षायमाणत्वम्। न चेयं स्वभावोक्तिः। तस्यां वस्तुस्वभावस्य यथावद्वर्णनया प्रत्यक्षायमाणता। इह त्वस्याद्भुतत्वेन। नापि रसवदाद्यलंकारः। तत्र विभावानुभावाद्यनुसंधानेन रसादेर्भाव्यत्वम्। न त्वत्यद्भुतत्वेन। न चेयमुत्प्रेक्षा। अतीतानागतयोः प्रत्यक्षत्वेनाध्यवसायाभावात्। न चायं भ्रान्तिमदलंकारः। भावनाया अभ्रान्तिरूपत्वात्। अतः सर्वोत्तीर्ण एवायमलंकारः।

---

भावः कवेरभिप्रायः श्रोतरि प्रतिबिम्बितत्वेनास्तीति भाविकम्। ननु संबन्धो वर्तमानं च गृह्यते चक्षुरादिना इति न्यायेन भूतभाविनोः प्रत्यक्षवदवभासो विरुद्ध इत्याशङ्क्य परिहरति। न चेति। तत्र हेतुमाह। अत्यद्भुतेति। भाविकानां सहृदयानां भावनोदयात् संस्कारोद्बोधात्। न चेदमयुक्तमित्याह। तथा चेति। भावनायाः पुनरिति भावनाविषयाणामत्यद्भुतवस्तूनामित्यर्थः। चेतसि सहृदयहृदये निदर्शनान्नितरां दर्शनात् आदरप्रत्ययेन धार्यमाणत्वादित्यर्थः। प्रत्यक्षायमाणत्वं घटत एवेति। यथा लौकिकानामिन्द्रियैर्वर्तमानसंबन्धार्थसाक्षात्कारः यथा वियोगिनामैकाग्र्यलक्षणया भावनयातीन्द्रियार्थसाक्षात्कारः तथा काव्यतत्त्वविदो काव्यतत्त्वगतात्यद्भुतत्वानुसंधानप्रयुक्तया भावनयातीतानागतार्थसाक्षात्कारो युज्यत एवेत्यर्थः। अत्र दृष्टान्तमाह। यथेति। पान्थस्य पथिकस्य विरहिण इत्यर्थः। 'पथोऽण् नित्यम्' इति णप्रत्ययः। कामिनीभावनया कामिनीध्यानेन तस्याः कामिन्याः प्रत्यक्षायमाणत्वम्। तदुक्तम्। 'साक्षिगतस्साकलिकोऽयमद्वैतवाद' इति। न चेदं स्वभावोक्तावन्तर्भवतीत्याह। न चेति। कुत इत्याकाङ्क्षायामुभयोर्वैषम्यमाह। तस्यामिति। वस्तुस्वभावस्य लौकिकवस्तुगतसूक्ष्मधर्मस्येत्यर्थः। यथावदन्यूनातिरिक्तत्वेन वर्णनया प्रत्यक्षायमाणता साधारण्येन हृदयसंवादिप्रतीतिविषयत्वमित्यर्थः। इह भाविके त्वत्यद्भुतत्वेन

---

१ °चरितोपवर्णनाद्भुत° P. २ भाविकहृदि P. ३ अथ R. ४ पुनः पुनश्चेतसि P. ५ विरस्य M. ६ भामिनी° T. ७ °भावाद्युपाश्रित एव P. ८ न च भ्रान्ति° P; न चेयं भ्रान्तिमदलंकाररीतिः M. ९ R. omits एव.

यथा।

ध्वजाग्रे काकतीन्द्रस्य भाति क्रोडाकृतिर्हरिः।
मृद्भिन्दुरिव दंष्ट्राग्रे यस्यालक्ष्यत मेदिनी ॥ १९५ ॥

अत्राष्टादशद्वीपयुक्ताया मेदिन्या दंष्ट्राग्रे मृद्भिन्दुरूपतेति अत्यद्भुतवर्णनया तथाविधभावनया प्रत्यक्षवत् प्रतीतिसंभवः।

प्रत्यनीकालंकारः।

अथ प्रत्यनीकालंकारः प्रतिपाद्यते।

बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे।
यस्तदीयतिरस्कारः प्रत्यनीकं तदुच्यते ॥

---

लोकोत्तराणां वस्तूनां स्फुटतया ताटस्थ्येन प्रतीतिरिति भेद इत्यर्थः। अत एव रसवदादौ नान्तर्भाव इत्याह। नापीति। तत्र हेतुमाह। तत्रेति। विभावानुभावाद्यनुसंधानेन परमाद्वैतज्ञानवन्ममैवैते शत्रोरेवैते तटस्थस्यैवेत इत्यादिविशेषपरिहारात् साधारण्येन सहृदयसंवादिप्रत्ययेनेत्यर्थः। रसादेर्भाव्यत्वं स्वाद्यत्वमित्यर्थः। न त्वत्यद्भुतत्वेनेति। यथा भाविके भूतभाविनोरत्यद्भुतार्थयोः सर्वज्ञवत् ताटस्थ्येन प्रतीतिर्न साधारण्येन तद्वदत्र न भवतीत्यर्थः। नन्वत्र भूतभाविनोरप्रत्यक्षयोः प्रत्यक्षत्वेनाध्यवसायादिवादेरभावाच्च प्रतीयमानोत्प्रेक्षा कुतो न स्यादत आह। न चेयमुत्प्रेक्षेति। तत्र हेतुमाह। अतीतेति। न ह्यप्रत्यक्षं प्रत्यक्षत्वेनाध्यवसीयते। किं तर्हि काव्यार्थविद्भिः प्रत्यक्षं दृश्यत इति नोत्प्रेक्षेति भावः। ननु भूतभाविनोः प्रत्यक्षत्वे भ्रान्तिमदलंकारः किं न स्यादत आह। न चायमिति। तत्र हेतुमाह। भावनाया इति। काव्यतत्त्वविदां भूतभाविवस्तुसाक्षात्कारसामग्री भावना तस्या अभ्रान्तरूपत्वात्। भ्रान्तिं रूपयति। जनयतीति। भ्रान्तिरूपा तस्या भावस्तत्त्वम्। तदभावाद् भ्रान्तिजनकत्वाभावादित्यर्थः। भूतभाविविषयत्वेऽपि भावनामहिम्ना न प्रत्यक्षत्वहानिरिति भावः। कण्टकशोधनमुपसंहरति। अत इति। यदन्यदवशिष्टं तत्सर्वमलंकारसर्वस्वे द्रष्टव्यम्। उदाहरति। ध्वजाग्र इति। क्रोडाकृतिर्वराहाकृतिः। योजयति। अत्रेति।

लोकन्यायमूलप्रस्तावात् प्रत्यनीकं लक्षयति। बलिन इति। प्रतीकार इति। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः। व्याचष्टे। यत्रेति। अनीकस्य

---

१ P. drops दंष्ट्राग्रे. २ अद्भुत° T', M. ३ °भ्रान्ति° T.

प्रबलस्य यत्र प्रतिपक्षस्य प्रतीकारासामर्थ्यात् तदीयतिरस्कारो भवति तत् प्रत्यनीकम् ।

यथा ।

काकतीयपतिशौर्यमहोष्म-
न्यकृतस्वमहिमा वडवाग्निः ।
तद्गभीरिमसनाभिमजस्रं
बाधते निधिमपां बहिरन्तः ॥ १९६ ॥

अत्र सादृश्यहेतुकं तदीयत्वमित्यलंकारत्वम् ।

व्याघातालंकारः ।

अथ व्याघातः ।

येन यत् साधितं वस्तु तेनैव क्रियतेऽन्यथा ।
अन्येन तदलंकारो व्याघात इति कथ्यते ॥

यद्वस्तु येन केनचित् कर्त्रा येन साधनेन साधितं तद्वस्तु तेनैव साधनेनान्येन कर्त्रा यदन्यथाक्रियते स व्याघातः ।

यथा ।

काकतीयाभिजातोऽयं नाभिजाताधिकस्थितिः ।
दोर्भ्यां लब्धोदयान् भूपांस्ताभ्यामनुदयान् सृजन् ॥ १९७ ॥

---

सैन्यस्य प्रतिनिधिः प्रत्यनीकं तत्तुल्यत्वादिदमपि प्रत्यनीकमित्यर्थः । प्रतिपक्षप्राबल्यप्रख्यापनमत्र प्रयोजनम् । काकतीयेति । तस्य काकतीयस्य गभीरिम्णा गाम्भीर्येण सनाभि सहृदयं 'ज्योतिर्जनपद—' इत्यादिना समानशब्दस्य सभावः । अस्या अलंकारत्वमाह । अत्रेति ।

पूर्ववैव संगत्या व्याघातं लक्षयति । येनेति । येनोपायेन यद्वस्तु साधितं केनचित् कर्त्रेति शेषः । तेनैवोपायेनान्येन कर्त्रा तद्वस्त्वन्यथा क्रियते चेत् स व्याघातोऽलंकार इत्यर्थः । काकतीयेति । काकतीयाभिजातः काकतीयकुलोद्भूतो नाभिजातो ब्रह्मा ततोऽधिका स्थितिर्यस्य स तथोक्तः । दोर्भ्यामीश्वरबाहुभ्यां लब्धोदयान् भूपान् राजन्यान् 'बाहू राजन्यः कृतः' इति श्रुतेः । ताभ्यां दोर्भ्या-

---

१ बलिनः P; प्रबलप्रतिपक्षप्रतीकारा° R; M. २ व्याघातालंकारः T. ३ °ताधिका स्थितिः P. ४ °मनुदयं वहन् P.

अथ लोकन्यायमूलालंकारनिरूपणप्रस्तावात् पर्यायालंकारो निरूप्यते ।

पर्यायालंकारः ।

क्रमेणैकमनेकस्मिन्नाधारे वर्त्तते यदि ।
एकस्मिन्नथवानेकं पर्यायालंकृतिर्मता ॥

यत्र क्रमादेकमनेकस्मिन्नाधारे वर्त्तते स एकः पर्यायः । न चात्र विशेषालंकारः । तत्रैकस्यानेकत्र युगपद्वर्त्तनम् । अत्र क्रमेण । तथैकस्मिन्नाधारेऽनेकमाधेयं स द्वितीयः पर्यायः । न चात्र समुच्चयालंकारः । तत्राप्येकत्रानेकेषां युगपद्वर्त्तनम् ।

क्रमेण यथा ।

दंष्ट्रायां कुहनाकिटेर्भगवतो देवस्य शौरेः पुरा
पश्चान्मस्तकमण्डले फणभृतः पाताललोकेशितुः ।
आन्ध्रोर्वीपतिशेखरस्य महतः श्रीकाकतीयप्रभो-
र्बाहौ विश्वधुरीणसारमहिते बद्धोत्सवा मेदिनी ॥ १९८ ॥

अत्रैकस्या मेदिन्याः क्रमादनेकत्र वर्त्तनम् ।

द्वितीयः ।

---

मनुदयानुदयरहितान् सृजन्निति निष्पादकस्य निष्पादितवस्तुव्याहतिहेतुत्वाद् व्याघातः ।

व्याघाते वस्तुसाधनान्यथाकरणयोः क्रमिकत्वात् तत्प्रसङ्गेन पर्यायं लक्षयति । क्रमेणेति । एकस्यानेकत्र वर्त्तनमनेकस्यैकत्र वर्त्तनं चेति द्विधा पर्यायालंकारः । उभयस्य क्रमिकत्वाद्विशेषसमुच्चययोः क्रमेण व्यवच्छेदः । दंष्ट्रायामिति । कुहनाकिटेर्मायावराहस्य पाताललोकेशितुः फणभृतः शेषस्य । सर्वधुरां वहतीति सर्वधुरीणः । 'खः सर्वधुरात्' इति खप्रत्ययः । विश्वधुरीणेति पाठे अत्रैव 'खः' इति योगविभागात् खप्रत्ययः । एकस्यानेकत्र वर्त्तनं योजयति । अत्रेति ।

---

१ °मूलालंकारा निरूप्यन्ते M.; २ °प्रस्तावे पर्याय उच्यते R. ३ °कृतिर्द्विधा R. ४ नाथालंकारे P. ५ °नेकाधेयम् P. ६ °प्यनेकस्यैकत्र P. ७ °र्त्तनम् M.; र्त्तनमत्र क्रमेण । यथा T'. ८ क्रमेणानेकत्र R.

येषां मुखे निजवधूसविधे नृपाणां
शौर्योक्तयः समभवन्नभिमानगर्भाः ।
तेषां प्रतापनृपवीक्षणकातराणां
तत्रैव दीनवचनानि समुद्भवन्ति ॥ १९९ ॥

सूक्ष्मालंकारः ।

अथ सूक्ष्मालंकारो निरूप्यते ।

असंलक्षितसूक्ष्मार्थप्रकाशः सूक्ष्म उच्यते ।

विदग्धमात्रवेद्यस्यार्थस्य यत्राकारेङ्गिताभ्यां[1] प्रकाशनं स सूक्ष्मालंकारः ।

[2]दृष्ट्या पश्यसि केवलं न मनसा वाचा प्रियं भाषसे
नो भावेन भुजान्तरं प्रकटयस्यग्रे न चाभ्यन्तरम् ।
ज्ञातं काकतिनाथ भूस्तव परं प्राणेश्वरी ध्यायतो
मादृक्षेषु विडम्बनैव तदलं व्यर्थैर्बहिःसंभ्रमैः ॥ २०० ॥

[3]यथा वा ।

---

येषामिति । निजवधूसविधे योषिन्मध्ये । अभिमानगर्भा गर्वगुम्फिताः । तत्रैव मुखे दीनवचनानि त्रायस्वेत्यादिवाक्यानि समुद्भवन्ति । अत्रैकस्मिन् मुखे शौर्योक्तीनां दीनवचनानां च क्रमेण वृत्तिः ।

एकत्रानेकवृत्तिप्रसङ्गेनैकस्य संलक्षितत्वासंलक्षितत्वसंबन्धात् पर्यायानन्तरं सूक्ष्मं लक्षयति । असंलक्षितेति । असंलक्षितस्य स्थूलबुद्धीनामवेद्यस्य[4] सूक्ष्मस्येङ्गिताकाराभ्यां तीक्ष्णबुद्धिसंवेद्यस्यार्थस्य प्रकाशो विदग्धं प्रति प्रकाशनं यत्र स सूक्ष्मालंकार इत्यर्थः । व्याचष्टे । विदग्धेति । इङ्गिताकारयोर्लक्षणमाह चक्रवर्ती ।

'आकृतिव्यञ्जिताचेष्टा इङ्गितं बुद्धिकारिता ।
आकारः पुनराज्ञातम्ना पूर्वाबुद्धिकारिता ॥'

---

१ P. drops आकारेङ्गिताभ्याम्. २ दृष्ट्या पश्यसि up to यथा वा is dropped in R. T., M. and M.; ३ M. drops from यथा वा to इति प्रकाशितम्. ४ °मसंवेद्यस्य L.

[1]'गुरुअणसविहम्मि वहू दट्ठूण णरेंदपेसिअं दूइं।
सव्वंगेसु सहासं कत्थूरिविलेवणं कुणइ ॥ २०१ ॥

अत्र कस्तूरीविलेपनेन तिमिरसमयः संकेतकाल इति प्रकाशितम्।

उदात्तालंकारः।

अथोदात्तालंकारः।

तस्यापि लोकन्यायमूलतैवानन्तर्यकारणम्।

तदुदात्तं भवेद्यत्र समृद्धं वस्तु वर्ण्यते।

यत्र महासमृद्धिशालिनो वस्तुनो वर्णनं क्रियते तत्रोदात्तालंकारः। यथा।

---

तथा

'ताराषुटभ्रूहस्याद्यैर्विकारानिङ्गितं विदुः।
आकाराः सत्त्वजा भावा आद्या बुद्ध्यापरेऽन्यथा ॥'

इति। उदाहरति। गुर्विति। अत्र दूत्याः संकेतसमयजिज्ञासायां तदीयेन भ्रूभङ्गादिनेङ्गितेनोपलभ्य प्रगल्भवध्वा रात्रिसमयः संकेतकाल इति कस्तूरीविलेपनेन प्रकाश्यते।

'वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥'

इत्यत्र स्वेदबिन्दुनिमित्तकुङ्कुमभेदलक्षणाकारसूचितं पुरुषायितं पाणौ कृपाणलेखनेन पुरुषैकयोग्येन प्रकाश्यत इत्याकारनिबन्धनः सूक्ष्मः।

उदात्तमाह। अथेति। तस्य संगतिमाह। तस्येति। लक्षणमाह। तदिति। व्याचष्टे। यत्रेति। महासमृद्धिशालिनः कविप्रतिभाप्राप्तैश्वर्यशालिन इत्यलौकि-

---

छाया।

1 गुरुजनसविधे वधूर्दृष्ट्वा नरेन्द्रप्रेषितां दूतीम्।
सर्वाङ्गेषु सहासं कस्तूरीविलेपनं करोति ॥

१ णरिंदं T. २ कत्थुरि° P. ३ °विलेपणं P. ४ °कालः R. ४ °कारः कथ्यते T. ४ लोकन्याय एव कारणम् P.; लोकन्यायमूलतैव कारणम् M. ५ t. drops इङ्गितेन.

रम्यामेकशिलाभिधाननगरीमासेदिवांसो बुधाः
सौवर्णेषु गृहेषु रत्नरचितद्वास्तोरणेषु स्थिताः।
आरुह्याङ्गणमेदिनीषु कलभान् क्रीडोत्सुकानर्भकान्
मोदन्ते यदवेक्ष्य रुद्रनृपतेस्तत्त्यागलीलायितम् ॥ २०२ ॥

कत्वकथनादलंकारत्वमिति। रम्यामिति। आसेदिवांसः प्राप्ताः। कलभान् बालगजान्। मोदन्त इति यत् तत् त्यागलीलायितं त्यागलीला। लोहितादिक्यषन्ताद् भावे क्तः। अङ्गभूतमहापुरुषचरितं चोदात्तम्। यथा।

'तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी।
निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः॥'

अत्रारण्ये वर्णनीये रामचरितमङ्गत्वेन वर्णितमिति मतान्तरानुसारेण सर्वस्वकारः। तथा हि यत्र रसादयो वाक्यार्थीभूतास्तत्र रसवदादयोऽलंकारा इत्यलंकारमात्ररसिका भामहादयः। तन्मते यथा वाक्यार्थीभावादङ्गभूतो रसादिः तथाङ्गभूतमहापुरुषचरितवर्णनात्मको द्वितीयोदात्त उपपद्यते। ध्वनिदर्शने तु काव्यात्मनो रसादेः प्राधान्यदशायामलंकार्यत्वादलंकारभावो नोपपद्यते। तदुक्तं ध्वन्याचार्यैः।

'रसभावतदाभासभावशान्त्यादिरक्रमः।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः॥' इति।

यत्र रसस्वरूपे वस्तुमात्रेऽलंकारतायोग्ये वाक्यार्थीभावेन प्रधानेऽङ्गभूता रसादयस्तत्र रसवदाद्यलंकारा एव। तदपि तैरेवोक्तम्।

'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गत्वं रसादयः।
काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः॥' इति।

तदा द्वितीयोदात्तस्य विषय एव नास्तीति सर्वस्वहृदयम्। अत एव ध्वनिदर्शनानुसारी विद्यानाथोऽपि द्वितीयमुदात्तं नाङ्गीचकारेति रहस्यम्। नन्वेवं तर्हि रसवदादयः किमिति नाङ्गीक्रियन्त इति चेन्मैवम्। रसप्रकरण एव तत्स्वरूपनिरूपणात्। किं तूदाहरणमलंकारप्रकरणे भविष्यतीति प्रतिज्ञाय केन वाभिप्रायेणेह नोदाहृतम्। अस्माभिस्तु तत्रैव दिङ्मात्रमुदाहृतमिति नेह पुनः प्रयत्यते।

१ °विहित° M. २ कलम° P. ३ योग्यतायां° t. ४ तदुद् t.

परिवृत्त्यलंकारः ।

अथ समानन्यायात् परिवृत्तिर्निरूप्यते ।

समन्यूनाधिकानां च यदा विनिमयो भवेत् ।
साकं समाधिकन्यूनैः परिवृत्तिरसौ मता ॥

समन्यूनाधिकानां समाधिकन्यूनैर्विनिमयः परिवृत्तिः । समेन समपरिवृत्तिर्न्यूनेनाधिकपरिवृत्तिरधिकेन न्यूनपरिवृत्तिश्चेति ।

समेन समपरिवृत्तिर्यथा ।

सुधारसमुचो वाचो दत्त्वा काकतिभूभुजे ।
अतो लभन्ते कवयः सहस्रं गन्धसिन्धुरान् ॥ २०३ ॥

अत्र वचसां सिन्धुराणां च समत्वम् ।

न्यूनेनाधिकपरिवृत्तिर्यथा ।

उपायनं गजाश्वादि कृत्वा सर्वेऽपि भूभुजः ।
प्रतापरुद्रदेवस्य लभन्ते सुस्थिरां कृपाम् ॥ २०४ ॥

अत्र त्यज्यमानादुपायनादेर्दीयमानस्य प्रतापरुद्रकृपाविलसितस्यैवाधिक्यम् ।

अधिकेन न्यूनपरिवृत्तिर्यथा ।

प्रतापरुद्रस्य रणे जिताः प्रत्यर्थिभूभुजः ।
दत्त्वा भूमिं किरातेभ्यो लभन्ते वल्कलादिकम् ॥ २०५ ॥

---

समृद्धिकार्यत्वात् विनिमयस्य तद्रूपां परिवृत्तिमुदात्तानन्तरं निरूपयति । अथेति । समानन्यायात् लोकव्यवहाररूपात् । समेति । किंचित् दत्त्वा कस्यचिदादानं विनिमयः । समस्य समेन न्यूनस्याधिकेनाधिकस्य न्यूनेन विनिमय इति त्रेधा परिवृत्तिः । समेन समपरिवृत्तिमुदाहरति । सुधेति । अतः काकतीन्द्रात् । गन्धसिन्धुरान् गन्धगजान् । लक्षणमुक्तं नाटकप्रकरणे ।

न्यूनेनाधिकपरिवृत्तिमुदाहरति । उपायनमिति ।

अधिकेन न्यूनपरिवृत्तिमुदाहरति । प्रतापेति ।

---

१ सामान्यन्यायमूला P. २ दद्त् M. ३ न्यूनाधिक° R. ४ विलसितस्याधिक्यम् T. ५ °व्यापलोक° ६.

अत्र त्यज्यमानादाभरणजातादादीयमानस्य वल्कलादेर्न्यूनत्वम् ।

## कारणमालालंकारः ।

अथ शृङ्खलान्यायमूलालंकारा निरूप्यन्ते ।

पूर्वं पूर्वं प्रति यदा हेतुः स्यादुत्तरोत्तरम् ।
तदा कारणमालाख्यमलंकरणमुच्यते ॥

यदा पूर्वं पूर्वं क्रमेणोत्तरोत्तरं प्रति हेतुतां भजते स कारणमालाख्योऽलंकारः ।

यथा ।

विद्यया वित्तयोत्कर्षो विनयेन गुणार्जनम् ।
गुणैः प्रजानुरागश्च क्रमोऽयं काकतीश्वरे ॥ २०६ ॥

यत्रोत्तरोत्तरेषां स्यात् पूर्वं पूर्वं प्रति क्रमात् ।
विशेषणत्वकथनमसावेकावली मता ॥

यत्र पूर्वं पूर्वं प्रति क्रमेणोत्तरोत्तरं विशेषणत्वं भजते स एकावल्यलंकारः ।

यथा ।

---

अनन्तरालंकारचतुष्टयस्य संगतिमाह । अथेति । कारणमालां लक्षयति । पूर्वपूर्वमिति । प्रतिशब्दो भिन्नक्रमः । तेन पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमालेत्यर्थः । तथा व्याचष्टे । यदिति । विद्ययेति । विद्यादयो विनयादीन् प्रति हेतवः ।

ईषदेतद्वैपरीत्यादेकावलीं लक्षयति । यत्रेति । पूर्वपूर्वं प्रत्युत्तरोत्तरस्य विशेषणत्वं स्थापनेनापोहनेन च द्वैविध्यमनुभवतीत्येकावलीं द्विधा करोति । आद्यमु-

---

१ °जातात् दीयमानस्य P.　२ वल्कलादेरल्पत्वम् T.　३ यदा यदा T.　४ गुणार्जितम् M.　५ पूर्वपूर्वप्रतिक्रमादुत्तरो° M.

प्रतापरुद्रनगरी सुजनैरुपशोभिता ।
सुजनाः स्फीतविभवैर्विभवाः स्थैर्यशालिनः ॥ २०७ ॥

एतत्स्थापनेनोदाहरणम् ।

अपोहनेनापि भवति ।

यथा ।

न तद्राज्यं प्रजा यत्र न भवन्त्यूर्जितश्रियः ।
न ताः प्रजाः प्रभुर्यासां न स्वयं काकतीश्वरः ॥ २०८ ॥

मालादीपकालंकारः ।

यदा तु पूर्वपूर्वस्य संभवेदुत्तरोत्तरम् ।
प्रत्युत्कर्षावहत्वं तन्मालादीपकमुच्यते ॥

यत्र पूर्वपूर्वस्योत्तरोत्तरगुणावहत्वं स मालादीपकालंकारः ।
यथा ।

भाग्यभूमा महीं प्राप्तः काकतीन्द्रभुजं मही ।
भुजः प्रतापमतुलं प्रतापश्च जगत्त्रयम् ॥ २०९ ॥

सारालंकारः ।

उत्तरोत्तरमुत्कर्षः सारालंकार उच्यते ।

यथा ।

जगत्सु वसुधा भाति तस्यामेकशिलापुरी ।
काकतीयान्वयस्तत्र तस्मिन् रुद्रनरेश्वरः ॥ २१० ॥

---

दाहरति । प्रतापेति । अत्र नगर्यादेः पूर्वपूर्वस्य सुजनाद्युत्तरोत्तरं स्थापनेन विशेषणत्वं भजते ।

द्वितीयमुदाहरति न तद्राज्यमिति । अत्र राज्यादेः पूर्वपूर्वस्य प्रजाद्युत्तरोत्तरमपोहनेन विशेषणत्वं भजते ।

पूर्वं पूर्वं प्रत्युत्तरोत्तरस्योत्कर्षहेतुत्वेनैकावलीमुक्त्वोत्तरोत्तरं प्रति पूर्वपूर्वस्योत्कर्षहेतुत्वे मालादीपकमाह । यदेति । भाग्येति । अत्र भाग्यातिशयादिभिर्भूम्यादीनामुत्कर्षः क्रमेण विधीयते ।

परिशेषात् सारं लक्षयति । उत्तरोत्तरमिति । जगत्स्विति । अत्र जगद्-

---

१ °मखिलम् M.

सकलभुवनसारभूतं प्रतापरुद्रं विषयीकुर्वतश्चिरादस्यालंकारस्य सारत्वमित्यन्वर्थाभिधानम् ।

इति[1] [2]श्रीविद्यानाथकृतौ प्रतापरुद्रयशोभूषणेऽलंकारशास्त्रेऽर्थालंकार-प्रकरणं समाप्तम् ।

---

पेक्षया वसुधाया उत्कर्षः । तदपेक्षया एकशिलाया इत्यादिक्रमेणोत्कर्षो रुद्रनरेश्वरे विश्राम्यति ।

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलचलमल्लि-
नाथसूरिसूनुना विश्वजनीनविद्यस्य विद्वन्मणेः पेद्दार्यस्या-
नुजेन कुमारस्वामिसोमपीथिना विरचिते प्रतापरुद्री-
यव्याख्याने रत्नापणाख्याने अर्थालंकारनिरूपणं
नाम अष्टमं प्रकरणम् ।

---

१ इत्यर्थालंकाराः R. २ T. drops श्री.

## अथ मिश्रालंकारप्रकरणम् ।

अथ संसृष्टिसंकरौ निरूप्येते ।

यथा लौकिकानामलंकाराणां हिरण्मयानां मणिमयानां च पृथक् सौन्दर्यहेतूनामन्योन्यसंबन्धेन चारुत्वातिशयो दृश्यते तथैव काव्यालंकाराणां रूपकादीनां मिथः संबन्धेन सौन्दर्यातिशयः प्रतीयते । स च संबन्धो द्विविधः । संयोगरूपः समवायरूपश्चेति । संयोगे[1] तिलतण्डुलन्यायः । समवाये[2] क्षीरनीरन्यायः । तिलतण्डुलन्यायेन संसृष्टिः[3] । क्षीरनीरन्यायेन संकरः । अनयोः पृथक्चारुत्वातिशयहेतुत्वादलंकारधुरन्धरत्वम् । न तु पूर्वोक्तालंकारशेषता[4] । तत्र प्रथमं संसृष्टिर्निगद्यते[5] ।

### संसृष्टिः ।

> तिलतण्डुलसंश्लेषन्यायाद्यत्र परस्परम् ।
> संश्लिष्येयुरलंकाराः सा संसृष्टिर्निरूप्यते ॥

यत्र तिलतण्डुलन्यायेन परस्परसंबद्धा[6] रूपकादयो भवन्ति सा संसृष्टिः । सा त्रिविधा । शब्दालंकारगतत्वेनार्थालंकारगतत्वेनोभयालंकारगतत्वेन च ।

---

एकैकालंकारनिरूपणानन्तरं मिश्रालंकारनिरूपणं प्रतिजानीते । अथेति । उक्तानामलंकाराणां क्वचित् सहभावे किं* पार्थक्येन पर्यवसानमुतालंकारान्तरत्वमिति विचार्य लौकिकालंकारन्यायेनालंकारान्तरत्वं सिद्धान्तयति । यथेति । हिरण्मयानां सौवर्णानाम् । 'दाण्डिनायन—' आदिसूत्रेण निपातनात् साधुः । पृथङ् मिथः संबन्धाभावेऽपि सौन्दर्यहेतूनां मिथः संबन्धे चारुत्वातिशयस्तथैव रूपकादीनामित्यर्थः । सौन्दर्यातिशयहेतोरसंबन्धस्य द्वैविध्यमाह । स चेति । उत्कटभेदः संयोगरूपः । अनुत्कटभेदः समवायरूप इत्यर्थः । आद्ये तिलतण्डुलन्यायेन संसृष्टिः । द्वितीये क्षीरनीरन्यायेन संकरः । अनयोः पृथगुपादानं न पूर्वशेषत्वमित्यर्थः । तत्र प्रथममुत्कटभेदनिबन्धनां संसृष्टिं लक्षयति । तिलेति ।

---

१ संयोगो मिश्रतिलतण्डुलन्यायेन P. २ समवायस्तु मिश्रक्षीरनीरन्यायेन P. ३ P. has संबन्धे before संसृष्टिः and संकरः ४ °रूपता T. ५ °निगद्यते P. ६ परस्परम् B.
* P. drops it.

शब्दालंकारसंसृष्टिर्यथा ।

> शुम्भत्संभ्रमगन्धसिन्धुरधुरानिर्दारितोर्वीतला-
> स्त्वङ्गत्तुङ्गतुरङ्गमप्रतिभया द्राक्स्यन्दनस्यन्दनाः ।
> तीव्रारम्भसमुद्यदुद्भटभटाटोपस्फुरद्दिक्तटा
> निःसीमाः प्रसरन्ति रुद्रनृपतेर्जैत्रप्रयाणोद्यमाः ॥ २११ ॥

अत्र च्छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः ।

अर्थालंकारसंसृष्टिर्यथा ।

> काकतीयचमूर्धत्ते महिमानमुदन्वतः ।
> ग्रसते या द्विषद्भूपध्वजिनीस्तटिनीरिव ॥ २१२ ॥

अत्र निदर्शनोपमयोः संसृष्टिः ।

उभयसंसृष्टिर्यथा ।

> प्रतापरुद्रदोर्दण्डो मण्डलाग्रेण मण्डितः ।
> दृश्यते समरे वीरैरुत्फणः फणवानिव ॥ २१३ ॥

अत्र वृत्त्यनुप्रासोपमयोः संसृष्टिः ।

---

तस्यास्त्रेधा विभागमाह । सेति । शब्दालंकारसंसृष्टिमुदाहरति । शुम्भदिति । शुम्भत्संभ्रमा दीप्यमानसंरम्भा ये गन्धसिंधुरा गन्धगजाः तद्धुरया तद्भरेण निर्दारितं निर्भिन्नमूर्वीतलं येषु ते तथोक्ताः । त्वङ्गद्भिः प्लवमानैस्तुङ्गतुरङ्गमैः प्रतिभया भयंकराः द्राक्स्यन्दना शीघ्रधावनाः स्यन्दना रथा येषु ते तथोक्ताः । अत्र धुरधुरा भटभटेत्यत्र च्छेकानुप्रासोऽन्यत्र वृत्त्यनुप्रासश्च संसृज्यते ।

अर्थालंकारसंसृष्टिमुदाहरति । काकतीन्द्रेति । उदन्वतो महिमानं धत्त इत्यत्रासंभवद्धर्मयोगेन प्रतिबिम्बकरणाक्षेपान्निदर्शना । तस्यास्तटिनीरिवेत्युपमायाश्च परस्परनैरपेक्ष्यात् संसृष्टिः ।

उभयसंसृष्टिमुदाहरति । प्रतापेति ।

---

१ 'दोदारितो' P. २ तीव्रारम्भवत् R., M. ३ काकतीन्द्र T, M. ४ 'दोर्दण्डकाण्ड' R.

अथ संकरो निरूप्यते ।

क्षीरनीरनयायत्र संबन्धः स्यात् परस्परम् ।
अलंकृतीनामेतासां संकरः स उदाहृतः ॥

यत्र नीरक्षीरन्यायेनालंकाराणां मिथः संबन्धो भवति स संकरः । तस्याङ्गाङ्गिभावेन संदेहेनैकवाचकानुप्रवेशेन च त्रैविध्यम् ।

तत्राङ्गाङ्गिभावसंकरो यथा ।

उद्यद्बृंहितगर्जितैर्द्विपघटाकादम्बिनीसंभ्रमैः
क्षोणीभृत्कटकोपरोधपटुभिः प्रावृड्विहारा इव ।
शत्रुस्त्रीविहला[1]श्रुवृष्टिशमितक्ष्माचक्रतापोदया
यात्राः काकतिवल्लभस्य जगतामानन्दमातन्वते ॥ २१४ ॥

अत्र यात्राः प्रावृड्विहारा इवेत्युपमालंकारेण गजघटाकादम्बिनीत्य-

संकरं लक्षयति । क्षीरेति । यत्रालंकाराणां क्षीरनीरन्यायादनुत्कटभेदः सम्बन्धः स संकर इत्यर्थः । तस्य त्रेधा विभागमाह । तस्येति । क्रमेणोदाहरति । उद्यदिति । क्षोणीभृत्कटकानां वैरिभूपालराजधानीनामन्यत्र पर्वतनितम्बानामुपरोधपटुभिर्निरोधनसमर्थैः । 'कटकं वलये सानौ राजधानीनितम्बयोः' इति विश्वः । शत्रुस्त्रीबहुलाश्रुवृष्ट्यैव शमितः क्ष्माचक्रतापोदयो भूमण्डलसंतापातिशयो यासु तास्तथोक्ताः । दुष्टनिग्रहेण भूभारोऽवतरतीति भावः । सजातीयसंकरं योजयति । अत्रेति । उपमा प्रसाध्यत इति । रूपकत्वे द्विपघटारूपविषयस्थगने कादम्बिनीरूपोपमानं सैवास्य विशेषणत्वं नोपमेयस्य । अतोऽधिकोपमं नाम दोषः स्यात् । तस्मादुपमा प्रसाध्यत इति भावः । यात्राः प्रावृड्विहारा इवेत्यस्यानुग्राह्यत्वादङ्गित्वम् । द्विपघटाकादम्बिनीत्यस्या अनुग्राहकत्वादङ्गत्वम् । अतोऽङ्गाङ्गिभावेन संकरः । अन्योन्यं चमत्कारहेतुत्वाश्रयणेऽतिरामणीयकं द्रष्टव्यम् । तर्हि द्विपघटाकादम्बिनीत्यत्र केन समासेनोपमा लभ्यत इत्याकाङ्क्षा-

[1] 'बहुला' M.

श्रोपमा प्रसाध्यत इति सजातीययोरङ्गाङ्गिभावः। कादाम्बिनीवद्विपघटेति समासाश्रयणात्। क्षोणीभृत्कटकोपरोधेत्यत्र श्लेषमूलातिशयोक्तिः।

विजातीयसंकरो यथा।

प्रतापरुद्रस्य कृपाणधारा
प्रत्यर्थिभालेषु पतत्यमन्दम्।
प्रक्षालनायेव कृतस्य धात्रा
तद्वर्तिनो दुर्लिपिकल्मषस्य ॥ २१५ ॥

अत्र प्रक्षालनायेवेत्युत्प्रेक्षया दुर्लिपिकल्मषस्येत्यत्र रूपकं प्रसाध्यत इति विजातीययोरङ्गाङ्गिभावः।

एकवचनानुप्रविष्टसंकरो यथा।

विजितारिपुरो मूर्त्या विलसत्सर्वमङ्गलः।
भुवि शंभुरिवाभाति काकतीयनरेश्वरः ॥ २१६ ॥

---

यामाह। कादम्बिनीव द्विपघटेति। 'उपमितं व्याघ्रादिभिः' इति समासः। अभ्युच्चयमाह। क्षोणीभृदिति। क्षोणीभृत्कटकशब्देन शत्रुराजधानीपर्वतनितम्बयोरभिधानाच्छ्लेषमूलातिशयोक्तिरित्यर्थः। इयं च द्विपघटाकादम्बिनीत्युपमाया अङ्गं तेनातिशयोक्त्यनुगृहीतया तया यात्राः प्रावृड्विहारा इवेत्युपमानुप्राणित इति फलितम्।

विजातीयसंकरमुदाहरति। प्रतापेति। कृपाणस्य धारा कोटिरुदकधारा च। अमन्दमनल्पम्। तद्वर्तिनः प्रत्यर्थिभालवर्त्तिनो दुर्लिपिरेव कल्मषं पङ्कं तस्य क्षालनायेवेति फलोत्प्रेक्षा। अत्र क्षालनयोग्यस्य कल्मषस्य प्राधान्यं रूपकेणैव लभ्यते नान्यथेत्युत्प्रेक्षया रूपकं प्रसाध्यत इति रूपकोत्प्रेक्षयोर्विजातीययोरन्योन्यसापेक्षत्वादङ्गाङ्गिभावेन संकरः।

एकवाचकानुप्रविष्टं संकरमुदाहरति। विजितेति। योजयति। अत्रेति।

---

१ 'श्लेषः उभयोरभेदाध्यवसायाच्छ्लेषमूला' ६.

अत्र विजितारीत्याद्यर्थसाम्यादुपमाविलसत्सर्वमङ्गल इति शब्दसाम्यात् श्लेषश्च शम्भुरिवेत्येकस्मिन्निवशब्देऽनुप्रविष्टौ।

संदेहसंकरो यथा।

जातः प्रतापरुद्रेन्दुः काकतीयान्वयाम्बुधौ।
धत्ते जनचकोराणां प्रसादज्योत्स्नयामृतम्॥ २१७॥

अत्र काकतीयकुलाम्बुधौ इत्यादौ रूपकोपमयोः संदेहसंकरः। अन्वय एवाम्बुधिः काकतीयान्वयोऽम्बुधिरिवेति समासद्वयसंभवात्। न चात्र साधकं बाधकं वा प्रमाणमन्यतरस्यास्तीति संदेह एव पर्यवस्यति। साधकबाधकसंभवे तु संदेहनिवृत्तिः। अत्र साधकं यथा।

प्रतापरुद्रनृपतेः पारिजातात् समुद्भवाः।
वतंसयन्ति दिङ्नार्यो मधुरा कीर्त्तिमञ्जरीः॥ २१८॥

---

विजितारिपुर इत्यत्र शब्दपरिवृत्तिसहिष्णुत्वादर्थसाम्यम्। विलसत्सर्वमङ्गल इत्यत्र तदभावाच्छब्दसाम्यम्। तावुपमाश्लेषावेकस्मिन्निवशब्देऽनुप्रविष्टौ। तस्योभयोपकारित्वादिति भावः।

संदेहसंकरमुदाहरति। जात इति। योजयति। अत्र कुलाम्बुधावित्यादौ समासद्वयसंभवादिति। मयूरव्यंसकादीनां चाकृतिगणत्वाद्रूपकोपमितसमासद्वयसंभवादित्यर्थः। नन्वत्रामृतदानस्य चन्द्र एव प्रसिद्धत्वात् प्रतापरुद्र एवेन्दुरिति रूपकमेव नोपमेति चेन्मैवम्। औपचारिकस्यामृतदानस्य प्रतापरुद्रेऽपि संभवात्। उपमाया बाधकाभावात्। तेनात्र रूपकोपमयोः संदेह एव पर्यवस्यतीत्याह। न चेति। साधकमनुकूलं बाधकं प्रतिकूलम्। तत्सद्भावे संदेह एव निवर्तत इत्यर्थः। तर्हि कुत्र साधकं कुत्र वा बाधकमित्याकाङ्क्षायां क्रमेण दर्शयति। प्रतापेति। प्रतापरुद्रनृपतिरूपात् पारिजातात्। वतंसयन्तीत्यत्र 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः। अत्र वतंसीकरणं मञ्जी-

---

१ ज्योत्स्नया मुदम् R., M.; ज्योत्स्निकामृतम् P. २ काकतीयान्वय M. ३ साधकबाधकप्रमाणयोर्हि संदेह एव पर्य° M. तत्र T. ४ °नृपतिपारिजातसमु° M.

अत्र कीर्त्तय एव मञ्जर्य इति रूपकालंकारे वतंसयन्तीति साधकं प्रमाणम्। अवतंसीकरणेनाभेदप्रतीतिः।

बाधकं यथा।

> काकतीन्द्रस्य निःसाणध्वनौ दिक्षु विजृम्भिते।
> व्याकुलीकृतसत्त्वोऽभूत् प्रतिपक्षबलार्णवः॥ २१९॥

अत्र प्रतिपक्षबलार्णव इत्युपमाया व्याकुलीकृतसत्त्व इति बाधकं प्रमाणम्। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनुशासनेन सामान्यप्रयोगस्योपमाबाधकत्वात्। अतः पारिशेष्याद्रूपकालंकारः।

एवं यथासंभवमन्येषामलंकाराणां संसृष्टिसंकरौ बोद्धव्यौ तत्र तत्र प्रबन्धेषु।

---

रेष्वेवानुगुणमिति रूपकपरिग्रहे साधकमित्याह। अत्रेति। तत्रोपद्दलकमाह। वतंसीकरणेनाभेदप्रतीतिरिति। न पुनरुपमायामिव भेदाभेदप्रतीतिरिति भावः।

बाधकं दर्शयति। काकतीन्द्रस्येति। दिक्षु निस्साणध्वनौ विजृम्भिते व्याप्ते सति प्रतिपक्षबलमेवार्णवो व्याकुलीकृतानि कलुषीकृतानि सत्त्वान्यन्तःकरणानि प्राणिनश्च यस्य स तथोक्तः। बाधकं योजयति। अत्रेति। प्रतिपक्षबलमर्णव इवेत्युपमितसमासस्य व्याकुलीकृतसत्त्व इति सामान्यप्रयोगत्वस्य बाधकत्वात् परिशेषाद् रूपकमेवेत्यर्थः। अलंकारान्तरसंकरसंसृष्टिप्रपञ्चः प्रबन्धान्तरेषु द्रष्टव्य इत्याह। एवमिति। विवेकिनामेतावतैवेतरदपि सुबोधमिति विस्तरभीरुभिरस्माभिरुपरम्यत इति सर्वमवदातम्।

> जगति निखिलविद्यासिंधुसुष्टिधयानां
> परभणितिपरीक्षा युज्यते सज्जनानाम्।
> तदिह मम निबन्धे दूषणं भूषणं वा
> भवति यदि विदग्धैस्तद्धयवश्यं विमृश्यम्।

---

१ वतंसीकरणकर्मभेदप्रतीतेः P. २ प्रतिपत्तिः R. ३ अलंकारेषु T. ४ R. has at the end विद्यानाथकृतो वीरकद्रसत्कीर्त्तिमन्दनः। अलंकारप्रबन्धोऽयं द्रष्टव्यः सर्वसूरिभिः। ४ P. drops अस्माभिः ५ °विद्या T. ६ रूपणं T.

इति श्री[१]विद्यानाथकृतौ प्रतापरुद्रयशोभूषणेऽलंकारशास्त्रे मिश्रालंकारप्रकरणं समाप्तम्[२] । प्रतापरुद्रीयं नामालंकारशास्त्रं समाप्तम् ।[1]

---

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलचलमल्लि-
नाथसूरिसूनुना विश्वजनीनविद्यस्य विद्वन्मणेः पेद्दयार्यस्या-
नुजेन कुमारस्वामिसोमपीथिना विरचिते प्रतापरु-
द्रीयव्याख्याने रत्नापणाख्याने मिश्रालंकार-
निरूपणं नाम नवमं प्रकरणम् ॥

---

1 व्याख्यातं साकल्येनेदं काव्यलक्षणम् ।
तत्र परिष्कुर्वन्तु सहृदयधुरीणाः ॥ P.

१ महोपाध्यायविद्यानाथ° R.; विद्यानाथमहोपाध्यायकृतौ T. २ संपूर्णम् R.

# प्रतापरुद्रीयव्याख्या रत्नशाणः ।

वन्दे हयग्रीवमहं वलक्षं
यत्रावदुत्थोत्थसटामिषेण ।
अन्योन्यमन्तर्मिलिताविशिष्टः
प्रालम्बते शुभ्रकलाकलापः ॥ १ ॥

वलक्षवर्णोज्ज्वलितस्वरूपो
विज्ञानदानैकनिदानभूतः ।
संदेहशास्त्रौघ इवाश्ववक्त्रः
सारस्वतं मे दिशतु प्रबोधम् ॥ २ ॥

आचार्यमभिवाद्याहमातनिष्ये यथामति ।
विद्यानाथकृतेर्व्याख्यां सन्तस्तन्वन्त्वनुग्रहम् ॥ ३ ॥

न शब्दशास्त्रे न च तर्कशास्त्रे
न चान्यशास्त्रेष्वपि विश्रुतोऽहम् ।
प्रतापरुद्रीयमनोज्ञपद्य-
व्याख्यां तु कुर्यामतिसाहसेन ॥ ४ ॥

रत्नापणे विस्तरसाध्वसेन
मुक्त्वा पदं कोमलमन्यदेव ।
व्याख्याय शङ्कापरिहारमार्गः
प्रदर्शितः प्राक्तनपण्डितेन ॥ ५ ॥

ततो मया बालविबोधनाय
प्रतापरुद्रीयसुपद्यपङ्क्तेः ।
प्रकाश्यते सर्वपदान्वयोऽत्र
न संभ्रमोऽन्यत्र ततः पृथङ् मे ॥ ६ ॥

विद्यानाथः कथमपि बहोराकराच्छास्त्रजालात्
संजग्राह प्रकृतिकठिने रत्नजालं करण्डे ।
विद्वद्गोष्ठीहृदयरमणे रत्नशाणेऽधुनास्मि-
न्नन्तर्गूढद्युतिविलसितं तत् समुत्तेजयामि ॥ ७ ॥

अथ तत्रभवान् विद्यानाथकविः प्रतापरुद्रयशोभूषणं नामालंकारशास्त्रं चिकीर्षुश्चिकीर्षितात्रिघ्नपरिसमाप्तिसम्प्रदायाविच्छेदरूपफलसाधनत्वात् 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते' इत्यादि भाष्यकारवचनाचेष्टदेवतानमस्काररूपमङ्गलमादौ निबध्नाति । विद्येति । विद्याः सकलशास्त्राण्येव कैरवाणि कुमुदानि तेषां कौमुदीं चन्द्रिकां कौमुदीमिव विद्यानां प्रकाशिकामित्यर्थः। श्रुतीनां वेदानां शिरांस्युपनिषद एव शीर्षाणीति श्लिष्टरूपकम् । तेषु सीमन्तमुक्तामणिं सीमन्ते केशवीथ्यां यो मुक्तामणिर्मुक्तामय आभरणविशेषः । 'सीमन्तमस्त्रियां मस्तकेशवीथ्याम्' इत्यमरः । लन्तिकाभरणायमानामित्यर्थः । पद्मान्नाभिकमलाङ्कवतीति पद्मभूः । तस्य ब्रह्मणो दारान् जायाम् । 'दाराः पुंसि च भूम्न्येव' इत्यमरः । त्र्यवयवो लोकस्त्रिलोकस्तस्य जननीं गिरां वाचां देवतां सरस्वतीं देवीं वन्दे नमस्करोमि । स्वनमस्कारस्य साफल्यं सूचयितुं देवीनमस्कारान् विशिनष्टि । यदिति । पादावब्जे इवेत्युपमितसमासः । रूपकसमासे तु अब्जयोर्नमस्कारानुपयोगात् । यस्या वाग्देवतायाः पादाब्जयोर्नमस्क्रिया नमस्काराः सुकृतिनां पुण्यकृतां पुंसाम् । प्रकर्षेण क्रियन्त इति प्रक्रिया रचनाः । सरस्वतीनां वाचां संबन्धिन्यः सारस्वत्यः । ताश्च ताः प्रक्रियाश्च सारस्वतप्रक्रियाः । 'गीर्वाग्वाणी सरस्वती' इत्यमरः । तासां वाग्रचनानां बीजं कारणं प्रतिभापरपर्यायो बुद्धिविशेष इत्यर्थः । तदेव बीजमङ्कुरकारणं तस्य न्यासभुवो निक्षेपस्थानभूताः । सारवद्भूमौ निक्षिप्तं बीजं यथाङ्कुरयति तद्वद्देवीनमस्कारात् कविताकारणीभूतप्रतिभा जायत इत्यर्थः । कवितायाः नाट्यं नटनं प्रवृत्तिरिति यावत् । तस्यैकजीवातवो मुख्यजीवनौषधानि । 'जीवातुर्जीवनौषधम्' इत्यमरः । अस्मान्नमस्कारादेव जीवनौषधादिव सम्प्रदायाविच्छेदश्च भवतीत्यर्थः । भवन्तीत्यन्वयः । अत्रोत्तरवाक्ये यच्छब्दप्रयोगाच्च तच्छब्दप्रयोगनिर्बन्धः । विद्याकैरवेत्यादिरूपकविशेषणम् । पादाब्जेत्युपमायाश्च परस्परापेक्षाभावात् संसृष्टिः । लक्षणानि त्वलंकारप्रकरणे स्पष्टीभविष्यन्ति ।

इत्थमिष्टदेवतां नमस्कृत्य प्राचीनमहाकविनमस्कारपूर्वकं प्रारिप्सितग्रन्थारम्भं प्रतिजानीते । पूर्वेभ्य इति । भामहो नामालंकारशास्त्रप्रणेता । स आदिर्येषां ते तेभ्यः प्राचीनेभ्य इति चतुर्थी । सादरं यथा तथा विहितोऽञ्जलिर्येन सः ।

'द्वौ युताचजलिः पुमान्' इत्यमरः । अहमिति शेषः । अलंकारशास्त्रसर्वस्वं सर्वधनभूतं रसादिप्रमेयं तत् संगृह्यते संक्षिप्यते येन स तथोक्तः । अलंकारशास्त्रप्रतिपाद्यमानं रसादिप्रमेयं संक्षिप्य प्रतिपादको ग्रन्थस्तं सम्यक् वक्ष्ये ।

ननु रसादीनामप्येतच्छास्त्रविषयत्वात् कथमस्यालंकारशास्त्रत्वमिति न शङ्कनीयम् । छत्रिन्यायेनालंकारत्वव्यपदेशात् । यद्वा प्रमाणादिपदार्थप्रतिपादकशास्त्रस्य न्यायप्राधान्याद्यथा न्यायशास्त्रत्वं तथालंकारप्राधान्यादलंकारशास्त्रत्वमिति बोध्यम् ।

शास्त्रसर्वस्वसंग्रह इत्यत्रोक्तं रसादिप्रमेयं विभजते । रसेति । रसः शृङ्गारादिः प्रधानं येषां ते रसजीविता इत्यर्थः । शब्दार्थाः शब्दा वाचकादिरूपेण त्रिविधाः । ततो द्वन्द्वः । गुणाः प्रसादादयः । अलंकारा उपमादयः । वृत्तयः कैशिक्यादयश्च । त्रयाणां द्वन्द्वः । रीतयो वैदर्भ्यादयश्च । इयती एतावती । काव्यपद्धतिः रामायणादिकाव्यमार्गः । शास्त्रस्यालंकारशास्त्रस्य प्रमेयं विषयः प्रतिपाद्यमित्यर्थः । काव्योपयोगिरसादिकमनेन ग्रन्थेन निरूप्यत इति तात्पर्यार्थः ।

संप्रति स्वग्रन्थस्य लोकोत्तरनायकलाभेनातिशयमाह । चिरेणेति । काव्यस्य ये अलंकारास्तेषां संग्रहः संग्राहको ग्रन्थः । चिरेण चिरस्य चरित आचरितोऽर्थः फलं यस्य स तथोक्तः सफलोऽभूत् । चरितार्थतामेव व्यनक्ति । प्रतापेति । येनालंकारसंग्रहेण प्रतापरुद्रदेवस्य प्रतापरुद्रस्य कीर्तिर्यशः प्रकाश्यते प्रकटीक्रियते । प्रतापरुद्रकीर्तिप्रकाशनादस्य सफलतेति भावः ।

पूर्वग्रन्थानामपकर्षमाह । यद्यपीति । प्राचां पूर्वमहाकवीनां प्रबन्धेष्वलंकारशास्त्रेष्वसौ काव्यपद्धतिः साधु सम्यक् निरूपिता यद्यपि निरूपितैव । यद्यपि ते शङ्कानुत्पाद इति संप्रदायः । किं तु परं तु तथापीत्यर्थः । एतस्याः काव्यपद्धतेः प्रबन्धस्येत्यर्थः । सदृशमुदाहरणं नादृतमनादृतम् । काव्यानुरूपोदाहरणाभावात् पूर्वप्रबन्धेष्वपकर्ष इति भावः । तर्हि कीदृशमुदाहर्तव्यमित्याकाङ्क्षां जनयति । किं त्विति ।

उदाहार्यमाह । पुण्येति । पुण्येन सुकृतेन श्लोक्यते श्लाघ्यत इति पुण्यश्लोकः । सकलविद्यासुकृतशाली महापुरुषस्तस्य चरितं व्यापारः । उदाहरणमुद्घाटनमुद्दिश्यार्हतीति । स इव दृश्यत इति तादृशः सुकृती कश्चन पुमान् पूर्वैः

बहुशास्त्राद्यवलोकनादिति भावः । यशः कीर्तिः संभाव्यत उत्पद्यते । गुणाः सौशील्यादयोऽर्ज्यन्ते संपाद्यन्ते । सुपुरुषस्य पुण्यश्लोकस्य चरितं व्यापारः श्रूयते येन कारणेन काव्यस्यालापा रचना न हरन्ति । मन इति शेषः । मनोहरा न भवन्ति । तत्कारणं किं किमस्ति । नास्तीत्यर्थः । पूर्वोक्तफलसाधनत्वात् काव्यालापा मनोहरा एवेत्यर्थः । अतः काव्यमुपादेयमिति तात्पर्यार्थः ।

'काव्यालापांश्च वर्जयेत्' इति निषेधस्मृतेर्गतिमाह । यत्रेति । यत्र पुनः यस्मिन् काव्ये तूत्तमः श्लोक्यत इत्युत्तमश्लोकस्तस्योत्तमोत्तमस्य चरितं न निबध्यते नोदाह्रियते तत्काव्यं परित्याज्यं परित्यक्तुं योग्यमेव । अत्र स्मृतिरस्तीत्याह । तदिति । स्मृतिश्च मुनिवचनमपि तदसत्काव्यं मूलं कारणं विषयो यस्याः सा । असत्काव्यविषयां स्मृतिमनुवदति । 'काव्यालापांश्च वर्जयेत्' इति । अन्यथा रामायणादेरप्युच्छित्तिः स्यादिति भावः । काव्ये कैमुत्यन्यायेनोत्तमपुरुषगुणवर्णनस्यावश्यकत्वं प्रतिपादयितुं शास्त्रेष्वपि सत्पुरुषगुणवर्णनमेवावश्यकमित्याह । केवलमिति । काव्यजातस्य केवलं काव्यसमूहस्यैवायं पन्थाः सत्पुरुषगुणवर्णनरूपमार्गो न भवत्यपि तु किं तु शास्त्रजातस्यापि सकलशास्त्राणामपीत्यर्थः । सतां सद्गुणानामाश्रयेणावलम्बनेन प्रतिपादनेन महानुत्कृष्टो लोकानां जनानामादरो यथोक्तार्थो यथा स्पष्टो भवेत् तथोच्यत इत्यर्थः । वैशेषिकादेर्विशेषपदार्थवादिनो वैशेषिकास्तेषां शास्त्रं वैशेषिकं तदादिर्यस्य तस्य । ईश्वरस्य ब्रह्मणः प्रतिष्ठापकतया साधकतया । जगति लोके पूज्यता पूज्यत्वम् । अङ्कुरादिकं सकर्तृकं कार्यत्वाद् घटवदित्यादि नवानुमानैरिति भावः । महाभारतमादिर्येषां तेषामितिहासानामपि । महापुरुषस्य धर्मराजादेर्गुणानां वर्णनं परं प्रधानं येषां तेषां भावस्तत्ता तयैव हेतुना विश्वातिशायित्वम् । बहुना किम् । बहूक्तिभिः प्रयोजनं नास्तीत्यर्थः । वेदान्ता अप्युपनिषदर्थप्रतिपादका ग्रन्था अपि ब्रह्मणः सत्यं ज्ञानमनन्तं ब्रह्मेति ज्ञानादिगुणविशिष्टस्य ब्रह्मणः प्रतिपादकतयैव हेतुना परमत्यन्तमुत्कृष्यन्त उत्कृष्टा भवन्ति ।

अथेति । अथातो धर्मजिज्ञासेति सूत्रमिति शेषः । उपक्रममाणेनोपक्रमं कुर्वता सूत्रकृता सूत्रकारेण महर्षिणा जैमिनिनापि पुरुषं महापुरुषमाश्रितस्य गुणश्रेष्ठस्य गुणोत्तमस्य धर्मस्य धर्मगुणस्य ज्ञातुमिच्छा जिज्ञासा तद्द्वारेण महापुरुषस्य पुरु-

षोत्तमस्य गुणवर्णनमेव शास्त्रस्य प्रामाण्यात् प्रमाणत्वादावश्यकत्वादित्यर्थः तत्तदिति। नीयते प्रतिपाद्यत इति न्यायः स स न्यायस्तत्तन्न्यायस्तत्तद्विषयः। तस्य निरूपणं परं प्रधानं यस्य तत्कथाप्रतिपादकस्यापीत्यर्थः। प्रबन्धराशेः काव्यजातस्य महापुरुषगुणवर्णनं हेम्नः सुवर्णस्य परमामोद इवोत्कृष्टगन्ध इव। ततश्च महापुरुषगुणवर्णनस्यावश्यकत्वादेवेत्यर्थः।

प्रतापेति। प्रतापरुद्रदेवस्य गुणान् शौर्यादीनाश्रित्यावलम्ब्यायमलंकारप्रबन्धो निर्मितो रचितः। हे सन्तः सज्जना वो युष्माकं कर्णोत्सवः श्रोत्रयोरुत्सवोऽस्तु। आनन्दकरो भूयादित्यर्थः।

इयता ग्रन्थेन प्रतिपाद्यमहिम्ना प्रबन्धस्योत्कर्षमुक्त्वा स्वग्रन्थस्य विशेषमाह। काकतीयेति। काकतिर्नाम दुर्गाशक्तिरेकशिलानगरेश्वराणां कुलदेवता सा भक्तिभजनीया अस्येति काकतीयः। स चासौ नरेन्द्रश्च तस्य यशः कीर्त्तिं भूषयितुमलंकर्त्तुमियं चिकीर्षिता विद्यानाथस्य कवेः कृतिः काव्यं स्वयं च स्वयमेव तेन यशसा विभूष्यत अलंक्रियते। अत्र कीर्त्तिग्रन्थयोरन्योन्यं भूष्यभूषणभावसद्भावादुत्कर्ष इति भावः।

प्रबन्धमहिम्ना प्रतिपाद्यातिशये वृद्धसंवादमाह। दण्डिनेति। दण्डिना कविनापि प्रतिपादितम्। प्रबन्धमहिम्ना प्रतिपाद्यमहत्त्वमिति शेषः। तदेवाह। आदीति। आदिराजानां नलनहुषादिपूर्वपुरुषाणां यशोबिम्बं कीर्त्तिमण्डलं वाङ्मयं वाक्प्रपञ्चमेवादर्शं दर्पणम्। व्यस्तरूपकम्। कर्म प्राप्य तेषां नृपाणामसंनिधानेऽपि स्वयं न नश्यति। वाक्यार्थः कर्म। अत्र नलाद्यसंनिधानेऽपि तद्यशोबिम्बावस्थितेः प्रबन्धाधीनत्वोक्तेः प्रबन्धमहिम्ना प्रतिपाद्योत्कर्ष इति भावः। अतः कीर्त्तिभूषणं स्वग्रन्थ इति तात्पर्यम्।

इतः परं प्रतिपाद्यमहिम्ना प्रबन्धमहत्तामाह। सूक्तैवेति। प्रतिपाद्यस्य वर्ण्यस्य महिम्ना सामर्थ्येन प्रबन्धस्य काव्यस्य महत्तोत्कर्षः सूक्ता सुष्ठूक्तैव। प्राचा प्राचीनेन भामहेन। तत् पूर्वोक्तं प्रबन्धमहत्त्वमुक्तम्। उपश्लोक्यस्य वर्ण्यस्य माहात्म्यादतिशयात् काव्यसंपत् काव्यसंपत्तिरुज्ज्वला अतिशयिता। इत्येवमुक्तमिति पूर्वेणान्वयः।

उद्भटेन च तन्नामकेन काव्यकृता च प्रतिपादितम् । गुणेति । गुणाः प्रसादादयः । अलंकारा उपमादयः । तैश्चारुत्वं रुचिरत्वं तेन युक्तमपि काव्यम् । आश्रीयत इत्याश्रयस्तस्य वर्ण्यस्य संपत्त्या माहात्म्येनेत्यर्थः । अमरद्रुमः कल्पवृक्षः मेरुणा सुमेरुणेवाधिकोज्ज्वलमत्युज्ज्वलम् ।

रुद्रदेवेनापि केनचित् कविना कथितम् । उदारेति । उदारस्य महतः । 'उदारोदात्तमहतोः' इत्यमरः । तस्य चरितस्य निबन्धनाद्वर्णनात् प्रबन्धस्य प्रतिष्ठा स्थितिरतिशयो वा कथितेति पूर्वेणान्वयः । साहित्यमीमांसायां च तन्नामकग्रन्थे च प्रपञ्चितमुक्तम् । नायकेति । नायकस्य गुणाः शौर्यादयः । अत एव गुणाः सूत्राणीति श्लिष्टरूपकं तैर्ग्रथिता गुम्फिताः सूक्तय एव निर्दोषवचनान्येव स्रजो मालिकाः । सुकृतमेषामस्तीति सुकृतिनस्तेषां सुभगानाम् । आकल्पं कल्पपर्यन्तम् । आकल्पन्ते वेषायन्त अलंकारायन्ते । 'आकल्पवेषो नेपथ्ये' इत्यमरः ।

निरूपितं च भोजराजेन । भोजराजेन निरूपितं च प्रतिपादितं च । कवेरिति । लोकोत्तरैः लोकश्रेष्ठैरनन्यसुलभैर्गुणैरुत्तरः श्रेष्ठो नायको वर्ण्येत यदि प्रतिपाद्येत चेत् । अल्पापि गुणालंकारादिभिर्न्यूनापि वाग्वृत्तिर्वाग्व्यापारः प्रबन्ध इति यावत् । विदुषां बुधानां कर्णावतंसति श्रोत्रालंकारो भवति । अतः स्वयं तेन विभूष्यते इति तात्पर्यम् । एवमवश्यं काव्ये लोकोत्तरगुणो नायको वर्ण्य इत्युक्तम् ।

ते गुणाः क इत्याकाङ्क्षायामाह । तत्रेति । तत्र लोकोत्तरगुणेष्वेत अग्रत एव वक्ष्यमाणलक्षणा नायकस्य वर्ण्यस्य गुणाः । तन्नामान्येवाह । महाकुलीनतेति । स्वग्रन्थे प्रतिपाद्यमानानां प्रतापरुद्रगुणानां विशेषमाह । पूर्वेति । पूर्वशास्त्राणां साहित्यमीमांसादिशास्त्राणां अनुसारेण कतिचित् कियन्त एवेमे गुणाः कथिता उक्ताः । प्रतापरुद्रदेवस्य गुणाः शौर्यादयो वाचां वचनानामगोचरा अविषया वक्तुमशक्या इत्यर्थः ।

अथेति । अथ गुणोद्देशानन्तरं तेषां गुणानां स्वरूपं लक्षणमुदाहरणं च लक्ष्यं च । उच्यते इति शेषः । तत्राद्यं लक्षयति । महाकुलीनतेति । महत्युत्कृष्टे कुले वंशे संभव उत्पत्तिर्महाकुलीनता । नामेति प्रसिद्धा । उदाहरति । यथा ।

यथा स्पष्टं भवति तथोच्यत इत्यर्थः । तादृगिति । स एव दृश्यत इति तादृक् । अनिर्वाच्यमित्यर्थः । मध्यमलोकस्य भूलोकस्य यद्भाग्यं तस्य विभवादतिशयाद्धेतोः । 'भाग्यं कर्म शुभाशुभम्' इत्यमरः । क्षोण्यां भूमौ क्रीडितुमिच्छुभिरिन्द्र आदिर्येषां तैर्वृन्दारकैर्देवैः । 'वृन्दारका दैवतानि' इत्यमरः । चिरतरं बहुकालं यथा तथा संप्रार्थितः पद्मभूर्ब्रह्मा । अर्केन्द्वोः सूर्याचन्द्रमसोः कुलयोर्वंशयोः प्रशस्ति प्रशंसां प्रतिष्ठामतिक्रान्त इति तथोक्तम् । यं काकतीयानामन्वयं वंशमसृजत् सृष्टवान् । तस्मिन्नन्वये लक्ष्मीपतिर्विष्णुः संप्रतीदानीं वीररुद्रवपुषा प्रतापरुद्ररूपेण जागर्ति जागरूको भवति । अवतरतीत्यर्थः । सूर्येन्दुकुलातिशायित्वादस्य कुलस्य महत्त्वम् । तत्रावतीर्णत्वात् प्रतापरुद्रस्य ना विष्णुः पृथिवीपतिरिति न्यायात् लक्ष्मीपतिरेवासावित्युक्तमिति वेदितव्यम् । नन्वत्र क्षोणीविहरणेच्छुभिर्देवैर्याचितो ब्रह्मा सत्कुलं सृष्टवान् । तत्र प्रतापरुद्रेण विष्णुरवतीर्ण इत्युक्तम् । तथा च देवानां क्षोणीविहरणेच्छा कथं घटत इति चेदुच्यते । विष्ण्वतारं विना तेषामवलम्बाभावात् क्षोणीविहरणं न संभवति । तदवतारे तु यथेष्टविहरणं संभवतीति तदवतारो वर्णित इति । तथा च प्रतापरुद्रसंबन्धिनां देवांशसंभूतत्वं व्यज्यते । अत्र पद्मभुव इन्द्रादिप्रार्थनासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः ।

अथ महाकुलीनतानिरूपणानन्तरमौज्ज्वल्यं नाम गुणः । निरूप्यत इति शेषः । एवमेवाथ महाभाग्यमित्यादावप्यन्वयो बोध्यः । रूपेति । रूपेणाकारविशेषेण संपन्नः संपूर्णो देहो यस्य स तस्य भावस्तत्त्वम् । लावण्यमिति यावत् । तदौज्ज्वल्यं नाम गुण इति परिकीर्त्यते । उदाहरति । मुरारेरिति । यः कामो मन्मथः पूर्वं पूर्वकाले मुरारेः श्रीकृष्णात् जलनिधिसुतायां रुक्मिणीरूपश्रीदेव्यामुदभवदुत्पन्नः ।

'राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि'

इति विष्णुपुराणाद् रुक्मिण्या जलनिधिसुतात्वम् । स कामो जगत्या भूमेर्भाग्यविभवाद् भाग्यातिशयात् पुनर्भूयो महादेवात्तन्नामकान्महाराजात् । अवनीभृद्दुहितरि राजपुत्र्याम् । ईश्वरात् पार्वत्यामिति च ध्वन्यते । जात उत्पन्नः । अत एव वपुष्मान् प्रशस्तशरीरः सन् स्वयं साक्षादयं प्रतापश्रीरुद्रः प्रतापश्रीविशिष्टरुद्रः प्रतापरुद्रः । मध्यमपदलोपे समासः । प्रतापरुद्रो भूत्वा जयति

प्राचीनकविभिः प्रबन्धस्य स्वग्रन्थस्याभरणीकृतो न। अभूदिति शेषः। एतेन प्रबन्धॄणामपकर्ष उक्त इति न पौनरुक्त्यम्।

सच्चरितनिबन्धने प्रबन्धप्रबन्धॄणामुत्कर्षमाह। प्रबन्धेति। विषयभूतस्य प्रतिपादनीयस्य नेतुर्नायकस्य गुणनिरूपणं दानदाक्षिण्यादिगुणोदाहरणं प्रबन्धानां ग्रन्थानां प्रबन्धॄणामपि तन्निर्मातॄणां कवीनां च कीर्तिर्यशः प्रतिष्ठा चिरावस्थानं तयोर्मूलं कारणम्।

अत्र दृष्टान्तमाह। यथेति। रामस्य दाशरथेर्गुणानां वर्णनम्। रामायणं काव्यम्। वल्मीकाज्जन्म यस्येति वल्मीकजन्मा वाल्मीकिः। तयोर्महाप्रतिष्ठाया कारणं यथा भवति तथैव मूलमिति पूर्वेणान्वयः। 'काव्यालापांश्च वर्जयेत्' इति प्रतिषेधपरिजिहीर्षयाह। महापुरुषस्योत्तमनायकस्य गुणवर्णने प्रबन्धस्थितिः प्रबन्धनिर्माणं श्रेयांसि करोतीति श्रेयस्करी। 'काव्यं यशसेऽर्थकृते' इत्याद्यालंकारिकवचनप्रामाण्यादस्य श्रेयःसाधनत्वम्। निषेधस्त्वसत्काव्यविषय इति तात्पर्यम्। काव्यस्य पुरुषार्थसाधनत्वं सदृष्टान्तमाह। यथेति। वेदः श्रुतिः। शास्त्रेति। शास्त्रं स्मृतिः पुराणानि चादिर्यस्य प्रबन्धस्य तस्मात्। आदिशब्देन गुरूपदेशादिर्विवक्ष्यते। हिते कर्तव्ये प्रवृत्तिरुद्वेगोऽहितान्निवृत्तिश्चानुद्वेगश्च यथा तथा सदुत्तमनायक आश्रयो वर्ण्यत्वेन यस्य तस्मात् काव्यादपि हितप्रवृत्तिरहितनिवृत्तिश्च भवतीत्यर्थः। ननु वेदादेरेव पुरुषार्थसिद्धिः किं काव्येनेत्याशङ्क्य काव्यस्य विशेषमाह। काव्य इति। काव्ये इयान् एतावान् विशेषो भेदः। अस्तीति शेषः। काव्यादिति हेतौ पञ्चमी। कर्तव्यतायां कर्तव्यत्वे धीर्बुद्धिः सरसा रससहिता भवति। कर्तव्यार्थे काव्यादिच्छया प्रवर्तते। अन्यत्र वेदादौ तथा न सरसा भवतीत्यर्थः। अकरणे प्रत्यवायभिया प्रवर्तते न तु संतुष्टः प्रवर्तते। अयमेव विशेष इत्यर्थः। तथा हि। अयमेवार्थः प्रतिपाद्यत इत्यर्थः।

यदिति। प्रभुणा राज्ञा संमितः समः। 'सम्मितं समम्' इत्यमरः। तस्माच्छब्दः प्रधानं प्रवर्तकं यस्य तस्माद्वेदात्। यदिष्टं कर्तव्याकर्तव्यरूपमभीष्टम्। अधिगतं ज्ञातम्। ये गत्यर्थास्ते ज्ञानार्था इति नियमात्। वाङ्मात्रेण प्रभुरिव वेदोऽपि विधिनिषेधबलेन हितेषु पुंसः प्रवर्तयति निवर्तयति चाकर्तव्येभ्यः। विपक्षे राजा दण्डमिव वेदः प्रत्यवायं जनयति। अतः शब्दप्राधान्यमिति भावः।

अत्रार्थस्य प्राधान्यमात्रत्यागो न स्वरूपतः। तथात्वे तून्मत्तवाक्यवद्वेदस्याप्रवर्त्तकतैव स्यात्। अतोऽध्ययनं फलवदर्थावबोधनपर्यन्तमिति वेदितव्यम्। अर्थः प्रवणः प्रधानं प्रवर्त्तकं यस्य तस्मात्। अत एव सुहृत्संमितात् मित्रतुल्यात् पुराणवचनाच्च चिरं विचारापेक्षिततया कृच्छ्रेणेत्यर्थः। यदिष्टमधिगतम्। अर्थप्रधानं पुराणम्। एवं कुर्यान्नैवं कुर्यादिति विधिनिषेधबलेन प्रवर्त्तकं वा न भवति। किं तु पूर्वपुरुषचरितस्तुतिनिन्दामुखेन रागद्वेषावुत्पाद्य मित्रवत्प्रवृत्तिनिवृत्तिहेतुभूतम्। अतः पुराणमर्थप्रधानं सुहृत्संमितं चेति वेदितव्यम्। यत्तदोर्नित्यसंबन्धात् तस्मिन्नित्यध्याहारः। तस्मिन् कर्त्तव्ये कार्ये कान्तासंमिततया कामिनीतुल्यया यया काव्यश्रिया काव्यसंपदा सरसतां सरसत्वमुत्कण्ठामित्यर्थः। आपाद्य उत्पाद्य। बुधो विद्वान् पुमान् कुतुकी कौतुकवान् विरचितः। अकर्त्तव्येऽकुतुकी च च्छेदः। अकर्त्तव्ये अहिते अकुतुकी विरचितः। कर्त्तव्ये कुतुकीत्यनेन हितप्रवृत्तिः। अकर्त्तव्य इत्यनेनाहितनिवृत्तिश्चोक्तेति बोध्यम्। यथा कामिनी कटाक्षवीक्षणादिविलासैरेव कामिनमावर्जयन्ती सर्वं कार्यं कारयत्येवं काव्यश्रीरपि व्यञ्जनाव्यापारेणैव रामादिवद्वर्त्तितव्यं न रावणादिवदित्यर्थं द्योतयन्ती पुंसः कर्त्तव्ये प्रवर्त्तयति निवर्त्तयति चाकर्त्तव्यादितीदं काव्यं कान्तासम्मितम्। अतोऽस्याः सरसतापादनेन प्रवर्त्तकत्वाद्दयानुनयपूर्वकं प्रवर्त्तकाभ्यां वेदपुराणाभ्यां विशेषोऽस्तीति बोध्यम्। अतः काव्यनिर्माणाय प्रयतामह इत्याह। तस्यै काव्यश्रियै स्पृहामिच्छां कुर्महे। वयमिति शेषः।

तत इति। वेदाद्युपदेशाद्विशिष्टत्वाद्धेतोः काव्यं दृष्टस्यार्थादेरदृष्टस्य कीर्त्यादेः फलस्य प्रयोजनस्य जनकतयोत्पादकतया बह्वधिकं यथा तथोपयुक्तमुपयोग्युपादेयमित्यर्थः। अत्र वृद्धसंवादमाह। काव्यप्रकाशे ग्रन्थे। तथा च तथैवोक्तम्। अस्माभिर्यथोक्तं तथोक्तमित्यर्थः। काव्यं यशसे कीर्त्यै। अर्थकृते अर्थप्रयोजनाय। अर्थार्थमित्यर्थः। व्यवहारस्य विदे ज्ञानाय। शिवेतराणामशुभानां क्षतये नाशाय सद्यस्तदानीं परनिर्वृतय उत्कृष्टसुखाय। कान्तासंमिततया कान्तातुल्यत्वेनोपदेशयुजे योगाय। उपदेशार्थमित्यर्थः। भवतीति शेषः।

प्रसिद्धमिति। महाप्रबन्धेषु प्राचीनोत्कृष्टग्रन्थेषु। एतत् काव्यस्य कीर्त्यादिसाधकत्वं प्रसिद्धं च प्रसिद्धमेव। परिदृढ इति। छाया। विज्ञानं परिवर्धते

सर्वोत्कर्षेण वर्तेत इति । एवं मृगदृशां स्त्रीणां मनीषा बुद्धिः । भवतीति शेषः । अत्र साक्षात् काम एवायमित्युत्प्रेक्षया रूपसंपत्तिरुक्ता ।

अथ महाभाग्यम् । महच्च तद्भाग्यं च महाभाग्यम् । लक्षणमाह । यद्विश्वंभराया भूमेराधिपत्यमधिपतित्वं तद् महाभाग्यमिति विशेषः । उच्यते । यथा सेवेति । सेवायां नम्राणां प्रणतानां नरेन्द्राणां राज्ञां मौलिषु किरीटेषु विलसद्भिः स्फुरद्भी रत्नांशुभी रत्नकान्तिभिर्नीराजितं नीराजनां प्रापितम् । राज्यश्रियो राज्यलक्ष्म्याः प्रथमावतारस्य प्रथमप्रवेशस्य पदवीं मार्गभूतम् । सिंहासनस्य राज्यलक्ष्मीप्रथमचिह्नत्वादिति भावः । भद्रासनं सिंहासनमारूढ्य । तत्र स्थित्वेत्यर्थः । गुणानां दानदाक्षिण्यादीनां निधिराकरः श्रीवीररुद्रो नृपः प्रतापरुद्रनृपतिः । प्रत्यर्थिपृथ्वीपतीनां शत्रुभूपालानां श्लाघाया उत्कर्षस्य लङ्घने जाङ्घिकैर्जङ्घया चरन्तीति जाङ्घिकाः शीघ्रगामिनस्तैः समर्थैरित्यर्थः । अत एवानुपमैः सादृश्यरहितैर्विक्रमैः पराक्रमैः क्षोणीं भुवं रक्षति । दुष्टनिग्रहशिष्टपरिपालनाभ्यां निखिलभूमण्डलसंरक्षणादस्य महाभाग्यमिति भावः ।

अथौदार्यम् । लक्षणमाह । यदिति । तस्मिन् शीलं स्वभावो यस्य स तच्छीलस्तत्परस्तस्य भावस्ताच्छील्यं तत्परत्वमासक्तिरिति यावत् । विश्राणने वितरणे ताच्छील्यमिति शिवभागवतवत् समासः । यत् तदौदार्यं निगद्यत उच्यते । यथा । वदान्य इति । गुणश्रेणीनां गुणगणानां श्लाघयोत्कर्षेण पिहितमाच्छादितं तिरस्कृतं हरिदीशानामिन्द्रादिदिक्पतीनां यशः कीर्तिर्येन स तस्य रुद्रनृपतेः समस्तुल्यः । अन्यो वदान्योऽपरो दाता त्रिजगति त्रिलोके । लोकत्रयेऽपीत्यर्थः । नास्ति । अत्र हेतुमाह । यद्यस्मात् कारणाद् विद्वांस इति जनो विद्वज्जनस्तस्य मणिगृहाणां मणिमयमन्दिराणां प्राङ्गणभुवोऽङ्गणभूमयः । समन्तात् सर्वत्रोद्धतैरुल्लसितैर्द्विरदानां गजानां मदगन्धैर्दानगन्धैः सुरभयो वासिताः क्रियन्ते । अत्रोत्तरवाक्यार्थेन पूर्ववाक्यार्थसमर्थनात् काव्यलिङ्गालङ्कारः ।

अथ तेजस्विता । लक्षणमाह । जगदिति । यज्जगतां प्रकाशकत्वं प्रकाशकारित्वं तत् तेजस्वित्वमुच्यते । उदाहरति । सदेति । जयिनो जयशीलस्य काकतिविभोः काकतिदेवतोपासकविभोः । मध्यमपदलोपी समासः । प्रतापरुद्रस्यारिक्ष्माभृत्कान्तानां शत्रुभूपाङ्गनानां चिकुरः कुन्तला एव तिमिरं तस्याहंकृतिमहंकारं मुष्णातीति तन्मुषि तस्मिन् तथोक्ते । तेजः प्रताप एव भानुः

सूर्यस्तस्मिन् सदा सर्वदा स्फुरति सति । जरन्ति जीर्णान्युद्दामान्युत्कटानि तमांसि यासां तासाम् । कुतः । न सूर्यं पश्यन्तीत्यसूर्यंपश्यास्तासां सूर्यप्रकाशरहितानामवधिगिरेश्चक्रवालस्य पश्चात् भवाः पाश्चात्यास्तासां दृषदां शिलानां प्रकाशस्यालोकस्य व्युत्पत्तिर्विशेषेणोत्पत्तिः संभवो भवति । अत्र सूर्यप्रकाशरहितयोरपि देशकालयोरतिबलप्रकाशजननादस्य तेजस्वित्वं लोकोत्तरमिति भावः । रूपकालंकारः ।

अथ वैदग्ध्यम् । लक्षणमाह । कृत्येति । कृत्यवस्तुषु कर्तव्यार्थेषु चातुर्यं चतुरत्वं वैदग्ध्यं परिकीर्त्यते । यथा । उदाहरति । चातुर्यमिति । गुणनिधेः श्रीवीररुद्रप्रभोश्चातुर्यं किमु वर्ण्यते । अशक्यत्वात् किमपि न वर्ण्यत इत्यर्थः । अशक्यत्वमेव विशदयति । यत्रेति । यत्र विद्या न तत्र श्रीर्यत्र श्रीर्न तत्र विद्येति न्यायादन्योन्यं परस्परं विरुद्धयोरपि वाणीश्रियोः सरस्वतीलक्ष्म्योर्यत्र प्रतापरुद्रे महदार्जवमृजुत्वमेकत्रावस्थापनशक्तिरिति यावत् । अस्तीति शेषः । पूर्वोक्तन्यायस्तु निर्गुणजनविषय इति भावः । किं चाभ्यां सह श्रीवाणीभ्यां सदृशैः स्वोचितैरुपचारैः सत्कारविशेषैर्लालितां हृष्टामित्यर्थः । इमां भुवं ते तादृशा अनुपमास्तैरुत्सवैर्हर्षोत्पादकव्यापारैः । ‘उत्सूते हर्षमित्येष उत्सवः परिकीर्त्यते’ इति भावप्रकाशे । दिशां जित्वरो जयशीलः स नृपतिः । समानः पतिर्यस्याः सा सपत्नी तस्या भावः सापत्न्यं विरोध इति यावत् । निःसापत्न्यमविरोधं यथा तथा धत्ते दधाति । आभ्यामित्यत्राप्रधाने तृतीयाविधानेऽपि शाब्द एवोपसर्जनभावो न त्वार्थः । सह शाखामस्तरं प्रहरतीत्यत्रेव समप्रधानभावोपपत्तेः । अन्यथानौचित्यादिति बोध्यम् । अत्र मिथो विरुद्धानामेतासामन्योन्यानुरागजननेन वशीकरणाद्वैदग्ध्यमुक्तम् । वितरणविद्वद्गोष्ठीप्रजानुरञ्जनाभिः श्रीवाणीधरणीर्निर्विरोधं पोषयतीति भावः ।

अथ धार्मिकत्वम् । लक्षणमाह । धर्मस्यैकं मुख्यं यथा तथा आयत्तमधीनं चित्तं यस्य तस्य भावस्तत्त्वं धार्मिकत्वमुदीर्यत उच्यते । उदाहरति । यथा । परिहास इति । काकतीन्द्रः परिहासेऽपि विहस्य वचनेऽप्यनौचित्यमौचित्याभावं स्वप्नेऽप्यन्यवध्वाः कथां गोष्ठीं शत्रौ रिपावप्यगुणस्य दुर्गुणस्यारोपं न सृष्यति न सहते । आरोपो नामासतो धर्मस्य स्थापनम् । परिहासादावप्यनौचित्यादिकमसहमानस्यास्य धार्मिकत्वं किमु वक्तव्यमिति भावः ।

महाकुलीनतेत्यादि गुणोद्देशश्लोके आदिशब्दग्रहणादादिशब्दस्वीकारान्महामहिमा पाण्डित्यं च प्रभृतिरादिर्येषां गुणानां ते तथोक्ताः । निरूप्यन्त इति शेषः ।

तत्र महामहिमलक्षणमाह । तदिति । देवता आत्मा अधिष्ठानं यस्य तस्य भावो देवतात्मता या देवांशसंभूतत्वं तन्महामहिमत्वम् । उच्यते इति शेषः । उदाहरति । कौसल्येति । विष्णोः प्रथमजनन्यादिमाता कौसल्यासीत् । देवकी द्वितीया मातासीत् । किं चेति चार्थः । तदनु पश्चान्महिता पूज्यमाना मुम्मडिम्या इति राजश्री सैव प्रतापरुद्रमाता तृतीया माताभूत् । तमेवार्थं विशदयति । य इति । यो विष्णुस्त्रेतायां त्रेतायुगे रघुपतिः श्रीरामोऽभूद् द्वापरे युगे शौरिः श्रीकृष्ण आसीत् । स विष्णुः कलौ युगे वीररुद्रस्यावतारो यस्य स रुद्ररूपेणावतीर्णः सन् जयति । अतो विष्णोर्मातृत्रयं सिद्धम् । महामहिमत्वं स्वयमेव विशदयति । अत्रेति श्लोके गरुडध्वजात्मकतया विष्ण्ववतारत्वेन महामहिमतोक्ता ।

सर्वेति । सर्वाभिर्विद्याभिरधिकत्वं यत्तत्पाण्डित्यमुदाहृतमुक्तम् । उदाहरति । यथा गोष्ठीभिरिति । श्रीवीररुद्रो नृपः षण्णां दर्शनानां समाहारः षड्दर्शनी ।

'पाणिनेर्जैमिनेश्चैव व्यासस्य कपिलस्य च ।
कणादस्याक्षपादस्य दर्शनानि षडेव हि ॥'

इत्याहुः । सा सीमा गोचरो यासां ताभिस्तथोक्ताभिर्गोष्ठीभिः शास्त्रप्रसंगैर्बुधगणान् विद्वत्समूहान् संसदि सभायां परितोषयन् सतः श्रेष्ठस्य सारस्वतमार्गस्य कवितामार्गस्य दर्शनेन वित्तैर्दर्शनचणैर्दर्शनसमर्थैः सूक्तैः सुभाषितैः कवीन् प्रीणयन् संतोषयन् । संगीतोपनिषदः नाट्यवेदान्तस्य रहस्यपिशुनैर्मर्मसूचकैरातोद्यस्य ततादिचतुर्विधवाद्यस्य योग्यैरुचितैः क्रमैः परिपाटिभिः । 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् । चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ॥' इत्यमरः । वैणिकान् वीणावादकान् धिन्वन् प्रीणयन् सन् विहरति । तत्र विभोः सर्वविद्याविशारदत्वादखण्डं पाण्डित्यमिति भावः ।

अथेति । अथेत्यारम्भे । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । प्रथममेव नायकगुणनिरूपणानन्तरं नायकस्वरूपं निरूप्यते । लक्षणोदाहरणाभ्यामिति शेषः । महापुरुषगुणवर्णनेत्यादिना गुणवर्णनस्यैव प्रबन्धोत्कर्षावहत्वेनोक्त-

त्वात् प्रथमतो गुणनिरूपणमिति वेदितव्यम् । लक्षणमाह । यशः कीर्तिः । कोशदण्डजं तेजः प्रतापस्ताभ्यां सुभगो धर्मकामार्थेषु तत्पर आसक्तो धुरन्धुरः समर्थो गुणैः कुलीनत्वादिभिराढ्यः पूर्णश्च । पुमानिति शेषः । नायकः परिकीर्त्तितः । यद्यपि गुणाढ्य इत्यनेनैव यशःप्रतापधर्मादीनामुपादानं भवति तथापि पुनरुपादानं तेषामावश्यकत्वद्योतनाय । उदाहरति । यशःप्रतापाभ्यां सुभगत्वं यथा । धर्मेति । काकतिवीररुद्रनृपतेः स्फारं प्रभूतं यशोमण्डलं कीर्तिमण्डलं त्रिभुवनस्य त्रिलोकस्य धर्म एवालम्बो दण्डस्तेन समुच्छ्रितामुद्धतामेकातपत्रस्याद्वितीयच्छत्रस्य श्रियं शोभां धत्त इति निदर्शना । प्रतापमाह । छायेति । कुवलयश्यामेन्दीवरनीलेयं परिदृश्यमाना नभस्थल्याकाशस्थल्यस्य छत्रस्यातपत्रस्य छायानातप इव लोक्यते दृश्यते । अत्र यदिति शेषः । उत्तरवाक्ये तच्छब्दप्रयोगात् । यद्यस्मात् कारणादालोक्यते तत्तस्मात् कारणात् तस्य छत्रस्योपरि भागे प्रताप एव तपनः सूर्यो नियतं यथा तथा द्योतते प्रकाशत इति मन्ये त्रिभुवनोपरि कीर्त्तिस्तदुपरि प्रताप इति महती यशःप्रतापसंपत्तिरुक्ता । धर्मकामार्थतत्परत्वं यथा । धर्म इति । रुद्रनरेश्वरे धर्मः पुण्यसंपादको गुणः सोऽर्थ इव द्रव्यरूपपुरुषार्थ इव पूर्णः श्रीर्यस्य स तथोक्तः स्थितः । अर्थो धर्म इव पूर्णश्रीः स्थितः कामो विषयेष्वभिलाषस्ताविव धर्मार्थाविव पूर्णश्रीः समृद्धः । तौ धर्मार्थौ काम इव कामः पुरुषार्थ इव पूर्णश्रियौ स्थितावित्यन्वयः । अत्र धर्मार्थकामानां त्रयाणामपि समृद्धत्ववर्णनेन तुल्यवृत्तित्वं द्योतितम् । अत्र त्रयाणां परस्परसादृश्यवर्णनेनोपमेयोपमालंकारः । धुरीणता धुरन्धरत्वम् । यथा गायन्तीरिति । काकतिवीररुद्रनृपतौ दोष्णा बाहुना विश्वंभरां भुवं बिभ्रति वहति सति शेषोऽनन्तो गायन्तीः स्वभर्तृभारावतरणात् । प्रतापरुद्रकीर्तिमिति शेषः । अथेदानीमेवेति भावः । निजवधूः स्वजायाः शिरसां कम्पनैः श्लाघनैरनुमोदत अनुसृत्य तुष्यति । कच्छपपतिरादिकूर्मावतारो हरिरपि वक्षस्थल्या दर्शनात् । आलिङ्गनार्थमिति भावः । लक्ष्मीं श्रियं प्रीणयते संतोषयति । दिङ्नागाश्च दिग्गजाश्चानुव्रज्यया सुरतार्थमनुधावनेन करेणूनामिभीनां शुचं विरहजं दुःखम् । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । अपाकुर्वन्ति परिहरन्ति । शेषादिभिर्भरणीयां विश्वंभरामयमेक एव बिभर्त्तीति विश्वातिशायिधुरन्धरत्वमस्योक्तम् । मुखैरिति । फणीति सामान्यवाचकस्य विशेषपर्यवसानात् शेष इत्यर्थः । सहस्रेण मुखैः सहस्रसंख्याकैर्मुखै-

रित्यर्थः । सहस्रेणेत्यत्र ' विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोः ' इत्यमरवचनादेकवचनत्वम् । एवमुत्तरत्रापि द्रष्टव्यम् । काकतिदेवताको वंशः काकतिवंशः । तद्भर्तुर्गुणान् शौर्यादीनिति सर्वत्र संबध्यते । वदेद्वेद्ब्रूयाद्यदि । तथा विवस्वान् सूर्यः सहस्रेण करैरंशुभिरेव हस्तैरिति श्लिष्टरूपकमस्य लेखनसाधनत्वायोगाल्लिखेच्चेत् । हरिरिन्द्रश्च । ' इन्द्रो दुश्च्यवनो हरिः ' इत्यमरः । सहस्रेण नेत्रैः पश्येच्चेत् । स्थाने युक्तम् । ' युक्ते द्वे सांप्रतं स्थाने ' इत्यमरः । शेषादय एव प्रतापरुद्रगुणस्तुत्यादिकं कुर्युश्चेद्युक्तम् । समर्थत्वात् । अन्ये तु कर्तुमुद्युक्ताश्चेदयुक्तमिति वाक्यार्थः ।

अथ नायकसामान्यनिरूपणानन्तरम् । उदात्तेति । उदात्त उद्धतो ललितः शान्त इति चत्वारः । धीरो धीरशब्दः पूर्व आदिर्येषां ते तथोक्ताः । इम उदात्तादयो नायकाः स्मृता उक्ताः । अत्र धीरशब्दपूर्वत्वमुदात्तादिशब्दानामेव न तु नायकानाम् । तथापि शब्दपरेणाप्यर्थलक्षणेति ' देवपूर्वं गिरिम् ' ' धनुरुपपदमस्मै वेदम् ' ' हिरण्यपूर्वं कशिपुम् ' इत्यादौ मल्लिनाथेन व्याख्यातम् । चैवादीनां पादपूरणादपूरणार्थत्वं द्रष्टव्यम् । श्लोकार्थं कविः स्वयमेव व्याकरोति । तत्रेति । तत्र नायकस्वरूपप्रकटनप्रस्तावे । सर्वरसानां शृङ्गारादिनवरसानां साधारणाः समाना धीरोदात्तादीनां सकलरसानुगुणत्वमनुकूलादीनां चतुर्णां तु नास्तीत्याशयेनोक्तम् ।

क्रमेण चतुर्णां लक्षणान्याह । महदधिकं सत्त्वं सत्त्वगुणो यस्य स तथोक्तः क्रोधाद्यनभिभूतान्तःकरणोऽतिगम्भीरोऽगाधचित्तः कृपावान् परदुःखप्रहरणेच्छुरविकत्थन आत्मस्तुतिरहितो धियं रात्यादधातीति धीरो वत्सल एवंगुणको यः प्रतापरुद्रवत् प्रतापरुद्रतुल्यं वर्तते स धीरोदात्तो धीरोदात्तनामको नायकः संमतः । संदिग्ध इति । त्रैलोक्यमतिशयेन कीर्त्या सुभगः सुन्दरः श्रीवीररुद्रो नृपः । धृतोऽसिः खड्गं येन सः । कृपया मृदुः न कातर्येणेत्यनेन महासत्त्वतोक्ता । क्षणमल्पकालमेवारीन् । पुरः स्थितानिति शेषः । हन्तुं संदिग्धे संदेहं गच्छति । क्षणमित्यनेन धैर्यमुक्तम् । पुर इत्यनेन न तु पलायितानिति धार्मिकत्वमुक्तम् । बन्दिषु स्तावकेषु शौर्यश्रियां शौर्यसंपत्तौ प्रणयं प्रेमाणं प्रतापरुद्रसंबन्धिनं प्रशंसन्त इति तथोक्तेषु सत्सु । नमन्ती भ्रूर्यस्य स तथोक्तः सन्निति लज्जानुभावः । लज्जते लज्जितो भवति । स्तावकस्तुतावेव लज्जितत्वात्मस्तुतिदू-

रापाल्लेत्यविकत्थनत्वमुक्तम् । सुखस्येष्टानुभवजन्यानन्दस्य रोषस्यामर्षस्य हर्षस्ये-ष्टलाभजन्यमनःप्रसादस्य च पिशुनान् सूचकान् । 'पिशुनौ खलसूचकौ' इत्यमरः । आकारान् अक्षिनिमीलनादीन् वक्त्रे मनागीषदपि न धत्ते न बिभर्त्ति । एतेनातिगम्भीरतोक्ता ।

दर्पेति । यो नायको दर्पः शौर्यादिमदो मात्सर्यमसहनं ताभ्यां भूयिष्ठः प्रचुरः । चण्डा तीक्ष्णा वृत्तिर्व्यापारो यस्य स विकत्थन आत्मश्लाघापरः । मायावी केवलवञ्चकः । सुलभः क्रोधो यस्य सः । स नायको धीरोद्धत उच्यते । रे इति । रे रे इति हीनसंबोधनम् । 'हीनसंबोधने तु रे' इत्यमरः । रे रे इति सर्वत्र संबध्यते । रे रे घूर्जरदेशाधिपते । एवं देशवाचकलम्पाकादीनामपि तदधिपतयो वाच्याः । समरे युद्धे जर्जरः शिथिलगात्रोऽसि । हे लम्पाक किं किमर्थं कम्पसे वेपसे । हे वङ्ग मुधा किं किमर्थं त्वङ्गसि त्वङ्गनमूर्ध्वोत्बलनं करोषि । हे कोङ्कण बलस्य चतुरङ्गस्य रजसा परागेण काणोऽन्धोऽसि किम् । हे हूण प्राणाः परायणं प्रधानं यस्य तथोक्तो भव । महाराष्ट्र अपगतं राष्ट्रं यस्य स तथोक्तोऽसि । एतत् सर्वं कथमित्याकाङ्क्षायामाहुः । अमीति हस्तनिर्देशे-नात्मदर्शनेन दुर्जयत्वं सूचितम् । वयं योद्धारो युद्धकारिण इत्युक्तरीत्यान्ध्रक्ष-माभृत आन्ध्रदेशनायकस्य प्रतापरुद्रस्य भटा योधा अरीन् परिभवन्ति तिरस्कु-र्वन्ति । अत्र रे रे इत्यादिना दर्पादिगुणप्रकाशनाद् भटानां धीरोद्धतत्वम् ।

निश्चिन्त इति । कलासु गीतादिष्वासक्तः सुखी भोगप्रवणो मृदुः सुकुमा-राकारो निश्चिन्तः सुतादिनिक्षिप्तयोगक्षेमतया चिन्तारहितो नायको धीरललित उच्यते । शौर्येति । शूरस्य युधि निर्भीकस्य भावः शौर्यं तस्योष्मा तापः । प्रताप इति यावत् । निर्गतोऽवग्रहः प्रतिबन्धको यस्मात् सः । यद्यपि 'वृष्टिर्वर्षं तद्वि-घातेऽवग्राहावग्रहौ समौ' इत्यमरकोशादवग्रहस्य वर्षप्रतिबन्धकवाचकत्वं तथापि 'विश्वोकैर्वकसहवासिनां परोक्षैः' इत्यादिमाघव्याख्याने विशेषवाचकस्यापि सामान्यवाचकत्वमिति निर्णीतं मल्लिनाथेन । तथैवात्रापि विशेषवाचकस्य सामा-न्यवाचकत्वं ध्येयम् । प्रतिनृपाः शत्रवः सर्वेऽपि नम्रीकृता वशीकृताः । इयं भूर्भूमिः पातिव्रत्यं पतिव्रतात्वं पत्युर्वशंवदत्वमुपैति प्राप्नोति । सर्वापि भूमि-र्वशीकृतेत्यर्थः । अयं स्वयंभूः स्वयंभूनामकः शिवो नाथः परिपालक एकशिलायां कश्चन शिवालयोऽस्ति । तस्य शिवस्य नाम स्वयंभूरिति । स एव रक्षक इति ।

धीरः धैर्यवानयं युवराजः श्रीवीररुद्र एव सर्वां धुरं राज्यभारं वहति । नान्य इत्येवकारार्थः । इत्येवं विभुः समर्थः श्रीकाकतीन्द्रः काकतिकुलज्येष्ठः प्रतिकलं प्रतिक्षणमनुमोदते संतुष्यति । अत्र शौर्यादिभिर्दैवानुकूल्येन युवराजधुरंधरत्वेन च निश्चिन्तः सदा सुखमनुभवतीति काकतिकुलज्येष्ठो धीरललितः ।

धीरो विवेचकः क्लेशसहिष्णुर्वा धीरः । शान्तः शान्तिप्रधानः । अतः प्रसन्न आत्मान्तःकरणं यस्य सः । द्विजादिकः पुमान् धीरशान्त इत्युच्यते । आदिशब्देन वणिक्सचिवौ विवक्षितौ । धीरमिति । एष संख्यावतां पण्डितानां गणः समूहो धीरं प्रत्यग्रं यथा तथा प्राप्त उदयोऽभिवृद्धिरुदयाचलश्च येन तम् । नृपाकररत्नमभितः प्रतापरुद्राभिमुखं यथा तथेत्यर्थः । अब्जाकरः कमलाकरस्तामरसम् । पूषा सूर्यः । 'विकर्तनार्कमार्तण्डमिहिरारुणपूषणः' इत्यमरः । तमिव निजैः स्वीयैर्विकासैरुत्सवादिभिर्दलविश्लेषैश्चोन्मीलन्त्याः कमलायाः संपत्तेः । अन्यत्र लक्ष्म्याः । विहारवसतिः केलिस्थानं भूत्वा विश्वस्य प्रपञ्चस्यामोदं संतोषं गन्धविशेषं चोद्वमयन् वर्धयन् दोषाणां पापानामवसान अन्ते नाशे । उत्सुकोऽन्यत्र दोषाया रात्रेरवसान अन्ते प्रभात उत्सुकः सन् मोदते । अब्जाकरस्याप्यन्तःसंज्ञासद्भावादौत्सुक्यं वर्तते चेतनत्वादन्यथा वृद्धिक्षयासंभवादिति । 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' इति मनुवचनं च । अत्र प्राप्तोदयमित्यादिश्लेषानुप्राणितः पूषणमिवेत्युपमालंकारः । एकस्यैव नायकस्य धीरोदात्तादिशब्दवाच्यत्वं मारावस्थाभेदेनेति वेद्यम् ।

अथ सर्वरससाधारणनायकनिरूपणानन्तरं शृङ्गारस्य प्रथमरसत्त्व विषया गोचराः । उद्दिशति । अनुकूल इति । स्मृत इति प्रत्येकं संबन्धः । अन्यथा बहुवचनापत्तेः ।

उद्देशक्रमेण चतुर्णां लक्षणान्याह । एकायत्त एकस्यां नायिकायामासक्तोऽधीनः । एकासक्त इति वा पाठः । अमुमेवार्थमाह । एकस्यामिति । नायिकान्तरसद्भावेऽपीति भावः । किमिति । नायिका सखीमाह । हे सखि किं नाम किमभिधानं तपः भुवा भूदेव्या नायिकया चाचरितं कृतम् । भूतपःप्रश्ने हेतुमाह । धीरो रुद्रनृपो यस्या भुवः पतिर्भर्ता । इतीति शेषः । गीयते उच्यते । भूतपोनामग्रहणे तत्तपोऽहं करिष्यामीति तात्पर्यम् । इदानीं तव भाग्यात्तस्य पत्नी भवेत्याकाङ्क्षायामाह । क्वेति । तत् सुचरितं सुकृतं क्व कुत्रास्ति । नान्ती-

त्यर्थः । यतः सुचरितात् तस्य प्रतापरुद्रस्य प्रिया स्यां भवेयं तत् केत्यन्वयः । सख्याह । जाने । प्रियसंघटनोपायमिति शेषः । हे मानिनि मा विषीद विषादं मा गच्छ । त्वां रत्नानामाकरः खनिस्तथाभूता मेखला काञ्ची यस्यास्ताम् । भूपक्षे तु रत्नाकरः समुद्र एव मेखला यस्यास्ताम् । स्थिरां स्थैर्यवतीं भुवं च । पुरतः । अस्येति शेषः । प्रख्याप्याख्याय नृपं सदा त्वयि रक्तमनुरक्तं विधास्ये करिष्ये । 'रसा विश्वंभरा स्थिरा' । 'भूतधात्र्यब्धिमेखला' इति चामरः । लक्ष्ये लक्षणानुगतिं दर्शयति । अत्रेति ।

द्वितीयलक्षणमाह । तुल्येति । अनेकत्रानेकासु नायिकासु तुल्यस्तुल्यवृत्तिर्दक्षिणः । अमुमेवार्थमाह । अनेकास्विति । उदाहरति । नर्मेति । मया काचित् प्रिया स्मरकला मन्मथविलासा एव केल्यः सुरतक्रीडेत्यर्थः । तासु विषये । अग्राम्य इष्टजनावर्जनरूपः परिहासो नर्म तत्सहितमुक्तं वचनम् । भावे क्तः । तेन निमन्त्रिता आहूता स्वाकूतेन स्वाभिप्रायेण तत्सूचकेनेत्यर्थः । विलोकनेन कस्यैचित् नायिकायै हृदयं मन अभिलाष इत्यर्थः । आविष्कृतं प्रकटितम् । दूत्याः करेण साधनेन प्रसाधनविधिः प्रतिकर्मविधानमाभरणजातमिति यावत् । 'प्रतिकर्म प्रसाधनम्' इत्यमरः । कस्याश्चिन्नायिकायाः प्रहितः प्रेषितः । क्व वा नु कुत्र वा गच्छाम्यविलम्बेन गमिष्यामि । वर्तमानसामीप्ये वर्तमानवत्प्रत्ययः । तत्तदुचितव्यापारेणानेकत्र भावप्रकाशनेनैकत्र गमनमनुचितमित्यनुचिन्तयैव विचारेणैव न तु गमनेनेत्येवकारार्थः । नृपते राज्ञो निशा रात्रिः प्रभाता प्रभातप्रायेत्यर्थः । आसीदित्यन्वयः । वीररुद्रस्यापि दक्षिणनायकत्वं वक्तुमुदाहरणान्तरमाह । वाणीमिति । वाणीं सरस्वतीं नायिकां च । मुखेन वक्त्रेण लक्षणया सल्लापेन । अन्यत्र नेत्राभ्यां श्रियं लक्ष्मीं नायिकां च । दोष्णा बाहुना । मेदिनीं भुवं प्रियां च । मानयन् बहु मानयन् रुद्रनरेश्वरस्तासु वाणीश्रीमेदिनीषु तिसृषु नायिकासु च तुल्यतां तुल्यवृत्तित्वं धत्ते । अत्र महाभाग्यवतोऽस्य स्वमुखादिषु वाण्यादिसद्भाववर्णनेन वाण्यादिगतश्लीलिङ्गाक्षिप्तनायिकासु तिसृषु सल्लापावलोकनहस्तावलम्बनैस्तुल्यानुरागप्रकाशनादस्य दक्षिणत्वम् ।

धृष्टलक्षणमाह । व्यक्तेति । यो व्यक्तोऽपराधो यस्य सः । गतभीर्निर्भीकश्च स नायको धृष्ट इति कथ्यते । राज्येति । राज्यश्रियो राज्यलक्ष्म्यास्तन्नाम्न्या नायिकायाश्च परिभोगमुपभोगं संभोगं च शंसतीति तथोक्तम् । हे राजन् भव-

तस्तव सर्वाङ्गं सप्ताङ्गानि समस्तशरीरं च । 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि ' इत्यमरः । आलोक्यते दृश्यते । तत्र दर्शनेऽविनयो दौष्ट्यं कः कीदृशो । नास्तीत्यर्थः । तस्या राज्यश्रियः सपत्न्या नाम मय्यर्प्यते निक्षिप्यत इति । यत इदमर्पणं साहसं न केवलं तत्संभोगसूचकावयवदर्शनं प्रत्युत तन्नाम्ना ममाह्वानं क्रियत इत्यतिसाहसमित्यर्थः । अहं त्वां बह्व्यो वल्लभाः प्रियतमा यस्य तं तथोक्तं जाने । बहुवल्लभत्वमेव व्यनक्ति । किमित्यादिना । ततोऽपरमन्यद्वक्तव्यं वाच्यं किं किमस्ति । नास्तीत्यर्थः । वयमल्पा दरिद्राः । या वसुमती नाम वसुमतीति प्रसिद्धा भूः । 'वसुमती वसुधोर्वी वसुन्धरा' इत्याद्यमरकोशादिना । नायिका तु वसुमती धनवतीति प्रसिद्धा तस्यां तव प्रेम स्नेहः । अधिकजल्पितैर्वाक्यैः किम् । भाषितसाध्यं नास्तीत्यर्थः । प्रतापरुद्रस्यैकपत्नीव्रतस्य नायिकान्तरसंभोगवर्णनानौचित्यात् राज्यलक्ष्म्यादिषु स्त्रीलिङ्गमहिम्ना नायिकान्तरत्वं परिकल्प्योह्यित इति बोध्यम् । अत्र परिभोगप्रकाशनात् गोत्रस्खलनाद्यपराधाभिव्यक्तौ तत्सकाशगमनान्निर्भीकत्वमित्यस्य द्रष्टव्यम् ।

शठलक्षणमाह । गूढेति । गूढमन्यैरविज्ञातं यथा तथा विप्रियमपराधं करोतीति गूढविप्रियकृत् यः स शठः शठनायकः । दृष्ट्येति । दृष्ट्या केवलं दृष्ट्यैव पश्यसि मनसान्तःकरणेन न पश्यसि वाचा प्रियं मनोहरं वचनं भाषसे । भावेनाभिप्रायेण नो भाषसे न वदसि । किं भुजान्तरं वक्षस्थलमग्रे पुरतः प्रकटयसि । आभ्यन्तरमन्तस्थितचित्तव्यापारं न च प्रकटयसि । हे काकतिनाथ ज्ञातम् । तव हृदयमिति शेषः । ध्यायतोऽन्तरालोचयतस्तव प्राणेश्वरी प्रेयसी भूः परं भूरेव मादृशेषु । जनेष्विति शेषः । विडम्बनैव अनुकरणमेव । तत् तस्मात् कारणाद् व्यर्थैर्निरर्थकैर्बहिःसंभ्रमैर्बाह्यसंरम्भैरलं पर्याप्तम् । बाह्यसंभ्रमान् मा कार्षीरित्यर्थः । अत्र दर्शनभाषणयोश्चक्षुर्वागिन्द्रिययोरभावे असंभवादेव पश्यसि भाषस इत्यनेन चारितार्थ्ये दृष्ट्या वाचेति पुनरुपादाने तात्पर्यनिषेधार्थमिति न पौनरुक्त्यम् । अत्र नायिकामात्रविदितभावशून्यदर्शनादिविधानादयं शठः । वीररुद्रगुणवर्णनप्रतिज्ञाभङ्गं परिहरति । अत्रेति । रे रे घूर्जर शौर्योष्मा नर्मोक्तेनेत्यादिषु धीरोद्धतत्वात् तन्नायकविशेषत्वेन काकतीश्वराद्युदाहरणे वीररुद्रस्यैव वर्णनम् । तेषामन्योत्कर्षावहत्वादिति भावः ।

पीठमर्दादिनायकानुकूलनसहायलक्षणान्याह । किंचिदूनो न्यूनः पीठमर्दः । एका विद्या यस्य स एकविद्यो विटः । सन्धाने नायिकानायकयोः संघटने कुशलश्चेटः । हास्यकार्यङ्गवाक्यवेषविकारादिना परिहासको विदूषकः । स्मृत इति सर्वत्र संबन्धः ।

शृङ्गारप्रधाना नायिकाः शृङ्गारनायिकाः । ता उद्दिशति । स्वाधीनपतिकेत्यादि । तथाभिसारिका चेत्यन्तेन । क्रमादुद्देशक्रमाल्लक्षणं तासामिति शेषः । उच्यते । प्रियेति । नित्यं प्रियेणोपलालिता या सा नायिका स्वस्मिन्नधीन आयत्तः पतिर्यस्याः सा स्वाधीनपतिका मतेत्यन्वयः । उदाहरति । प्रियामिति । सर्वं सहत इति सर्वसहा तां प्रियां नायिकां प्रियामिष्टां भुवं च तैस्तैर्विशेषैर्वासोऽङ्गरागादिभिः सारकरणादिभिश्चोपलालयन् लालनं कुर्वन् प्रतापरुद्रनृपतिः प्रतिक्षणं क्षणे क्षणे अवेक्षते । अवेक्षत इत्यनेनास्यायत्तरमणत्वप्रतीतेः सर्वसहायाः स्वाधीनपतिकात्वम् ।

प्रियेति । प्रियस्यागमनवेलायामागमनसमये मुहुर्मुहुः केलिगृहं तथात्मानं स्वशरीरं च मण्डयन्त्यलंकुर्वती या सा नायिका वासकसज्जिका । वासके निवासस्थाने सज्जा सन्नद्धा सैव वासकसज्जिकेत्यन्वर्थसंज्ञा । 'स्त्रीणां वासस्तु वासकः' इति वचनात् । वासके वारे दिवसे सज्जयति सज्जीकरोति केलिगृहमिति वा । अमुमेव पक्षमवलम्ब्योदाहरति । स्वेति । प्रधानागारं प्रधानगृहं स्वतेजसा स्वप्रकाशेन परिष्कृत्यालंकृत्योत्कयोन्मनसोत्कण्ठितया श्रिया राज्यलक्ष्म्या नायिकया चाभिषेकवेलायां पट्टाभिषेकसमये वीररुद्रः प्रतीक्ष्यते निरीक्ष्यते । अत्र क्रीडागारपरिष्कारादिभिरियं राज्यलक्ष्मीर्वासकसज्जिका ।

चिरयतीति । अव्यलीक इति शेषः । अनपराधे प्रिये कान्ते अधिकमत्यन्तं चिरयति सत्युन्मना उत्कण्ठिता । नेति । तादृग्गुणानामनिर्वचनीयगुणानां परिमलः प्रकाशो यस्य तस्मिन् रुद्रनृपतावन्या शङ्कान्याङ्गनासक्तिरूपो वितर्कः । नास्तीति शेषः । कया वा गोष्ठ्या केनचित् संगीतादिप्रसङ्गेन चिरयति । अतोऽसौ धीरललित इति बोध्यम् । सखीभिर्वयस्याभिः सुखेन लभ्यत इति सुलभः सुखेन लभ्यः । न हि । मदन स्मर त्वं समानेतुं व्रज । अहं बद्धोऽञ्जलिर्यया सा । नमस्करोमीत्यर्थः । अत्र हेतुमाह । यतो यस्मात् कारणात् तव प्रियसखश्चन्द्रो विष्वक् समन्ततोऽञ्चन्ति गच्छन्तीति विष्वग्द्र्यञ्चः । तान् सर्वतो-

दिकान् किरणान् किरति विसृजति ततस्त्वां नमस्करोमि कान्तं समानय । अन्यथा चन्द्रकिरणा दुःसहा इति भावः ।

कचिदिति । क्वचित् कुत्रचित् स्थले सङ्केतं मर्यादामावेद्योक्त्वाथ पश्चात् दयितेन वञ्चिता वञ्चनां प्रापिता सती या स्मरेणार्त्ता सा विप्रलब्धेति सूरिभिः पण्डितैः परिकीर्त्तिता । गच्छेति । हे सखि त्वमग्रे पुरो गच्छ । आगमनसमय इवाधुना स्वयं पुरो गन्तुमशक्यत्वादिति भावः । प्रियस्यागमस्यागमनस्य कथा कथं का कीदृशी । इतः परं नागमिष्यतीत्यर्थः । तत्र हेतुमाह । निशीथोऽर्धरात्रः परमत्यन्तं प्राप्तः । कालातिक्रमान्नागमिष्यतीत्यर्थः । यद्वा प्रियागमकथा कीदृशी । न कार्येत्यर्थः । निशीथः परं निशीथ एव प्राप्तो न तु प्रियः । हे संकेतालय भो संकेतस्थान त्वं मोक्ष्यसे । मयेति शेषः । मोक्ष्यस इति भविष्यन्निर्देशेनेयं नाद्यापि मोक्तुं शक्नोतीति द्योत्यते । मम वृथा व्यर्थः । साध्यांशाभावादिति भावः । अश्रुभिर्नेत्रजलैर्न तु सुरतश्रमजलादिना पङ्किलः संभूतपङ्को जातः । न चायं तवापराधः किन्तु बहुवल्लभे त्वय्यासक्ताया ममैवेत्याशयेनाह । यद्वेति । यद्वेति पक्षान्तरे । प्रियागमनातिरिक्ते पक्ष इत्यर्थः । राज्यश्रियः प्रियतमे भारत्याः सरस्वत्या वल्लभे भुवो दयिते रुद्रनरेश्वरे विषये प्रायः प्राचुर्येण कृतं पदं व्यवसितं समागमयत्नो याभिस्ता वयं विप्रलब्धाः । नाहमेकैव वञ्चितापि तु कारकाः सर्वेऽपि सख्यादयोऽपीति द्योतयितुं वयमिति बहुवचनम् । राज्यश्रिय इत्यादिषु स्त्रीलिङ्गाक्षिप्तास्तिस्रोऽपि नायिका ध्येयाः ।

नीत्वेति । अन्यत्र स्थलान्तरे निशां रात्रिं नीत्वा गमयित्वा प्रातः प्रातःकाले प्राणवल्लभ आगते सत्यन्यस्याः संभोगस्य चिह्नैरङ्गरागादिलक्षणैर्या नायिका कुपिता सा खण्डिता मतोक्तेत्यर्थः । काचित् गृहमागतं प्रियं प्रत्याह । रात्रिरिति । रात्रिर्यामत्रयेण परिमिता परिच्छिन्ना । आद्यन्तयामयोरर्धयोरकुण्ठितसंचारत्वेनारात्रित्वाभिमानात् त्रियामेति व्यवहारः । ते तव वल्लभाः प्रेयस्यः सहस्रं सहस्रसंख्याकाः । सन्तीति शेषः । मार्गस्यासत्त्या प्रत्यासत्त्या ममापि गृहं प्रातरेव प्रभात एव न तु रात्रावित्येवकारार्थः । आगतोऽसि । त्वत्प्रेयसीसहस्रसंदर्शनगमनमार्गेणैतस्य मत्सन्दर्शनस्यागमने प्रातरभूत् । अतस्तवापराधो नास्तीति प्रातीतिकार्थः । आ प्रभातं त्वत्प्रेयसीगृहेषु चरित्वा विहारानुचितकाल अत्रागमनं मद्वेदनायैवेति तात्पर्यार्थः । कर्त्तव्यं किं किमस्ति । नास्तीत्यर्थः । वद कुतः

भूपतिभी राजभिः सर्वा वल्लभा वीक्षणीया द्रष्टव्या हि । सर्वा द्रष्टव्या इत्यनेनेतराभिः सह स्वस्यापि दर्शनार्हत्वेन न तु तासामिव संभोगार्हतेति द्योत्यते । दोषो वा दोषोऽपि कः । नास्तीत्यर्थः । अहं पुनरहं तु तव काममत्यन्तमायासायिक्व्यायास-कारिणी । प्रत्युत ममैव दोषो यतो वक्रेण मार्गेण गत्वा मद्गृहपर्यन्तमतिश्रमेण त्वदागमनहेतुत्वान्ममेति हृदयम् । अत्र प्रातरागतस्य प्रियस्यान्यासंभोगचिह्न-दर्शनात् कुपितेतीयं खण्डिता । वक्रोक्त्या कोपप्रकाशनात् ।

कोपादिति । कान्तं कोपात् पराणुद्य निष्कास्य प्रियनिर्गमनानन्तरं या तापसमन्विता सा सूरिभिः कलहान्तरिता नामेति प्रसिद्धा परिकीर्तिता । काचित् स्वहृदयमुपालभते । तह तहेति । छायैव व्याख्यायते । हे हृदय रोष-कलुषेण कोपक्षुभितेन त्वया तथा तथा तेन तेन प्रकारेणानुनयन्ननुनयं कुर्वन् प्रियोऽवधीरितस्तिरस्कृतः । राजेति स्वतन्त्र इत्यर्थः । न ज्ञातम् । भावे क्तः । ज्ञानं नास्तीत्यर्थः । वियोगे या वेदना पीडा तां सहस्व । अनेन महासंतापो द्योत्यते ।

देशेति ।

‘ कथाभिः कमनीयाभिः काम्यैर्भोगैश्च सर्वथा ।
उपचारैश्च रमयेद्यः स कान्त इतीर्यते ॥ ’

इत्युक्तलक्षणे कान्ते देशान्तरगते सति खिन्ना खेदयुक्ता या सा प्रोषितभर्तृका । प्रोषितो देशान्तरगतो भर्ता यस्याः सेत्यन्वर्थसंज्ञा । त्रैलोक्येति । त्रैलोक्ये प्रथमानया वर्धमानया कीर्त्या महतः श्रीवीररुद्रप्रभोः सेवार्थं सेवायै भूपेषु काकतेर्देवतायाः पुरे काकतिपुरे एकशिलायां चिरयत्सु चिरं स्थितेषु सत्सु तेषां भूपानां योषितो द्वारेष्वासक्ता लग्ना दृशो दृष्टयो यासां ता सत्यः । दिवसान् वासरान् नयन्ति गमयन्ति । तेषां पतीनां ध्यानेनाविच्छिन्नस्मृत्या प्रतिबुद्धा उत्पन्नाः सान्द्राः पुलका रोमाञ्चा एव व्याकीर्णा व्याप्ताः कामस्येषवो बाणा यासां तास्तथोक्ताः सत्यः व्युष्टं प्रभातं तन्नाशया क्षपा रात्रीर्नयन्तीत्यन्वयः । अत्र चिन्ताजागरणादिप्रतिपादनात् खिन्नात्वेनेयं प्रोषितभर्तृका ।

कान्तेति । कान्तस्य कर्मणोऽभिसरणे अभिगमने उद्युक्ता । कुतः स्मरार्ता या साभिसारिका । संभ्रमैरिति । कान्ताभिसरणाय करेणुमानयेति वदन्तीं नायिकां प्रति सखीवचनमेतत् । अल्पं जानातीत्यल्पज्ञे मुग्धे संभ्रमैर्गजानयनादिसंभ्रमै-रलम् । संरम्भं मा कुरु । महतः कान्तस्य सकाशं कथं निकृष्टावद्गमिष्यामीत्या-

शङ्कयाह । महीपती राजा प्रेयान् कान्तोऽस्तु । अभिसारिकां करेणुस्थां गजारोहिणीं न पश्यामि न शृणोमि च । कान्तमाहात्म्येनाभिसारिकायाः प्रकटगमनमुचितमिति भावः । दूत्य इति । दासी कर्मकरी । सखी स्नेहनिबन्धना । कारू रजक्यादिः । धात्रेयी उपमातृसुता । प्रातिवेशिनी प्रतिवेशोऽभिगृहं तत्रत्या । लिङ्गिनी परिव्राजिका कापालिका । शिल्पिनी चित्रकारस्त्री । स्वा स्वीया बान्धवस्त्रीत्यर्थः ।

'भगिनी स्यालिका वापि मातुलस्याथवा सुता ।
एता भवन्ति दूत्यस्तु बान्धवस्त्रीति संज्ञिताः ॥'

इति सोमेश्वरेणोक्तत्वात् । दूत्यः संधानकारिण्यः सहायाः परिकीर्त्तिताः । एतल्लक्षणोदाहरणादिकं पद्मिन्यादिजातिभेदश्च विस्तरभयान्नोच्यत इत्याशयेनाह । एतासामित्यादि जातिविशेषा इत्यन्तेन ।

संक्षेपो नाम विविच्य वक्तव्यार्थस्य संकोचेनोक्तिः । तेन नायिकानां त्रैविध्यम् । तदेवाह । मुग्धेत्यादिना क्रमेण लक्षणोदाहरणानि । उदयदुद्गच्छद् यौवनं यस्याः सा लज्जया त्रपया विजितोऽभिभूतो मन्मथो यस्याः सा । या सा नायिका मुग्धेति यत्तच्छब्दाध्याहारेण योजना । अथवोदययौवना लज्जाविजितमन्मथा च स्त्री मुग्धेति लज्जामन्मथयोर्मध्यतीति तथोक्ता तुल्यलज्जास्मरेत्यर्थः । उदितमुत्पन्नं यौवनं यस्याः सा नायिका मध्यमा । स्मरेण मन्दीकृता व्रीडा यस्याः सा । संपूर्णं यौवनं यस्याः सा नायिका प्रौढा ।

क्रमेणोदाहरणानि । मुग्ध इति । हे मुग्धे यदिष्टं मनसोऽपि किमुतान्यस्येत्यपिशब्दार्थः । गोप्यं गोप्तुं योग्यं तन्मत्समावेद्यते । एतावत्पर्यन्तमिति शेषः । अहं या काचिदनाप्ता किम् । नेत्यर्थः । वद ब्रूहि । हृदिस्थमिति शेषः । हे प्रियसखि प्रच्छाद्यानुक्त्वा किं किमर्थं ताम्यसि दूयसे । आच्छादने परितापं विना न किञ्चित् फलमस्तीति भावः । तवासक्तिर्वीररुद्रनृपतौ प्रतापरुद्र आशास्यत अभिलष्यत ऊह्यत इत्यर्थः । मयेति शेषः । पुनस्तदभिप्रायं ज्ञातुं पृच्छति । किं भवेदित्याख्यां सख्यां प्रणयेन विस्रम्भेणैका मुख्या वाक् यस्यां तस्यां सत्याम् । शोभनं तनुर्यस्याः सा सुतनुः मुग्धा व्रीडया दत्तमुत्तरं प्रतिवाक्यं यया सा तथोक्ता । अभूदिति शेषः । प्रतापरुद्रगताभिलाषप्रश्नेन व्रीडोत्पत्तौ प्रत्युत्तरेणैव व्रीडयैव तदासक्तिर्ज्ञातेत्यर्थः ।

लीलेति । पूर्वरङ्गो नाम रङ्गप्रसाधनाख्यः नाट्यादौ कर्तव्यः कर्मविशेषः । तदुक्तम् ।

'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः ॥'

इति । लीलानायासस्तया विभ्रमा विलासा अयत्नसिद्धविलासा इत्यर्थः । ता एव पूर्वरङ्गो यस्य तत् । उदितमुत्पन्नं तारुण्यं तदेव रङ्गस्थलमिति गम्यते । अत एवैकदेशवर्ति रूपकम् । एत्य प्राप्य त्रपैव नेपथ्यं विहारसदृशयवनिका तस्यान्तर आभ्यन्तरे बिम्बिताः प्रतिफलिताः प्रकाशमानाः स्मरकला मन्मथविकारास्ता एव लास्यप्रपञ्चस्य नृत्तविस्तारस्य श्रियः संपदो यस्यास्तस्याः । अस्या इति हस्तनिर्देशेनोक्तिः । तरले भ्रुवौ यस्यास्तस्याः स्त्रियः काकतीयनृपतौ भावस्य रत्याख्यस्यानुबन्धेनाविच्छेदेनोज्ज्वलः । भावानुबन्धेन व्यापारविशेषानुबन्धेनेत्यन्यत्र ।

'वागङ्गसत्त्वाभिनयैर्मुखरागोपशोभितैः ।
भावयन्नान्तरं भावं व्यापारो भाव इष्यते ॥'

इति । अत एव कोऽप्यनिर्वचनीयः शृङ्गार एव नाट्यं तस्य क्रमो विजयते । हे सख्यः पश्यतेति वाक्यार्थः । अयमर्थः । यथा रङ्गप्रसाधनपूर्वकं रङ्गस्थलं गत्वा यवनिकान्तरे दृश्यमाननृत्तायाः पात्र्या अभिनयोज्ज्वलः साध्यक्रमः प्रकाशते तथा विलासपूर्वं यौवनमेत्य व्रीडाभिश्रितमन्मथविकारवत्यां प्रेमोज्ज्वलः शृङ्गारक्रमो विजयत इति ।

सहेलमिति । प्रकृत्या स्वभावेन न त्वलंकारैः सुभगं रुद्रनृपतिम् । हेला नाम व्यक्तशृङ्गारसूचकोऽन्तःकरणविकारः । तत्सहितं यथा तथा [illegible]यन्त्या मृगाक्ष्यास्तारुण्ये यौवने [illegible] तत्काले । प्रियदर्शनसमय इत्यर्थः । प्रस्तुवन्त्युत्पद्यमानानि विविधानि ललितानि कर्णकण्डूयनकुचविमर्दनादिकोमलाङ्गविन्यासाः ।

'सुकुमाराङ्गविन्यासो ललितः परिकीर्तितः'

इति लक्षणात् । तेषामाटोपेनाडम्बरेणेति स्मरमन्दीकृतव्रीडत्वमुक्तम् । रसस्य शृङ्गारस्य प्रादुर्भावादुदयाद् युगपदेकदैवोदयन्तः सात्त्विका यस्मिंस्तत् कुसुमशरस्य मन्मथस्य शिल्पं कलाकौशलं विजयते । अहो इत्याश्चर्ये । सुभगदर्श-

नादेव मृगाक्ष्या ललितसात्त्विकादिजननेन स्मरकौशलमत्याश्चर्यंकरमिति भावः । भेदान्तरं स्वीयात्वादिकं यथायोग्यमुदाहार्यम् । अन्यान्तरेष्विति शेषः ।

इत्थं प्रसक्तानुप्रसक्तं नायकादिस्वरूपनिरूपणं परिसमाप्य प्रकृतं पुण्यश्लोकगुणवर्णनमुपष्टम्भमुपसंहरति । गुणेति । रसैः शृङ्गारादिभिर्महत्युज्ज्वले काव्ये गुणानां प्रसादादीनामलंकाराणामुपमादीनां विलसितं विलासः । भावे क्तः । विजयते । तदपि गुणादिविलसितमपि स्फुरद्भ्यां शब्दार्थाभ्यां हृदयमानन्दयतीति तथोक्तं मनोहरं भवति । स्रवदमृतमाधुर्यवत् सुभगो मनोहरः स्रवन्मधुरामृतसुभग इत्यर्थः । भावानयने द्रव्यानयनमिति न्यायात् । तयोः शब्दार्थयोरुन्मेषो विकासोऽपि परमुत्कृष्टम् । पुण्यः श्लोको यशो यस्य तच्चरितं चरित्रमनुबध्नन् वर्धते विजयते । उत्तमनायकचरितस्यैवोदाहर्तव्यत्वेन नायकस्वरूपनिरूपणम् । तत्प्रसक्त्या नायिकास्वरूपनिरूपणं च कृतम् । ततः स्वचिकीर्षितशास्त्रविषयाणामलंकाराणामाश्रयभूतकाव्यस्वरूपनिरूपणमिति सर्वमवदातम् ॥

इति श्रीप्रतापरुद्रीयव्याख्याने रत्नशाणाख्याने

नायकप्रकरणम् ॥

# अथ काव्यप्रकरणम् ।

अथ काव्यप्रकरणं व्याख्यायते । अथेति । अथ नायकस्वरूपनिरूपणानन्तरं काव्यस्य कविकर्मणः शब्दार्थसंदर्भरूपस्य स्वरूपं निरूप्यते । लक्षणोदाहरणाभ्यां स्पष्टीक्रियते । काव्यलक्षणमाह । गुणेति । गुणैः प्रसादादिभिरलंकारैरुपमादिभिः सहितौ दोषवर्जितौ शब्दार्थौ दोषरहितौ शब्दार्थौ कर्म काव्यविदो विद्वांसः काव्यं विदुः । तदिति शेषः । तत् काव्यं गद्यपद्योभयमयम् । गद्यमयं पद्यमयमुभयमयं गद्यपद्यात्मकं चेत्यन्वयः । एककारिकायां काव्यसामान्यविशेषलक्षणसद्भावात् । तत्र सामान्यलक्षणं ग्रन्थरूपेण व्याख्यातयदोषाविल्यादिना ।

काव्यसामग्र्याः कामिनीसाम्यं वर्णयति । शब्दार्थाविति । काव्यसंपदः काव्यलक्ष्म्याः शब्दार्थौ मूर्तिः शरीरमाख्यातावुक्तौ । व्यङ्ग्यवैभवं व्यङ्ग्यातिशयो जीवितमात्मा आख्यातम् । एवमुत्तरत्रापि लिङ्गादिविपरिणामेनान्वयः । अलंकारा उपमादयो हारादिवद् मुक्ताहारादिप्रायाः । तत्र शब्दार्थशरीरे श्लेषः श्लेषाख्यो गुण आदिर्येषां ते तथोक्ताः । गुणाः शौर्यादय इव शौर्यादितुल्याः स्मृताः । आत्मनः काव्यस्य जीवितस्य चोत्कर्षावहा अतिशयसंपादका रीतयः रीत्याख्याः शब्दसङ्घटनाधर्माः स्वभावाः प्रकृत्यपरनामका आत्मधर्मास्तत्तुल्याः । आहार्यकीं कृत्रिमां शोभां प्राप्ता वृत्तयः कैशिक्यादयो वृत्तयो यथा वर्त्तनानीव । शौर्यादिशोभायाः कृत्रिमत्वमर्थविशेषोत्पाद्यत्वम् । लोकवर्त्तनशोभायाः कृत्रिमत्वं स्वजात्युपयोगि यागादिजन्यत्वमिति बोध्यम् । पदानां शब्दानामानुगुण्ये विनिमयासहिष्णुत्वे विश्रान्तिः विश्रमो यस्याः सा पदविनिमयासहिष्णुत्वरूपा । शय्या नाम शब्दधर्मः । अन्यत्र पदानां व्यवसितानां संभोगादिव्यापाराणामानुगुण्येनानुकूलत्वेन हेतुना विश्रान्ति सौख्यं यस्याः सा शय्येव शयनीयमिव संमता । रसस्य शृङ्गारादेरर्थस्य । आस्वाद्यते अनेनेत्यास्वादो गम्भीरिमा तस्य प्रभेदा विशेषरूपाः पाकाः । अन्यत्र रसस्य मधुरादेरास्वादो रुचिस्तस्य प्रभेदा येषु ते । पच्यन्त इति पाका अन्नानीव स्थिताः । एवं काव्यसंपद इयं सामग्री शब्दार्थादिसाधनसामग्री लोकवल्लोकस्येव कामिन्या इवेत्यर्थः ।

तस्या एव हारशय्यादयश्चमत्कारकारकाः । अत एव काव्यसंपद इति स्त्रीलिङ्गत्वेन निर्देशः कृतः कविना । प्रख्याता प्रसिद्धा ।

आदौ काव्यशरीरभूतशब्दार्थयोर्मध्ये शब्दं विभजते । वाचकेति । शब्दानां जातं समूहः । वाचकलक्षकव्यञ्जकत्वेन वाचकत्वेन लक्षकत्वेन व्यञ्जकत्वेन च । त्रिविधं त्रिप्रकारम् । अर्थं विभजते । अर्थानां जातमपि वाच्यलक्ष्यव्यङ्ग्यत्वेन वाच्यत्वेन लक्ष्यत्वेन व्यङ्ग्यत्वेन च त्रिविधम् । द्वन्द्वान्ते श्रूयमाणो भावशब्दः प्रत्येकमभिसंबध्यत इत्यत्र भावशब्दो भावार्थकशब्द इति संप्रदायः । ननु तात्पर्यार्थ इति चतुर्थेऽर्थे स्थितेऽर्थस्य कथं त्रैविध्यं तत्राह । तात्पर्येणाभिप्रायविशेषेण गम्योऽर्थस्तात्पर्यार्थः । स च व्यङ्ग्यान्तर्गत एव । व्यङ्ग्यान्तर्भूत एव । एवकारेण लब्धमेवार्थं कण्ठतो निषेधति । न पृथग्भूत इति । पृथग्भूतो न भवति । तात्पर्यमिति व्यञ्जनाया अपरं नाम । तदर्थो...त्यर्थः । नान्य इति ध्वन्याचार्यैरुक्तम् । 'यस्त्वभिप्रायविशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यां प्रकाश्यते तद्भवति विवक्षितं तात्पर्येण प्रकाश्यमानम्' इति । यथा चक्षुरादीन्द्रियेण घटाद्यर्थज्ञाने संयोगादिसंबन्धोऽपेक्षितस्तथा शब्देन त्रिविधेनार्थबोधने संबन्धोऽपेक्षितः । स च संबन्धोऽभिधादिरूपः । अतस्तद्विभजनं करोति अभिधा लक्षणा व्यञ्जनेत्याख्याः यासां ताः शब्दवृत्तयः शब्दधर्मास्तिस्त्रस्त्रिप्रकारा इत्यर्थः । अभिधादीनां शब्दधर्मत्वं वाक्यानामाकाङ्क्षादिमत्त्वमिति वेदितव्यम् । वाचकशब्दोऽभिधावृत्त्या वाच्यार्थबोधकः । लक्षकशब्दो लक्षणावृत्त्या लक्ष्यार्थबोधकः । व्यञ्जकशब्दो व्यञ्जनावृत्त्या व्यङ्ग्यार्थबोधक इति विवेकः । गौणी वृत्तिरिति वृत्त्यन्तरवादिनां मतम् । निराकरोति । गौणवृत्तिर्गुणनिमित्ता पैङ्गल्यादिगुणनिमित्ता वृत्तिर्लक्षणायाः प्रभेदविशेष एव न वृत्त्यन्तरमित्येवकारार्थः । तत्र हेतुमाह । संबन्धेति । संबन्धोऽनुपपत्तिश्च मूलं कारणं निमित्तं यस्यास्तस्या भावस्तत्त्वं तस्माल्लक्षणाया अपि तथात्वात् तत्रैवान्तर्भाव इति भावः । उभयोः संबन्धानुपपत्त्योरप्तिरित्यत्रास्ति । गौणवृत्तिमूलत्वमुदाहृत्य दर्शयति । यथेत्यादिना । माणवको बटुरित्युदाहरणे सादृश्येनाभिगतपैङ्गल्यादिसाम्येन विशिष्टस्य माणवकस्य प्रतिपत्तिर्विवक्षिता वक्तुमिष्टा । तथैव गङ्गायां गङ्गाप्रवाहे घोषः पल्ली प्रतिवसति तिष्ठतीत्यस्मिन् लक्षणावृत्त्युदाहरणे गङ्गासंबन्धस्य विशेषणभूतस्योपलक्षणत्वे यथाकथंचिद्विद्यमानत्वे घोषगतस्य पवित्रत्वादेर्धर्मस्यासिद्धेः ।

तथा चोपलक्षणत्वं नाङ्गीकार्यम् । अङ्गीकारे तूभयोर्भेदः सिध्यति । तथा हि काकवद्देवदत्तगृहं पश्येत्यत्र गृहविशेषणस्य काकस्य यथाकथंचिद्विद्यमानत्वं तथा गङ्गासंबन्धस्य यथाकथंचिद्विद्यमानत्वे गौण्यां विशेषणस्याग्निसादृश्यस्य यथाकथंचिद्विद्यमानत्वसंभवात् । संबन्धस्य तथा विद्यमानत्वे गौणी । यथाकथंचिद्विद्यमानत्वे लक्षणा च संभवति । अनुपपत्तावित्येवं व्यवहारो माणवके पैङ्गल्यादेर्येषे पवित्रत्वादेः सिद्ध्यर्थं तदसिद्धिरेव बाधिकेत्यलमनया शास्त्रिबोध्यप्रक्रियया । अत एव उभयोरभेदादेव हेतोः । सादृश्यं निमित्तं यस्याः सा सादृश्यनिबन्धना । संबन्धान्तरमन्यसंबन्धनिबन्धनं यस्याः सा चेत्येवंरीत्या लक्षणा द्वे विधे प्रकारौ यस्याः सा द्विविधा । अग्निर्माणवक इत्यादौ सादृश्यनिबन्धना । गङ्गायां घोष इत्यादौ संबन्धान्तरनिबन्धना इत्यवगन्तव्यम् । द्वितीयां विभजते । संबन्धान्तरनिबन्धना जहत् परित्यजद् वाच्यमर्थं यस्याः सा जहद्वाच्या । अजहदपरित्यजद् वाच्यं यस्याः सा अजहद्वाच्या चेति द्विधेत्यर्थः । सादृश्यनिबन्धना सारोपनिबन्धना आरोपसहिता साध्यवसाना अध्यवसानसहिता चेति द्विविधा । एवंरीत्या लक्षणा चतुर्विधा । आरोपाध्यवसानयोर्लक्षणे कविरत एव वक्ष्यति ।

एवं शब्दार्थावुद्दिश्य ततः शब्दवृत्तीरभिधादीरुद्दिश्यार्थवृत्तीनां कैशिक्यादीनामुद्देशं करोति । कैशिक्यारभटी भारती सात्वती चेति चतस्रो वृत्तयो रसाद्यनुगुणत्वेनोचिता अर्थव्यापारा रचना पदसन्दर्भमाश्रिताः । कर्तरि क्तः । तत्तेव हेतुना रसावस्थानस्य शृङ्गाराद्यवस्थानस्य सूचका ज्ञापकाः । कोमलवर्णशब्दरचनायां शृङ्गारो वर्णितः । परुषवर्णपदरचनायां रौद्रो वर्ण्यत इत्यनुमीयत इत्यर्थः । ग्रन्थान्तरसंवादमाह । तदुक्तमिति । कारिकार्थस्तु स्पष्ट एव । रससूचकत्वं कुत्रोक्तमित्याकाङ्क्षायामाह । रचनाया अपि सन्दर्भस्यैव रसव्यञ्जकत्वं प्रसिद्धम् । प्राचीनग्रन्थेष्विति शेषः । रसस्याननुगुणा अननुकूला वर्णा येषां शब्दानां तेषां शब्दानां रचनाया दोषकत्वं दुष्टकत्वमुक्तम् । एवमन्वयव्यतिरेकाभ्यां रचनाया रसव्यञ्जकत्वमिति बोध्यम् । वैदर्भी प्रभृतिरादिर्यासां ता रीतिभेदाः वृत्तिषु कैशिक्यादिषु नान्तर्भूताः ।

अथाभिधादीनां लक्षणोदाहरणे दर्शयति । अत्राभिधादिमध्ये संकेतोऽस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरनिर्णीता शक्तिः सोऽस्य संजातः स चासावर्थश्च तद्गोचरः तत्प्रतिपादकः प्रकृतार्थपर्यवसायीत्यर्थः । शब्दव्यापारः शब्दधर्मोऽभिधा

अभिधेत्युच्यते । तां विभजते । रूढिरश्वकर्णादिपदे अवयवार्थाभावेन समुदायसिद्धिः पूर्विका प्रधानं यस्या सा: रूढिपूर्विका । योगः पीताम्बर इत्यादिपदेऽवयवार्थसिद्धिः पूर्विका यस्याः सा चेति साभिधा द्विविधेत्यन्वयः । आद्यामुदाहरति । तप इति । प्रजानां प्रथितैः प्रसिद्धैस्तपोविशेषैः कृच्छ्रचान्द्रायणादिभिर्जगतीमहिष्याः भूकान्तायाः शुभैर्भव्यैश्चरित्रैः पुरन्ध्रीसाध्यैर्गौरीव्रतादिभिरस्य भुवनस्य मध्यमलोकस्य प्रभूतैः प्रचुरैर्भाग्यैरदृष्टपरिपाकैश्च वरवीररुद्रो राज्यं बिभर्तीति । अत्रास्मिन् श्लोके सर्वे प्रजादिशब्दा रूढाः । अवयवार्थाभावेन समुदायार्थवाचिनः । यद्यप्यत्र प्रजायन्त इति प्रजा इत्यवयवार्थो लभ्यते तथापि पङ्कजादिपदानामिवात्र रूढिरेवेति बोध्यम् । द्वितीयामुदाहरति । राज्ञीति । रञ्जयतीति राजा तस्मिन् रुद्रनराधीशेऽखिलाः प्रजा रञ्जयति सति भूर्वस्वस्यास्तीति वसुमती । रत्नानि गर्भे यस्याः सा रत्नगर्भा । स्थिरा शाश्वतीत्यादिव्युत्पत्त्यान्वर्था सार्थनाम्नी । अभूदिति शेषः। लक्ष्ये लक्षणसंगतिं दर्शयति। अत्रेत्यादिना । इत्येवं पदमेवमादिर्येषां ते शब्दा यौगिका योगेनावयवार्थलाभेनार्थबोधकाः ।

लक्षणालक्षणमाह । वाच्येति । वाच्यार्थस्य मुख्यार्थस्य स्वसंबन्धिनि संबन्धवत्यारोपितो निवेशितः शब्दव्यापारो लक्षणा। गङ्गायां घोष इत्यत्र लक्षकं गङ्गापदम् । लक्ष्यार्थस्तीरम् । गङ्गाशब्दनिष्ठव्यापारो लक्षणेति ज्ञातव्यम् ।

अत्र लक्षणासु जहल्लक्षणामुदाहरति । जेतुरिति । जेतुर्जयशीलस्य काकतिभूभर्तुः पटहध्वनिं भेरीध्वनिमाकर्ण्य सामन्तानां शत्रूणां नगराणि पुराणि समन्ततन्त उच्चैस्तरमाक्रोशन्ति । अत्रोदाहरणे नगराण्याक्रोशन्तीत्येतद्रूपस्य वाच्यार्थस्याचेतनानां नगराणामाक्रोशासंभवादन्वयानुपपत्तिः । नगरशब्देन तत्रस्थजना नगरस्थजना आक्रोशन्तीत्यर्थः। संबन्धस्त्वाधाराधेयभावः । प्रयोजनं प्राणिमात्रस्य भयप्रतीतिः । पुररूपमुख्यार्थस्यात्यन्तं विसृष्टत्वादियं जहल्लक्षणा ।

द्वितीयामुदाहरति । पत्युरिति । मौलयः किरीटाः पत्युर्नाथस्य काकतिनाथस्य पादपीठं सिंहासनान्तिकस्थितमल्पपीठं स्फुरद्भी रत्नप्रभाणां जालैः समूहैरनारतं सदालंकुर्वन्ति । 'सततानारताश्रान्तसन्तताविरतानिशम्' इत्यमरः। अत्र श्लोकेऽलंकरणसिद्ध्यर्थं मौलिभिराश्रयभूताः किरीटाधारभूता नृपतयो लक्ष्यन्ते लक्षणयोच्यन्ते । अत्र श्लोके मौलिशब्दो नगरवन्न स्वार्थं हित्वा स्वाधारप्रभृ-

तिबोधकः । किं तु स्वार्थेन सहैव तदर्थबोधकः । परस्परं विना परस्परस्यालं-
करणाशक्तत्वात् । तस्मादियमजहद्वाच्या । अत्रापि संबन्धादिकमूह्यम् ।

अथ सादृश्यनिबन्धनां सारोपां लक्षणामुदाहरति । मन्थानेति । मन्था-
नाचलो मन्थदण्डभूताचलो मन्दराद्रिः । 'मन्थानं मन्दरं कृत्वा योक्त्रं कृत्वाथ
वासुकिम्' इति विष्णुपुराणात् । तस्य मूलेषु या मेचकशिलाः श्यामलशिलाः ।
'कालश्यामलमेचकाः' इत्यमरः । तासां संघट्टनं चन्द्रोत्पत्तिसमये तन्मण्डलसं-
घर्षणं तेन श्यामिका नैल्यं तदाकारं तद्रूपम् । मन्थदण्डमूले नवनीतवन्मन्दरा-
द्रिमूले चन्द्रमण्डलस्य लग्नत्वाद्विशिष्टशिलासंघर्षणं संभवतीति भावः । यन्नैल्य-
मिति शेषः । तुहिनं हिमं द्युतिर्यस्य तस्मिन् चन्द्रे । 'तुषारस्तुहिनं हिमम्'
इत्यमरः । स्फुरति प्रकाशते तन्नैल्यं सारङ्गं कुरङ्गमाचक्षते वदन्ति । सुधेति
शेषः । इहास्य वीररुद्रनृपतेः कीर्तिश्रिया यशस्सम्पदा निर्जित इन्दुस्तस्य
नृपतेर्मुद्रा अङ्कं लक्षणं यस्य स चासौ वराहश्च तं तन्मुद्राङ्कवराहमुरसा
वक्षस्थलेन बिभ्रद् दधत् सन् समुज्जृम्भते । समुज्जृम्भणं प्राप्नोति खलु ।
इति वाक्यार्थः कर्म । मन्ये तर्कयामीति संबन्धः । अत्र श्लोके कुरङ्गस्येव रूपं
यस्य स कलङ्कस्तस्मिन् वराहत्वमारोप्यते निर्धार्यते । लोके निर्जितो जेतुश्चिह्नं
बिभर्ति । प्रस्तुतयशसा जितश्चन्द्रः केतुभूतरुद्रवराहं बिभर्तीत्युत्प्रेक्षा । मन्य
इति तद्वाचकशब्दः । कुरङ्गरूपे कलङ्क इति । कलङ्कस्य वराहस्य च साद-
श्योक्तिः । अतः सादृश्यनिबन्धना सारोपलक्षणेति भावः ।

आरोपाध्यवसानयोर्लक्षणे आह । विषयविषयिणोः प्रकृताप्रकृतयोरभिहितयोः
स्वशब्दाभ्यामुल्लसितयोरभेदप्रतिपत्तिरभेदबुद्धिरारोपः । अत्र कलङ्कवराहौ विष-
यविषयिणावभिहितावित्यारोपलक्षणसंपत्तिरस्तीति बोध्यम् । अनुपदमेवाध्यव-
सायप्रसक्त्या तल्लक्षणमाह । विषयस्य प्रकृतस्य निगरणेन परित्यागेन स्वशब्दे-
नानुक्त्यैवेत्यर्थः । अभेदप्रतिप्रत्तिर्विषयिण इत्यर्थः । विषयिणोऽभेदबुद्धिरध्यव-
सायः । प्रकृतं विहायाप्रकृतमात्रमुक्त्वोभयोरभेदे वर्ण्यमानेऽध्यवसाय इत्यर्थः ।
साध्यवसाना अध्यवसानसहिता च सा लक्षणा च । सा यथा । काकतीयेति ।
काकतीयानां कुलमेवाम्भोधिस्तस्मादयं चन्द्रमाः प्रभवति जायते । उदयं वृद्धि-
मुदयपर्वतं चोपेयुषा प्राप्तवता । येन चन्द्रमसा कोः भवम् । 'गोत्रा कुः
पृथिवी पृथ्वी' इत्यमरः । वलयं मण्डलं तस्योल्लासो विकासः कृतः । कुवल-

कानामुत्पलानामुल्लासः कृत इत्यन्वयः । अत्रोदाहरणे प्रतापरुद्रश्चन्द्रत्तयाध्य-वसीयतेऽध्यवसायमभेदं प्राप्यते । नन्वेष इत्यस्य पुरोवर्तिवाचकत्वेनैतच्छब्देन प्रतापरुद्र एवोच्यते । अतो विषयनिगरणं कथमिति चेदुच्यते । सर्वनामश-ब्दानां सामान्यवाचकत्वेन विशेषणत्वमेव न तु विशेष्यत्वम् । तथा च प्रकृत-विशेष्यभूतप्रतापरुद्रवाचकपदाभावात् विशेषणभूताया एतच्छायाः प्रकृतविशेष्ये चन्द्रमस्येवान्वयोऽगत्याङ्गीकरणीयः । ततश्चैतच्छब्दस्य प्रतापरुद्रवाचकत्वाभावाद् विषयनिगरणं संभवति । अत एवोक्तं साहित्यरत्नाकरे—' सिंहोऽयमित्यत्रा-ध्यवसायः सिंहो देवदत्त इत्यत्रारोपश्च ' इति । काकतीयकुलाम्भोधेरित्यत्रा-रोपस्तल्लक्षणसद्भावादिति भावः ।

अथ व्यञ्जनावृत्तेर्लक्षणमाह । अन्वितेषु इति । पदानां शब्दानामर्थेषु वाच्या-र्थेष्वन्वितेषु निर्बाधमन्वयं प्राप्तेषु सत्सु वाक्यार्थस्य काव्यरूपस्योपकारार्थम् । अन्योऽर्थोऽर्थान्तरं वाच्यलक्ष्याभ्यामन्योऽर्थो व्यङ्ग्य इत्यर्थः । तद्विषयः शब्दव्या-पारो व्यञ्जनावृत्तिः । अभिधया प्रकृतार्थे नियमिते यया व्यङ्ग्यरूपोऽप्रकृतार्थः प्रतीयते सा व्यञ्जनेत्यर्थः । अत्र शब्दव्यापार इत्यर्थस्याप्युपलक्षणम् । अर्थस्यापि व्यञ्जकत्वाङ्गीकारेण व्यञ्जनायास्तस्यापि धर्मत्वात् । शब्दव्यञ्जकत्वेऽर्थस्य सहका-रित्वम् । तस्य व्यञ्जकत्वे शब्दस्य सहकारित्वमिति ज्ञेयम् । तां विभजते । शब्दार्थोभयशक्तिमूलत्वेन । शब्दशक्तिमूलत्वेनार्थशक्तिमूलत्वेनोभयशक्तिमूलत्वेन च सा व्यञ्जना त्रिविधा । तत्र त्रिविधायां वृत्तौ शब्दशक्तिमूला यथा । वाहिन्य इति । सर्वतोमुखः सर्वस्याप्यप्रतिहत इति यावत् । तादृशः संभ्रम आघोषो यासां ताः । काकतीन्द्रस्य वाहिन्यो ध्वजिन्यः । प्रतिपक्षबलमेवार्णव इति रूप-कसमासः । वध्यद्भिर्नदद्भिः कबन्धैरपमूर्धकलेवरैराढ्यं प्रभुं कुर्वन्तीति प्रकृतार्थः । अप्रकृतार्थस्तु सर्वतोमुखमुदकम् । ' कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ' इत्यमरः । तस्य संभ्रमो यासां ता वाहिन्यः सद्यः प्रतिपक्षबलार्णवमुद्यता कब-न्धेनोदकेनाढ्यं पूर्णं कुर्वन्तीति । लक्षणानुगतिं दर्शयति । अत्रेति । अत्रोदाह-रणे अर्थः प्रयोजनम् । प्रकरणं प्रस्तुतत्वं तदादिर्यस्यार्थनिर्णायकस्य तेन सैन्य-सर्वव्यापित्वलूनमस्तकदेहः परं प्रधानमर्थो येषां तेषां वाहिन्यादिशब्दानां वाच-कत्वे नियमिते निबद्धे निर्णीते सति शब्दशक्तिर्मूलं यस्याः सा । नदीजलयोः प्रतिपत्तिर्बोधो यया वृत्त्या जायते सा वृत्तिर्व्यञ्जना । अर्थप्रकरणादीनां लक्षणो-

दाहरणादिकं काव्यप्रकाशादौ द्रष्टव्यम् । विस्तरभयादुपरम्यते । नन्वभिधालक्षणयोरन्यतरैवात्र वृत्तिरस्तु किं व्यञ्जनारूपेण व्यापारान्तरेणेत्याशङ्क्य तदुभयदूषणद्वारा व्यञ्जनां द्रढयति। प्राकरणिकेति। प्राकरणिकेऽर्थे प्रकृतार्थे पर्यवसिता पर्यवसानं प्रापिताभिधाप्राकरणिकार्थस्याप्रकृतार्थस्य प्रमितिं प्रतीतिं कर्तुं न शक्ता । नन्वप्रकृतार्थप्रतीतिर्मास्तु यदर्थं व्यापारान्तरकल्पनमित्याशङ्क्य तस्यावश्यकत्वे युक्तिं वदति । अप्राकरणिकार्थस्यापि वाक्यार्थोऽप्रकृतार्थस्तस्य शोभार्थं वक्तुः कवेर्विवक्षितत्वाद् वक्तुमिष्टत्वात् । अन्यतोऽन्यस्माच्छब्दव्यतिरिक्तात् प्रमाणात् प्रमितिकरणात् प्रतीतिसाधनात् तस्य प्रकृतार्थस्याप्रतीतेरस्फूर्तेः शब्दस्यैव व्यञ्जनाख्यं व्यापारान्तरं कल्प्यते । लक्षणां च निषेधति । नेति । अत्राप्रकृतार्थप्रतीतौ लक्षणा च वाच्यार्थानुपपत्त्यभावान्न संभवति । लौकिकवाक्यानां वेदव्यतिरिक्तपौरुषेयवाक्यानाम्। प्रयोक्तुः कवेः। वक्तुमिच्छा विवक्षा। तत्परतन्त्रत्वात्तदधीनत्वात् । अत्र वाहिन्य इत्याद्युदाहरणे व्यापारद्वयेनार्थस्य प्रतिपादन उक्तो वाक्यभेदः। अभिधया प्रकृतार्थप्रतिपादकमेकं वाक्यम्। व्यञ्जनयाप्रकृतार्थप्रतिपादकमेकं वाक्यमिति भेदो न भवति । एवं च दोषाभावादितरव्यापारासंभवाच्च व्यञ्जनाङ्गीकर्तव्येति भावः ।

अर्थशक्तिर्मूलं यस्याः सा व्यञ्जनावृत्तिर्यथा । श्रुत्वेति । काकतिभूभर्तुः क्षोण्याः पाणिग्रहो विवाहः पट्टाभिषेक इत्यर्थः। तमेवोत्सवं श्रुत्वा भूपा नताननाः सन्तः पादपीठीमङ्गुष्ठेनालिखन्। अत्रोदाहरणेऽर्थशक्त्या मुखनमनरूपया भूपा विषण्णाः खिन्ना इत्यर्थो व्यज्यते। पर्वतो वह्निमान् धूमादित्यनुमाने धूमरूपहेतुना वह्निर्व्यज्यते एवमत्र नम्राननत्वरूपहेतुना तत्कारणभूतो विषादो व्यज्यते। तदत्रानुमानमेवेत्याशङ्क्य निषेधयति । नेति । अर्थशक्तिर्मूलं यस्य तस्मिन् व्यञ्जने प्रतीतावनुमानशङ्कानुमानं प्रमाणमिति संदेहः। न च कार्येति। व्यङ्ग्यं विषादो व्यञ्जको नम्राननत्वरूपार्थः। तयोरविनाभावः साहचर्यं तस्याभावात् न कार्येति पूर्वेणान्वयः । धूमानुमाने व्यङ्ग्यव्यञ्जकयोर्यत्र धूमस्तत्राग्निरिति साहचर्यमस्ति। प्रकृते तन्नास्ति । अत्र हेतुमाह। नम्राननत्वमादिर्यस्य तत्तस्य कार्यस्य। अनेकानि कारणानि यस्य तदनेककारणकं तत्त्वात् नम्राननत्वं न विषादमात्रकार्यं किन्तु लज्जादेरपीति भावः। तर्हि विषादरूपाविवक्षितकारणप्रतीतिः कथमिति। अत्राह । नियतस्य विवक्षितस्य कारणस्य प्रतीतिर्वक्तुमिच्छा

विवक्षा शब्देनार्थप्रकाशनेच्छा । अनेन शब्देनायमर्थः सिध्येदितीच्छेत्यर्थः । तयानुगृहीतात् तत्सहायकत्वात् शब्दादेव भवति । दूषणान्तरमाह । किं चेत्यादिना । एकस्मादेव व्यञ्जकात् शब्दादर्थाद्वा तेषां तेषां व्यङ्ग्यार्थानामित्यर्थः । प्रतीतिर्वक्तुर्वाक्यप्रयोक्तुर्विवक्षाया अर्थप्रकाशनेच्छाया अनुसारेणानुवृत्त्या भवति । अत्रायं भावः । अस्तमेति गभस्तिमानिति केनचिदुक्ते तच्छ्रुत्वा मुनीनां सन्ध्यावन्दनकाल इत्यर्थः प्रतीतः । स्त्रीणां संभोगायालंकारकाल इत्यर्थः प्रतीत इति चोराणां चौर्यादेरिति चार्थः प्रतीतः । तदेतत् सर्वं व्यङ्ग्यजातं वक्तुस्तात्पर्यानुसारेण जातमिति चेत् किमित्यत्राह । एकेन हेतुनेति शेषः । अनेकव्यङ्ग्यार्थप्रतीतिरनुमानस्य प्रमाणस्य परिपाट्या मर्यादाया विरुद्धा विरोधिनी । एकेन हेतुनैकव्यङ्ग्यार्थप्रतीतिरनुमानमर्यादा शास्त्रे । काव्ये त्वेकस्माद्व्यञ्जकादनेकार्थप्रतीतिरङ्गीकृता हेतोरनैकान्तिकतायामपि स्वापेक्षितार्थप्रतीतिः स्वविवक्षानुसारेणैव भवति । अतो नानुमानशङ्केति भावः । व्यङ्ग्यार्थेऽप्यभिधैव प्रवर्तत इति मीमांसकमतम् । तन्निराकरोति । न चेति । अभिधावृत्तिर्न च व्यङ्ग्यार्थे प्रवर्तते । कुत इत्युक्ते तस्याभिधायाः संकेतितार्थः एव प्रकृतार्थ एव परिचयः प्रवृत्तिर्न व्यङ्ग्यार्थ इत्येवकारार्थः । गम्यत ज्ञायतेऽनयेति गमनिका । इयत्येतावतीति । अभिधादिज्ञानसाधनभूतोऽल्पो ग्रन्थः संक्षेपरूप एतावानित्यर्थः ।

उभयोः शब्दार्थयोः शक्तिर्मूलं यस्याः सोभयशक्तिमूला । तामुदाहरति । विजितेति । विजितान्यरिपुराणि शत्रुपुराणि त्रिपुराणि च येन सः । मूर्तौ शरीरे । 'मूर्तिः काठिन्यकाययोः' इत्यमरः । विलसन्ति सर्वमङ्गलानि शुभानि शुभकरसामग्रीकचिह्नानि वा यस्य सः । अन्यत्र मूर्तौ विलसती सर्वमङ्गला पार्वती यस्य सः । 'शर्वाणी सर्वमङ्गला' इत्यमरः । राज्ञां मौलिः किरीटः किरीटभूतो मुख्य इत्यर्थः । राजा चन्द्रो मौलौ जटाजूटे यस्य स इत्यन्यत्र । 'राजा प्रभौ नृपे चन्द्रे ।' 'मौलिः किरीटधम्मिल्लौ' इति चामरः । जगतां पतिरसौ रुद्रदेवः प्रतापरुद्रः शिवश्च भाति । अत्र श्लोके विजितारिपुर इत्यत्रार्थशक्तिमूलत्वम् । शत्रुपुर इत्यपि प्रयोग उभयार्थसिद्धेरिति भावः । विलसत्सर्वमङ्गलो राजा मौलिरित्यत्र शब्दशक्तिमूलत्वम् । सर्वमङ्गलादिपदाप्रयोगेन सर्वथा पुर इत्याद्यन्यपदप्रयोग उभयार्थसिद्ध्यभावादिति भावः । इत्येवमुभयशक्तिमूलः ।

प्रतापरुद्रशंकरयोः प्रकृताप्रकृतयोरुपमालंकारस्य ध्वनेः प्रतीतिर्भवति । नन्वर्थशक्तिमूलोदाहरणे नताननना इत्यत्राभिधया वाच्यार्थबोधः । व्यञ्जनया विपण्णा इति व्यङ्ग्यार्थबोधः तदुक्तमुभयशक्तिमूलोदाहरणेऽभिधया विशिष्टप्रतापरुद्रबोधः । व्यञ्जनयोपमालंकारादिव्यङ्ग्यार्थप्रतीतिः । विशिष्टशिवरूपाप्रकृतार्थः कया वृत्त्या स्फुरतीति चेदुच्यते । अप्रकृतार्थस्योपमालंकारादिव्यङ्ग्यार्थस्य व्यञ्जनावृत्त्या सहैव स्फुरणम् । तथा चोभयोरपि व्यङ्ग्यत्वम् । तदुक्तं काव्यप्रकाशे । 'शब्दशक्तिमूले तु निमन्त्रणेनाभिधेयस्यार्थान्तरस्य तेन सहोपमादेरलंकारस्य च निर्विकारं व्यङ्ग्यत्वम्' इति ।

अभिधादिनिरूपणानन्तरं कैशिक्यादीनां स्वरूपं निरूप्यते । अत्यन्तसुकुमारस्यातिमृदोरर्थस्य शृङ्गारादेः संदर्भो रचना यस्याः सा वृत्तिरिति शेषः । केशिमतेष्टा कैशिकी । कैशिकीवृत्तेरत्यन्तसुकुमारार्थसंदर्भत्वं लक्षणम् । अत्युद्धतेति । अत्युद्धतस्यात्युग्रस्यार्थस्य रौद्रादेः संदर्भो यस्याः सा वृत्तिरारभटी स्मृता । ईषन्मृदोरल्पमृदोरर्थस्य हास्यादेः संदर्भो यस्याः सा वृत्तिर्भारतीष्यते । ईषत्प्रौढस्य किञ्चिदुद्धतस्यार्थस्य वीररसादेः सन्दर्भो यस्याः सा वृत्तिः सात्वतीष्यते ।

अत्यन्तसुकुमाराद्यर्थान् विशदयति । अत्रेत्यादिना । शृङ्गारकरुणौ द्वौ रसावत्यन्तसुकुमारौ मतौ । रौद्रबीभत्सावत्युद्धतरसौ परिकीर्तितौ । हास्यशान्ताद्भुतरसाः किञ्चित्सुकुमाराः शृङ्गारादिवन्नात्यन्तसुकुमाराः किं त्वीषन्मृदवः । वीरभयानकावीषत्प्रौढौ समाख्यातौ । वृत्तीनां रसावस्थानसूचकत्वात् शृङ्गाराद्यत्यन्तसुकुमाराद्यर्थानुगुणेनात्यन्तसुकुमारादिना संदर्भेण भवितव्यम् । तथा च रचनाभेदेनार्थः सूच्यत इत्याशयेनाह । यत्रेत्यादिना । यत्र श्लोके शृङ्गारकरुणावतिकोमलेन संदर्भेण रचनया वर्ण्येते तत्र कैशिकी कैशिक्याख्या वृत्तिः । यत्र श्लोके रौद्रबीभत्सावतिप्रौढेन संदर्भेण प्रतिपाद्येते तत्रारभटी वृत्तिः । यत्र नातिसुकुमारा अनतिसुकुमारा हास्यादयो नातिसुकुमारेण संदर्भेण वर्ण्यन्ते तत्र भारती वृत्तिः । यत्र वीरभयानकावनतिप्रौढेन संदर्भेण प्रतिपाद्येते तत्र सात्वती । तथा च रसानुगुणसंदर्भेण रससूचका वृत्तिरिति बोध्यम् ।

कैशिकीमुदाहरति । जितेति । जितो मदनस्य विलासः सौन्दर्यातिशयो येन तं काकतीयानामन्वयस्तस्येन्दुं चन्द्रं नरपतिं प्रतापरुद्रम् । अनिमेषं निमेषरहितं यथा तथा द्रष्टुमाशंसिनीनामाशंसावतीनां प्रार्थयमानानामङ्गनानां वधू-

विशेषाणाम् । 'विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना' इत्यमरः । अपाङ्गैः कटाक्षैः कुवलयदामवन्नीलोत्पलस्रगिव श्यामला तोरणस्य श्रीः शोभा दिव्याकाशे विरचिता कृतासीत् । अत्र शृङ्गाररसोऽतिकोमलसंदर्भेण वर्णितोऽतः कैशिकी वृत्तिः ।

आरभटीमुदाहरति । खड्गेति । आयोधने युद्धे । 'युद्धमायोधनं जन्यम्' इत्यमरः । चलानां रणभीतानां मर्त्यानां गण्डः स्थूलोपलस्तद्वन्नाशकः । यत्र कुत्राप्यस्य पराजयाभावात् चलमर्त्यगण्ड इत्यभीरुत्वोपलब्धिः । तदुपलक्षितस्य नृपतेः प्रतापरुद्रस्येति मध्यपदलोपः । क्रोध एवाग्निः खड्गघातेन खड्गप्रहारेण निकृत्तेभ्यः शात्रवशिरोभ्यो निष्ठ्यूता निर्गता रक्तच्छटा रक्तधारा एव ज्वाला येषां तैः । अत्र निष्ठ्यूतेत्यत्र गौणार्थत्वान्न ग्राम्यतादोषः । तदुक्तं दण्डिना ।

'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥' इति ।

उद्भटा उद्धताः शस्त्रघट्टनभवाः परस्परशस्त्राघातजाताः स्फाराः स्फीताः स्फुलिङ्गोत्करा अग्निकणसमूहा येषां तैः । असृजोपलक्षितं पिशितं मांसमसृक्पिशितम् । स्त्याने घनीभूतमसृक्पिशितं येषां तान्यस्थिखण्डानि शल्यशकलान्येव विकटा वक्राः स्थूलाः पृथुला उज्ज्वला जाज्वल्यमाना अङ्गारका अग्निखण्डास्तैरुचण्डः प्रचण्डस्तीक्ष्णः । भवतीति शेषः । अत्र क्रोधस्थायिको रौद्रोऽत्युद्धतसंदर्भेण वर्णित इत्यारभटी ।

भारतीमुदाहरति । औन्नत्यमिति । रुद्रनृपतेर्महदौन्नत्यमन्यदेव । लोकनिर्माणकारणसामग्रीजन्यौन्नत्यं भिन्नमेव । महितः पूज्योऽत एव कोऽप्यनिर्वाच्य एष प्रतापरुद्रसंबन्धी गम्भीरिमा गाम्भीर्यम् । अन्य इति लिङ्गभेदेन योजना । प्रतापयशसोः काप्यनिर्वाच्या सरणिर्मार्गोऽन्या । वद्धी प्रथा प्रसिद्धिरन्यैव न तत्र संदेह इत्येवकारार्थः । अतः सर्वमेवौन्नत्यादिकार्यजातं नूतनमेव नवीनमेव । कारणसामग्रीनूतनत्वनिमित्तकमेवेदमौन्नत्यादिकार्यनूतनत्वमित्याशयेनाह । जाने इति । तन्निर्मितौ प्रतापरुद्रनिर्माणे चतुराननेन ब्रह्मणा कियती कियत्परिमाणा कीदृशी क्रमो यस्याः सा तथोक्ता । सामग्री कारणसामग्री कल्पिता संपादितेति वाक्यार्थः कर्म । न जाने । अत्राद्भुतरसोऽनतिसुकुमारेण संदर्भेण वर्णित इति भारती ।

सात्वतीमुदाहरति । दूरादिति । विश्वे प्रपञ्चे प्रसृमरं व्यापनशीलं महः प्रतापो यस्य तस्य वीररुद्रस्य प्रस्थानारम्भे जैत्रयात्राप्रारम्भे यो भेरीनिनदस्तं दूरादेवाकर्ण्य पूर्णेन कर्णज्वरेण कर्णपीडयार्त्ता अरिनृपा भञ्जीनाख्यातिमहद् गहनं काननं विशन्तोऽत एव कण्टकैराकृष्टाः केशा येषां ते तथोक्ताः सन्तः प्रतिनृपतिधिया शत्रुराजबुद्धया प्रतापरुद्रभटा एवागत्य केशेष्वाकर्षन्तीति भ्रान्त्येत्यर्थः । त्रायध्वं नो रक्षत मुञ्चतेति पादपान् प्रार्थयन्ते । अत्र भयानकरसोऽनतिप्रौढसंदर्भेण वर्णित इति सात्वती ।

अथ मतान्तरसिद्धमखिलरससमानं वृत्तिद्वयमाह । मध्यमेति । मध्यमारभटीति । अन्या पूर्वोक्तारभटीभिन्ना वृत्तिस्तथा यथा मध्यमारभटी तथा मध्यमकैशिकी वृत्तिः । अस्तीति शेषः । उभे इमे पूर्वोक्ते वृत्ती मध्यमारभटीमध्यमकैशिक्यौ सर्वरसानां नवरसानां च साधारणे समाने मते । एतद्वृत्तिद्वयेन सर्वेऽपि रसा वर्णनीया इत्यर्थः ।

मध्यमकैशिक्या लक्षणमाह । मृद्विति । मृद्वर्थे अतिसुकुमारशृङ्गाराद्यर्थे विषयेऽप्यनतिप्रौढः बन्धः संदर्भो यस्याः सा मध्यमकैशिकी । सुकुमारार्थस्य प्रौढसंदर्भेण वर्णनं दोष इत्याशङ्क्य वारयति । नेति । अतिसुकुमारयोः शृङ्गारकरुणयोः बन्धोऽल्पं यथा तथा प्रौढः संदर्भो न दुष्यति दुष्टो न भवति । तर्हि कीदृशो दुष्यतीत्याकाङ्क्षां जनयति । किं त्विति । अतिप्रौढः संदर्भः प्रतिकूलमर्थाननुगुणं वर्णनं संदर्भस्तद्रूपस्य दोषस्यापत्तेर्हेतोर्नेष्यते नेष्टः ।

मध्यमारभटीलक्षणमाह । प्रौढार्थे विषये नातिमृदुरनतिमृदुः क्रमो यस्याः सा वृत्तिर्मध्यमारभटी । अतिप्रौढयोरपि रौद्रबीभत्सयोरीषन्मृदुरनतिमृदुर्बन्धो न दुष्यति । तत् किं त्वित्यर्थः । अतिमृदुसंदर्भो विरुद्धः । अत्रापि पूर्वोक्तवैव प्रतिकूलेत्यादियुक्तिविवक्षितं भवति ।

मध्यमकैशिकीमुदाहरति । आसन्न इति । महोत्सव आसन्ने सत्यपि त्यक्त्वा । महोत्सवमिति शेषः । इतः सकलसौभाग्यनिधेर्निवासात् प्रवासं प्रयाणं कथं व्रजेर्गच्छेः । साहसं हठादुत्सवपरित्यागरूपसाहसं धिक् । धिगिति निन्दायाम् । 'धिङ्निर्भर्त्सननिन्दयोः' इत्यमरः । आभीक्ष्ण्यं निन्दार्हमित्यर्थः । आभीक्ष्ण्ये द्विरुक्तिः । आवयोस्तव मम च विघटनं वियोगं को वा विधिः किं वा दैवं काङ्क्षतीच्छति । न कोऽपीत्यर्थः । इत्थमेवं प्रकारेण हे काकतीयनृपते स्वप्ने सुस-

विज्ञाने निवारितस्य प्रियतमप्रस्थानस्य बुद्धिर्मतिर्यस्य तस्य । त्वद्वैरिनारीजनस्तव शत्रुस्त्रीजनः । त्वया वियोजितभर्तृक इति शेषः । ततः पश्चाद् बुद्ध्वा प्रबोधं प्राप्य मूर्च्छेति । अत्रेषत्प्रौढसंदर्भेण शृङ्गारसंकीर्णः करुणरसः प्रतिपादित इति मध्यमकैशिकी ।

मध्यमारभटीमुदाहरति । मांसेति । देशवाचिनान्ध्रशब्देन तदधिपतिः प्रतापरुद्रो लक्ष्यते । तस्य सुभटैर्योधैर्युद्धभुवः समरभूमयो मांसैः कीकसैरस्थिभिः । 'कीकसं कुल्यमस्थि च' इत्यमरः । संकीर्णा व्याप्ताः प्रसरन्त्यो रुधिरापगा रक्तनद्यो यासु तास्तथोक्ता वसया हृन्मेदसा कर्दमिताः संजातकर्दमाः कृताः । अत्रेषन्मृदुसंदर्भेण बीभत्सरसः प्रतिपाद्यत इतीयं मध्यमारभटी । एवं रीत्या मध्यमकैशिकी मध्यमारभट्यो रसान्तरेष्वप्युदाहरणं द्रष्टव्यम् ।

अथ रीतीनां स्वरूपोदाहरणे प्रदर्शयिष्यंस्तासां वृत्तिभ्यो भेदं निरूपयति । वैदर्भ्यादिरीतीनां शब्दगुणा माधुर्यादयस्तानाश्रितानां तत्परतन्त्राणामित्यर्थः । ननु माधुर्यं नाम सहृदयहृदयाह्लादकशृङ्गारादिधर्मः ओजश्चित्तविस्ताररूपो दीप्तिजनको रौद्रादिधर्मः प्रसादः शुष्केन्धनानलवदमलजलवद्वा यथायोगं सहसा सहृदयहृदयव्यापी सर्वरसधर्मः । कथमेतेषां शब्दगुणत्वमिति चेत् सत्यम् । आत्मधर्मस्य शौर्यादेराकारधर्मत्वमिव रसधर्मस्य माधुर्यादेः शब्दधर्मत्वमौपचारिकम् । तदुक्तं ध्वन्याचार्यैः । 'शब्दधर्मत्वं चैषामन्याश्रितशरीराश्रितत्वमिव शौर्यादीनामिव' इति । रीतीनां माधुर्याद्याश्रितत्वं काव्यप्रकाशे कथितम् ।

'माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।
ओजःप्रसादकैस्तैस्तु परुषा कोमला परैः ॥
केषांचिदेषा वैदर्भीप्रमुखा रीतयो मताः' ॥ इति ।

तासां वैदर्भ्यादीनां वैदर्भीप्रभृतीनामर्थविशेषे शृङ्गारादौ निरपेक्षतया अपेक्षारहिततया केवलमेकं संदर्भस्य सौकुमार्यं प्रौढत्वं च यत् तद्विषयत्वात् कैशिक्यादिभ्यो वृत्तिभ्यो भेदः । वैदर्भ्यादीनां रसाश्रितमाधुर्यादिशब्दधर्मपरत्वम् । कैशिक्यादीनां तु साक्षादेव रसव्यञ्जकत्वमिति महान् भेद इति भावः । तदुक्तं ध्वन्याचार्यैः ।

'शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वाश्रयाः पराः' । इति ।

संदर्भसौकुमार्यादिकं विशदयति । संदर्भस्येति । संदर्भस्यातिमृदुत्वं नामासं-

युक्तानां संयुक्तव्यतिरिक्तानां कोमलानां वर्णानां बन्धः संबन्धो यस्य तस्य भावस्तत्त्वम् । असंयुक्तकोमलवर्णपदसंदर्भोऽतिमृदुरित्यर्थः । अतिप्रौढत्वं नाम परुषवर्णानां विकटो बन्धो यस्य तस्य भावस्तत्त्वम् । विकटपरुषवर्णपदसंदर्भोऽतिप्रौढ इत्यर्थः । संयुक्तमृदुवर्णेष्वीषन्मृदुत्वं भवति । अविकटपरुषवर्णबन्धेष्वीषत्प्रौढत्वम् । संयुक्तत्वं नाम स्वररहितव्यञ्जनानां संयोगः वर्णानां । कोमलत्वपरुषत्वे तु

'टवर्गवर्जिताः स्पर्शाः स्वस्ववर्गान्त्यशेखराः ।
लघुरेफणकारौ च कोमलाः परिकीर्त्तिताः ॥
रेफेण यस्य कस्यापि योग आद्यतृतीययोः ।
स्वोत्तराभ्यां तुल्ययोर्वा परुषाक्षरकौ शषौ ॥' इति ।

कोमलपरुषवर्णपदसंग्रहोक्तरीत्या ज्ञातव्ये ।

अथ रीतिनिरूपणं प्रतिजानीते । अथेति । अथ कैशिक्यादिनिरूपणानन्तरं रीतीनां स्वरूपं लक्षणमुदाहरणं चोच्यत इति शेषः । रीतिसामान्यलक्षणमाह । रीतिरिति । रीतिर्नाम गुणाश्लिष्टा माधुर्यादिगुणविशिष्टा पदसंघटना पदरचना मतेष्टा । तां विभजते । सेति । वैदर्भी विदर्भदेशीया विदर्भजनपरिगृहीता रीतिः । गौडदेशीयपरिगृहीता गौडी । पाञ्चालदेशीयपरिगृहीता पाञ्चाली । इत्येवं सा रीतिस्त्रिविधा ।

वैदर्भीलक्षणमाह । बन्धेति । बन्धस्य पारुष्यं दुःसन्धिकृतपरुषत्वं तद्रहिता शब्दस्य काठिन्यं परुषवर्णारब्धत्वं तद्वर्जिता नातिदीर्घा अनतिदीर्घाः समासा यस्याः सा चासौ रीतिर्वैदर्भीष्यते ।

उदाहरति । काकतीयेति । काकतीयनरेन्द्रस्य कीर्त्तिरेव चन्दनं मलयजं तस्य चर्चितमालेपनम् । भावे क्तः । दिश एवाङ्गना वतंसीकृता अवतंसीकृतास्तस्य नृपतेर्गुणाः शौर्यादयो यासां ताः सत्यो वितन्वन्ति कुर्वन्ति ।

तथा च यथा पूर्वोदाहरणं तथैवोदाहरणान्तरमित्यर्थः । वितरणेति । वितरणं दानं तदेव गुणः स एव लीला क्रीडा तया तोषितोऽशेषलोको येन सः । एतेन वितरणं लीलाप्रायत्वान्निर्बन्धपूर्वकं न भवतीति व्यज्यते । काकतीयानामन्वयस्येन्दौ चन्द्रे नरनाथे विभवति प्रभौ सतीयं क्षितिसुरा ब्राह्मणास्त एव जनता

जनसमूहः सुरतरुगणनायां कल्पतरुकथायां कामधेनोः प्रसङ्गे गोष्ठ्यां वीतमपगतं कौतूहलं यस्याः सा आसीत्। प्रतापरुद्रे सकलाभीष्टप्रदातरि सति वैयर्थ्यात् कल्पवृक्षादावासक्तिर्नाभूदित्यर्थः । अत्रोदाहरणद्वयेऽपि कोमलवर्णैरल्पसमासैर्मृदुबन्धेन च कीर्त्यौदार्योद्दीपनविभावनव्यङ्ग्यशृङ्गारगतोद्दीपकत्वलक्षणमाधुर्यप्रतिपादनाद्वैदर्भी रीतिः । ननु कीर्त्तिचर्चेत्यादौ रेफसंयोगस्तोषिताशेषेत्यादौ शवर्णषकारौ चेत्यनेकपरुषवर्णसंभवात् कथं कोमलवर्णत्वमिति चेन्न ।

> 'शषौ च रेफसंयोगः टवर्गश्चापि भूयसा ।
> विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युताः ॥' इति ।

ध्वन्याचार्योक्तेर्भूयसेत्युक्तत्वान्न कोमलत्वभङ्गः । एवमुत्तरत्राप्यूहनीयम् ।

गौडीमुदाहरति । ओजः समासभूयस्त्वं कान्तिरुद्भटपदत्वं त एव गुणौ ताभ्यामुपेता या रीतिः । सेति शेषः । गौडीष्यते । उदाहरति । प्रचण्डेति । प्रचण्डतरेण दोर्दण्डेन बाहुदण्डेन खण्डितमरातीनां शत्रूणां मण्डलं येन स समर्थः । आन्ध्रभूपतिर्गुर्वीमलघ्वीमुर्वीधुरां भूभारं बिभर्त्ति । धुरेति समासान्त आकारः ।

तया च । उदाहरति । उद्यता दोःस्तम्भे यः खड्गस्तेन निमित्तेन त्रुटतां दलतामरिमुकुटानां शत्रुकिरीटानामाटोपेनाडम्बरेण संजाता या राहुरिति भ्रान्तिस्तया भ्रश्यतो भयात् पलायमानस्य पतङ्गस्य सूर्यस्याभयस्य करणेन वित्तोऽभयकरणचणः स्फारो नासीरस्य सेनामुखस्य संबन्धी रेणुः परागो यस्याः सा तथोक्ता । आन्ध्रक्ष्माभर्तुरधिका विस्तृता रणधरा युद्धभूमिर्भिन्नेभ्यो दलितेभ्यो मत्तेभकुम्भेभ्यः प्रोद्यद्भिरुल्लुवद्भिर्मुक्तौघा एव तारानिकरास्तैः परिवृता परिवेष्टिता स्वर्वधूवक्त्राण्येव चन्द्रा यस्याः सा आसीत्। अत्र खड्गनिकृन्तनोत्पतदरिमुकुटेषु राहुभ्रमेण कान्दिशीकस्य भानोः नासीररेणुकर्तृकाभयप्रदानसामर्थ्योत्प्रेक्षया सूर्यास्तमयप्रतीतिजनकसूर्यावरणं व्यज्यते । विदलितमत्तेभकुम्भोद्यतमुक्तानां तारात्वेन विवरणोत्सुकतया समागतस्वर्वधूवक्त्राणां चन्द्रत्वेन च रूपणाद् रणधराया रजनीत्वं च गम्यते । गजानां मुक्ताकरत्वं गजायुर्वेदे । 'करीन्द्रजीमूतवराह' इत्यादिना । न चात्रानेकनिशाकरकथनं दोषावहम् । प्रसिद्धचन्द्रस्यानेकत्वासंभवेऽपि वधूमुखचन्द्राणामनेकत्वसंभवात् । अत्र परुषवर्णसंदर्भेण समासभूयस्त्वेन च रौद्ररसगतोद्दीपकत्वलक्षणौजःप्रतिपादनात् गौडी ।

पाञ्चालीमाह । पाञ्चालीति । वैदर्भी गौडीति च ये पूर्वोक्ते रीती तदुभयमात्मा स्वरूपं यस्याः सा । पाञ्चालानां संबन्धिनी रीतिः पाञ्चालीत्यर्थः । पूर्वोक्तोभय-रीत्यात्मकत्वं पाञ्चाल्या लक्षणमित्यर्थः । उदाहरति । जेतुरिति । जेतुः काकति-वीररुद्रनृपतेर्जैत्रप्रयाणेषूत्थिते क्षोणीरेणुभरे भूपरागपुञ्जे नभस्याकाशेऽतिभृश-मत्यन्तं भ्रूविभ्रमं भ्रूविलासं बिभ्रति सति वियद्दीर्घिकाकाशगङ्गा । विशंकटाभ्यां पृथुलाभ्यां तटाभ्यां दीर्घातिदीर्घा सती मर्त्यनदी भागीरथी जाता । गाढं दृढं गूढतमा पराच्छादनादप्रकाशमाना गौतमनद्यपि गोदावरी तु पातालगङ्गायते भोगवतीव भासत इत्यर्थः । अत्र नभसि स्वर्नद्यां सत्यां भागीरथी पाताल-गङ्गेति कथनं युक्तम् । तद्विहाय गौतमनदीत्युक्तं किं तु गाढं गूढतमापि जह्नु-तनयेति पाठपरिकल्पने जह्नुतनया भागीरथीत्युक्तिः समञ्जसेति प्रतिभाति ।

स्थाने इति । हे चलमर्त्यगण्डनृपते त्वत्खड्ग एव भोगी सर्पो द्विषतां प्राणैः प्राणवायुभिः सततं परितोषमेति प्राप्नोतीति यत् तत् संतोषोपगमनं स्थाने युक्तम् । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । सर्पस्य वायुना तृप्त्युपगमनं नाश्चर्यकरं वाताशनत्वादिति भावः । तर्हि किमाश्चर्यमित्याकाङ्क्षां जनयति । किं तु परं तु त्वत्खड्गभोगिपतिनाभ्यवहृतेन पीतवर्णेन च प्रतिपक्षपार्थिवानां शत्रुनृपाणां यश एव क्षीरं पयस्तेन गौरत्विषं शुभ्रकान्ति त्रिलोकभरितां लोक-त्रयपूर्णां त्वत्कीर्तिलक्ष्मीरेव सुधा तां संवर्धयतीति यदेतत् सुधासंवर्धनमत्य-द्भुतं महच्चित्रम् । 'पयःपानं भुजङ्गानां केवलं विषवृद्धये' इति लोकप्रसिद्धिः । खड्गभोगी स्वरियशःक्षीरं पीत्वा कीर्तिसुधां वर्धयति । कीर्तिसुधाजननरूप-कार्यं प्रत्युपादानकारणीभूतपीतवर्णारियशःक्षीरेण साधनेन गौरवर्णकीर्तिसुधा-रूपं कार्यं जनयतीति च महदद्भुतमिति भावः । अत्रोदाहरणद्वये पूर्वोक्तरीति-द्वयसाङ्कर्येणाद्भुतरसप्रतिपादनात् पाञ्चाली ।

अथ रीतयश्चेयतीत्यत्र चकारसंग्रहयोः शय्यापाकयोर्मध्ये शब्दधर्मत्वसाम्यात् शय्यां निरूपयति । येति । परमुत्कृष्टा पदानां सुप्तिङन्तानां यान्योन्यमैत्री । अत्र मैत्री नाम संहितासमये यत्समीपे स्थितस्य पदस्य तेनैवान्वयः सेति शेषः । सा मैत्री शय्येति कथ्यते । उदाहरति । दातुः काकतिवंशस्य मण्डनमणेर्निःसी-मविश्राणनस्य निर्मर्यादं वितरणस्य श्लाघयोत्कर्षेण लङ्घितातिक्रान्ता कल्पपा-दपस्य गुणानां दानादीनां प्रौढिः प्रौढिमा येन तस्यागाधं गम्भीरमोजः प्रतापो

यस्य तस्य वीररुद्रस्य संबन्धि शारदकौमुद्याः शरत्कालचन्द्रिकायाः परिमलं सौभाग्यं बिभ्रद्यशः प्रायशः प्राचुर्येण सामन्तसीमन्तिनीनां पतिवियोजितारिस्त्रीणां गण्डाभोगेषु यः पाण्डिमा तद्धुरां पाण्डिमभारं धत्ते तद्वद् भातीत्यर्थः ।

अवशिष्टस्य पाकस्य लक्षणमाह । अर्थेति । अर्थस्य शृङ्गारादेर्गम्भीरिमास्वाद्यता पाकः । इत्युच्यत इति शेषः । स पाको द्विधा द्विप्रकारेण हृदयंगमो मनोहरो द्राक्षापाको नारिकेलपाकश्चेति प्रस्फुटमन्तरं भेदो ययोस्तौ । भवत इति शेषः । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः ।

तत्र प्रथमोद्दिष्टस्य द्राक्षापाकस्य लक्षणमाह । द्राक्षापाक इति । यः पाको बहिः पठनसमयेऽन्तरर्थविचारसमये च स्फुरन् स्फुरमाणो रस आस्वादो मनोहरत्वं यस्य स द्राक्षापाक इत्यन्वयः ।

उदाहरति । स्मरेति । विषयमात्रविश्रान्तिविरहेण विशृङ्खलवृत्तित्वमन्दमन्थरत्वादिगुणशीलाः स्मेराः । तदुक्तं भावप्रकाशे ।

'अपरिच्छिन्नविषयं मदमन्थरमीलितम् ।
स्फुरद्भ्रूपक्ष्मतायुक्तं तत् स्मेरमिति कथ्यते ॥'

स्मरप्रधानाश्च ते स्मेराश्च स्मरस्मेरास्तान् मन्दं स्मितं येषां ते । मधुराः संतापहराः सौरभ्येण पद्मिनीजातित्वादस्य स्मितनिमित्तेन परिमलेन सुभगास्तान् तथोक्तान् ।

'कटाक्षैर्हासगर्भैस्तु सुभगौत्सुक्यभावना ।
शीतलीक्रियते तापो येन तन्मधुरं स्मृतम् ॥' इति ।

चोक्तेर्नायिकायाः प्रौढत्वात् मनागल्पं व्रीडाजाड्यं येषां ते तथोक्ताः । अत एव स्वानुकूल्यप्रकाशकाः । तदुक्तम् ।

'सव्रीडालोकनेनैव स्वानुकूल्यप्रकाशनम्' इति ।

'विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः ।
येनान्तरङ्गं द्रवति स स्नेह इति कथ्यते ॥'

इत्युक्तलक्षणः स्नेहः प्रणयशब्देन विवक्षितः स एव रसो द्रवद्रव्यं तस्यान्तरङ्गे वात्सल्यस्य कल्लोलैर्महातरङ्गैः 'महत्सूल्लोलकल्लोलानि' इत्यमरः । भरिताः प्रेमदायिन इत्यर्थः ।

'द्रवीभूतं मनो यत्र दर्शने प्रेमदायिनः ।' इति ।

लक्षणात् । कृतानेकस्कन्धाः प्रकाण्डास्तरङ्गा यैस्ते प्रियदृष्टिप्रतिघातेनौत्सुक्यभरे-णौत्सुक्यभरेण च यथाक्रममासारप्रसाराभ्यामङ्गीकृततरङ्गभङ्गीका इत्यर्थः । अत एवैते तरङ्गिताः सोत्सुकाश्च । तदुक्तम् ।

'सोत्सुकं तद्यदालोक्य भूयो भूयोऽवलोकनम् ।
कल्लोल इव यत् कान्तेर्विच्छेदस्तत्तरङ्गितम् ॥'

मनसिजानां स्मराणां सहस्राणि सृजतो विरक्तस्यापीति भावः ।

'यद्दर्शने विरक्तोऽपि क्षुभ्यते तत्समन्मथम् ।' इति

लक्षणात् । कटाक्षान् वामे रम्ये अक्षिणी यस्याः सा वामलोचना रुद्रनृपतिं परितः सर्वतः किरति क्षिपति । कटाक्षलक्षणं तु

'यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् ।
तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥' इति ।

अत्रैवं सम्मर्दसहिष्णोः शृङ्गारस्य पाठसमयेऽप्यास्वाद्यमानत्वात्तदन्तर्बहिश्च स्फुरणं द्रष्टव्यम् ।

नारिकेलपाकलक्षणमाह । य इति शेषः । अन्तर्गूढः अन्तर्लीनः रसोद्गमो यस्य स पाको नारिकेलपाकः । उदाहरति । लीलेति । नायकप्रकरणे मध्यमा-प्रस्तावे श्लोकोऽयं व्याख्यातः । अत्रास्मिन् श्लोके द्राक् शीघ्रमर्थस्य शृङ्गारस्य प्रतीतिः स्फुरणं न भवति । अतोऽत्र नारिकेलपाक इति बोध्यम् । द्राक्षापाके शीघ्रमर्थप्रतीतिर्नारिकेलपाके विलम्बेनार्थप्रतीतिः । तदुभयमुदाहृतमनतिद्रुता-नतिविलम्बितार्थप्रतीतिभाजः कदलीरसालादिपाकाः स्वयमेवोह्या इत्याह । एवं प्रकारेण वस्तुनोऽलंकारस्य प्रतीतावप्युदाहरणं द्रष्टव्यम् । पाकान्तराणि कदल्या-द्यन्यपाकाश्च यथासंभवमुदाहार्याणि ।

एवं काव्यसामग्रीं निरूप्य काव्यविशेषनिरूपणं प्रतिजानीते । अथेत्यादि । अथ वृत्त्यादिनिरूपणानन्तरं काव्यविशेषाः । निरूप्यन्त इति शेषः । व्यङ्ग्यस्य व्यङ्ग्यार्थस्य प्राधान्यं वाच्यार्थमतिशय्य चमत्कारकारित्वम् । अप्राधान्यं वाच्या-र्थानतिशयेन वाच्यपरं चमत्कारकारित्वं ताभ्यामस्फुटत्वेनास्फुरणेन च काव्यं त्रिविधम् । त्रैविध्यमेवाह । व्यङ्ग्यस्य प्राधान्य उत्तमं काव्यम् । यत्र वाच्या-

तिशायि व्यङ्ग्यं तदुत्तमं काव्यमित्यर्थः । ध्वनिर्ध्वनिकाव्यमिति व्यपदिश्यते व्यवह्रियते । अप्राधान्येन मध्यमं काव्यं गुणीभूतं वाच्यानतिशायित्वादप्रधानभूतो व्यङ्ग्यो व्यङ्ग्यार्थो यस्मिन् तत्तथोक्तमिति गीयते । अस्फुटत्वेऽनभिव्यक्तौ अधमं काव्यं चित्रमिति कथ्यते । शब्दार्थवैचित्र्याद्व्यङ्ग्यानभिव्यक्तौ चित्रप्रायत्वात् चित्रमिति तात्पर्यम् ।

ध्वनिनामकमुत्तमं काव्यमुदाहरति । स्वामिन्निति । स्वामिन् ब्रह्मन् अधुना गोत्रमहीधरान् नीचैरनुन्नतान् ह्रस्वान् विधत्से किम् । अम्बुनिधीन् गाधानुत्तानान् कुतो हेतोः करोषि । दिक्पतीन् दिगीशानल्पकानत्यल्पान् कुरुषे किम् । इत्थमखिलं पार्श्वचराणामनुजीविनामनुलापं मुहुर्भाषाम् । असकृत्कथनमिति यावत् । न्यक्कृत्य धिक्कृत्य धर्मैषिणा केवलपरेण पद्मभुवा ब्रह्मणा गुणानामौन्नत्यादीनामेकवसतिरेकालयः श्रीवीररुद्रो नृपः सृष्ट उत्पादितः । अत्र व्यङ्ग्यस्य वाच्यातिशायित्वं स्वयं विशदयति । अत्रेति । अत्रोदाहरणे कुलशैलानतिशेत इति तथोक्तम् । समुन्नतत्वमौन्नत्यम् । अतिसमुद्रं समुद्रातिशायि गाम्भीर्यम् । लोकपालेभ्योऽप्यधिकमैश्वर्यं च व्यज्यते । तथा कुलशिखरिलोकपालानां निर्माणे यः संरम्भः साधनसामग्रीसंपादनारम्भस्तदतिशायी काकतीयस्य निर्माणसामग्र्या विभवः सर्वविलक्षण इति व्यज्यते । तथा च वाच्यार्थापेक्षया व्यङ्ग्यार्थस्यैव चमत्कारकारित्वात् वाच्यातिशायित्वमितीदं ध्वनिकाव्यमित्यर्थः ।

मध्यमकाव्यमुदाहरति । प्रत्यग्रेति । प्रत्यग्रमभिनवं यथा तथा प्रसरता व्याप्नुवता प्रतापविभवेन व्याप्तमाक्रान्तमखिलाशानां सकलदिशामन्तरं येन तस्मिन् विश्वस्य त्रातरि रक्षके वीररुद्रनृपतौ सिंहासनमध्यास्ते इति तस्मिन् तथोक्ते सत्यास्थानं पट्टाभिषेकशालां समागतैर्नृपतिभिस्तास्ता नानाविधा इत्यर्थः । चेष्टा व्यापारा इत्यर्थः । तथा तेन प्रकारेणानिर्वाच्यमित्यर्थः । दर्शिताः प्रकाशिता याभिश्चेष्टाभिरमुष्य काकतिविभोर्दृष्टिः कृपया आर्द्रीकृता रसवती । अत्रोदाहरणे प्राप्ताभिषेकमहोत्सवस्य प्रतापरुद्रस्याग्रे पुरोभागे शरणार्थिनां शरणं प्रार्थयमानानां पार्थिवानां तथाविधकार्पण्येन कृपणत्वेनोपलक्षितोक्तिः कार्पण्योक्तिः पुनः पुनः प्रणामः प्रार्थनं चादिर्यस्य तच्च व्यङ्ग्यं तास्ताश्चेष्टा इति वाच्याद् वाच्यार्थादनतिशायीति हेतोर्गुणीभूतं व्यङ्ग्यं यस्य तस्य भावस्तत्ता तथा चेदं मध्यमं काव्यमिति भावः ।

अवशिष्टं चित्रं विभजते । चित्रमिति । चित्रं काव्यं त्रिविधम् । त्रैविध्यमेवाह । शब्देति । शब्दचित्रमर्थचित्रमुभयचित्रमिति । त्रिविधमिति पूर्वेणान्वयः ।

शब्दचित्रमुदाहरति । क्षोणीति । क्षोणीरक्षणे दक्षिणा उदाराः । समर्था इति यावत् । 'दक्षिणे सरलोदारौ' इत्यमरः । क्षतो जगतां क्षोभो याभिस्ता दुरीक्ष्योऽभ्यासलाघवातिशयेन दुरवबोधः क्रम आयुधप्रयोगपरिपाटी यासु ताः क्षुद्रक्षत्रियाणां पक्षस्य बलस्य शिक्षणस्य विधौ विधाने प्रोक्षिप्त उद्धृतः कौक्षेयकः करवालो यासु ताः । युद्धायोद्दामोद्यमनस्योच्छृङ्खलाटोपस्य रुद्रनृपतेश्चण्डयोर्दोर्दण्डयोः केलयः क्रीडा गर्जतां दुर्जनानां गर्व एव पर्वतः तस्य भिदायां भेदने दम्भोलयोऽशनयो भवन्ति । 'दम्भोलिरशनिर्द्वयोः' इत्यमरः । अत्र केलिषु दम्भोलित्वरूपणं गर्वे पर्वतत्वारोपणे हेतुरिति परम्परितरूपकम् । अत्रानुप्रासेन शब्दचित्रता । यद्यप्यत्रार्थालंकारस्य रूपकस्य सद्भावादुभयचित्रत्वं तथापि कविविवक्षायाः केवलानुप्रास एव पर्यवसानात् शब्दचित्रत्वमिति भावः । शुद्धशब्दचित्रं तु मदीये हेमन्ततिलकभाणे । 'चातुरावसपास्य चाखिलदिशा अभ्यास्य वाद्यावलीभेद्याकाश...कौशिसुरराट्पद्यालिसंमोदितः । पद्यालीः क्वणयन् प्रसर्पदबलावद्याति भूषारवैः स्वाद्यानेकफलागमे रघुपतिः स्वोद्यानवाटीकुटीः ॥' इति ।

अर्थचित्रमुदाहरति । खड्ग इति । युद्धविजृम्भिते खड्गे बिम्बितं रिपुमहीनाथानामञ्जलिं युतकरद्वयम् । 'तौ युतावञ्जलिः पुमान्' इत्यमरः । पश्यन्तो विज्ञानिनो विद्वांसो मन्यन्ते मन्वते । अहं तु पूर्वोक्तविशिष्टाञ्जलिं वीरप्रतापरुद्रविभोर्जन्येषु युद्धेषु पुनः पुनरपि सृष्टौ सर्जनाय रिपुजीवितानि ग्रहीतुं संग्रहीतुं यातस्य समागतस्य विधेर्विश्वसृजः पीठाम्बुजं मन्ये । 'विरिञ्चिः कमलासनः' । 'लक्ष्मीः पद्मालया पद्मा' इति चामरः । अत्रोत्तरार्धे छन्दोभङ्गस्तु प्राकृतानुसारिच्छायात्वप्रयुक्त इति न दोषः । पाठान्तरकल्पनं साहसमिति बोध्यम् । अत्रापि यथाकथंचिदनुप्राससंभवेऽपि कवेरर्थचित्र एव तात्पर्यात् तस्यैवोदाहरणम् । शब्दचित्रं त्वप्रधानमिति भावः ।

उभयचित्रमुदाहरति । विद्येति । शुद्धमर्थचित्रं तु मदीये हेमन्ततिलकभाणे ।

> 'आहृतवसुः प्रतीच्या भानुः क्षिप्तोऽपराब्धिजलमध्ये ।
> कथमपि पूर्वाब्धिगतो भु...मुद्रो भुवनानाम् ॥'

एकभद्रे मुख्यशुभे । जितानि वैरिणां भद्राणि येन तस्मिन् । धृता शौर्यमुद्रा येन तस्मिन् । रक्षायां विनिद्रे निद्रारहिते । अनलस इति यावत् । गुणैर्धर्मादिभिरार्द्रे प्रतापरुद्रे पृथ्वी कान्ता जाया रमते रज्यति इव । अत्रानुप्रासोपमाभ्यां शब्दार्थधर्माभ्यां चित्रता काव्यस्येति शेषः । नन्वत्रोदाहरणेषु यथायोगं विभावानुभावविशेषकथने वीरशृङ्गारयोः पर्यवसानात् कथमधमत्वमिति चेत् सत्यं शब्दार्थालंकारयोरेव कविविवक्षाविषयत्वाद्विद्यमानोऽपि रसो दिवा चन्द्रप्रकाशवन्न प्रतीयते । तदुक्तं काव्यलोचने ।

'रसभावादिविषयविवक्षाविरहे सति ।
अलंकारनिबन्धो यः स चित्रविषयो मतः ॥' इति ।

एवं त्रिविधमपि काव्यं सामान्यतो निरूप्य तत्रोत्तमं काव्यं प्रपञ्चयितुं प्रतिजानीते । अथेति । अथ काव्यसामान्यनिरूपणानन्तरं ध्वनिविशेषा उत्तमकाव्यभेदा निरूप्यन्ते । तानेव विभजते । अत्रेत्यादिना । अत्र ध्वनिप्रस्तावे ध्वनेरुत्तमकाव्यस्य लक्षणा चाभिधा च ते मूले कारणे यस्य तस्य भावस्तत्त्वेन हेतुना प्रथममविवक्षितं व्यङ्ग्येन न्यग्भूतं वाच्यं यस्य सोऽविवक्षितवाच्यः । अन्यत् वाच्यादन्यत् व्यङ्ग्यं परं प्रधानं यस्य तदन्यपरं विवक्षितमन्यपरं सत् वाच्यं यस्य स विवक्षितान्यपरवाच्योऽन्यपरत्वेन विवक्षितवाच्य इत्यर्थः । तौ इत्याख्या ययोस्तौ द्वौ भेदौ । अविवक्षितवाच्यध्वनिर्लक्षणामूलः । विवक्षितान्यपरवाच्यध्वनिरभिधामूल इति बोध्यम् । अविवक्षितवाच्यध्वनेरर्थान्तरसंक्रमितं चात्यन्ततिरस्कृतं च वाच्यं यस्य तस्य भावस्तत्ता तयार्थान्तरसंक्रमितवाच्यतयात्यन्ततिरस्कृतवाच्यतया चेत्यर्थः । अर्थान्तरे लक्ष्यार्थे संक्रमितं प्रवेशितं वाच्यं यस्येति व्युत्पत्त्यायमजहल्लक्षणामूलः । अत्यन्ततिरस्कृतं भृशं न्यग्भूतं वाच्यं यस्येति व्युत्पत्त्यायं जहल्लक्षणामूलः । एवं द्विविधस्य ध्वनेर्वाक्यपदगतत्वेन वाक्यगतत्वेन पदगतत्वेन च द्वैविध्ये सति चतस्रो विधा यस्य तस्य भावश्चातुर्विध्यम् । तेषां संख्याक्रमस्त्वग्रे कविनैव प्रकृप्यत इत्युपरम्यते । अभिधामूलध्वनिं विभजते । विवक्षितान्यपरवाच्यस्य ध्वनेः संलक्ष्यः स्फुटसंवेद्यः क्रमो व्यङ्ग्यव्यञ्जकयोः परिपाटी यस्य तत् तथाभूतं व्यङ्ग्यं यस्य स संलक्ष्यक्रमव्यङ्ग्यः । असंलक्ष्योऽस्फुटवेद्यः क्रमो यस्य तदसंलक्ष्यक्रमं व्यङ्ग्यं यस्य सोऽसंलक्ष्यक्रमव्यङ्ग्यः । यत्र व्यञ्जकस्य विभावादेर्व्यङ्ग्यस्य रसादेर्विद्यमानोऽपि क्रमो निशितसूच्या शतपत्र-

पत्रशतवदाशुभावित्वान्न संलक्ष्यते सोऽसंलक्ष्यक्रम इत्यर्थः । संलक्ष्यक्रमव्यङ्ग्या-
संलक्ष्यक्रमव्यङ्ग्यतया तत्त्वेन हेतुना द्वौ भेदौ । संलक्ष्यक्रमव्यङ्ग्यध्वनिरसंलक्ष्यक्र-
मव्यङ्ग्यध्वनिश्चेत्युभौ भेदौ । संलक्ष्यक्रमव्यङ्ग्ये शब्दार्थोभयशक्तिमूलत्वेन
त्रैविध्यं सिद्धवत्कृत्याह । संलक्ष्येति । शब्दशक्तिमूले संलक्ष्यक्रमव्यङ्ग्ये वस्त्व-
लंकाररूपतया वस्तुजातिगुणाद्यर्थरूपत्वेनालंकार उपमादिरूपत्वेन च वस्तु-
ध्वनिरलंकारध्वनिरिति च द्वैविध्ये सति वाक्यपदगतत्वेन चातुर्विध्यम् । अर्थ-
शक्तिमूले संलक्ष्यक्रमव्यङ्ग्येऽर्थस्य मूलभूतस्य व्यञ्जकस्येत्यर्थः । स्वतो लोकतः
संभवतीति स्वतःसंभवी तत्त्वेन लोकसिद्धत्वेन कवेः प्रौढोक्त्या प्रतिभाजन्योक्त्या
सिद्धत्वेन कविनिबद्धेषु कविसमयसिद्धेष्वर्थेषु वक्तुर्विरच्यमानप्रकृतकृतिकर्तुः
प्रौढोक्त्या सिद्धत्वेन च त्रैविध्यम् । त्रिविधस्यार्थशक्तिमूलस्य प्रबन्धवाक्यपद-
गतत्वेन प्रबन्धगतत्वेन वाक्यगतत्वेन पदगतत्वेन त्रैविध्ये सति षडुत्तरा त्रिंशत्
षट्त्रिंशत् तावत्संख्याका प्रकारा यस्य स तथोक्तोऽर्थशक्तिमूलोऽनुरणनं घण्टादेः
प्रथमस्वरानन्तरभाविस्वनोऽनुरणनं तत्सादृश्यात् संलक्ष्यक्रमव्यङ्ग्यस्त्रिविधोऽप्य-
नुरणनध्वनिर्घण्टादेः स्वरानुसारी स्वनोऽनुरणनम् । व्यञ्जकानुसारि व्यङ्ग्यम् ।
तथा च साम्येन हेतुनास्य ध्वनेरप्यनुरणत्वमिति बोध्यम् । तृतीयमाह ।
उभयस्य शब्दार्थरूपस्य शक्तिर्मूलं यस्य स संलक्ष्यक्रमव्यङ्ग्यध्वनिर्वाक्यगतत्वेन
हेतुनैकविध एव । एवमुक्तरीत्या संलक्ष्यक्रमव्यङ्ग्यध्वनेरेकोत्तरचत्वारिंशत्सं-
ख्याका भेदाः । एवमुत्तरत्र समासो द्रष्टव्यः । असंलक्ष्यक्रमव्यङ्ग्यो रसादिः ।
आदिशब्देन भावादिर्विवक्षितः । तस्य ध्वनिस्तत्प्रधानं ध्वनिकाव्यमित्यर्थः ।
प्रबन्धगतत्वेन वाक्यगतत्वेन पदगतत्वेन पदैकदेशगतत्वेन रचनागतत्वेन वर्ण-
गतत्वेन च षड्विधः । प्रबन्धादिपदानां गतपदेन प्रत्येकं संबन्धः । एवमुक्तरीत्या
विवक्षितान्यपरवाच्यध्वनेरभिधामूलध्वनेः सप्तचत्वारिंशद्भेदाः । चतुर्भिरविव-
क्षितवाच्यस्य लक्षणामूलध्वनेर्भेदैः सह संख्याने प्रथममादौ शुद्धा मिश्रणव्यति-
रिक्ता एकपञ्चाशद्भेदाः । तेषां शुद्धानां प्रत्येकमेकैकस्य पदगतार्थान्तरसंक्रमितावि-
वक्षितवाच्यध्वन्यादेरेकैकेन वाक्यगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वन्यादिना
सह संबन्धे सति प्रथमभेदस्य पदगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनेः पञ्चा-
शद्भेदाः । अथ स्वस्य स्वेनापि संबन्धे एकपञ्चाशद्भेदा इति बोध्यम् । द्वितीय-
स्य वाक्यगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनेः पञ्चाशद्भेदाः । तृतीयस्य

वाक्यगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनेरेकोनपञ्चाशद्भेदाः । अनेन क्रमेण पूर्वोक्तरीत्योत्तरस्य प्रथमभेदाद्वितीयमुत्तरं तस्मादुत्तरं तृतीयम् । एवं द्वितीयादेरेकैको भेदः । द्वितीयस्य पञ्चाशदित्युक्तरीतिको भेदस्तस्य परित्यागे सति षडुत्तरा विंशतिः षड्विंशतिस्तदुत्तरं शतत्रयं तदधिकं सहस्रमिति संख्या येषां ते तथोक्ता मिश्रभेदा भवन्ति । ननु वाच्यगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनेः पदगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनेः संबन्धे यथैको मिश्रभेदस्तेनैव पदगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिसंबन्धे अन्यो मिश्रभेदस्तथा चैकपञ्चाशतो भेदानां विचार्यमाणे एकोत्तरशतपडधिकसहस्रद्वयसंख्याकमिश्रभेदसंभवे एकन्यूनताक्रमेण न्यूनसंख्याकमिश्रभेदकल्पनमनुचितमिति चेत् सत्यम् । भेदद्वयेऽपि प्रथमस्य द्वितीयेन संबन्धो द्वितीयस्य प्रथमेन संबन्ध इति संबन्धिप्रतिबन्धिनोरुच्चारणव्यत्यासमात्रं न पुनश्चमत्कारविशेषः । अतस्तेषां यथायोगं मिथोऽन्तर्भाव एवेति युक्तम् । अमुमेवाभिप्रायं व्यनक्ति । अविवक्षितान्यपरवाच्यध्वनिसंबन्धे यो भेदस्तस्मिन् भेद एव विवक्षितान्यपरवाच्यस्याविवक्षितवाच्येन संबन्धोऽन्तर्भूतः । पृथग्भूतो न भवति । अनेनैव क्रमेणोक्तरीत्या वस्तुध्वनेरलंकारध्वनिना संबन्धेन भेदोऽपि । अपिशब्दः समुच्चयार्थः । अलंकारध्वनेर्वस्तुध्वनिसंबन्धान्न पृथग्भूतः किं तु तत्रान्तर्भूत इत्यर्थः । विषयव्याहृत्यर्थमुक्तत्वान्न पुनरुक्तार्थता । इत्युक्तरीत्या पूर्वपूर्वस्य वाक्यगतार्थान्तरसंक्रमितवाच्यादेरुत्तरोत्तरसंबन्धे पदगतात्यन्ततिरस्कृतविवक्षितवाच्यादिसंबन्धे एकैकभेदस्य द्वितीयध्वन्यादेर्न्यूनता न्यूनसंख्याकता ज्ञेया । तस्य पूर्वोक्तस्यापि मिश्रणस्य संकीर्णध्वनेस्त्रीणि रूपाणि यस्य तेन संकरेणैकरूपया संकरवदुपाधिभेदाभावादेकविधया संसृष्ट्या च पुनर्भूयश्चतुर्धा चतुर्विधं योजने संबन्धे सति चतुरुत्तरं पच्छतत्रयं तदधिकानि पञ्चसहस्राणि भेदाः । संकरस्य त्रिरूपत्वं कथमित्याकाङ्क्षायामाह । अनुगृह्यत इत्यनुग्राह्यमनुप्राण्यम् । अनुगृह्णातीत्यनुग्राहकमनुप्राणकं तयोर्भावोऽङ्गाङ्गिभावः । संदेह इति लक्षणं नाम यस्य संकरस्य स च । 'लक्षणं नाम्नि चिह्ने च' इति विश्वः । एकव्यञ्जकेऽनुप्रवेशश्च । एते पूर्वोक्तास्तु संकरस्य भेदाः ।

न्यूनाधिकसंख्याव्यवच्छेदार्थमुक्तामेव संख्यां गणितमर्यादया क्रोडीकृत्याह । शुद्धा इति । अङ्कानां वकतो गतिरिति गणितशास्त्रम् । पुस्तके विलेखनस्य व्यत्यासेन अङ्का निक्षेपणीयाः । उच्चारणं तु लौकिकरीत्या शुद्धा असंकीर्णा ध्वनि-

भेदाश्चन्द्र ( १ ) शराः ( ५ ) । तथा च प्रथममेकं पङ्कं लिखित्वा पश्चात् पञ्च पङ्कं विलिख्य कतुरील्योच्चारण एकपञ्चाशद्भेदा इति सिद्धं भवति । एवमुत्तरत्रापि द्रष्टव्यम् । मिश्राः संकीर्णा ऋतु ( ६ ) नेत्र ( २ ) अनल ( ३ ) इन्दु ( १ ) १३२६ । संसृष्टेः संकरस्य चायत्तास्तु तदधीनास्तु तत्प्रयुक्तभेदवन्त इत्यर्थः । ध्वनयस्तु अब्धिः ( ४ ) खं शून्यं बिन्दुरित्यर्थः अग्निः ( ३ ) शराः ( ५ ) ५३०४ एतत्संख्याका भेदाः सिद्धा इत्यर्थः । तत्र ध्वनिभेदेषु शुद्धानामसंकीर्णानामेकपञ्चाशतो भेदानां नामधेयानि कथ्यन्ते । प्रतिपत्तिसौकर्यार्थमित्यर्थः । पदगतेत्यादिना ध्वनिरित्यन्तेन । तत्रार्थविचारो नास्तीति सर्वं विस्पष्टम् । नाम्नामप्येकपञ्चाशद्भेदानां मध्ये कतिपयोदाहरणप्रदर्शनेऽपीह कुशलानां भेदान्तराणि सुबोधानीत्यभिप्रायेणाह । तत्र ध्वनिषु दिङ्मात्रमल्पमात्रमुदाह्रियते न त्वेकपञ्चाशद्भेदा इति भावः ।

चतुर्विधेष्वविवक्षितवाच्यध्वनिषु पदवाक्यगतत्वादिभेदान् विहायार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिमुदाहरति । मूर्धान इति । हे मूर्धानो यूयमास्माका अस्माकं संबन्धिनः । किमिति केन हेतुना । औन्नत्यमुन्नतत्वमिच्छथ इति । मनसि वदन्त इति शेषः । प्रतिपार्थिवाः प्रतापरुद्रस्य प्रणताः प्रणाममकुर्वन् । अत्रास्माका इत्यस्मत्संबन्धिरूपं वाच्यम् । तत्प्रकृत्या सिद्धतयानुपपन्नं सदस्मदर्थेन सहैव राजसु सर्वदैन्यविश्रान्तिभूमिस्वरूपार्थान्तरे संक्रमति । तस्मादजहल्लक्षणामूलोऽर्थान्तरसंक्रमितवाच्यध्वनिः । व्यङ्ग्यं तु प्रतापरुद्रवैरिणां तदग्रे गरुडाग्रे पन्नगानामिव युद्धवैमुख्यम् । तत् सर्वं मनसि निधायाह । अत्रेति । अत्रोदाहरणे सर्वदैन्यस्य विश्रान्तिभूमयो विश्रामस्थानभूता दीनतयेत्यर्थः । वयमीदृशानां दीनतमानामस्माकं संबन्धिन इति रीत्या । अर्थान्तरे दैन्यरूपान्यार्थे संक्रमितं वाच्यमस्माकत्वरूपं यस्य तस्य भावस्तत्ता ।

द्वितीयमुदाहरति । विशदिमेति । विशदिम्ना धावल्येन विलिप्तं कृतलेपनं व्याप्तमित्यर्थः । वियदाकाशं यैस्ते तथोक्ताः । धवलिम्ना परिपूरिता अखिला आशान्ता दिगन्ता यैस्ते । गौराः शुभ्राः काकतीन्द्रस्य यशसां पूराः परम्परा विहरन्ति विजृम्भन्ते । अत्र विलिप्तेत्यत्र मूर्तद्रव्योचितस्य विलेपनस्यामूर्ते वियत्यसंभवात् स्वार्थपरित्यागेनोपरञ्जनातिशयस्याकाशे लक्षितत्वादत्यन्ततिरस्कृतवाच्यत्वमिति मनसि निधायाह । अत्रेति । अत्र विशदिमविलिप्तवियदिति-

स्खल अत्यन्ततिरस्कृतमतिन्यग्भूतं वाच्यं विलेपनरूपं यस्य तत्तथम् । विषयभेदा-द्विशदिमधवलिम्नोर्न पौनरुक्त्यम् । अनेन पूर्वोक्तेनैव क्रमेण वाक्यगतत्वेनाप्यु-दाहार्यम् । एतेनोदाहृतं पदगतमिति सूचितम् ।

अर्थशक्तिमूलानां ध्वनीनां बाहुल्यात् तानेवादावुदाहरति । अब्दानिति । काकतीयस्य रिपुस्त्रिय ऋतून् विनाब्दान् संवत्सरान् । 'संवत्सरो वत्सरोऽब्दो हायनः' इत्यमरः । शुक्लपक्षान् विना मासान् रात्रीर्विना तिथीन् दिवसांश्चेत्यर्थः । आकाङ्क्षन्ते । अत्र वाच्यार्थस्य व्यङ्ग्यातिशायित्वं विशदयति । अत्र ऋतुप्र-भृतीनां मदनस्योद्दीपकत्वात् तेषामृतुप्रभृतीनामभावो रिपुस्त्रीभिराकाङ्क्ष्यते प्रार्थ्यत इति प्रतीयते । अत्र ऋत्वभावाकाङ्क्षाया वाच्यत्वम् । ऋतूनामुद्दीपकत्वं व्यङ्ग्यम् । तेन व्यङ्ग्येन तासां स्त्रीणां प्रियवियोगरूपं वस्तु व्यज्यते । अत्र वस्तुशब्दो वाच्यार्थयोरन्यतमार्थवाचकः । अनेन प्रियवियोगरूपवस्तुना प्रता-परुद्रस्य सर्वे शत्रवो निहता इति प्रतीयते इति वाच्याद्वाच्यार्थादतिशयः । व्यङ्ग्यार्थस्येति शेषः । इदमेव वस्तूद्दीपकवस्तुभेदेन भिन्नमित्यभिप्रायेणाह । तथेति । तथा प्रियविरहेण विधुराः कष्टाः शत्रुस्त्रियः कतिपयेषु वत्सरेषु जीवि-ताशया प्रथममादौ ऋतूनामभावं वाञ्छन्ति । अनन्तरं तान् संवत्सरान् गम-यितुं नेतुमशक्ताः कतिपयमासेषु प्राणान् धारयितुमुद्युक्ताः सत्यो ज्योत्स्नावतां पक्षाणां विनाशं वाञ्छन्ति । अनन्तरं मासानप्यपनेतुमपारयन्त्योऽसमर्थाः कतिपय-तिथिषु जीविताशया रात्रीणामप्यभावमेव समभिलषन्तीति रीत्या बहुवस्तुना ऋत्वाद्युद्दीपकबहुवस्तुना बहुवस्तुभेदप्रयुक्तत्वाद्बहुविधं त्रिविधमिति यावत् । ज्योत्स्नारात्रिरूपोद्दीपकसामग्र्यास्त्रिविधत्वादिति भावः । वस्तु शत्रुनिहतिरूपं व्यज्यते । ऋत्वाद्यभावाकाङ्क्षारूपेण वस्तुना वाच्यार्थेन वस्तुना वस्तुध्वनिरिती-दमुत्तमं काव्यम् ।

दृष्ट्वेति । काकतिवीररुद्रनृपतेर्जगन्ति व्याप्नोतीति तथोक्तां कीर्तिं दृष्ट्वा शंभुः शिवः । अत्र कीर्तौ वस्तुं स्नातुं वाञ्छति । अत्रेति सर्वत्र संबध्यते । लक्ष्मी-पतिः श्रियः पतिः शयितुं शयनं कर्तुं काङ्क्षति । दिव्यानां नारदादिमुनीनां गणः स्नातुं स्नानं कर्तुं धावति त्वरया गच्छति । वार्धयः सागराः संवर्धितुं वृद्धिं गन्तुं चेष्टन्ते यतन्ते । अभ्रमुरैरावतभार्यापि सविलासं यथा तथा शनैः स्प्रष्टुमी-हते इच्छति । 'इच्छाकाङ्क्षास्पृहेहातृड्वाञ्छालिप्सा' इत्यमरः । अत्र शिवादीनां

क्रमेण कैलासक्षीराब्धिमन्दाकिनीचन्द्राभ्रमातङ्गभ्रान्तिरिति भ्रान्तिमदलंकारो व्यज्यत इत्याह । अत्रेति । अत्र हरस्य कैलासभ्रान्तिर्हरेः क्षीरार्णवभ्रान्तिरिति रीत्या भ्रान्तिमदलंकारो व्यज्यते । नन्वत्रालंकारस्य व्यङ्ग्यत्वं तस्य प्राधान्ये सत्यलंकार्यत्वमेव न ध्वनिकाव्यत्वमिति चेन्न । ब्राह्मणस्य श्रमणत्वे तस्य श्रमण इति व्यवहारे ब्राह्मणत्वहानिर्यथा न संभवति तथा प्रधानभूतव्यङ्ग्यार्थस्यालंकारव्यपदेशे न ध्वनिकाव्यत्वभङ्ग इति । एवमन्यत्राप्यलंकारध्वनौ द्रष्टव्यम् ।

प्रतापेति । रणे सद्यः समुद्यता स्रवता रुधिरेणारुणश्रीर्यस्य स प्रतापरुद्रस्य कृपाणः खड्गो रोषेण कषायितस्यारुणीकृतस्य काल्याः काल्याख्यदेवतायाः कटाक्षस्य दृष्टेर्विजृम्भितानि विजृम्भमाणानि । भावे क्तः । आलम्बते प्राप्नोति । अत्रालम्बत इति वाच्येन निदर्शनालंकारेण सकलरिपूणां क्षयो नाशः क्षणात् कृत इति वस्तु व्यज्यत इत्यलंकारेण वस्तुध्वनिः ।

काकतीयेति । काकतीयविभोः कीर्त्तिरेव पुण्डरीकं सिताम्भोजं तस्मिन् विजृम्भिते विकसिते सति तमालवच्छ्यामलं नभो मधुकरस्य क्रीडां शोभां धत्ते । अत्र कीर्त्तिपुण्डरीकं मधुकरक्रीडां धत्त इति निदर्शनालंकारेण वाच्येनाश्रयाश्रयिणोराधाराधेययोरनानुगुण्यमानुगुण्याभावस्तदेव रूपं यस्य सोऽधिकालंकारो व्यज्यते । आनुगुण्याभावः कथमित्यत्राह । आश्रयस्य कीर्त्तिपुण्डरीकस्य वैपुल्यं भ्रमरेण सह सादृश्यप्रतिपादनात् नभसोऽल्पत्वं प्रतीयते । अत आनुगुण्याभावादधिकालंकारप्रतीतिरिति भावः । एषूदाहृतध्वनिषु स्वतःसिद्धार्थस्य शक्तिर्मूलं यस्येति तत्त्वम् ।

अथ कविप्रौढोक्तिसिद्धार्थशक्तिमूलेषु वस्तुना वस्तुध्वनिमुदाहरति । श्रावं श्रावमिति । खुरलिर्मल्लादिसाधनशाला । भाषान्तरे सा मुगरली । तत्र विहरतः कार्त्तिकेयस्य स्कन्दस्य इषुणा शरेण जातं यच्छिद्रं रन्ध्रं तस्य छद्म कपटं यस्य तस्य श्रवणस्य श्रोत्रस्य पदव्यां मार्गे चरतीति तथोक्ताम् । कुतः । चारणानामोघैर्वृन्दैः शश्वद्गीतां भुवनानां महितां पूज्यमानाम् । वर्त्तमाने क्तः । काकतीयस्य कीर्त्तिं श्रावं श्रावं पुनः पुनः श्रुत्वा क्रौञ्चक्ष्माभृत् चक्रवालाचलो महतो विपुलान् विस्मयाच्चिरकं निभृतमङ्गं यस्य स तथोक्तो भवति । पुरा किल परशुरामस्पर्धया स्कन्दो बाणेन क्रौञ्चाद्रिं ददारेति प्रसिद्धिः । अत्र क्रौञ्चाद्रेर्निश्चलाङ्गत्वे विस्मयादिति हेतोरुत्प्रेक्षणादुत्प्रेक्षाव्यञ्जकाप्रयोगाद्गम्यता । एवमलंकारप्रतीतावपि क्रौञ्च-

क्ष्माभृदिति वस्त्वेव कीर्तिस्थावरविस्मयकारित्वरूपं वस्तु व्यनक्तीति वस्तुना वस्तुध्वनिरेवेति तात्पर्येणाह । अत्रेति ।

वीररुद्रेति । रणे जयलक्ष्म्या जयश्रिया कान्तया च वृतान् वीररुद्रस्य भटान् योधान् दृष्ट्वा कानने कण्टकिद्रुमाः कण्टकयुक्तद्रुमा अरिवधूनां केशान् । प्रतापरुद्रस्येति शेषः । कर्षन्ति । आलिङ्गनार्थमिति भावः । अत्र जयश्रिया समालिङ्गितान् वीररुद्रभटान् दृष्ट्वा समदना इव मदनयुक्ता इव कण्टकिद्रुमाः शत्रुवधूकेशान् कर्षन्तीति वाच्येन वस्तुना समदनत्वोत्प्रेक्षा व्यज्यत इत्यलंकारध्वनिः ।

अपसरतीति । शिथिलो नष्टो मानः । 'स्त्रीणामीर्ष्याकृतः कोपो मान इत्यभिधीयते' इत्युक्तलक्षणो यस्यास्तस्या वध्वा लज्जाया मनो हरतीति तथोक्ते दयिते पत्यौ सविधे समीपं गते सति आत्मनः स्वस्य ग्रहणे यद्भयं तेनैव सखीभिः समं सहापसरति । सख्यो लज्जा च गतेत्यर्थः । अत्रोत्प्रेक्षया भयेनेवेति हेतूत्प्रेक्षयालिङ्गनमादिर्यस्य तत्तथोक्तं वस्तु व्यज्यत इत्यलंकारेण वस्तुध्वनिः ।

अभयमिति । वनमरण्यम् । अभयं रक्षणं याचमानानां काकतीयेन्द्रस्य विद्विषां रिपूणां संबन्धि संरक्षां शाखानां प्रकम्पनैर्नाङ्गीकरोतीव । यथा शिरःकम्पनरूपसंज्ञया नाङ्गीकारं प्रकटयति तद्वदिति भावः । अत्र नाङ्गीकरोतीवेत्युत्प्रेक्षया प्रतापरुद्रशत्रुभ्यो रक्षणं कर्तुं वनमपि बिभेतीवेत्युत्प्रेक्षा व्यज्यते इत्यलंकारेणालंकारध्वनिः । यद्यप्यभयमिति श्लोको वस्तुनालंकारध्वन्युदाहरणानन्तरमेवोद्देशक्रमेण व्याख्येयस्तथापि दृश्यमानमूलपुस्तकलेखनक्रमेण व्याख्यातो रत्नापणे व्यक्त एवेति वेदितव्यम् ।

कविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलामुदाहरति । यथा तथेति । नायकं प्रति दूतीवाक्यमेतत् । आर्या मत्स्वामिनी यथा तथा वा मादृशावस्था वा भवतु । तदवस्थाया अल्पत्वानल्पत्वविचारो मा भवत्वित्यर्थः । हे नरनाथ शशिनश्चन्द्रस्य रक्षणं कुरु । तस्य का बाधेत्यत्राह । यद्यस्मात् कारणात् तयार्यया तं चन्द्रं मषीकर्तुं दग्धुं कटाक्षा एवोल्का निर्गतज्वाला आज्ञप्ताः प्रेषिता इत्यर्थः । चन्द्रमषीकरणात् पूर्वमेव त्वयागन्तव्यमित्यर्थः । अत्र विरहेणार्ता पीडिता आर्या चन्द्रिकामसहमाना सती रोषज्वलितया कटाक्षोल्कया चन्द्रं मषीकरोति स रक्षणीय इत्यनेन वस्तुना वाच्येनेतः परं संजीवितुं प्राणान् धारयितुमशक्ता अधुनैव त्वया समागन्तव्यमिति व्यज्यत इति वस्तुना वस्तुध्वनिः ।

क इति । इदं पद्यं चक्रवालप्रतापरुद्रयशसोः प्रश्नोत्तररूपम् । तत्रादौ चक्रवालस्य प्रश्नः । त्वं कः शुभ्रं धवलमखिलाङ्गं यस्य स सन् चरसि । ततः कीर्तेरुत्तरम् । ननु हे चक्रवाल । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः । अहमिति शेषः । वीररुद्रस्य संबन्धि यशो वर्त्ते संचरामि । दीप्तः प्रकाशमानो देहो यस्य स ते तव परिसरे स्फुरति प्रकाशते । प्रकाशमानः क इति गिरिप्रश्नः । मम सुहृत् मित्रम् । एकजन्यत्वादिति भावः । तस्य राज्ञः प्रतापः प्रभावः । 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः । अवशिष्टं वाक्यं प्रच्छाद्य स्वस्वरूपमिति शेषः । अलं प्रच्छादनं न कर्तव्यमित्यर्थः । स्फुरद्भिर्विकसद्भिः कुमुदैः सरसिजैश्च । वो युष्माकम् । पूज्यत्वबुद्ध्या बहुवचनमिति ज्ञेयम् । स्वरूपं ख्यापितमनुमितमित्यर्थः । हे सोमार्कौ चन्द्रसूर्याविति संबोधनम् । वां युवयोः स्वागतं शोभनागमनमिति काकुः । स्वागतं किमित्यर्थः । स्वस्वरूपं कथयति । अवधीति । वामवधिगिरिश्चक्रवालाचलो निर्गतं तमो यस्मात् स निस्तमस्को विहितः कल्पितः कृतः । सूर्यप्रकाशरहितो बहिर्भागेऽपीतिभावः । अनेन प्रश्नोत्तररूपेण वस्तुना वाच्येनात्र प्रतापरुद्रयशःप्रतापयोः सोमार्कसादृश्यप्रतीतेरुपमालंकारो व्यज्यत इति वस्तुनालंकारध्वनिः ।

पश्यतेति । इदं वधूमुदिश्य सखीनां सल्लापवचनम् । हलेति सखीसंबोधनम् । 'हञ्जे हण्डे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः । तथारूढस्तेन प्रकारेणोत्पन्नोऽत एव निर्भरो बध्वा नायिकाया मानो नृपतेः समागमेन यः संभ्रमस्तन्द्रा तेन संजातं भयं यस्य स तथोक्त इवापसरति निर्गच्छतीति । अत्र संजातभय इवेत्युत्प्रेक्षया प्रियप्रार्थनं विनैव मानिन्या मनः प्रसन्नं कोपरहितमिति विभावनालंकारः कारणं विना कार्योत्पत्तिरूपो व्यज्यत इत्यलंकारेणालंकारध्वनिः ।

अप्राप्येति । इदं नायकं प्रति सखीवचनम् । हे नाथ नायक कान्ताभिर्वृतस्य ते तव सेवायामवसरमप्राप्य अनेकप्रासङ्गतत्वात् तवेति भावः । श्यामा नीला यौवनवती च । वधूस्तव कीर्तिं सेवमानेव सर्वेष्वङ्गेष्ववयवेषु पाण्डुरा धवला भवतीति शेषः । धवलकीर्तिसेवनादङ्गधावल्यमिति भावः । अत्र सेवमानेवेत्युत्प्रेक्षया सर्वथा स्वीकार्यत्वमङ्गीकार्यत्वमादिर्यस्य तद्रूपं वस्तु व्यज्यते इत्यलंकारेण वस्तुध्वनिः । एवं प्रबन्धादिगतत्वेन यथासंभवमुदाहरणानि द्रष्टव्यानि । ग्रन्थान्तरेष्विति भावः । कुतोऽवशिष्टा ध्वनयो नोदाहियन्त इत्यत्राह । विस्तरेति ।

'स तु शब्दस्य विस्तरः' इति भावः । इति कोशात् शब्दप्रपञ्चात् भयं तस्माद्धेतोरिह प्रबन्धे नोदाहृतानि । उक्तोदाहरणेषु सावधानचित्तानामुदाहरणान्तरगम्यत्वस्य सुलभत्वात् पुनस्तदुपादानं ग्रन्थगौरवमेवावहेदिति विस्तरशब्दप्रयोक्तुस्तात्पर्यम् ।

तथार्थशक्तिमूलध्वनिर्निरूप्यते । स च स तु शब्दशक्तिमूलध्वनिर्वस्तुगतत्वेनालंकारगतत्वेन च द्विविधः । स्वोक्तौ वृद्धसंवादमाह तथा । यथास्माभिरुक्तं च पूर्वैरिति शेषः । यत्र श्लोके शब्दालंकारोऽथ अथवा वस्त्वेव वस्तुना अवभासते व्यज्यते प्रधानत्वेन शब्दप्रधानत्वेन । एतेनार्थस्याप्राधान्यम् । शब्दशक्त्या उद्भव उत्पन्नः स ध्वनिर्द्विधा वस्तुध्वनिरलंकारध्वनिरिति द्विविधो भवतीत्यर्थः ।

अलंकारध्वनिमुदाहरति । एष इति । नायिकां प्रति सखीवाक्यम् । एष प्रकृतः प्रतापरुद्रः पुरोवर्ती राजा नृपतिश्चन्द्रश्च । त्वं श्यामा खलु यौवनमध्यस्था खलु रात्रिश्च । चेत् किमित्याकाङ्क्षायामाह । द्वयोर्युवयोः समागमः संगतिः । युज्यत इति शेषः । तर्हि किं न युज्यत इत्याकाङ्क्षायामाह । किं पुनः किं तु प्रकृष्टो दोषो मानादिस्तस्य कथा वार्तापि न दृश्यते प्रदोषो रजनीमुखं तस्य कथा प्रसक्तिरपीत्यन्यत्र । एतत् खलु प्रदोषादर्शनमेव आश्चर्यं चित्रम् । चन्द्ररात्र्योः समागमे रजनीमुखरूपप्रदोषप्रसक्तिरस्ति । राजश्यामयोर्युवयोः समागमे प्रदोषप्रसक्तिर्नास्तीति चित्रमिति भावः । अत्र श्यामराजशब्दवाच्ययोः कान्तानृपयोरप्रकृतनिशाचन्द्राभेदाध्यवसायेन प्राप्तस्य प्रदोषस्य रजनीमुखरूपस्य प्रतिषेधेन विरोधः प्रतीयते । तद्द्योतकमाश्चर्यपदं परिहारस्तु दोषनिषेधादिति विरोधाभासः । अत्र करणेन प्रकृतत्वेन कान्तानृपवाचकाभ्यां श्यामाराजशब्दाभ्यां निशाचन्द्रप्रतीतेर्हेतोरुपमा व्यज्यते । अनेकार्थपदगुम्फनमहिम्ना कवेर्विवक्षितमेवार्थान्तरं प्रतीयते । तस्यासंबन्धत्वव्यवहाराय प्रकृतेनौपम्यं कल्पनीयम् । तेन व्यङ्ग्यस्योपमालंकारस्य श्लिष्टशब्दसद्भावे प्रतीतिस्तदभावे त्वप्रतीतिरिति हेतोरयं ध्वनिः शब्दशक्तिमूल इति भावः ।

वस्तुध्वनिमुदाहरति । कान्तारेति । हे नरेश्वराः कान्तारवासेनारण्यवासेन संतप्ताः संतापं गताः । यूयमिति शेषः । हितादाप्तात् इत मत्त इत्यर्थः । संशृणुध्वं हितोपदेशमिति शेषः । अधुना राजपादसेवां प्रतापरुद्राङ्घ्रिसेवां चन्द्रकिरणसेवां चेत्यन्यत्र । कुरुध्वं चन्द्रकिरणसेवायाः संतापनिवारकत्वात् सा कर्तव्या इत्यन्यो भावः । प्रतापरुद्रं शरणं प्राप्य वनवासजनितसंतापं त्यजतेत्येको भावः ।

अत्र राजपादसेवामिति शब्दशक्त्या प्रकृतस्य प्रतापरुद्रस्य प्रतीतिः प्रकरणात् प्रकृतत्वाज्जायते। अनेनार्थेन प्रतापरुद्रसेवा कर्त्तव्या। अरण्यवासेन किं किमर्थं संताप इति वस्तु व्यज्यते।

उभयशक्तिमूलध्वनिमुदाहरति। जिष्णुरिति। भुजस्तम्भे जृम्भमाणमद्भुतं तारतम्यादिना विचित्रं पर्वतेष्वप्यकुण्ठितत्वाद्विचित्रमित्यन्यत्र। आयुधं खड्गादि वज्रायुधं च यस्य स एष प्रतापरुद्रो जयशील इन्द्रश्च। अतो हे क्ष्माभृतो राजानः पर्वताश्च निजपक्षस्य युद्धमेव कुर्म इति स्वगतस्य स्वगरुतां चेत्यन्यत्र। विजृम्भितं जृम्भणं मुञ्चत त्यजत। वज्रिणः पुरतः पर्वतगरुद्विजृम्भणवत् प्रतापरुद्रस्य पुरतो भवतां विजृम्भणं व्यर्थमिति भावः। तथा चोपमा व्यङ्ग्यम्। तदुभयशक्तिमूलमित्याह। अत्रेति। क्ष्माभृत इत्यादिषु शब्दशक्तिमूलता। क्ष्माभृदादिशब्दान् विहाय नृपादिपदप्रयोगे अन्यार्थप्रतीतिर्न भवति। एवं चौपम्यं न प्रतीयते तत्प्रयोगे प्रतीयते। तस्माच्छब्दशक्तिमूलत्वमिति भावः। भुजस्तम्भे विजृम्भमाणे त्वित्यत्र तत्सर्वं विहाय 'करस्तम्भविलसच्चित्रहेतिकः' इति प्रयोगेऽप्यन्यार्थप्रतीतेरर्थस्यैव शक्तित्वादर्थशक्तिमूलत्वमिति भावः।

एवं संलक्ष्यक्रममुदाहृत्यावशिष्टमसंलक्ष्यक्रमव्यङ्ग्यमुदाहरति। असंलक्ष्येत्यादिना। असंलक्ष्यक्रमं व्यङ्ग्यं यस्य स रसादे रसभावादेर्ध्वनिः। वृद्धसंवादमाह। तथा चेति। शृङ्गारतिलके तथा अस्मदुक्तरीत्या। उक्तं च रसादी रसभावादियोऽलंकारस्तस्माद्भिन्नः। अक्रमोऽसंलक्ष्यक्रमो रसाः शृङ्गारादयः। भावास्तदाभासाः रसाभासा भावाभासाश्च भावशान्तिश्चादिर्यस्य ध्वनेः स ध्वनिः। आदिशब्देन भावोदयादि गृह्यते। अलंकार्यमलंकारार्हं काव्यमित्यर्थः। तत्तया कायस्वरूपेण स्थितः। रसादीनामङ्गत्वे अलंकारत्वं प्रधानत्वे काव्यत्वमिति भावः। रसभावानामुदाहरणस्य प्रपञ्चो विस्तरो रसप्रकरणे भविष्यति। तत्रावश्यकत्वादत्र विसृष्टमिति भावः। एवं चोत्तमकाव्यं व्यङ्ग्यप्रधानं चतुरुत्तरशतत्रयाधिकपञ्चसहस्रभेदभिन्नमिति बोध्यम्।

अथ मध्यमकाव्यनिरूपणं प्रतिजानीते। गुणीभूतेति। गुणीभूतमप्रधानं वाच्यानतिशायि व्यङ्ग्यं यत्र तद्गुणीभूतव्यङ्ग्यं काव्यं मध्यमम्। तन्मध्यमकाव्यम्। अष्टौ विधा यस्य तदष्टविधम्। पूर्वशास्त्रमनुवदति काव्यप्रकाशे तथा

उक्तं च। अगूढमिति। अगूढं यत्र व्यङ्ग्यं शीघ्रं प्रतीयते तत् काव्यमगूढम्। यत्रापरस्य रसादे रसादिरङ्गं भवति तदपरस्याङ्गम्। वाच्यस्य वस्त्वादेर्या सिद्धिस्तस्या यदङ्गं तद्वाच्यसिद्ध्यङ्गम्। यत्र व्यङ्ग्यं विलम्बेन प्रतीयते तदस्फुटम्। यत्र वाच्यार्थे व्यङ्ग्यार्थे च वाक्यविश्रान्तौ संदेहस्तत् संदिग्धम्। वाच्यार्थव्यङ्ग्यार्थयोर्यत्र तुल्यता तत्तुल्यप्राधान्यम्। काका काकुस्वरेण यत्र व्यङ्ग्यमाक्षिप्यते तत् काकाक्षिप्तम्। यत्र वाच्यस्यैव चारुतातिशयो न व्यङ्ग्यस्य तदसुन्दरम्। एवमष्टविधम्। व्यङ्ग्यस्य द्रुतविलम्बितप्रतीतौ मध्यमकाव्यम्। मध्यप्रतीतावुत्तमकाव्यमिति तात्पर्यम्। अगूढस्य मध्यमकाव्यत्वं सहेतुकमाह। कामिनीति। कामिनीकुचकलशवदुत्तरीयावृतस्त्रीस्तनवत् गूढस्यैव चमत्कारित्वादिति। मनोविकारजन्योऽनुकारवाचकश्रमदेव चमत्कारस्तत्कारित्वाद्धेतोरगूढे व्यङ्ग्ये मध्यमकाव्यमिति।

उदाहरति। औन्नत्यमिति। औन्नत्यं त्वदुन्नतत्वं वर्ण्यते यदि मयेति शेषः। शिखरिणो गिरयो नीचैः कृता वामनीकृताः। पराजिता इत्यर्थः। त्वदौन्नत्यस्य ततोऽप्यधिकत्वादिति भावः। गाम्भीर्यं कीर्त्यते यदि जलधयो गाधीकृता उत्तानीकृताः सन्तः क्षुभ्यन्ति क्षोभं यान्ति तत् तस्मात् गिरिक्रोधाद्धिक्षोभरूपाद्धेतोस्त्वां वर्णयितुं बिभेमि। भीतिपक्षं विहाय तदभावपक्षमवलम्बते। यदि चेति। यद्वा गुणा एव रत्नानि तेषां रोहणगिरे उत्पत्तिस्थानभूतपर्वत श्रीवीररुद्रप्रभो त्वत्पार्श्वे अगस्त्यो जातः कुम्भसंभवो भवन् स्थितोऽस्मि। अत्रागस्त्यो वामनीकृतविन्ध्यः परिपीतसमुद्र इति प्रसिद्धिः। तथा च तत्रेतुत्वादगस्त्यस्य कुम्भसंभवो भूत्वा स्थितोऽस्मि। तत्रापि त्वत्पार्श्व इत्यनेन तेभ्यो न बिभेमीति व्यङ्ग्यार्थो वाच्यार्थप्राय इत्यगूढमित्याह। अत्रेति। नन्वत्र कवेर्विन्ध्यमात्राभिभाविनः कुम्भसंभवस्य स्वरूपप्राप्तावपि सकलपर्वतेभ्यो भयनिवृत्तिः कथमिति चेत् सत्यम्। अखिलपर्वतशायिविजृम्भणस्य विन्ध्यस्याभिभवेनैव सर्वेऽपि पर्वता अभिभूता एवेति कवेरगस्त्यत्वे तन्निवृत्तेरापादयकत्वादिति।

द्वितीयमुद्दिशति। अपरस्याङ्गमिति। तल्लक्षणमाह। यत्रेति। यत्र काव्ये रसादेर्भयानकादे रसादिः शृङ्गारादिरङ्गं साधनं भवति तदपि गुणीभूतव्यङ्ग्यमेव। उदाहरति। वीतेति। काकतिमहीनाथ एव स्मरो मन्मथस्तेनोद्वेजिताः पीडिताः 'उद्वेगस्तिमिते क्लेशे भये मन्थरगामिनि' इति विश्वः। भूपाः शत्रुभूपा व्रीडा त्रपा यस्मिन् तत्। एकत्र वैरत्वर्यादन्यत्र प्रागल्भ्यादिति भावः। अपास्तो निरस्तो

मानः कुलाद्यभिमान ईर्ष्याकृतकोपश्च यस्मिंस्तत्। अत्रापि पूर्ववदेव हेतुद्वयं बोध्यम्। विकृतस्वरो विस्वरस्तस्य भावो वैस्वर्यम्। उद्यद् वैस्वर्यं गद्गदभाषित्वं यस्मिन् कर्मणि तत्। आविर्भवन् स्वेदो यस्मिन् कर्मणि तत्। निर्भरः पूर्णो गात्रवेपथुरङ्गकम्पो यस्मिन् कर्मणि तत्। मिलन्ती मूर्छा शून्येन्द्रियत्वं यस्मिन् कर्मणि तत्। गलन्बाष्पो यस्मिन् कर्मणि तद्गलद्बाष्पकम्। संजातः प्रलयो नष्टचेष्टता यस्मिन् कर्मणि तत्। इत्येतदष्टकर्मालिङ्गनक्रियाविशेषणम्। एकत्र स्वेदादयः साध्वसदुःखाशयादिजन्या अन्यत्र सात्त्विकभावाः। तद्वक्ष्यति कविरेव वक्ष्यति। 'स्तम्भः प्रलयरोमाञ्चः स्वेदो वैवर्ण्यवेपथू। अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः॥' इति। भीत्या भयेन स्त्रीलिङ्गाक्षिप्तया कयाचित् प्रौढाङ्गनया च। तद्यथा मुग्धामध्यमयोः प्रियकर्मकालिङ्गनासंभवादिति भावः। समालिङ्गिताः सम्यग्युक्ताः। अन्यत्र गाढालिङ्गिताः सन्त इत्यर्थः। शैलगुहासु। अत्रापिशब्दाध्याहारोऽर्थसौकर्याल्लभ्यते। शैलगुहास्वपि विजनं जनरहितं देशं यान्ति। एकत्र प्राणपरित्यागार्थमन्यत्र रन्तुमिति भावः। अत्र प्रस्तुतक्रियाविशेषणसामर्थ्यादप्रस्तुतनायकवृत्तान्तप्रतीतेः समासोक्तिः। अत्र भयानकरसस्य प्रधानत्वादङ्गित्वं तस्य प्रतीयमानः शृङ्गाररसोऽप्रधानत्वादङ्गं भवतीत्याह। अत्रेति। शृङ्गाररसस्य भयरसं प्रत्यङ्गत्वं भयरसाङ्गत्वम्। भयानकरसस्य प्राधान्यमङ्गित्वम्। भयानकरसस्य प्राधान्यं कुत इत्यत्राह। अत्र श्लोके प्रतापरुद्रस्याधिक्यं प्रतिपाद्यं तच्च प्रतिपादनं च शत्रूणां भयप्रतिपादनेनैव न तु शृङ्गाररसेनेत्येवकारार्थः। संभवतीति हेतोः प्राधान्यमिति पूर्वेणान्वयः।

तृतीयमुदाहरति। कराल इति। करालस्तीक्ष्णः काकतीन्द्रस्य करवालः खड्ग एव नवाम्बुदो नवमेघ उग्रमुज्ज्वलं द्विषां प्रतापमेव ज्वलनमग्निं धारा कोटिः सैव जलधारेति श्लिष्टरूपकम्। शमयति नाशयतीत्यर्थः। अत्र जलधारारूपो व्यङ्ग्यार्थः करवालनवाम्बुद इति वाच्यस्य रूपकस्य निर्वाहक इति वाच्यसिद्ध्यङ्गम्। ननु करवालो नवाम्बुद इवेत्युपमितसमासः कथं न भवतीति चेदुच्यते। धारेत्यत्रोपमितसमासस्य वक्तुमशक्यत्वेनोत्तरपदार्थप्रधानरूपरूपकसमासाश्रयणे जलधारायाः प्राधान्यम्। तथा च तदनुसारेण मेघस्य प्राधान्यसिद्ध्यर्थं तत्रापि रूपकमेवोचितम्। ननु 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' एवोपमितसमासाङ्गीकारेणातः कराल इति समानधर्मस्य सत्त्वात् तस्यैव रूपकनिर्वाहकत्वं

न तु जलधारारूपव्यङ्ग्यार्थस्येति चेत् सत्यम्। मध्यमकाव्यनिरूपणप्रस्तावे व्यङ्ग्यार्थस्य जलधारारूपस्य प्रतिपाद्यमानरूपकनिर्वाहकत्वे कविविवक्षा न तु समानधर्मस्य तन्निर्वाहकत्वे। कविविवक्षानुसारेणैवोदाहरणं द्रष्टव्यमिति शब्द-चित्रोदाहरणस्थले दर्शितम्। किं च जयिनः काकतीन्द्रस्येति पाठे समानधर्मानु-पादानेन जलधाराया रूपकनिर्वाहकत्वं निर्विवादमित्यलमतिप्रसङ्गेन। वाच्य-सिद्ध्यङ्गत्वं लक्ष्ये कथयति। अत्रेति। अत्र जलधारा व्यङ्ग्या प्रतीयमाना। अभिधायाः प्रकरणात् खङ्गधाराया निर्वाहकादिति हेतोर्गुणीभूतव्यङ्ग्यं मध्य-मकाव्यम्।

अस्फुटमुदाहरति। वीरेति। वीररुद्रकृपाणस्यानङ्कुशोऽङ्कुशरहितः स्वतन्त्रो महिमा कोऽप्यनिर्वाच्यः। कुतः। यः कृपाणः द्विषद्सृड्नदं शत्रुरुधिरप्रवाहं पीत्वा कीर्तिरेव गङ्गा तां प्रसूते। जह्नुर्गङ्गां पीत्वा गङ्गामेवाजीजनत्। खङ्गस्तु रक्तनदीं पीत्वा गङ्गां सूत इत्युपमानादुपमेयस्याधिक्यरूपव्यतिरेकः। कवेराविष्करणं विना बुद्ध्यारोहाभावाद्विलम्बेन प्रतीयते। ततोऽस्फुटं मध्यमकाव्यमित्याशयेनाह। अत्रेति। अत्र कृपाणस्य जन्ह्वपेक्षयाधिक्यप्रतिपादनाद्व्यतिरेकोऽलंकारः। परमत्य-न्तमस्फुटो विलम्बित इति यावत् प्रतीयते।

पञ्चममुदाहरति। काकतीति। काकतिक्ष्मापतेरनुरागेण तरङ्गिता संजाततरङ्गा तरङ्गवत् पुनः पुनः प्रेर्यमाणेत्यर्थः। दृष्टिस्तुङ्गे वध्वाः कुचद्वये कह्लारमालेव सौगन्धिकमालेव लग्ना। 'सौगन्धिकस्तु कह्लारम्' इत्यमरः। अत्रालिङ्गनेच्छा-दिरूपस्य व्यङ्ग्यार्थस्य चमत्कारकारित्वात् प्राधान्यं वोत वाच्यस्य वेति संदेहात् संदिग्धं प्राधान्यमत्रेत्याशयेनाह। अत्रेति। अत्रालिङ्गनेच्छायां वाक्यस्य विश्रा-न्तिर्विश्रमः पर्यवसानमथवोत स्तनमण्डलस्यावलोकन एव वाक्यविश्रान्तिरित्य-न्वयः। इति संदेहः।

षष्ठमुदाहरति। नृपा इति। हे नृपाः प्रतापरुद्रस्य पदाम्बुजे पादपद्मे निषे-वध्वं सेवां कुरुध्वम्। अन्यथा सेवायां तादृग्दयादाक्षिण्यादिगुणवत्तया निरुपमं प्रसन्नं सदा कालुष्यरहितमस्य राज्ञो मनः कलुषायते कलुषीभवति। अत्र प्रतापरुद्रस्य पादसेवा त्यज्यते यदि तदानीं वो नगरेषु वासो वसतिर्दुर्लभ इति यो व्यङ्ग्यार्थस्तस्य वाच्यस्य मनःकालुष्यस्य च समप्राधान्यम्। सर्वत्र कविना व्यञ्जनैकप्रवणेन भवितव्यम्। अत्र तु वाच्यस्य व्यङ्ग्येन सह समप्राधान्यसं-पादनाद्गुणीभूतव्यङ्ग्यत्वमिति भावः।

अगूढमित्यादिकारिकोक्तक्रमो वैवक्षिको न तु पौर्वापर्यकृत इति सूचयितुं सप्तममुल्लङ्घ्याष्टममुदाहरति । एकशिलायामिति । एकशिलायां पुर्यां या महिला वनितास्तासाम् । 'वनिता महिला तथा ।' इत्यमरः । नरेन्द्रसंदर्शनेन य आमोदः संतोषस्तं श्रुत्वा गुरुजनेन संवादिना नियन्त्रिताया निवारिताया वध्वा वदनं श्यामलं मलिनं नृपानवलोकनविषादेनेति भावः । अत्र नरेन्द्रदर्शनं निमित्तं कारणं यस्य तं संतोषमपश्यन्त्या अननुभवन्त्या इति यावत् । वध्वा मुखं श्यामलमिति वाच्यस्यैव चारुत्वम् । गुरुजननियन्त्रिताहं नरेन्द्रं द्रष्टुं न गतवत्यस्मीति व्यङ्ग्यार्थस्य चारुत्वं चमत्कारकारित्वं नास्तीति शेषः ।

अवशिष्टमुदाहरति । यत्र काव्ये काका काकुस्वरेणार्थान्तरमाक्षिप्यते आकृष्यते तदपि गुणीभूतव्यङ्ग्यमेव । उदाहरति । हे प्रियसखि कथय । प्रत्युत्तरमिति शेषः । क्षोणी लक्ष्मीः सरस्वती च मत्तः । अस्मच्छब्दात् पञ्चम्यर्थे तसिल् । अधिकेति । प्रत्येकमन्वयोऽन्यथा बहुवचनप्रसङ्गात् नाधिकेत्यर्थः । अधिका इति वा तथैतास्तिस्र इत्यध्याहारेणान्वयः । गुणविशेषान् जानातीति गुणविशेषज्ञः स नरनाथः यां बहुमनुते अधिकां मनुते अत्रोत्तरं कथयेति पूर्वेणान्वयः । अत्राधिक्यनिषेधस्य वाचकाभावात् केवलवाच्यसामर्थ्यलभ्यत्वेन व्यङ्ग्यत्वं तस्य च काकुस्पर्शात् गूढत्वकृतचारुतातिशयभङ्गेन गुणीभूतत्वमेवेतीदं सर्वं मनसि निधायाह । अत्रेति । अत्र क्षोणी मदधीनेति काकुकल्पनया काकुस्वरावलम्बनेनाधिका न भवतीति व्यज्यते ।

अथ चित्रकाव्यस्य शब्दार्थोभयगतत्वेन पूर्वं त्रैविध्यं प्रदर्श्य संप्रति शब्दार्थालंकारवैचित्र्यादनेकविधत्वमस्तीत्याह । चित्रं त्विति । चित्रं काव्यं तु शब्दालंकारा वृत्त्यनुप्रासादयः । अर्थालंकारा उपमादयः । तैश्चित्रतया बहुविधं शब्दालंकारा यावन्तस्तावद्विधं शब्दचित्रम् । अर्थालंकारा यावन्तस्तावद्विधमर्थचित्रम् उभयचित्रं त्वेकविधम् । तेषां शब्दार्थालंकाराणां वंशो विस्तारोऽलंकारप्रकरणे व्यक्तीभविष्यति ।

एवं काव्यसामान्यं निरूप्य महाकाव्यादिनिरूपणं प्रतिजानीते । अथेति । अथ काव्यसामान्यनिरूपणानन्तरं महाकाव्यमादिर्येषां ते तथोक्ताः प्रबन्धा निरूप्यन्ते । नगरेति । नगरस्यार्णवस्य शैलस्य ऋतोर्वसन्तादेश्चन्द्रार्कयोरुदये वर्णनं वर्णनाद्वयोक्तिः । उद्याने सलिले च क्रीडा मधुपानं रतोत्सवश्च तेषां द्वन्द्वः ।

विप्रलम्भो वियोगो विवाहः कुमारोदयस्य वर्णनं च मन्त्रः पर्यालोचनं दूतं च प्रयाणमाजि युद्धम् । नायकाभ्युदयः प्रतिनायकोत्कर्षश्च इत्येतान्यष्टादश यत्र काव्ये वर्ण्यन्ते तन्महाकाव्यमुच्यते । अत्र यद्यपि स्थलद्वये वर्णनशब्दप्रयोगात् वर्ण्यन्त इत्यनेन पौनरुक्त्यं प्रसज्येत तथापि कवीनां निरङ्कुशत्वादविवक्षितमिति सोढव्यम् । यद्वा उभयत्रापि वर्णनं यत्रवर्ततीत्यन्वयं विधाय एतानीत्यनेन तदितर-संग्रहं कृत्वा वर्ण्यन्त इत्यन्वयो बोध्यः । एवं पूर्वोक्तानामष्टादशानां मध्ये यैः कैश्चिन्न्यूनं रहितमपि काव्यं महाकाव्यं महाकाव्यमिष्यते । तन्महाकाव्यं गद्यमयं पद्यमयमुभयमयं चेत्येवंप्रकारेण त्रिविधम् ।

गद्यादिलक्षणान्याह । अपाद इति । अपादः पादरहितः पदसंघातः पदसमूहो गद्यम् । पद्यं चत्वारि पदानि पादा यस्य तत् पद्यम् । कादम्बरी आदिर्यस्य तत् गद्यकाव्यम् । पद्यकाव्यं रामायणादि । असर्गबन्धं सर्गबन्धरहितम् । तदपि तद्रूपकाव्यमुदीर्यते । असर्गबन्धं सूर्यशतकादि । गद्यपद्यमयं गद्यपद्योभयमयं काव्यं चम्पूरित्यभिधीयते । भोजरामायणादि । वक्त्रं वक्त्रनामकं वृत्तम् । अपर-वक्त्रं तन्नामकं च वृत्तम् । भेदकं स्वर्गादिवत् परिच्छेदकम् । उच्छ्वास उच्छ्वासा-दिवद्विच्छेदकस्तेन सहितं सोच्छ्वासं तत्त्वं सोच्छ्वसत्वं लक्षणमुच्छ्वास इत्यर्थः । एतानि यत्र काव्ये वर्ण्यन्ते असावाख्यायिका । कारिकां ग्रन्थरूपेण व्याख्याति । अर्थः स्पष्टः । श्रीहर्षचरिताद्याख्यायिका ।

महाकाव्यनिरूपणानन्तरं क्षुद्रकाव्यस्वरूपनिरूपणं प्रतिजानीते । अथेत्यादि । येनेत्याद्येकं प्रकरणम् । ग्रन्थस्य अकृतेऽपि व्याख्याने विस्तराद्भिभ्यता कविना-नुदाहृतत्वाच्च स्फुटतरोऽर्थः प्रतीयते । ततोपि स एव यथामत्यर्थो द्रष्टव्यः ।

इति प्रतापरुद्रीयव्याख्याने रत्नशाणाख्याने काव्यस्वरूपनिरूपणं नाम द्वितीयं प्रकरणम् ॥

# NOTES.

## NÂYAKA-PRAKARAṆA.

२. पूर्वेभ्यो भामहादिभ्यः—Bhâmaha is one of the old Âlaṅkârikas and is quoted in many works as can be seen in the foot-notes on his work given in one of the Appendices. His name is similarly mentioned first in Râjânakaruyyaka's Alaṅkâra-sarvasva—' इह हि तावद्भामहोद्भटप्रभृतयश्चिरन्तनालंकारकाराः प्रतीयमानमर्थं वाच्योपस्कारकतयालंकारपक्षनिक्षिप्तं मन्यन्ते ।' p. 3.

विरेजे चरितार्थोऽभूत्—It will be seen that the Ratnas'âṇa gives this verse after the next verse रसप्रधानाः शब्दार्थाः &c.

५-६ यद्वेदात् प्रभुसंमिताद्धिगतम्—वेद is called प्रभुसंमित (like a lord), पुराण, सुहृत्संमित (like a friend) and काव्यश्री, कान्तासंमिता (like a beloved) on account of the authoritative, friendly and delicate manner in which they advise people to secure good and avoid evil. *cf.* the following from Vidyâdhara's Ekâvalî:—

> शब्दप्रधानं वेदाख्यं प्रभुसंमितमुच्यते ।
> ईषत्पाठान्यथापाठे प्रत्यवायस्य दर्शनात् ॥ ४ ॥
> इतिहासादिकं शास्त्रं मित्रसंमितमुच्यते ।
> अस्यार्थवादरूपत्वात् कथ्यतेऽर्थप्रधानता ॥ ५ ॥
> ध्वनिप्रधानं काव्यं तु कान्तासम्मितमीरितम् ।
> शब्दार्थौ गुणतां नीत्वा व्यञ्जनप्रवणं यतः ॥ ६ ॥

परिवड्ढइ विण्णाणं—This is a stanza quoted from सेतुबन्धमहाकाव्य of प्रवरसेन p. 9. It is also quoted by Mallinâtha in the Tarala on the Ekâvalî of Vidyâdhara. *Vide* my edition of the work in the Bombay Sanskrit Series p. 17.

विढप्पंति is the reading in the सेतुबन्ध instead of विरुप्पंति. विढप्पंति means अर्ज्यन्ते, i. e. are obtained. 'अर्जेर्विढप्पः' ८।४।२५१, Hemachandra's Prâkṛita Grammar. For अर्ज्यंते three forms are given by Hemachandra:—विढप्पइ, विढविज्जइ and अज्जिज्जइ. *cf.*

> जेहि विढप्पइ कित्ती विढविज्जइ जेहि उज्जलं णाणं ।
> अज्जिज्जइ जेहि सिरी सव्वेहि वि तेहि झायव्वा ॥

That is,

यैः अर्ज्यते कीर्तिः अर्ज्यते यैः उज्ज्वलं ज्ञानम् ।
अर्ज्यते यैः श्रीः सर्वैरपि तैः ध्यातव्या ॥

The adjective ध्यातव्या refers to श्रुतदेवी that manifested herself to Kumârapâla. *Vide* कुमारपालचरितम् ( B. S. Series ) p. 253, Canto VII. verse 88.

११. आदिराजयशोबिम्बम् &c., is from Daṇḍin's Kâvyâdarśa, 1st Parichchheda, 5th verse.

उपश्लोक्यस्य माहात्म्यात् &c. is given as a verse of Bhâmaha. It is not, however, found in the manuscript copy of Bhâmaha with me.

गुणालंकारचारुत्वप्रयुक्तम् &c. is not found in उद्भटालंकारसारसंग्रह with the commentary of प्रतीहारेन्दुराज of which there is a manuscript in the Deccan College collection. It must be in a bigger work composed by him or in his commentary on Bhâmaha.

Udbhaṭa was Sabhâpati of Jayâpîḍa, king of Kâśmîra who was son of Vappiya and who learned grammar from Kshîrâbdhi. *cf.* Râjataraṅgiṇî by Kalhaṇa.

' शान्तेऽथ संग्रामापीडे कनीयान् वप्पियात्मजः ।
राजा श्रीमान् **जयापीडः** प्राप राज्यं ततः क्रमात् ॥ ४ तरङ्ग ४०२ श्लो.
' देशान्तरादागमय्य व्याचक्षाणः क्षमापतिः ।
प्रावर्त्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥
**क्षीरा**भिधाच्छब्दविद्योपाध्यायात् संभृतश्रुतः ।
बुधैः सह ययौ वृद्धिं स **जयापीडपण्डितः** ॥' ४-४८८-४८९.
विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः ।
भट्टोऽभू**दुद्भट**स्तस्य भूमिभर्तुः सभापतिः ॥' ४-४९५.

Udbhaṭa has composed a commentary on Bhâmaha's work, called Bhâmahavivaraṇa to which reference is made by Pratihârendurâja in his commentary called Udbhaṭâlaṅkârasârasaṅgrahalaghuvṛitti as under:—

विशेषोक्तिलक्षणे च भामहविवरणे भट्टोद्भटेन एकदेशशब्द एवं व्याख्यातो यथेहास्माभि-
र्निरूपितः ।

रुद्रभट्टेनापि कथितम्—Rudrabhṭṭa is different from Rudraṭa author of Kâvyâlaṅkâra. Rudrabhaṭṭa is the author of Sṛiṅgâratilaka.

प्रपञ्चितं च साहित्यमीमांसायाम्—साहित्यमीमांसा is a work on Alaṅkâra quoted by Râjânaka Ruyyaka in his Alaṅkâra-sarvasva as under:—

यथा (उत्प्रेक्षा) च समस्तोपमाप्रतिपादकविषयेऽपि हर्षचरितवार्तिके साहित्यमीमांसायां च तेषु तेषु प्रदेशेषूदाहृता । इह तु ग्रन्थविस्तरभयान्न प्रपञ्चिता । p. 61 अलंकारसर्वस्व.

१२. महाकुलीनतौज्ज्वल्यम् &c.—The author enumerates a few of the qualities of the Nâyaka or hero. Different authors give different lists of his qualities.

Daśarûpaka of Dhanañjaya has the following in the 2nd Prakâśa:—

'नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥ १ ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ।
भेदैश्चतुर्धा ललितशान्तोदात्तोद्धतैरयम् ॥ २ ॥

Bhoja in his Sarasvatîkaṇṭhâbharaṇa enumerates twelve qualities as under—

महाकुलीनतौदार्यं महाभाग्यं कृतज्ञता ।
रूपयौवनवैदग्ध्यशीलसौभाग्यसंपदः ॥
मानितौदारवाक्यत्वमदरिद्रानुरागिता ।

द्वादशेति गुणानाहुर्नायकेष्वाभिगामिकान्' ॥ 5th Pari. ver. 23-24.

Viśvanâtha in his Sâhityadarpaṇa gives eight Sâttvika qualities as under:—

शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यतेजसी ।
ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥ 3rd Pari. ver. 89.

Also

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता ॥ 3rd Pari. ver. 64.

Rudraṭa gives the following sixteen qualities essential to a Nâyaka:—

रत्युपचारे चतुरस्तुङ्गकुलो रूपवानरुङ् मानी ।
अग्राम्योऽज्ज्वलवेषोऽनुल्बणचेष्टः स्थिरप्रकृतिः ॥
सुभगः कलासु कुशलस्तरुणस्त्यागी प्रियंवदो दक्षः ।
गम्यासु च विस्रम्भी तत्र स्यान्नायकः ख्यातः ॥ काव्या० १२–७–८.

१२. आबालकुनजाह्निकैर्गुणनिधिः श्रीवीरुद्रो नृपः—

The same expression आबालकुनजाह्निक occurs in the following:—
शाणोत्कीर्णमणीज्ज्वलद्युति पदं यन्त्रोऽधनाधीश्वरः—
श्लाघालकुनजाह्निको दिवि लतोद्भिन्नेव चार्थोद्गतिः ।
and also in
विश्वोल्लकुनजाह्निकी वितनुते कीर्तिं विधत्ते श्रियम् ।
See my edition of Vidyânâtha's Ekâvali. pp. 18 and 16.

२१ महासत्त्वोऽतिगम्भीरः—

Viśvanâtha's definition runs as under:—

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥ ३।६६

Dhanañjaya's definition is exactly similar :—
महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहंकारो धीरोदात्तो दृढव्रतः ॥ दशरूप २।४

२१ दर्पमात्सर्यभूयिष्ठः—

*cf.* मायापरः प्रचण्डश्चलोऽहंकारदर्पभूयिष्ठः ।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः ॥ साहि०द० ३।६७
दर्पमात्सर्यभूयिष्ठो मायाछद्मपरायणः ।
धीरोद्धतस्त्वहंकारी चलश्चण्डो विकत्थनः ॥ दश० २–५

निश्चिन्तो धीरललितः—
निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ॥ साहि० ३।६८
निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः । दश० २–२

२६ धीरः शान्तः—

*cf.* सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात् । साहि० ३।६९
सामान्यगुणयुक्तस्तु धीरशान्तो द्विजादिकः । दश० २।३

The definitions of the four varieties of the hero of a poetic composition given in the text are, as will be seen, almost similar in language to those of Dhanañjaya in the Daśarûpa.

Bharata states that the धीरोद्धत hero is generally a god, the धीरललित, a king, the धीरोदात्त, a commander or a counsellor and the धीरप्रशान्त, a brâhmin or a baniâ:—

देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः ।
सेनापतिरमात्यश्च धीरोदात्ताः प्रकीर्तिताः ॥
ब्राह्मणा वणिजश्चैव प्रोक्ता धीरप्रशान्तकाः ॥ नाट्यशा० २४।४–५

On these verses of Bharata the following gloss of Hemachandra given in his Kâvyânuśâsana and the remarks of Dhanika in his Avaloka on Daśarûpa which seem to have been copied by Hemachandra making slight changes like धीरोद्धतादि for धीरललितादि are worth noting :—

देवा धीरोद्धता इति । अत्र हि ' धीरोदात्ते जगति चरिते रामनाम्नश्च विष्णोः ' इत्यादेर्देवानां जनकप्रभृतीनां रामादीनां च न धीरललितत्वानुचितत्वमिति धीरललितत्वं राज्ञ एव वर्णनीयं नान्यस्य । सेनापत्यमात्ययोर्धीरोदात्तत्वमेव द्विजादीनां धीरप्रशान्तत्वमेवेत्येवंपरं व्याख्येयम् ।' काव्यानुशासन 7 th अध्याय.

' धीरललितादिशब्दाश्च यथोक्तगुणसमारोपितावस्थाभिधायिनो वत्सराजादिवन्न जात्या कश्चिदवस्थितरूपो ललितादिरस्ति । तत्त्वे हि महाकविप्रबन्धेषु विरुद्धानेकरूपाभिधानमसंगतमेव स्याज्जातेरनपायित्वात् । तथा च भवभूतिनैक एव जामदग्न्यः

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥

इत्यादिना रावणं प्रति धीरोदात्तत्वेन ।

कैलासोद्धारसारत्रिभुवनविजयौजित्यनिष्णातदोष्णः
पौलस्त्यस्यापि हेलोपहृतरणमदो दुर्दमः कार्तवीर्यः ।
यस्य क्रोधात् कुठारप्रविघटितमहास्कन्धबन्धस्थवीयो-
दोःशाखादण्डमुण्डस्तरुरिव विहितः कृत्यकन्दः पुराभूत् ॥ महा० । २।१६

इत्यादिभिश्च रामादीन् प्रति प्रथमं धीरोद्धतत्वेन पुनः

पुण्या ब्राह्मणजातिरन्वयगुणः शान्तं चरित्रं च मे
येनैकेन हृतान्यमूनि हरता चैतन्यमात्रामपि ।
एकः सन्नपि भूरिदोषगहनं सोऽयं त्वया प्रेयसा
वत्स ब्राह्मणवत्सलेन शमितः क्षेमाय दर्पामयः ॥ महा० ४।२२

इत्यादिभिश्च धीरशान्तत्वेनोपवर्णितः । न चावस्थान्तराभिधानमनुचितम् । अङ्गभूतनायकानां नायकान्तरापेक्षया महासत्त्वादेरव्यवस्थितत्वात् । अङ्गिनस्तु रामादेरेकप्रबन्धोपात्तान् प्रत्येकरूपत्वादारम्भोपात्तावस्थातोऽवस्थान्तरोपादानमन्याय्यम् । यथोदात्तत्वाभिमतस्य रामस्य छद्मना वालिवधादमहासत्त्वतया स्वावस्थापरित्याग इति । वक्ष्यमाणानां च दक्षिणाद्यवस्थानां 'पूर्वां प्रत्यन्यया हृतः' (in 'दक्षिणः शठो धृष्टः पूर्वां प्रत्यन्यया हृतः') इति नित्यसापेक्षत्वेनाविर्भावादुपात्तावस्थातोऽवस्थान्तराभिधानमङ्गाङ्गिनोरप्यविरुद्धम् ॥ अवलोक on दशरूप २।५.

अथ शृङ्गारविषयाः—The four varieties of the hero might represent all the poetic sentiments. When they exhibit the śṛiṅgâra or the erotic sentiment they are each further divided into four sub-varieties, अनुकूल, दक्षिण, धृष्ट and शठ. The following definitions of these sub-varieties represent their characteristics clearly:—

एवं स चतुर्धा स्यादनुकूलो दक्षिणः शठो धृष्टः ।
तत्र प्रेम्णः स्थैर्यादनुकूलोऽनन्यरमणीकः ॥
खण्डयति न पूर्वस्यां सद्भावं गौरवं भयं प्रेम ।
अभिजातोऽन्यमना अपि नार्यां यो दक्षिणः सोऽयम् ॥
वक्ति प्रियमभ्यधिकं यः कुरुते विप्रियं तथा निभृतम् ।
आचरति निरपराधवदसरलचेष्टः शठः स इति ॥
कृतविप्रियोऽप्यशङ्को य स्यान्निर्भर्त्सितोऽपि न विलक्षः ।
प्रतिपादितेऽपि दोषे वक्ति च मिथ्यैवसौ धृष्टः ॥
रुद्रट's काव्यालंकार १२।९—१२.

२७. किंचिदूनः पीठमर्दः—The assistance of a hero in securing a mistress are पीठमर्द, विट, चेट and विदूषक. Of these पीठमर्द is a little short of a hero in his qualities. He is the hero of minor incidents in the plot of a drama, a पताकानायक as he is called. Viśvanâtha defines him as under:—

दूरानुवर्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु ।
किंचित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः ॥ साहि० ३।७६

Makaranda in the Mâlatimâdhava and Sugrîva in the Râmâyaṇa are such subordinate heroes.

विट and विदूषक are defined as under:—

संभोगहीनसंपद् विटस्तु धूर्तः कलैकदेशज्ञः ।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ॥

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः ॥ साहि० ३।७८–७९

Rudraṭa describes पीठमर्द, विट and विदूषक as three नर्मसचिव's or [as]istants in amorous sports. Agnipurāṇa also describes them [sim]ilarly :—

पीठमर्दो विटश्चैव विदूषक इति त्रयः ।
शृङ्गारे नर्मसचिवा नायकस्यानुनायकाः ॥

The sixteen varieties and sub-varieties of a hero are fur[the]r sub-divided into उत्तम, मध्यम and अधम by Viśvanātha. There [are] thus 48 divisions of a hero according to him :—

एषां च त्रैविध्यात् सर्वेषामुत्तममध्याधमत्वेन ।
उक्ता नायकभेदाश्चत्वारिंशत् तथाष्टौ च ॥ साहि० ३।७५

१२ कामशास्त्रप्रसिद्धाः पद्मिनीचित्रिणीप्रभृतयो जातिविशेषाः—
पद्मिनी, चित्रिणी, शङ्खिनी and हस्तिनी are defined as under in रतिमञ्जरीः–

भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा
अविरलकुचयुग्मा चारुकेशी कृशाङ्गी ।
मृदुवचनसुशीला गीतवाद्यानुरक्ता
सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥
भवति रतिरसज्ञा नातिखर्वा न दीर्घा
तिलकुसुमसुनासा स्निग्धनीलोत्पलाक्षी ।
घनकठिनकुचाढ्या सुन्दरी बद्धशीला
सकलगुणविचित्रा चित्रिणी चित्रवक्त्रा ॥
दीर्घातिदीर्घनयना वरसुन्दरी या
कामोपभोगरसिका गुणशीलयुक्ता ।
रेखात्रयेण च विभूषितकण्ठदेशा
संभोगकेलिरसिका किल शङ्खिनी सा ॥
स्थूलाधरा स्थूलनितम्बबिम्बा
स्थूलाङ्गुलिः स्थूलकुचा सुशीला ।
कामोत्सुका गाढरतिप्रिया च
नितान्तभोक्त्री खलु हस्तिनी स्यात् ॥

उद्यद्यौवना मुग्धा—

The following are the definitions explaining fully the characteristics of मुग्धा, मध्या and प्रौढा—

प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥
मध्या विचित्रसुरता प्ररूढस्मरयौवना ।
ईषत्प्रगल्भवचना मध्यमव्रीडिता मता ॥
स्मरान्धा गाढतारुण्या समस्तरतकोविदा ।
भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका ॥ साहि० द० ३-९९-१०१

The following tree represents the sixteen divisions of नायिका. These sixteen varieties are each sub-divided in eight sub-varieties, according as they are स्वाधीनपतिका, वास- सज्जिता, विरहोत्कण्ठिता, विप्रलब्धा, खण्डिता, कलहान्तरिता, प्रोषितभर्तृका and अभिसारिका. Thus there are eight times sixteen or one hundred and twenty-eight varieties, each of which is again sub-divided into उत्तम, मध्यम and अधम, making up altogether 384 varieties.



The following definitions show the characteristics of मध्या धीरा and other sub-varieties:—

धीरा सोत्प्रासवक्रोक्त्या मध्या साश्रु कृतागसम् ।
खेदयेद्दयितं कोपादधीरा परुषाक्षरम् ॥ द० रू० २ । १९

Thus when the hero is guilty, the middling patient heroine would pain him by her joking and ironical speeches, the middling impatient heroine, by harsh words through anger, while the middling heroine who is at once patient and impatient would pain the hero by her joking and ironical words accompanied by tears.

सावहित्थादरोदास्ते रतौ धीरेतरा क्रुधा ।
सन्तर्ज्य ताडयेन्मध्या मध्याधीरेव तं वदेत् ॥ द० रूप० २।१८.

The same idea is expressed more clearly by the following:—

प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ॥
उदास्ते सुरते तत्र दर्शयन्त्यादरान् बहिः ॥
धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम् ॥
तर्जयेत् ताडयेदन्या——साहि० दर्प० ३।१०४–५

Thus the mature patient heroine disguises her anger, shows outward courtesy and remains indifferent about amorous sport; the mature impatient heroine goes to the length of scolding and beating the hero; while the mature heroine who is at once patient and impatient acts like the middling heroine who is at once patient and impatient and simply pains the hero by her ironical speeches.

३८. एष संग्रहश्लोकः—This refers to the verse गुणालंकाराणां रसमहति काव्ये विलसितम् &c. which summarizes what is mentioned before.

४०. श्रुत्वा स्तनंधयस्य महतो भीतः प्रलापाकुलः—Another reading is पला-प्याकुलः which is undoubtedly the better of the two readings. It is not adopted because it was found only in T., the text printed in Telugu characters. It is found in one of the Mss. also, secured after the text was printed.

एवंविधवर्णनमुग्धनायके न घटते—स्वतःसिद्धोत्पादत्वसंदेन नायकवैविध्यमपि सम्भवति—

A काव्य is divided into उत्पाद्य and अनुत्पाद्य according as it is partly or wholly the poet's own creation or is founded upon a mythological or historical basis.

> सन्ति द्विधा प्रबन्धाः काव्यकथाख्यायिकादयः काव्ये ।
> उत्पाद्यानुत्पाद्या महल्लघुत्वेन भूयोऽपि ॥
> तत्रोत्पाद्या येषां शरीरमुत्पादयेत् कविः सकलम् ।
> कल्पितयुक्तोत्पत्तिं नायकमपि कुत्रचित् कुर्यात् ॥
> पञ्चरमितिहासादिप्रसिद्धमखिलं तदेकदेशं वा ।
> परिपूरयेत् स्ववाचा यत्र कविस्ते त्वनुत्पाद्याः ॥ काव्यालंकार १६।२-४.

Thus when the poet takes up a well-known hero and creates his history by his own imagination as in Mâghakâvya or when he creates the hero also as in Kâdambari, the poem is उत्पाद्य. But when he takes a mythological story wholly or partly and describes it in his own language, enlarging upon it, as in Kirâtârjunîya, the poem is अनुत्पाद्य.

A hero also is similarly called उत्पाद्य and अनुत्पाद्य or स्वयंसिद्ध according as he is the poet's own creation, or a mythological or historical character.

---

## KÂVYAPRAKARAṆA.

४४-४५ गौणवृत्तिरपि लक्षणाप्रभेद एव—The Mîmâṁsakas look upon गौणी as a separate power of words; while the Naiyâyikas look upon it as a variety of लक्षणा. 'शक्तिलक्षणाभ्यामतिरिक्तैव गौणी वृत्तिरिति मीमांसकाः । सा च तदतिरिक्ता नेति नैयायिका आहुः ।' न्यायसिद्धान्त म० प्र०. अग्निर्माणवकः, which means Mâṇavaka, characterised by yellowness, brilliancy and other qualities of fire, is an instance of गौणी, while गङ्गायां घोषः, which means a shepherd's hut on the bank of the Ganges, is an instance of लक्षणा. Vidyânâtha proves that गौणी is not a separate वृत्ति, but a variety of लक्षणा; for both are based upon संबन्ध or connection of the principal meaning with the secondary or implied meaning and अनुपपत्ति or inapplication of the primary sense. In अग्निर्माणवकः the primary sense of अग्नि is inapplicable; for Mâṇavaka is

not fire. In गङ्गायां घोषः similarly the primary sense of गङ्गा viz., the current of the river, is inapplicable; for there can be no hut on it. Thus in गौणी and लक्षणा both there is अनुपपत्ति or मुख्यार्थबाध. In both there is संबन्ध or मुख्यार्थयोग. In अग्निर्माणवकः अग्नि means अग्निसादृश्यविशिष्ट, characterised by the similarity of fire; similarly in गङ्गायां घोषः गङ्गायां means गङ्गासंबन्धविशिष्टतीरे, or on the bank characterized by the connection of the Ganges. If, on the contrary, we understand गङ्गायां to mean गङ्गासंबन्धोपलक्षिततीरे, that is, on the bank marked ( not invariably characterised, but marked now and then as Devadatta's house by a crow ), the purity, coolness &c., suggested by implication in the hut, on account of the bank being always characterized by the connection of the Ganges will not be proved and then there would be no difference between गङ्गायां घोषः and गङ्गातीरे घोषः. But a difference there undoubtedly is between the two expressions; for in the first the तीर is identified with the गङ्गाप्रवाह and the idea of purity, coolness &c. of the hut is suggested. While in the second no such idea is suggested. Therefore गङ्गायां घोषः does not mean गङ्गासंबन्धोपलक्षिततीरे घोषः, but गङ्गासंबन्धविशिष्टतीरे घोषः. Thus in गौणी and लक्षणा both, there is संबन्ध or rather विशेषणवैशिष्ट्यसंबन्ध and consequently there is no difference between लक्षणा and गौणी.

काकेन देवदत्तगृहम् is an instance of उपलक्षण. प्रयोगकाले गृहे काकासत्त्वेऽपि यदाकदाचित् काकसमवधानेऽपि पूर्वोपस्थितकाकस्मरणेन देवदत्तगृहं विज्ञायते इति काकस्योपलक्षणत्वमिति बोध्यम् । न्या० को० p. 151. In this sense उपलक्षण is synonymous with तटस्थलक्षण or that property of a thing which is distinct from its nature or by which it is recognized A crow is not always found on the house of Devadatta, and is not thus its distinguishing characteristics, but the house is recognized, because the crow is remembered to have been seen there.

५३-५४. वाहित्यः काकतीन्द्रस्य—लौकिकवाक्यानाम्-

When in a verse notwithstanding that words have their expressed ( वाच्य ) sense restricted by context ( प्रकरण ) and other restricting agents of which a list is given by Hari in

in the verses 'संयोगो विप्रयोगश्च साहचर्यं विरोधिता' &c. another sense is conveyed by them, it is the suggested (व्यङ्ग्य) sense and the verse, an instance of शब्दशक्तिमूलध्वनि. In the verse वाहिन्यः कबन्धीरस्य the sense of वाहिनी and कबन्ध is restricted by context to an army and a headless trunk respectively. Another sense, however, namely a river and water comes out. This is due to another power of words called व्यञ्जना; and as this power in this case depends upon the very words वाहिनी and कबन्ध and would cease to exist with the substitution of synonymous words like नदी and जल, the व्यञ्जना or ध्वनि is शब्दशक्तिमूल. The expressive power of words (अभिधा) stops or ends when the sense bearing on the context is conveyed. It is not competent to convey the sense that has no bearing on the context and this sense *is* intended by the speaker to be conveyed to give a charm to the sentence. What then is the power that conveys this अप्राकरणिक sense? It is not अभिधा, as we have seen; for though it is competent to convey more than one meaning, संयोग, or some other restricting agent limits the word to one particular sense. Nor can this power be called implication (लक्षणा), for there is no मुख्यार्थबाध or inapplication of the primary or expressed sense. The power therefore is व्यञ्जना. Nor can it be objected that because two powers अभिधा and व्यञ्जना are at work in conveying two senses, वाच्य and व्यङ्ग्य, there are two different sentences unconnected with each other; for all human sentences or sentences other than the Vedas which are superhuman (अलौकिक) are dependent upon the desire of the speaker and the desire of the speaker is to convey the suggested sense.

The difference between शब्दशक्तिमूलध्वनि and श्लेष is dealt with in the अलंकारप्रकरण. According to Vidyânâtha श्लेष is either प्रकृतविषय, or अप्रकृतविषय, or उभयविषय. That is, the two meanings conveyed are either both प्रकृत, or both अप्रकृत, or one of them प्रकृत and the other अप्रकृत. The last variety, viz., when one of the two meanings is प्रकृत and the other अप्रकृत, is not accepted by Mammaṭa, Vidyâdhara and others as a variety of श्लेष.

Vidyâdhara says, ' किं चास्मिन् वाच्यत्वं विशेष्ययोस्तुल्ययोरेव ' ( *Vide* Ekâvalî p. 259 ). This is regarded by them as श्लेषोपमा. Ruyyaka accepts this kind of श्लेष and Vidyânâtha follows Ruyyaka. Mallinâtha in his Tarala criticizes Ruyyaka as under:—

' ननु विशेष्ययोः पृथङ्निर्देशे विशेषणमात्रसाम्ये प्रकृताप्रकृतश्लेष इत्यन्यैरुक्तं किं नेष्यते । तत्रोपमादीपकाद्यलंकारान्तरावरोधे श्लेषस्य प्रतिभासमात्रसारत्वात् । ननु गुणक्रियासाम्यवच्छब्द-साम्यमुपमायां प्रयोजकमिति तूपमाप्रतिभोत्पत्तिहेतुः श्लेष एवायम् । अन्यथात्रापि विविक्तविषया-लाभात् सर्वत्रैवास्य बाधः स्यात् ततो निरवकाशत्वात् सर्वालंकारापवादोऽयमित्यलंकारसर्वस्वकार इति चेन्न । पूर्वोक्तभेदद्वयेऽस्यावकाशत्वात् । न च तत्रापि तुल्ययोगितावकाशः तत्र विशेष्यश्लेषाभावात् । तस्माद् द्विविध एव श्लेष इति सिद्धम् ॥ '

Jagannâtha also accepts the third variety of श्लेष, viz. प्रकृताप्रकृतश्लेष. The difference between the third variety of श्लेष and शब्दशक्तिमूलव्यञ्जना is that in the latter the विशेष्य is also श्लिष्ट and there is no expressed उपमा.

Compare

विजितारिपुरो मूर्तौ विलसत्सर्वमङ्गलः ।
राजमौलिः प्रतापाढ्यो रुद्र इव स्थितः ॥

and

विजितारिपुरो मूर्तौ विलसत्सर्वमङ्गलः ।
राजमौलिरसौ भाति रुद्रदेवो जगत्पतिः

The first verse is an instance of प्रकृताप्रकृतश्लेष and the second is an instance of शब्दशक्तिमूलध्वनि. The first adjective विजितारिपुरः of the second illustrates अर्थशक्तिमूलध्वनि also as shown further on in the text.

५८ अन्यर्थमुकुमारार्थसंदर्भा कैशिकी मता—In regard to Vṛittis and Ritis the reader is referred to my notes on the Ekâvalî pp. 356-7 and 481-3. Vṛittis are styles of dramatic composition and may be included under Anuprâsas of different sorts and are favourable to the development of different sentiments. They are like movements of the body in acting rendered artificially beautiful or graced by dress, ornaments, decorations &c.—'शोभमाद्धर्यकी मात्रा वृत्तयो वृत्तयो यथा ' as Vidyâdhara states. Their origin is explained as under by Bharata in his Nâṭyas'âstra:—

Once when Vishṇu was asleep in the ocean on the snake, restraining all the worlds within himself by his Mâyâ, the demons Madhu and Kaiṭabha challenged him to fight, reviling him by their speech. Brahman, hearing their speeches of different kinds and their menaces, said, 'Has dramatic acting commenced with speech? Kill him.' Hearing what Brahman said, Vishṇu replied, 'Oh Lord! this speech is created by me with a purpose. Let them go on speaking; this speech will increase and become Bhâratî. I shall kill the demons to-day'. Saying so, Vishṇu fought with the demons, jesticulating his body in various ways. When Hari placed his feet on the ground, the earth felt a great burden ( भार ) and thus Bhârati was created there. By his movements brilliant, powerful ( सत्वाधिकैः ) and unconfused, Sâtvatî was created. The various sportive movements by which he tied his hair (केश), gave rise to Kais'ikî and his diverse modes of fighting, abounding in vehemance ( संरम्भ ) led to the creation of Ârabhaṭî. The movements of Vishṇu were worshipped by Brahman with prayers suitable to them. When Madhu and Kaiṭabha were killed by Vishṇu, Brahman said to him, 'Oh Lord! you have killed the demons by diverse, beautiful and clear movements of your body. Therefore in the discharge of all weapons, this mode of fighting in the world will be known as Nyâya. Because fighting was conducted by movements based on Nyâya, and arising from Nyâya, it will be called Nyâya.' Then Brahman placed the Vṛittis in the Vedas. Again in dramatic representations these were chosen, accompanied by various feelings and were called Vṛittis. Produced from the Nâṭyaveda and accompanied by vocal representations, they were thrown by me ( Bharatamuni ) in dramas at the command of Brahman for the purpose of the composition of poetry. ( *Vide* Nâṭyaśâstra, Ch. XX. )

Vṛittis were thus movements of the body originally and then became movements of speech or styles of dramatic composition which are represented by such movements. The

following verse describes how the Vṛittis arose from the different Vedas:—

ऋग्वेदाद्भारती वृत्तिर्यजुर्वेदात्तु सात्त्विकी ।
कैशिकी सामवेदात्तु शेषा चाथर्वणात्तथा ॥ २०—२४

कौशिकी derives its name from कौशिक, the sentiment of love, or केशिन् Kṛishṇa; आरभटी from आरभ् which has the sense of सरंभ् or vehement beginning; सात्त्वती from सत्त्व or strength and भारती, from its being dear to भरत or actors. The following definitions from the Nâṭyas'âstra of Bharata explain their characteristics with derivations:—

या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता या बहुनृत्तगीता ।
कामोपभोगप्रभवोपचारा तां कैशिकीं वृत्तिमुदाहरन्ति ॥
प्रस्तावपातप्लुतलङ्घितानि छेद्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युद्धानि च यत्र नित्यं तां तादृशीमारभटीं वदन्ति ।
आरभटप्रायगुणा तथैव बहुकपटवञ्चनोपेता ।
दम्भानृतवचनवती त्वारभटी नाम विज्ञेया ॥
या सात्त्वतेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा सा सात्त्वती नाम भवेत्तु वृत्तिः ॥
या वाक्यप्रधाना पुरुषप्रयोज्या स्त्रीवर्जिता संस्कृतवाक्ययुक्ता ।
स्वनामधेयैर्भरतैः प्रयुक्ता सा भारती नाम भवेत्तु वृत्तिः ॥

The Vṛittis in the above do not refer to mere dramatic style, but they also refer to dramatic machinery and representation of events on the stage .

६२-६३ वैदर्भादिरीतीनाम्—This shows the difference between Vṛittis and Rîtis. The former reside in sense, while the latter in words. The former go to develop various sentiments, while the latter residing in words independently of sense, simply bring about delicacy or arrogance of style. Both refer to styles of composition, but the Vṛittis develop poetic sentiments, while the Rîtis reside in Guṇas and simply make the style soft or harsh by their nature; by particular kinds of letters and their arrangement and by particular kinds of constructions of words. Rîtis bring about different kinds of poetic qualities or Guṇas and are thus said to reside in them

६५. ओजः कान्तिगुणोपेता—Kânti is freedom from vulgar expressions used by rustics. It is defined as 'औज्ज्वल्यम् कान्तिः' ३।२।२५ by Vâmana. Mammaṭa explains औज्ज्वल्यम् as ग्राम्यपदापरिहतत्वम्.

६७. या पदानां परान्योन्यमैत्री—शय्या is the repose of words in their mutual favourableness like the repose of the body in a bed. The mutual friendship of words, so close that they cannot be replaced by their synonymes, constitutes what is called शय्या. It is thus the unchangeableness of words. In the stanza दातुः काकतिवशमम्भवनयनेः &c. the arrangement of words is such that their change would spoil the beauty of the poem. This therefore is शय्या.

In the Tarala on the Ekâvalî, Mallinâtha thus explains the word:—

पदानां परिवृत्तिवैमुख्यं विनिमयासहिष्णुत्वम् । यतदेव मैत्री शय्येति चाख्यायते । यथास्मदीयश्लोके चन्द्रोदयवर्णने ।

निशाकरकरस्पर्शान्निशया निर्वृतात्मना ।
अमी स्तम्भादयो भावा व्यज्यन्ते रज्यमानया ॥

अत्र निशादिपदस्थाने क्षपादिपदान्तरप्रक्षेपे पदानां परस्परमैत्रीभङ्गः. ॥ ( *Vide* my edition of the Ekâvalî pp. 22 and 23).

Mandâramaranda of S'rîkrishṇakavi gives the following definition of शय्याः—

सा शय्या कीर्तिता मैत्री या पदानां परस्परम् ।
दाता जेता रणे त्राता भीतानां भाति भूपतिः ॥

In Agnipurâṇa शय्या is taken as synonymous with मुद्रा which is given as one of the śabdâlaṅkâras.

शब्दालंकारमाहुस्तान् काव्यमीमांसका विदः ।
छाया मुद्रा तथोक्तिश्च युक्तिर्गुम्फनया सह ॥
अभिप्रायविशेषेण कविशक्ति बिभ्रती ।
सुखप्रदायिनी सा मुद्रा सैव शय्यापि नो मता ॥ अग्निपु॰३४२—१९, २६

The definition is very indefinite. No instance is given to show clearly what is meant.

अतिक्रान्तेन कुत्रापि यदर्थे वर्णयोः क्वचित् ।
वाक्यार्थे वाक्ययोः क्वापि प्रकीर्णानां च दृश्यते ॥ स॰ क॰ २-५४-५५

Bhoja in his Sarasvatîkaṇṭhâbharaṇa defines it as under. He also considers it as S'abdâlaṅkâra.—

शय्येत्याहुः पदार्थानां घटनायां परस्परम् ।
सा प्रक्रान्तेन कस्मिंश्चिदप्रक्रान्तेन कुत्रचित् ॥

Ratnes'vara in his Ratnadarpaṇa explains it as under:—

किंचिदेकं वस्तु बुद्धौ समाधाय तदधिकारप्रबन्धरचनायामधिकरणान्तरान्तरागमकृते योजना शय्या ।

Bhoja in his Sarasvatîkaṇṭhâbharaṇa explains मुद्रा clearly, giving almost the same definition as the Agnipurâṇa:–

साभिप्रायस्य वाक्ये यद्वचसो विनिवेशनम् ।
मुद्रां तां मुत्प्रदायित्वात् काव्यमुद्राविदो विदुः ॥ स॰ क॰ २–४०.

Ratnadarpaṇa on this is very good:—

यद्यपि संपूर्णमेव काव्यं वक्त्रभिप्रायप्रतिच्छन्दकमुक्तं उक्तं च 'वक्त्रभिप्रायं सूचयेयुः' इति तथापि नास्मिन्नितरसाधारणतया वाक्यार्थगोचरमभिप्रायमावेदयत्येव काव्यसनाथीकरणक्षमवक्त्रभिप्रायविशेषप्रतिरूपक एकदेशनिवेशो दृश्यते । अत एवाङ्गुलीयादिमुद्रेव मुद्रेत्युच्यते ।... मुद्रेव पदादिप्रकाशयन्त्यनिन्द्यव्यवहारभूमिरन्येषाम् ।

Thus according to Bhoja शय्या means the mutual arrangement of प्रस्तुत and अप्रस्तुत objects. It is brought about by the arrangement of प्रस्तुत with another प्रस्तुत matter, or of अप्रस्तुत matter with प्रस्तुत matter, or by the formation of what is past by the power of memory, or by the formation of a word from letters, or of a sentence from sentences, or by the formation of matters of a mixed character, not existing in one place or at one time.

The following is given as an instance of प्रक्रान्तघटना:—

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीञ्ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥

सेयं सप्तर्षीणामागमनस्य प्रक्रान्तस्यैव घटना ।

अप्रक्रान्तघटना is illustrated as under:—

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निषादस्य च संवादमृषेः संवरणस्य च ॥

सेयमप्रकान्तस्य निषादसंवरणसंवादस्य घटनादप्रकान्तघटना ।

The following is an example of अतिक्रान्तघटना:—

तस्य चक्रुश्चमत्कारं व्यतीतसमया अपि ।
स्मितार्द्रमुकुलोद्भेदाः कदम्बवनराजयः ॥

इयमतिक्रान्तस्यापि कदम्बवनराजीनामार्द्रमुकुलोद्भेदस्य चिराद्विमनश्चमत्कारकारिणो रामस्य स्मृतिद्वारेण घटनादतिक्रान्तघटना ।

पदघटना and वाक्यघटना are illustrated as under:—

छिन्नेन पतता वह्नौ यन्मुखेन हठात् कृते ।
स्वेति हेति हरेणोक्ते स्वाहासीत् सैष रावणः ॥

इयं स्वेति हेति वर्णाभ्यां स्वाहेति पदस्य घटितत्वात् पदघटना ।

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥

इयं पूर्वार्धवाक्यनिबद्धस्योत्तरार्धस्य तदर्थाननुपातिनापि प्रस्तुतार्थाविरुद्धेन पूर्वार्धेनैकवाक्यतयैव घटितत्वाद् वाक्यघटना ।

Finally प्रकीर्णघटना is beautifully illustrated by the following instance:—

एक्कहिँ अच्छिहिँ सावणु अण्णहिँ भद्दवउ
माहउ महिअलसत्थरि गण्डत्थल सरउ ।
अङ्गहिँ गिम्ह सुहच्छिइ तिलवण मग्गसिरु
मुद्धिहिँ मुहपङ्कअसरि आवासिउ सिसिरु ॥
[ एकस्मिन्नक्षिण श्रावणोऽन्यस्मिन् भाद्रपदः
माधवो महीतलस्रस्तरे गण्डस्थले शरत् ।
अङ्गे ग्रीष्मः सुखासिका तिलवने मार्गशीर्षः
मुग्धाया मुखपङ्कजसरसि आवासितः शिशिरः ॥ ]

अत्र श्रावणादीनामयुगपद्भावित्वेन विप्रकीर्णानां घटनादियं प्रकीर्णघटना ॥

It will be seen that the शय्या as understood by our author Vidyânâtha is less artificial and more charming than that of Bhoja. The last division, प्रकीर्णघटना, is according to later writers on rhetoric a kind of Atis'ayokti ( अयोगेऽपि योगवाचका अतिशयोक्ति ).

अर्थगम्भीरिमा पाकः—पाक is depth of sense. It is of various sorts and these varieties are brought about by different tastes of different poetic sentiments like varieties of food.

Vidyâdhara describes it as under:—

पाकस्तु रसोचितशब्दार्थनिबन्धनम् । श्रवणसुखास्यन्दिनी पदव्युत्पत्तिः पाक इत्यन्ये । पदानां परिवृत्तिवैमुख्यं पाक इत्यपरे । ( *Vide* my edition of the Ekâvalî, p. 22 ). The last alternative पदानां परिवृत्तिवैमुख्यम् constitutes शय्या according to Vidyânâtha.

Bhoja calls it प्रौढि and enumerates it as a शब्दगुण. He defines it as under:—

उक्तेः प्रौढः परीपाकः प्रोच्यते प्रौढिसंज्ञया । स० क० १–७७.

नालिकेरीपाक is thus explained by Ratnes'vara in the Ratnadarpaṇa:—

नालिकेरफलं पक्वं त्वचि काठिनं शिरास्वविरलकोमलप्रायं कपालिकायां कठिनतरं तथा कश्चित् संदर्भो मुखे कठिनस्तदनन्तरं मृदुप्रायस्ततः कठिनतरो नालिकेरपाक इत्युच्यते।

मृद्वीकापाक or द्राक्षापाक is explained as under by the same commentator:—

यथा द्राक्षाफलं त्वच आरभ्य कोमलमन्तरा द्विचित्तुषास्थिसंपादितं किंचित्काठिन्यमेव कश्चित् संदर्भ उपक्रमोपसंहारयोः कोमल एव मध्ये कठिन एव । संयोगदीर्घस्वरस्थानकृतमनाक्कठोरभावो मृद्वीकापाक इत्युच्यते ।

These explanations refer to प्रौढि as a शब्दगुण. The पाक in the text is connected with depth of sense. This kind of पाक is described by Bhoja at the end of the fifth Parichchheda as under:—

पाकमथिक्याददावस्वादन्ते स्वादु मृद्वीकापाकः । आद्यन्तयोः स्वादु नारिकेलीरीतिपाकः । ५–२५१–२५२.

पाकान्तराणि यथासंभवमूह्यानि—Ratneśvara mentions one such पाक, viz. सहकारपाक and explains it as under:—

यद्वत्र परिणतं सहकारफलमारम्भादेव कोमलमस्थनि तु कठोरप्रायमेवमपरः संदर्भो मुखादारभ्य मृदुरन्तरे कठिनतरः सहकारपाक इत्युच्यते । यथा

कमलिनि कुशलं ते सुप्रभातं रथाङ्गाः
कुमुदिनि पुनरिन्द्रावुद्गते त्वं रमेथाः ।

सखि रजनि गतासि त्वं ततो जीर्णमुचै-
रिति तरलितपक्षाः पक्षिणो व्याहरन्ति ॥

सुप्तिङ्व्युत्पत्तिलक्षणस्तु वार्ताकपाकः कैश्चिदुक्तः स तु सुशब्दतालक्षणगुण एव ।
कविकल्पलताकारादिभिरुक्तो नीलकपित्थपाको नास्ति ।

Therefore he says, तेऽमी त्रय एव शुद्धपाका व्यतिकरजन्मानस्तु सूपाः ।
अत्र ध्वनेर्लक्षणाभिधामूलत्वेन—वाक्यगतोभयशक्तिमूलो ध्वनिः—

For the different divisions of ध्वनि and their explanation the reader is referred to my notes on the subject in my edition of the Ekâvalî pp. 413–419 and pp. 452 and 457–58 and pp. 464–5.

Vidyâdhara has divided असंलक्ष्यक्रमव्यङ्ग्यध्वनि into रस, भाव, रसाभास, भावाभास, भावशान्ति, भावोदय, भावसंधि and भावशबलता. Vidyânâtha calls असंलक्ष्यक्रमव्यङ्ग्यध्वनि रसादिध्वनि, that is, रसध्वनि, भावध्वनि and so on and sub-divides each into six varieties according as the ध्वनि is found in प्रबन्ध, वाक्य, पद, पदैकदेश, रचना or वर्ण.

There are, as shown and enumerated in the text, 51 varieties of शुद्धध्वनि. In regard to मिश्रध्वनि, it is said that these 51 divisions should be connected with each other. The first with itself and with each of the following 50 divisions leads to 51 mixed varieties, the second with itself and each of the following leads to 50 mixed varieties, the third to 49 mixed varieties and so on. The first mixed with the second and the second with the first and so on lead to the same mixed varieties. These sub-divisions are therefore disregarded. Thus there are in all 1,326 sub-divisions and each of these sub-varieties being again sub-divided into four classes by संसृष्टि and संकर of three kinds ( by संदेह, अनुग्राह्यानुग्राहकत्व and एकव्यञ्जकानुप्रवेश ), the total comes 5,304.

Mammaṭa, however, does not consider the sub-varieties omitted by Vidyânâtha ( such as the combination of the first of the 51 pure varieties of ध्वनि with the second and the combination of the second with the first and so on ) to be worth omitting. He has therefore 51×51×4 or 10,404 varieties of ध्वनि in all. Pradîpa on this is worth reading. It is as under:—

'अर्वाचीनाः—'' गणनेयमयुक्ता । अविवक्षिताभेदस्य योजने एकैकभेदद्वयाभावात् । तथा हि अर्थान्तरसंक्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्येन योजने यो भेदः स एवात्यन्ततिरस्कृत-वाच्यस्यार्थान्तरसंक्रमितवाच्येन योजनायाम् । एवमन्यत्रापि । तस्मात्

> ' एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु ।
> समार्धेनासमो गुण्य एतत् संकलितं लघु ॥ '

इत्युक्तदिशा त्रिपञ्चाशदर्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत् । तथा च ' रसदस्राग्निभेदि-भ्यः' इति त्रयोदशशतानि षड्विंशत्यधिकानि जायन्ते । योगश्चतुःप्रकार इति तेषु चतुर्भिर्गुणितेषु 'वेदाभ्रदहनेषवः ' इति पञ्चसहस्राणि चतुरधिकं शतत्रयं संकीर्णभेदा इत्येव न्याय्यः " इति वदन्ति ।

अत्र ब्रूमः—अनुभवसिद्धौ तावत् पुण्ड्रकादीक्षुरसेष्विव ध्वनिष्वपि हृद्यत्वातिशयानुशयौ । तथा चार्थान्तरसंक्रमितवाच्यस्य यत्रातिशयस्तत्रात्यन्ततिरस्कृतवाच्येन तद्योजनम् । यत्र तु तद्वैपरीत्यं तत्रात्यन्ततिरस्कृतवाच्यस्येतरेण योजनमिति व्यपदेशः । एवमन्यत्राप्यूह्यम् । एतदेव प्राधान्यमादाय गणना सौत्री । नन्वेवं यत्रोभयोस्तुल्यमेव चारुत्वं तत्र भेदान्तरं स्यादिति । नैवम् । अपकर्षाभावस्यातिशयपदेन विवक्षितत्वात् तत्रोभयभेदसंकरस्वीकारात् । एतादृशे चास्थाने पदा-लम्बनमात्रमेव महत् पौरुषमिति सहृदयभावमास्थायालोचनीयमिति ।

९०. तथाचोक्तं शृङ्गारतिलके—

S'ṛiṅgâratilaka is a work on poetics by Rudrabhaṭa. There is a commentary on it called Rasataraṅgiṇî by Gopâlabhaṭṭa, mentioned in the commentary on p. 93.

९६. नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम्—

Vidyânâtha in describing a महाकाव्य follows Daṇḍin as will be seen from the following description of it given in the Kâvyâdarśa:—

> सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ।
> आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ॥
> इतिहासकथोद्भूतमितरद्वा सदाश्रयम् ।
> चतुर्वर्गफलोपेतं चतुरोदात्तनायकम् ॥
> नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ।
> उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥
> विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।
> मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ॥
> अलंकृतमसंक्षिप्तं रसभावनिरन्तरम् ।
> सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसंधिभिः ॥

सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम् ।
काव्यं कल्पान्तरस्थायि जायेत सदलंकृति ॥

काव्या० १-१४-१९.

A comparison of the text with the above quotation will show clearly to what extent Sanskrit authors are open to the fault of plagiarism.

मन्त्रदूतप्रयाणाजि,° though not adopted in the text, being found only in one or two Mss. out of the Mss. consulted when the text was settled, is a better reading than the one adopted in the text, as it is the reading in the Kâvyâdarśa. It appears to be the reading intended by the author, since he shews further on that he has enumerated 18 topics of description and this number cannot be made up unless आजि is adopted as the reading.

एतेषामष्टादशानां वर्ण्यानां यैः कैश्चिदूनमपीष्यते—

*cf.* what is said by Daṇḍin:—

न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति ।
यद्युपात्तेषु संपत्तिराराधयति तद्विदः ॥ काव्या० १-२०

गद्यपद्यमयं &c.

Champû is an artificial composition in which the same subject is continued through prose and verse. भोजचम्पू or चम्पूरामायण attributed to Bhoja, भारतचम्पू or चम्पूभारत by Anantakavi, नलचम्पू, दमयन्तीचम्पू or दमयन्तीकथा by Trivikramabhaṭṭa are some of the Champûs.

The following are some of the varieties of a काव्य enumerated by Ânandavardhana in his Dhvanyâloka:—

' यतः काव्यस्य प्रभेदा मुक्तकं संस्कृतप्राकृतापभ्रंशनिबद्धं संदानितकविशेषककलापककुलकानि पर्यायबन्धः परिकथा खण्डकथासकलकथे सर्गबन्धोऽभिनेयार्थमाख्यायिकाकथे इत्येवमादयः ।' ध्वन्या० ३-७.

Of these मुक्तक is a single stanza complete in itself. The stanzas of Amarus'ataka are instances of मुक्तक. In Agnipurâṇa it is thus defined:—

' मुक्तकः श्लोक एवैकश्चमत्कारक्षमः सताम् ।' अग्नि० ३३७-३६.

मुक्तक is also one of the four varieties of गद्य thus defined by Vis'vanâtha:—

वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।
भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ॥
आद्यं समासरहितं वृत्तभागयुतं परम् ।
अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम् ॥ साहि॰द॰ ६–३३०–३२.

When two stanzas are connected grammatically, they form संदानितक and three, four and five such stanzas form respectively विशेषक, कलापक and कुलक. Other writers call two stanzas forming a grammatical whole युग्म and three such stanzas संदानितक.

द्वाभ्यां तु युग्मकं संदानितकं त्रिभिरिष्यते ।
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ॥

कुलक is the name given to five or more stanzas forming grammatical wholes. Some writers, however, use different words as under:—

एकः श्लोको मुक्तकं स्याद् द्वाभ्यां युगलकं स्मृतम् ।
त्रिभिर्गुणवती प्रोक्ता चतुर्भिस्तु प्रभद्रकम् ॥
बाणावली पञ्चभिः स्यात् षड्भिस्तु करहाटकः ॥

(*Vide* commentary on Kâvyâdars'a by Premachandratarkavâgis'a, which is a good commentary.

Stanzas on one topic form पर्यायबन्धन—'अवान्तरक्रियासमाप्तावपि वसन्तवर्णनादेकवर्णनीयोद्देशेन प्रवृत्तः पर्यायबन्धः' लोचन on ध्वन्यालोक.

परिकथा–A continued description in various ways regarding one of the four ends of existence—'एकं च धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्तवर्णनप्रकारा परिकथा' लोचन on ध्वन्या॰

पर्यायेण बहूनां यत्र प्रतियोगिनां कथाः कुशलैः ।
श्रूयन्ते शूद्रकवज्जिगीषुभिः परिकथा सा तु ॥

This is परिकथा according to Hemachandra. *Vide* काव्यानुशासन 8th Adhyâya at the end in his gloss.

खण्डकथा is a short tale forming a portion of the entire description as a खण्डकाव्य is a short poem; while सकलकथा is a com-

plete tale—एकदेशवर्णना खण्डकथा । समस्तफलान्तेतिवृत्तवर्णना सकलकथा । द्वयोरपि प्राकृतप्रसिद्धत्वाद् द्वन्द्वेन निर्देशः । लोचन on ध्वन्या०.

Hemachandra defines it as under:—

मन्थान्तरप्रसिद्धं यस्यामितिवृत्तमुच्यते विबुधैः ।

मध्यादुपान्ततो वा सा खण्डकथा यथेन्दुमती ॥ *Vide* 8th Adhyâya, gloss at the end.

Vâmana divides गद्य into वृत्तगन्धि, चूर्ण and उत्कलिकाप्राय. 'पातालतालुतलवासिषु दानवेषु' is given as an instance of वृत्तगन्धि, because a part of वसन्ततिलका metre is recognized in it. चूर्ण is defined as अनाविद्धललितपदम् which means having delicate words and no big compounds. 'अभ्यासो हि कर्मणां कौशलमावहति । न हि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति.' उत्कलिकाप्राय is the reverse of चूर्ण. कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गकुम्भस्थलगलन्मदच्छटाच्छुरितचारुकेसरभारभासुरमुखे केसरिणि' is given as an instance of it. See काव्या० सू० of वामन. १।३।२२-२५.

आख्यायिका and कथा are explained in different ways by different writers:—आख्यायिका उच्छ्वासादिना वक्त्रापरवक्त्रादिना च युक्ता । कथा तद्विरहिता । उभयोरपि गद्यबन्धस्वरूपतया द्वन्द्वेन निर्देशः । लोचन on ध्वन्या०

कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।

क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ।

आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ॥

यथा कादम्बर्यादिः ।

आख्यायिका कथावत् स्यात् कवेर्वंशानुकीर्तनम् ।

अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित् क्वचित् ॥

कथांशानां व्यवच्छेदः आश्वास इति बध्यते ।

आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥

अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ।

यथा हर्षचरितादिः । साहि० द० ६-३३२-३६.

In Âgnipurâṇa the following is the description of आख्यायिका and कथाः—

कर्तृवंशप्रशंसा स्याद् यत्र गद्येन विस्तरात् ।

कन्याहरणसंग्रामविप्रलम्भविपत्तयः ॥

भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः ।

उच्छ्वासैश्च परिच्छेदो यत्र वा चूर्णकोत्तरा ।

वक्त्रं चापरवक्त्रं वा यत्र आख्यायिका स्मृता ॥

श्लोकैः स्ववंशं संक्षेपात् कविर्यत्र प्रशंसति ।
मुख्यस्यार्थावताराय भवेद् यत्र कथान्तरम् ॥
परिच्छेदो न यत्र स्याद् भवेद्वा लम्बकैः क्वचित् ।
सा कथा नाम तद्गर्भे निबध्नीयाच्चतुष्पदीम् ॥ ३३७-१३-१६.

Daṇḍin criticises writers who make divergent distinctions between आख्यायिका and कथा and is of opinion that they both belong to the same class of prose compositions.

अपादः पदसन्तानो गद्यमाख्यायिका कथा ।
इति तस्य प्रभेदौ द्वौ तयोराख्यायिका किल ॥
नायकेनैव वाच्यान्या नायकेनेतरेण वा ।
स्वगुणाविष्क्रिया दोषो नात्र भूतार्थशंसिनः ॥
अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात् ।
अन्यो वक्ता स्वयं वेति कीदृग्वा भेदलक्षणम् ॥
वक्त्रं चापरवक्त्रं च सोच्छ्वासत्वं च भेदकम् ।
चिह्नमाख्यायिकायाश्चेत् प्रसङ्गेन कथास्वपि ॥
आर्यादिवत् प्रवेशः किं न वक्त्रापरवक्त्रयोः ।
भेदश्च दृष्टो लम्भादिरुच्छ्वासो वास्तु किं ततः ॥
तत् कथाख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता ।
अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः ॥ काव्या० १-२३-२८.

Thus according to Daṇḍin कथा and आख्यायिका are synonymous and varieties such as खण्डकथा, परिकथा, कथानिका ( 'भयानकं सुखपरं गर्भे च करुणो रसः । अद्भुतोऽन्ते सुक्लृप्तार्थो नोदात्ता सा कथानिका ॥' अग्निपु० ३३७-२० ) and such other divisions are to be disregarded.

Daṇḍin seems to be criticizing Bhâmaha as will seem from the following from Bhâmaha's work:—

प्रकृतानाकुलश्रव्यशब्दार्थपदवृत्तिना ।
गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता ॥
वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम् ।
वक्त्रं चापरवक्त्रं च काले भाव्यर्थशंसि च ॥
कवेरभिप्रायकृतैः कथनैः कैश्चिदङ्किता ।
कन्याहरणसंग्रामविप्रलम्भोदयान्विता ॥
न वक्त्रापरवक्त्राभ्यां युक्ता नोच्छ्वासवत्यपि ।
संस्कृतं संस्कृता चेष्टा कथापभ्रंशभाक् तदा ॥

अन्यैः स्वचरितं तस्यां नायकेन तु नोच्यते ।
स्वगुणाविष्कृतिं कुर्यादभिजातः कथं जनः ॥

१७ येन केनापि तालेन—Udâharaṇa is a sort of panegyric, part in prose and part in verse, beginning with the word जयति, composed in the Mâlini and other metres and abounding in alliteration. It opens with a charming verse in Mâlini and other metres. Then follow eight sentences in all the cases including the vocative, abounding in Anuprâsas and with a proper beat of time and winding up with an account of the poet's production.

The word is used by Kâlidâsa in his Vikramorvaśîya—'चारणेभ्यस्त्वदीयं जयोदाहरणं श्रुत्वा' and in the Raghuvamśa—जयोदाहरणं बाह्वोर्गापयामास किन्नरान्'.

१८ भोगावली—The word is used by Mâgha in his Siśupâlavadha 5-57 as under:—

स्पष्टं बहिःस्थितवतेऽपि निवेदयन्त-
श्चेष्टाविशेषमनुजीविजनाय राज्ञाम् ।
वैतालिकाः स्फुटपदप्रकटार्थमुच्चै-
र्भोगावलीः कलगिरोऽवसरेषु पेठुः ॥

वर्ण्यमानाङ्कबिरुदवर्णनप्रचुरोज्ज्वला—

Darpaṇakâra defines बिरुद as गद्यपद्यमयी राजस्तुतिर्बिरुदमुच्यते। साहि० द० ६-३३७.

१९ ताराणां संख्यया पद्यैर्युक्ता—

Mandâramaranda of Krishṇa has the same definitions of उदाहरण, चक्रवालक, भोगावली, बिरुदावली and तारावली as are found in the text. Further, it mentions विश्वावली, रत्नावली and पञ्चाननावली and describes them as under:—

विश्वेषां संख्यया पद्यैर्युक्तो विश्वोदयो मतः ।
रत्नानां संख्यया पद्यैर्युक्ता रत्नावली मता ।
पद्यैश्च पञ्चभिर्युक्ता प्रोक्ता पञ्चाननावली ॥ 11th बि० of म० म०.

The same work has the following remarks as regards the style to be adopted in these varieties of prose works:—

आख्यायिकायां शृङ्गारेऽप्युद्धता रचना मता ।
कथायां नाटकादौ च न रौद्रेऽप्यधिकोद्धताः ।
अन्येषु च प्रबन्धेषु रचना स्वाद्यथोचितम् ॥

३३३ भूमिकाभिरनेकाभिः कर्मवागङ्गचेष्टितैः ।
यथा प्रकृतिसन्धानकुशलास्ते कुशीलवाः ॥ p. 145.

३३४ भूपिष्ठां ते नमउक्तिं विधेम । p. 3.

३३५ भ्रूविक्षेपकटाक्षादिविकारो हृदयस्थितम् ।
भावं व्यनक्ति यः सोऽयमनुभाव इतीरितः ॥ p. 223.

३३६ मइमममहमन्त्र हमो । p. 95.

३३७ मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते । p. 2.

३३८ मज्जन्तश्च निमज्जन्तः कल्लोलास्ते यथार्णवे ।
तस्योत्कर्षं वितन्वन्ति यान्ति तद्रूपतामपि ॥
तथा स्थायिनि निर्मग्ना उन्मग्ना व्यभिचारिणः ।
पुष्णन्ति स्थायिनं ( स्थायिनः p. 294. ) स्वांश्च तत्र यान्ति ( तन्वन्ति p. 294. )
रसात्मताम् ॥ p. 225, p. 294.

३३९ मनसो यद्द्रवीभावो विषयेषु ममत्वतः ।
भयशङ्काविसानाख्या स एव स्नेह उच्यते ॥ p. 273.

३४० मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा च वासुकिम् । p. 50.

३४१ मरणेऽभिनयो नास्तीत्येतत्काव्ये न पठ्यते । p. 259.

३४२ महिलासहस्सभरिए तुह हिअए सुहअ सा अमान्ती ।
दिअहं अणण्णअरणा अंगं तणुअं वि तणुए हि ॥ p. 385.

३४३ महोदर्यो महाभाग्यः कुलज्ञो रूपवान् युवा ।
मानी सुशीलः सुभगो विदग्धो देशसंमतः ॥
अहर्निद्रो मधुरवागभिगम्यो भवेत् प्रियः ॥ p. 274.

३४४ महीभुजामहिभयं स्वपक्षप्रभवं भयम् । p. 454.

३४५ माङ्गल्यं पूर्णकुम्भं तु शिरःस्थाने निधाय च ।
वैदिकैर्गारुडैर्मन्त्रै रक्षां कृत्वा स्वपेन्निशि ॥ p. 152.

३४६ माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते ।
ओजः प्रकाशकैस्तैस्तु परुषा कोमला परैः ॥
केषांचिदेषा वैदर्भीप्रमुखा रीतयो मताः ॥ p. 63.

३४७ माधुर्ये पृथक्पदत्वं दीर्घसमासाभावः । p. 324.

३४८ मांसलौ गूढगुल्फौ च कूर्मपृष्ठसमावपि ।
भवेतां चरणौ यस्य स भवेत् पृथिवीपतिः ॥ p. 217.

३४९ मितात् प्रहस्य । p. 320.

३५० मिथलिवविवल्वल इवार्थे । p. 86.

---

३४० वि० पु०. ३४१ By शार० त०. ३४४ अम० ३।८।३०. ३४५ स्मृ० रत्ना०. ३४६ का० प्र० ९ ( ° कोच्यते ). ३४७ वा० 's काव्या० सू० ३।१।२१ ( समासदैर्घ्यनिवृत्तिपरं चैतत् ). ३४८ By सोमे०. ३४९ चन्द्र.

३५१ मीलनोन्मीलनाद्यतिशीघ्र तत्रकितं विदुः ।
 अपाङ्गयोरूर्ध्वभागावलोकनमुदञ्चितम् ॥ p. 269.

३५२ मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा ।
 प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥ p. 238.

३५३ मुख्यार्थनिहतिर्दोषः । p. 296.

३५४ मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन । p. 284.

३५५ मुसुण्ढी स्याद् दारुमयी वृत्तायःकीलसंचिता । p. 168.

३५६ मुहुः पश्चिमपादाभ्यां भुवि स्थित्वाग्रपादयोः ।
 ऊर्ध्वं प्रेरणया स्थानमश्वानां पुरुषः स्मृतः ॥ p. 168.

३५७ मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठत्वात् सर्वरसेभ्यः प्रधानतमः स चायं शान्तरसः ।
p. 237.

३५८ मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः ।
 घूर्णनाज्ञानपतनभ्रमणादर्शनादिकृ[त्] ॥ p. 218.

३५९ मौलं भृतं सुहृच्छ्रेणी द्विषदाटविकं बलम् । p. 155.

३६० मौलं भृत्यं तथा मैत्रं श्रेणमाटविकं बलम् ।
 आमित्रमपरं षष्ठं सप्तमं नोपलभ्यते ॥ p. 333.

३६१ म्रौ म्रौ गश्चिदशयतिः प्रहर्षिणीयम् । p. 309.

३६२ यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
 तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ p. 237.

३६३ यजुर्वेदे तिष्ठति मध्येऽङ्गः । p. 157.

३६४ यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः । p. 205.

३६५ यस्त्वभिप्रायविशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यां प्रकाश्यते तद्भवति विवक्षितं तात्पर्येण प्रकाश्यमानम् । p. 44.

३६६ यत्र किंचित् सामान्यं कश्चिच्च विशेषस्तत्रोपमानोपमेये भवतः । p. 369.

३६७ यत्र वस्त्वन्तरे वस्त्वन्तरमुपचर्यते स गौणोऽर्थः । यत्र न तथा स लक्ष्य इति विवेकः ।
p. 46.

३६८ यत्र सूचनव्यापारोऽस्ति तत्र शब्दशक्तिमूलो वस्तुध्वनिर्बोद्धव्यः । p. 134.

---

३५१ मा० प्र०. ३५३ का० प्र० ७ ( मुख्यार्थहतिर्दोषः ). ३५४ का० प्र० ४. ३५५ वैज० ३५७ लोच० p. 178 ( निश्चितत्वात् for निष्ठत्वात् and स चायमस्मदुपाध्यायभट्टतौतेन काव्यकौतुके अस्माभिश्च तद्विवरणे बहुतरकृतनिर्णयः पूर्वपक्षसिद्धान्त इत्यलं बहुना. Of ग, however, the reading in the footnote there is the same as in the text viz., स चायं शान्तो रसः ). ३५८ सा० द०. ३५९ अम०. ३६० By मौले०. ३६१ वृ० रत्ना०. ३६२ ध्व० लो० p. 176. ३६३ श्रुति. ३६५ ध्व० लो० p. 199. ३६६ भाष्य. Quoted also in अलं० स० pp. 25–26 with स विषयः सदृशतायाः as v. l. ३६७ अलं० चूडा० or का० शा० of हेम० p. 25.

१६९ यथार्थव्यक्तिहेतुत्वं सोऽर्थव्यक्तिः स्मृतो गुणः । p. 325.

१७० यत्रैकपदवद्भान्ति पदानि सुबहून्यपि ।
अनालक्षितसन्धीनि स श्लेषः परमो गुणः ॥ p. 323.

१७१ यत्रोल्लसत्केतनतातिफलेन मुक्ताहृदामेव विभाति श्रिया । p. 396.

१७२ यथा कामोपयोग्यत्र शृङ्गारो दृश्यते रसः ।
अर्थोपयोगी वीरः स्याद्रौद्रोऽपि स्यात् क्वचित् क्वचित् ॥
रक्षारूपेण धर्मार्थोपयोगी करुणो भवेत् ।
अद्भुतोऽपि मनःप्रीतिप्रदत्वात् कामसाधकः ॥
ते भयानकबीभत्सहास्याः काव्येषु योजिताः ।
तत्तन्नेतृमनोवृत्तिवशात् प्रायस्त्रिवर्गगाः ॥ p. 108.

१७३ यथास्थानमुपविश्यान्वारभ्यताम् । p. 132.

१७४ यथा हि तन्तवो वेमतुर्यादिक्रिययान्विताः ।
पटात्मना परिणता पटवाच्या भवन्ति ते ॥
तथैव स्थायिनो भावा विभावादिभिरन्विताः ।
रसात्मना परिणता रसवाच्या भवन्ति ते ॥ p. 293.

१७५ यदह्ना कुरुते कर्म प्रजा धर्मेण पालयन् ।
दशवर्षसहस्राणि तस्य भुङ्क्ते महत् फलम् ॥ p. 161.

१७६ यदायमुपमानांशो लोकतः सिद्धिमृच्छति ।
तदोपमैव येनेवशब्दः साधर्म्यसूचकः ॥
यदा पुनरयं लोकादसिद्धः कविकल्पितः ।
तदोत्प्रेक्षैव येनेवशब्दः संभावनापरः ॥ p. 387.

१७७ यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् ।
तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥ p. 69.

१७८ यद्दर्शने विरक्तोऽपि क्षुभ्यते तत् सन्मन्मथम् । p. 68.

१७९ यद्यपि रसभावादिरर्थो ध्वन्यमान एव भवति न वाच्यः कदाचिदपि तथापि न सर्वोऽसंलक्ष्यक्रमस्य विषयः । p. 56.

१८० यद्यपि स्वलक्षणानां व्यादानात् पूर्वकालता तथापि तद्व्यादानानन्तरभाविस्वप्रक्रियापेक्षं व्यादानस्य पूर्वकालत्वमस्ति । p. 315.

१८१ यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥ p. 123.

१८२ यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः ॥ p. 34, p. 123.

---

१७२ भा०प्र०. १७३ आप० प्र०. १७६ अलं० सर्व० संजी० by वि० चक्र० (°दसिद्धः). १७७ संगी० रत्ना०. १७९ लोच० pp. 102–03 ( सर्वोऽलक्ष्यक्रमस्य &c. ). १८१ By भाव०. १८२ वसन्तराजीय quoted by Mallinâtha on माघ २।८.

१८३ यमकेषु निरर्थकं न दोषः । p. 299.
१८४ यमर्थमादृतश्चिन्तयन् स्वपिति सैव चिन्तासन्ततिः प्रत्यक्षाकारा संजायते । p. 254.
१८५ यस्तुष्टो तुष्टिमाप्नोति शोके शोकमुपैति च ।
क्रोधे क्रुद्धो भये भीतः स श्रेष्ठः प्रेक्षकः स्मृतः ॥ p. 286.
१८६ यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।
वाक्ये संघटनायां च स प्रबन्धेऽपि दीप्यते ॥ p. 47.
१८७ यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥ p. 81.
१८८ यावदित्यव्ययं चास्ति तद्धितान्तश्च विद्यते ।
अतो नित्यसमासेऽपि तद्धितान्तेन विग्रहः ॥ p. 330.
१८९ या स्थायिभावरतिरेव निमित्तभेदा-
च्छृङ्गारमुख्यनवनाट्यरसीभवन्ती ।
सामाजिकान् सहृदयान्नटनायकादी-
नानन्दयेत् सहजपूर्णरसोऽस्मि सोऽहम् ॥ p. 295.
१९० युक्तियुक्तं वचो ग्राह्यं न तु पुरुषगौरवात् । p. 78.
१९१ युगपदधिकरणवचने द्वन्द्वः । p. 304.
१९२ युधिष्ठिरं द्वैतवने वनेचरः । p. 342.
१९३ युष्मदि गुरावेकेषाम् । p. 86.
१९४ योगविभागाङ्गीकारे तस्य नित्यत्वात् समानजातीयशब्दप्रयोगो न स्यात् । अस्ति च प्रयोगः । तस्मात् सपक्षादिशब्देषु सदृशार्थस्य सहशब्दस्य पक्षादिभिरस्वपदविग्रहे बहुव्रीहौ सहशब्दस्य 'वोपसर्जनस्य' इति सभावः । भाष्यवार्तिकयोश्च योगविभागो नोपन्यस्तः । p. 327.
१९५ रणत्क्वणः । p. 167.
१९६ रतेरेवावस्थाविशेषा प्रेमादयः । p. 279.
१९७ रसतेः स्वादनार्थत्वाद्रस्यन्त इति ते रसाः । p. 219.
१९८ रसस्तु स एव यो यत्र मुख्यतया विभावानुभावव्यभिचारिसंयोजनोचितस्थायिप्रतिपत्तिकस्य प्रतिपत्तुः स्थाय्यंशे चर्वणप्रयुक्त एवास्वादप्रकर्षः । p. 227.
१९९ रसभावतदाभासभावशान्त्यादिरक्रमः ।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः ॥ p. 467.

---

१८३ का० शा० of हेम० p. 186 ( यमकादौ निरर्थकत्वं न दोष इति केचित् ). १८४ चशा० प० शा०. १८५ भा० प्र०. १८६ ध्व० लो० ३।१. १८७ का० प्र० २. १८८ By हरदत्त. १८९ स्था० यो० प्र० of अम० यो०. १९१ By वार्तिककार. १९२ किरा० १।१. १९३ By जया०. १९४ हर०. १९५ अम० ३।२।१८ ( रणः क्वणे ). १९६ रसा०. १९७ भाव० प्र०. १९८ लोच० p. 67 ( रसध्वनिस्तु, योऽत्र, 'संयोजनोदित' स्थाय्यंशचर्वणाप्रयुक्त ). १९९ ध्व० लो० २।३ ( तत्प्रशान्त्यादि? ).

४०० रसभावादिविषयविवक्षाविरहे सति ।
अलंकारनिबन्धो यः स चित्रविषयो मतः ॥ p. 73.

४०१ रसस्य स्याद्विरोधाय वृत्त्यनौचित्यमेव च । p. 47.

४०२ रसाः कार्यवशात् सर्वे मिलन्त्येव परस्परम् ।
प्रथमं यो रसः ख्यातः स प्रधानो भविष्यति ॥ p. 285.

४०३ रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः ।
औचित्यवान् यस्ता एव वृत्तयो द्विविधाः स्थिताः ॥ p. 46.

४०४ रसानामङ्गभूतानामङ्गिनो वा रसस्य च ।
न चातिरसतो दूरं वस्तु विच्छिन्नतां नयेत् ॥
रसं वा न तिरोदध्याद् वस्त्वलंकारलक्षणैः ॥ p. 117.

४०५ रागोऽनुरक्तो विच्छिन्नमनुराग उदाहृतः । p. 279.

४०६ राजा कालस्य कारणम् । p. 205.

४०७ राज्ञः पुरजनस्यापि मङ्गलाचारशंसिनः ।
मान्यैर्मागधिकागीतैर्मागधा इत्युदीरिताः ॥ p. 176.

४०८ राज्ञां नवाङ्गुलायामो मध्येऽष्टाङ्गुलविस्तृतः ।
चतुरङ्गुलविस्तारपार्श्वः स्वर्णमयः शुभः ॥
पट्टः पञ्चशिखो राज्यप्रजासौख्यसमृद्धये ॥ p. 207.

४०९ रामाद्याश्रितदुःखादेरनुभूतस्तदात्मनः ।
सामाजिकस्य मनसो भावस्तद्भावभावनम् ॥ p. 223.

४१० रुचिरेण सुवर्णेन निर्मितं रत्नरञ्जितम् ।
अष्टभिः स्फाटिकैः सिंहैर्मूर्ध्नि तत् सुविराजितम् ॥
अधः काञ्चनविन्यस्तरत्नवेदित्रयान्वितम् ।
आस्थानमण्डपे राज्ञां सिंहासनमिदं परम् ॥ p. 210.

४११ रूपकं पूर्वसंसिद्धं श्लेषमुत्थापयेद्यदि ।
तदा रूपकमेव स्यादन्यथा श्लेष इष्यते ॥ p. 54.

४१२ रूपयौवनशालिन्यो गायन्त्यो गातृसंमताः ।
माधुर्यधुर्यध्वनयश्चतुराश्चतुरप्रियाः ॥ p. 137.

४१३ रेखाभ्यां चतुरस्राणि चतुष्कोष्ठानि कल्पयेत् ।
रेखाद्वयान्तराले स्याद्यथा कोष्ठे गृहाष्टकम् ॥

* * * * * *

पिदिकस्थले कुण्डलितं स्वमङ्गं
स्वेन त्रिरावेष्ट्य विभङ्गिभङ्गम् ।

---

४०० ध्व० लो० ( called काव्यालोक by the commentator ) p. 221. ४०१ ध्व० लो० ३।१९. ४०२ भा० प्र०. ४०३ ध्व० लो० ३।३३ ( यस्ता एता and द्विविधा ). ४१० मान०. ४११ अलं० सर्व० संजी० of विद्याचक्रवर्तिन्. ४१२ By शार्ङ्ग०.

छित्त्वा गळे पुष्पमाद्वैः स्थितस्य
पाद्यः फणातः फणिवन्ध पयः ॥ p. 350.

४१४ लक्षणा तु समन्वयशक्तिसमर्पितान्वयविधुरीकरणतुरीणत्वादन्वयप्रबक्त्यनन्तरभाविन्येव । p. 52.

४१५ लग्नमर्धं तृतीयांशो नवांशो द्वादशांशकः ।
त्रिंशांशश्चेति षड्वर्गः क्रूरसौम्यवशाद् द्विधा ॥ p. 201.

४१६ लाटजनोपलालितोऽनुप्रासो लाटानुप्रासः । न तु लाटदेशजन्यः कश्चनोपकारः काव्यस्य । p. 344.

४१७ लास्यं तु सुकुमाराङ्गं मकरध्वजवर्धकम् । p. 137.

४१८ लिङ्गमाशिष्यं लोकाश्रयत्वाल्लिङ्गस्य । p. 76.

४१९ वक्ति सोल्लासवक्रोक्त्या धीरमध्या कृतागसम् । p. 30.

४२० वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥ p. 466.

४२१ वक्त्रं नाद्यात्रभौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् । p. 97.

४२२ वक्षोऽथ कक्षौ नखनासिकास्यं
कृकाटिका चेति षडुन्नतानि ॥
हनुलोचनबाहुनासिकं स्तनयोरन्तरमत्र पञ्चमम् ।
इति दीर्घमिदं तु पञ्चकं न भवत्येव नृणामभूभृताम् ॥ p. 176.

४२३ वन्शमूभृद्गुणोत्कर्षश्रावकाः वन्दिनः स्मृताः p. 202.

४२४ वाष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो p. 64, p. 387, p. 476.

४२५ वस्त्वनेतृरसादीनामानुगुण्येन योजयेत् ।
विवक्षितोऽथ नाङ्कानां क्रम इत्येव निर्णयः ॥ p. 113.

४२६ वस्तु यत् स्यात् प्रबन्धस्य शरीरं कविकल्पितम् ।
इतिवृत्तं तदेवाहुर्नाट्याभिनयकोविदाः ॥ p. 102.

४२७ वस्तुस्वभावकपटः कूरसत्त्वादिसंभवः ।
दैविकः कपटो वह्निवर्षवातादिसंभवः ।
शत्रुजः कपटस्तत्र संग्रामादिसमुद्भवः ॥ p. 129.

४२८ वाक्कायमनसां प्रायः प्रलयो नष्टचेष्टता । p. 240.

४२९ वागङ्गसत्त्वाभिनयैर्मुखरागोपशोभितैः ।
भावयन्नान्तरं भावं व्यापारो भाव इष्यते ॥ p. 35.

४३० वाचा शरीरस्पर्शनमुपालम्भः । p. 282.

---

४१४ लोच०. ४१६ By गोपा०. ४१८ भाष्य. ४२१ वृ० रत्ना०. ४२२ व० सं०. ४२४ Quoted by भट्टोजिदीक्षित in his सि० कौ०. ४२६ भा० प्र०. ४२७ भा० प्र०. ४३० वृत्तिका०.

४३१ वाच्यसामर्थ्याक्षिप्त इति भेदत्रयव्यापकं सामान्यलक्षणम् । p. 56.
४३२ वा भक्ष्यामासि हलाहल । p. 86.
४३३ वा समासे । p. 73.
४३४ वासोऽलङ्करणाभरणमाल्यशय्यासनादिषु ।
यत्र यत्र स्पृहा तत्तद्देशकालानुकूल्यतः ॥
अत्यादरेण सत्कार उपचार इतीरितः ॥ p. 15.
४३५ वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये । p. 368.
४३६ विभवेऽत्र अवधारणे । p. 274.
४३७ विकटत्वं च बन्धस्य कथयन्ति मुदारताम् ।
वैचित्र्यं न प्रपद्यन्ते यथा शून्याः पदक्रमाः ॥
पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः ॥ p. 326.
४३८ विकृतस्वरसत्त्वादेर्भयभावो भयानकः ।
सर्वाङ्गवेपथुस्वेदशोषवैवर्ण्यलक्षणः ॥
दैन्यसंभ्रमसंमोहत्रासादिस्तत्सहोदरः ॥ p. 234.
४३९ विकृताकृतिवाग्वेषैरात्मनो वा परस्य वा ।
हासः स्यात् परिपोषोऽस्य हास्यस्त्रिप्रकृतिः स्मृतः ॥ p. 230.
४४० विच्छित्तिशोभिनैकेन भूषणेनेव भामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥ p. 75.
४४१ विजयेतां रामलक्ष्मणौ कुम्भकर्णमेघनादौ । p. 314.
४४२ विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते ॥ p. 453.
४४३ विभावादिरत्र न ज्ञापको नापि कारकः । अपि तु चर्वणोपयोगी । p. 293.
४४४ विभावादिसंभवो हि रसं प्रति प्रयोजको न विभावादिज्ञानं ततश्च तिरश्चामप्यस्त्येव रसः । p. 281.
४४५ विभावोऽप्यनुभावः स्यादनुभावोऽपि भाववत् ।
तौ पुनश्चारिणौ स्यातां ते च तौ स्युः परस्परम् ॥ p. 226.
४४६ विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः ।
आत्मभावं नयत्यन्यान् स्थायीव लवणाकरः ॥ p. 220.
४४७ विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् ।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥ p. 284.
४४८ विशेषरूपं वाक्यार्थमपदार्थमपीच्छता ।
व्यक्तिरिष्टाभिधातोऽप्यभिहितान्वयवादिना ॥ p. 57.
४४९ विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः । p. 225.
४५० विषय्याकारमारोप्य विषयस्यगने यदा ।

---

४३१ लोच०. ४३५ विश्व०. ४४० ध्व० लो० p. 130. ४४१ अ० रा० ४. ४४३ लोच०. ४४४ प्रकाश० p. 106. ४४५ भा० प्र०. ४४६ द० रू० ४।३४ (ध स्थायी). ४४७ ध्वन्या०. ४४९ द० रू० ४।६. ४५० अलं० सर्व० संजी० by वि० चक्र० (भवेत्).

रूपकत्वं तदा तत्र रञ्जनेन समन्वयः ॥
यदा तु विषयो रूपात् स्वस्मादप्रच्युतो भवेत् ।
उपयुङ्क्ते पराकारं परिणामस्तदा मतः ॥ p. 377.

४५१ विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः ।
येनान्तरङ्गं द्रवति स स्नेह इति कथ्यते ॥ p. 68.

४५२ विहगाः कदम्बसुरभाविह गाः । p. 343.

४५३ विंशत्याद्याः सदैकत्वे संख्याः ( सर्वाः p. 30. ) संख्येयसंख्ययोः । p. 20, p. 30.

४५४ वीररौद्रप्रधानो धीरोद्धतः । p. 233.

४५५ वीरस्य चैव यत् कर्म सोऽद्भुतः परिकीर्तितः । p. 227.

४५६ वृत्तभङ्गो भवेद्रूपो वृत्तलिङ्गो भवेद्गनी । p. 176.

४५७ वृन्दारका देवतानि पुंसि वा देवताः । p. 298.

४५८ वैराग्यपरमेश्वरानुग्रहप्राचीनकुशलपरिपाकसत्पुरुषसेवावेदान्तविचारादयो विभावाः । यमनियमादयोऽनुभावाः । राज्यधुरोद्वहनादयोऽपि शान्तस्य जनकादेरनुभावाः । p. 237.

४५९ वैराग्याद्युवतिगर्हासिद्धस्तृतीयो बीभत्सः । p. 325.

४६० व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् ।
यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका ॥ p. 122.

४६१ व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत् ।
एवं नयन्ति रसतामितरे स्थायिनं श्रिताः ॥ p. 219.

४६२ व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥ p. 159.

४६३ व्यभिचारिरसस्थायिभावानां शब्दवाच्यता । p. 321.

४६४ व्याघ्रशब्दो यदा शौर्यात् पुरुषार्थेऽवतिष्ठते ।
तदाधिकरणाभेदात् समासस्यास्ति संभवः ॥
शूरशब्दप्रयोगे तु व्याघ्रशब्दो मृगे स्थितः ।
भिन्नेऽधिकरणे वृत्तेस्तत्र नैवास्ति संभवः ॥ p. 363.

४६५ व्यादानस्य पूर्वकालत्वाभावात् क्त्वाप्रत्ययानुपपत्तिरिति चोदयित्वानन्तरभाविस्वप्नापेक्षया पूर्वकालत्वसंभवान्नानुपपत्तिः । p. 315.

४६६ व्याधैः सहोषितं विन्ध्ये हन्त वल्कलधारिभिः । p. 312.

४६७ व्यापारेण च काव्यस्य तदीयाभिनयेन च ।
रसात्मत्वं नीयमानः स्थायी स्वादत्वमेष्यति ॥

---

४५२ शिशु० व० ४।३६. ४५३ अम० २।९।८३. ४५५ By भरत. ४५७ अम० १।१।९. ४५८ This is the substance of what is found in लोच० p. 177 ( तस्य च भवितव्यमेव प्राक्तनकुशलपरिपाकपरमेश्वरानुग्रहादध्यात्मरहस्यशास्त्रवीतरागपरिशीलनादिभिर्विभावैरित्यतएव व्यभिचारिसद्भावः स्थायी च दर्शितः । ). ४६० वि० मु० मं. ४६२ मनु० २।७२ ( च for तु ). ४६३ का० प्र० ७. ४६४ By भर्तृ०. ४६५ भाष्य. ४६७ By शार० त०.

सामाजिकादिरेवास्य रसस्याश्रय उच्यते ।
रसस्य वर्तमानत्वात् नानुकार्यस्य संभवः ॥
अनुकार्यस्य रामादेः कालातिक्रमदर्शनात् ।
नातिक्रान्तानुकार्यस्य रसोद्भावनया कविः ॥
बध्नाति काव्यं यत् तस्माद्रसः सामाजिकाश्रयः ॥ p. 294.

४६८ वजेद्भिश्चरिवाम्भोध्यो निर्गिरन्तरिवाद्रिनीः ।
शूराणां सिंहनादैश्च हेषारवैश्च वाजिनाम् ।
महारथमहाध्वानैर्मातङ्गघनगर्जितैः ॥ p. 171.

४६९ शकुनस्तु शुभाशंसिनिमित्ते शकुनः खगः । p. 171.

४७० शत्रुदेशावमर्दाय सद्यः सुभटघोटकैः ।
विजिगीषोः प्रवृत्तिर्या सा धाटीति निगद्यते ॥ p. 181, p. 381.

४७१ शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वाश्रयाः पराः । p. 63.

४७२ शब्दधर्मत्वं चैषामन्याश्रितत्वेऽपि शरीराश्रितत्वमिव शौर्यादीनाम् । p. 63.

४७३ शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य तेन सहोपमादेरलंकारस्य च निर्विवादं व्यङ्ग्यत्वम् । p. 54.

४७४ शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥ p. 287.

४७५ शशी दिवसधूसरो गलितयौवना कामिनी । p. 459.

४७६ शषौ च रेफसंयोगढवर्गश्चापि भूयसा ।
विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युताः ॥ p. 64.

४७७ शस्येत् । p. 241.

४७८ शान्तवत्सलसहिता दश । p. 221.

४७९ शान्तवर्जमष्टौ रसाः । p. 221.

४८० शास्त्रत्यागः साहसम् । p. 22.

४८१ शिवंकरशब्दश्छन्दस्येव न भाषायाम् । p. 202.

४८२ शुक्लमाल्याम्बरभृतः प्राङ्मुखस्य महीपतेः ।
पट्टं शिरसि बध्नीयात् सिंहासनगतस्य च ॥ p. 207.

४८३ शोभा विलासो माधुर्यं गाम्भीर्यं स्थैर्यतेजसी ।
ललितौदार्यमित्यष्टौ सात्त्विकाः पौरुषा गुणाः ॥ p. 18.

४८४ शृङ्गार एक एव रसः । p. 221

---

४६८ मान०. ४६९ विष०. ४७१ ध्व० लो० ३।५३ ( अर्थतत्त्वयुजोऽपराः ). ४७२ ध्व० लो०. ४७३ का० प्र० ५. ४७४ By भर्तृ०. ४७५ By भर्तृ०. ४७६ ध्व० लो० ३।३ ( शषौ सरेफसंयोगौ ढकारश्चापि भूयसा । and रसच्युतः ). ४७९ By धनिक. ४८० By हर०. ४८१ By हर०. ४८२ By वसि०. ४८३ द० रू० २।९ ( धैर्यतेजसी and सत्त्वजाः ). ४८४ By शृं० प्र० कार.

... ...र्मावलताङ्कितैः ।
अङ्कैरनङ्गसर्वस्वैः शोभातिशयशालिभिः ॥
अन्वितो नृत्तभेदो यस्तल्लास्यमिति कथ्यते ॥ p. 35.

४८६ शृङ्गारहास्यविधुरे रसैर्दीप्तैर्निरन्तरः । p. 127.

४८७ शृङ्गाराद्यनुभवयोग्यतया यदात्मनः सत्त्वं स भावः । p. 220.

४८८ श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं विदुः ।
नटादित्रितयालापः पूर्वरङ्गे तदिष्यते ॥ p. 121.

४८९ श्रेयःसाधनता यत्र द्रव्यादौ विहितो भवेत् ।
तस्यैव धर्मता ज्ञेया धर्मस्तत्साधनं यतः ॥ p. 9.

४९० श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ p. 408.

४९१ श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् । p. 372.

४९२ श्लक्ष्णं षडङ्गुलोत्सेधं षोडशाङ्गुलविस्तृतम् ।
द्वात्रिंशदङ्गुलायामं क्षीरदारुसमुद्भवम् ॥
पद्माङ्कितं भवेद् भद्रपीठं स्नपनकर्मणि ॥ p. 199.

४९३ षड्वर्गो भवति सदा शुभखचरसमुद्भवः शुभदः ।
पापसमुत्थस्त्वशुभस्तस्माद्ग्राह्यस्तु सौम्यषड्वर्गः ॥ p. 201.

४९४ ष्यञः पित्करणादीकारो बहुलम् । p. 60. p. 133.

४९५ संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ p. 53, p. 437.

४९६ संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ p. 305.

४९७ सकलकले पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव । p. 353.

४९८ सकृत्कृतधर्मो न धार्मिकः । p. 16.

४९९ संगीतज्ञैर्बुधैः सार्धं नायके प्रेक्षके स्थिते ।
प्रविश्य रङ्गभूमिं ते तिष्ठन्तः साम्प्रदायिकाः ॥ p. 124.

५०० संग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम् ।
शुश्रूषा ब्राह्मणानां च राज्ञां श्रेयस्करं परम् ॥ p. 208.

५०१ स च न व्यतिरिक्तमाधारमपेक्षते किं त्वनुकार्याभिन्नाभिमते नर्तके आस्वादयिता सामाजिकः तेन नाट्य एव रसा नानुकार्यादिषु ॥ p. 294.

---

४८५ In सं० चूडा०. ४८८ द० रू० p. 117. ४९० By आचार्य. ४९१ का० प्र० १०. ४९२ By वा० शा०. ४९३ बृह० सं० सं०, ४९४ वाम० ५।२।५६. ४९५ By भर्तृ० in वा० प०. ४९८ By वृत्तिकार. ४९९ संगीतरत्नाकर. ५०० मनु ७।८८, ५०१ लोच०.

५०२ सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः ।
  वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः ॥ p. 370.

५०३ सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ p. 150.

५०४ स तु शब्दस्य विस्तरः । p. 87, p. 330.

५०५ सत्यवागार्जवरतिरपकुर्वन् प्रियं वदन् ।
  भजते यः स्वयं प्रीतः प्रियः स भवति प्रियाः ॥ p. 31.

५०६ सत्यं प्रियं च वचनं यत् तत् सूनृतमुच्यते । p. 151.

५०७ सदसत्त्वनिवृत्तिभ्यां निवृत्त्यान्यस्य वर्ण्यते ।
  तदा द्विधा विनोक्तिः स्याद्विधिरत्र फले भवेत् ॥ p. 402.

५०८ सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
  नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥ p. 320.

५०९ सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः । p. 370.

५१० सद्रूपोद्भावना माया स्वत एवासतः पुरा ।
  अथवान्यपदार्थानामन्यथा कृतिरेव वा ॥
  अदेशकालपारोक्ष्यं परोक्षस्येव वस्तुनः ।
  मन्त्रौषधादिभिः सोऽयमिन्द्रजाल इतीरितः ॥ p. 128.

५११ सपत्नीनखदन्तानि चिह्नं यत्र न दृश्यते ।
  विस्मार्यमाणमानेर्ष्यः सुभगः सोऽभिधीयते ॥ p. 280, p. 276.

५१२ सपीतिः स्त्री तुल्यपानम् । p. 326.

५१३ सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्च । p. 365.

५१४ स प्रेमा तन्मिथो यूनोर्निरूढं भावबन्धनम् । p. 279.

५१५ संपन्नैश्वर्यसुखयोरशेषगुणयुक्तयोः ।
  नवयौवनयोः श्लाघ्यप्रकृत्योः शुभ्ररूपयोः ॥
  नारीपुरुषयोस्तुल्या परस्परविभाविका ।
  स्पृहारूपा चित्तवृत्ती रतिरित्यभिधीयते ॥ p. 229.

५१६ संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ । p. 252.

५१७ संभूतान्यपि रसान्तराणि स्वविभावादिसामग्र्या स्वावस्थायां यद्यपि लब्धपरिपोषाणि चमत्कारगोचरतां प्रतिपद्यन्ते तथापि स चमत्कारस्तावत्येव परितुष्यन् न विश्राम्यति किं तु चमत्कारान्तरमनुधावति । p 285.

५१८ संमोहानन्दसंभेदो मदो मद्योपयोगजः ।
  अमुना चोत्तमः शेते मध्यो हसति गायति ॥
  अधमप्रकृतिश्चापि परुषं वक्ति रोदिति ॥ p. 245.

५१९ सरितः पुलिनं वेला कान्ताराराममूधराः ।
  लतागृहाणि चित्राणि शय्या किसलयाञ्चिता ॥
  दिवा विहारदेशाः स्युः ॥ p. 157.

---

५०३ अभि० शा० of कालि०. ५०४ अम० ३।२।२२ ( स च ). ५११ भा० प्र०. ५१२ अम० २।१०।५५. ५१३ By कात्या०. ५१६ By वाम० ५।१।९. ५१७ लोच०. ५१८ साहि० द०. ५१९ भा० प्र०.

५२० सर्वत्रैकैवानन्दरूपत्विलौकिकं सुखमिति व्यवह्रियते । अलौकिकविभावाद्यभिव्यक्त्या कविसमयप्रसिद्ध्यनुसारादलौकिको रस इति कथ्यते। नानाविधाविमलकर्मनिर्मलान्तःकरणेषु शमदमादिसाधनसंपन्नेषु श्रवणमनननिदिध्यासनपरेषु परमयोगिषु निर्विकल्पकसमाध्यभिव्यक्त्या ब्रह्मेति परमात्मेतीश्वर इति शब्द्यते ॥ p. 295.

५२१ सर्वप्रकारैः संपूर्णकामः संतुष्टमानसः ।
प्राप्नोति मुक्तिं चरमे शान्तेनैव रसेन सः ॥ p. 287.

५२२ सर्वमप्यर्हितं द्रव्यं प्रच्छादनमपेक्षते । p. 90.

५२३ सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ॥
त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत् स्यात्तज्जनान्ते जनान्तिकम् ॥
रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम् ॥ p. 114.

५२४ सर्वाण्युदकपूर्वाणि दानानि । p. 215.

५२५ सर्वासामन्तरा वस्तुरसादिवशकल्पिता ।
अन्तरा सा ध्रुवा ज्ञेया नाट्याभिनयरञ्जिनी ॥ p. 143.

५२६ सर्वास्वप्यवस्थास्वनुल्बणत्वं माधुर्यम् । p. 263.

५२७ सर्वो द्वन्द्वो विभाषयैकवद्भवति । p. 76.

५२८ सर्वोद्वालोकनेनैव स्वानुकूल्यप्रकाशनम् । p. 68.

५२९ सहकारित्वमेवाख्यातुं संघटनायामित्यादौ सप्तमीनिर्देशः । p. 47.

५३० सह शाखया प्रस्तरं प्रहरति । p. 16.

५३१ साक्षिगतः साकलिकोऽयमद्वैतवादः । p. 461.

५३२ सादृश्यमात्रं सामान्यं द्विष्ठं कैश्चित् प्रतीयते ।
गुणभेदोऽप्यभेदेन द्विवृत्तिर्वा विवक्षितः ॥ p. 45.

५३३ साधनं निर्वृतौ मदे सैन्ये सिद्धौषधे गतौ । p. 301.

५३४ साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम् ।
न कुतूहली कस्य मनश्चरितं च महात्मनां श्रोतुम् ॥ p. 431.

५३५ सामान्यगुणयुक्तस्तु धीरशान्तो द्विजादिकः । p. 23.

५३६ सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः । p. 134

५३७ सुकुमाराङ्गविन्यासो ललितं परिकीर्त्यते । p. 36.

५३८ सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम् । p. 220.

५३९ सुगन्धपुष्पाक्षतपूर्णकुम्भाः शक्रध्वजच्छत्रमहीपतीनाम् ।
ब्रह्मदिनेशेन्दुसुहृत्सुराणां सितद्विपादर्शसुवासिनीनाम् ॥
सुवर्णधान्याज्यफलेभधर्षाणां मत्स्याज्यरत्नाम्बरवाहनानाम् ।
संदर्शनं श्रेयमुशन्ति सन्तः स्वप्ने मृतानां च सुचेष्टितानाम् ॥ p. 151.

---

५२० By नर० मू०. ५२१ मा० प्र०. ५२२ A न्याय. ५२३ द० रू० १।५८।५९. ( त्रिपताका & स्यात्तज्जनान्ते तज्जना° ). ५२४ आप०. ५२६ द० रू०. ५२९ लोच० p. 131. ५३१ वा० प०. ५३३ विश्व०. ५३६ अम० ३।५९. ५३९ By दैव० बृ०.

५४० सुमशायितेत्येवमादयो वर्तमाने द्रष्टव्याः । p. 157.

५४१ सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्योमिति त्रियमिव त्रिराह । p. 150.

५४२ सुरपूजोत्सवसेवा नैवेद्यं नृत्तगीतवाद्यं च । p. 152.

५४३ सुवर्णकुसुमैर्दिव्यैर्मणिविद्रुमविस्तृतैः ।
राजतै रत्नसंभूतैरथवा चित्रवल्कलैः ॥
येऽर्चयन्ति हरं भक्त्या नरास्ते स्युर्महेश्वराः ॥ p. 152.

५४४ सूत्रधारो नटश्चैव तथा वै पारिपार्श्विकः ॥
संलापं यत्र कुर्वन्ति तदेव त्रिगतं स्मृतम् ॥ p. 121.

५४५ सोत्सुकं तवदालोक्य भूयो भूयोऽवलोकनम् ।
कल्लोल इव यः कान्तिविच्छेदस्तत् तरङ्गितम् ॥ p. 68

५४६ स्तनादीनां शिल्पविशिष्टता जातिः प्रायेण । p. 324.

५४७ स्त्रियां शस उदोतौ । p. 427.

५४८ स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये ।
श्रुते वानुमिते दृष्टे ईर्ष्याकोपः स कथ्यते ॥ p. 278, p. 279.

५४९ स्त्रीणां ललितकोपो मानः । p. 254.

५५० स्त्रीणां वारस्तु वासकः । p. 28.

५५१ स्त्री स्यात् काचिन्मृणाल्यादिर्विवक्षापचये यदि । p. 49, p. 107

५५२ स्थायी वा सात्त्विको वापि संचारी वा क्वचित् क्वचित् ।
भावो वाक्यार्थतामेति तत्तद्भावविशेषतः ॥ p. 293.

५५३ स्मरार्त्ताभिसरेत् कान्तं सारयेद्वाभिसारिका । p. 32.

५५४ स्मितमिह विकसन्नयनं किंचिल्लक्ष्यद्विजं हसितम् ।
मधुरस्वनं विहसितं साङ्कशिरःकम्पमुपहसितम् ॥
अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितम् ।
द्वे द्वे हसिते चैषां ज्येष्ठे मध्येऽधमे क्रमशः ॥ p. 230.

५५५ स्यात् क्रिया करपादादेर्विलासेनानुरङ्गसा ।
करणं नृत्तकरणं भामवद्भामिसेनवत् ॥ p. 138.

५५६ स्युरुत्तरपदे त्वमी ।
निभसंकाशनीकाशप्रतीकाशोपमादयः ॥ p. 358.

५५७ स्युर्वदान्यः स्थूललक्षदानशौण्डा बहुप्रदे । p. 394.

५५८ स्रामस्तु प्रथमे यामे वत्सरेण विपच्यते ।
द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्तृतीयके ॥

---

५४० By वृत्तिका०. ५४१ षड्विं० ब्रा०. ५४२ दैव० वह्नि०. ५४३ पु० सा० सुधा०. ५४४ सा० प्र०. ५४६ वाम० ५।२।१७ ( शिल्पविष्टा ). ५४८ द० रू०. ५४९ भोज०. ५५१ अम०. ५५४ द० रू० ४–७०–७१ ( विकासि नयनं, 'द्विजं तु हसितं स्यात्, मधुरस्वरं, सशिरःकम्पमिदमुपहसितम् ). ५५५ [illegible] ५५६ अम० [illegible] ५५७ अम० ३।११६. ५५८ [illegible]

अरुणोदयवेलायां दृष्टाहेन फलं भवेत् ।
गोविसर्जनवेलायां सद्यः स्वप्नफलं भवेत् ॥ p. 151.

५५९ स्वभावोक्तिर्बुधैर्ज्ञेयवस्तुस्वाभाव्यवर्णनम् । p. 319.

५६० स्वरूपार्थाविशेषेऽपि पुनरुक्तिः फलान्तरात् ।
शब्दानां प्रकृतीनां वा लाटानुप्रास इष्यते ॥ p. 345.

५६१ स्वान्या साधारणा चैव मुग्धा मध्या प्रगल्भिका ।
आद्यैकधा त्रिधान्ये द्वे धीराधीरोभयात्मना ।
ज्येष्ठाकनिष्ठाभेदेन ते एव द्विविधे पुनः ।
अन्या परा परोढा च वेश्या त्वेकेति षोडश ।
*   *   *   *   *   *
चतुःपञ्चाशदधिकत्रिशत्यासां तदा भवेत् ॥ p. 37.

५६२ स्वामिभृत्याधमर्णानां व्यवस्थापरिकल्पने ।
अन्यो यः क्रियते शिष्टः प्रतिभूः स निगद्यते ॥ p. 238.

५६३ स्वार्थत्यागे समानेऽपि सह तेनान्यलक्षणा ।
यत्रेयमजहत्स्वार्था जहत्स्वार्था तु तं विना ॥ p.50.

५६४ स्वेदे द्वारमले शुभाशुभकरं गन्धं सुधीर्लक्षयेत्
सेव्यो भूरुहलाजपाटलघृतप्रख्यः प्रशस्तायुषः ।
एतस्मादपरः शुभोऽप्यमुदितः सत्त्वेन रूपेण यो
युक्तः सोऽपि मतङ्गजः समुचितः कल्याण इत्युच्यते ॥ p. 166.

५६५ स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने । p. 33.

५६६ हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति । p. 192.

५६७ हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात् । p. 412.

५६८ हारादिवदलंकारास्तेऽनुप्रासोपमादयः ।
श्लेषादयो गुणास्तत्र शौर्यादय इव स्थिताः ॥ p. 335.

५६९ हास्यो जुगुप्सा शृङ्गारहास्यौ शोकभयानकौ ।
भयानकौ रौद्रवीरौ तथा शृङ्गारविस्मयौ ।
बीभत्सकरुणौ रौद्रशृङ्गारौ च यथाक्रमम् ।
शृङ्गारादीनप्रविश्य रसाभासान् वितन्वते ॥ p. 227.

५७० हीनसंबोधने तु रे । p. 22.

५७१ हुलं द्विफलशस्त्रम् । p. 168.

५७२ हेषते ह्रेषतेऽश्वानां बृंहतीति च । p. 170.

---

५५९ अलं० सर्व० संजी० by वि० चक्र०. ५६० By रुद्र०. ५६२ By सोमे०. ५६३ तर० on प्रकाश० p. 68 and सिद्धा० on त० वा by मञ्जि०. ५६५ अम० ३।३।१०. [illegible] ५७१ वैज०. ५७२ By म० म०.
५६६ अम० १।७।१५ ५[illegible]

The following are the names of works and authors quoted in the Ratnas'āṇa:—

अमर.

काव्यप्रकाश.

काव्यलोचन ( i. e. लोचन on ध्वन्यालोक ).

दण्डिन्.

ध्वन्याचार्य.

भावप्रकाश.

भाष्यकार.

मनु.

मल्लिनाथ.

विश्व.

विष्णुपुराण.

साहित्यरत्नाकर.

सोमेश्वर.

हेमन्ततिलकभाण by the author of the रत्नशाण himself.

## Abbreviations.

अ० रा०=अनर्घराघव.

अभि० शा०=अभिज्ञानशाकुन्तल.

अम०=अमरकोश.

अम० यो०=अमरानन्दयोगीन्द्र.

अलं० सर्व०=अलंकारसर्वस्व.

अलं० सर्व० संजी०=अलंकारसर्वस्वसंजीविनी.

अलं० सु०=अलंकारसुधानिधि.

आप०=आपस्तम्ब

उत्त० रा०=उत्तररामचरित.

उप० परि०=उपलपरिमल.

उद०=उदयनाचार्य.

उद्भ०=उद्भट.

एका०=एकावली.

कात्या०=कात्यायन.

कालि०=कालिदास.

का० प्र०=काव्यप्रकाश.

का० द०=काव्यादर्श.

का० लं० सू०=काव्यालंकारसूत्र.

का० शा०=काव्यानुशासन.

कु० सं०=कुमारसंभव.

कुसु०=कुसुमाञ्जलि.

कैय०=कैयट.

गोपा०=गोपाल.

जया०=जयादित्य, author of the first four Adhyâyas of काशिकावृत्ति, the rest being finished by वामन.

त० वा०=तन्त्रवार्तिक.

तर०=तरल.

त्रिवि०=त्रिविक्रम, a lexicographer.

द० रू०=दशरूप.

दश० सर्व०=दशटीकासर्वस्व.

दैव० वल्ल=दैवज्ञवल्लभ by नीलकण्ठ or श्रीपति.

ध्व० लो०=ध्वन्यालोक.

नर० सू०=नरहरसूरि.

नाट० प्र०=नाटकप्रकाश.

ना० शा०=नाट्यशास्त्र.

न्यासो०=न्यासोद्योत.

पञ्च०=पञ्चपादिका, a commentary on शारीरकसूत्रभाष्य by पद्मपादाचार्य.

प० मं०=पदमञ्जरी, a commentary on काशिकावृत्ति by हरदत्त.

पाणि०=पाणिनि.

पाल०=पालकाप्य ( गजचिकित्सा ).

पु० सा० सुधा०=पुष्पसारसुधानिधि.

पू० मी०=पूर्वमीमांसा.

प्र० से०=प्रवरसेन.

प्रश० प० वा०=प्रशस्तपथवाद.

बाद०=बादरायण.

भ० गोपा०=भट्टगोपाल, author of रसिकरञ्जिनी, a commentary on रसमञ्जरी.

भ० म०=भट्टमल्ल, author of आख्यातचन्द्रिका and क्रियानिघण्टु.

बृह० म०=बृहस्पतिमत.

भर०=भरत.

भर्तृ०=भर्तृहरि.

भाम०=भामह.

भा० प्र०=भावप्रकाश, a work on अलंकार by शारदातनय.

भोज०=भोजराज.

मल्लि०=मल्लिनाथ.

म० भा०=महाभारत.

महाभा०=महाभाष्य.

मान०=मानसोल्लास or अभिलषितार्थचिन्तामणि, an encyclopædia by भूलोकमल्ल सोमेश्वरदेव who is said to have reigned 1127–1138.

मौले०=मौलेश्वर.

र० वं०=रघुवंश.

र० मं०=रसमञ्जरी.

रसा०=रसार्णव by सिंहमहीपति, nominal author, a Tanjore prince of the last century.

र० च०=रुचक.

लोच०=लोचन.

व० मि०=वराहमिहिराचार्य.

व० सं=वराहसंहिता or बृहत्संहिता of वराहमिहिर.

वस० नाट्य०=वसन्तराजीयनाट्यशास्त्र ( वसन्तराज being king of कुमारगिरि and patron of काटयवेम quoted by मल्लिनाथ on माघ 2-8 ).

वसि०=वसिष्ठ.

वा० प०=वाक्यपदीय.

वाम०=वामन.

वा० शा०=वास्तुशास्त्र.

वि० मु० मं०=विदग्धमुखमण्डन, enigmatology by the Buddhist धर्मदास.

वि० चक्र०=विद्याचक्रवर्तिन्.

विश्व०=विश्वकोष of महेश्वर.

वि० पु०=विष्णुपुराण.

वृ० रत्ना०=वृत्तरत्नाकर.

वृत्तिका०=वृत्तिकार

वृ० वसि०=वृद्धवसिष्ठ.

वैज०=वैजयन्ती by यादवभट्ट.

व्या०=व्यास.

शा० प०=शान्तिपर्वन्.

शार० त०=शारदातनय.

शारि० ना०=शारिकानाथ.

शार्ङ्ग०=शार्ङ्गदेव.

शिशु० व०=शिशुपालवध.

शृ० ति०=शृङ्गारतिलक by रुद्रभट्ट.

शृ० प्र =शृङ्गारप्रकाश.

श्रीक० लो०=श्रीकण्ठलीला.

षट्सह०=षट्सहस्री quoted by Dhanika in his अवलोक on Dhanañjaya's दशरूप.

षड्वि० ब्रा०=षड्विंशब्राह्मण.

संगी० चूडा०=संगीतचूडामणि.

संगी० रत्ना०=संगीतरत्नाकर by शार्ङ्गदेव.

साहि० द०=साहित्यदर्पण.

साहि० मी०=साहित्यमीमांसा by रुचक.

सिद्धा०=सिद्धाञ्जन.

सू० सि०=सूर्यसिद्धान्त by भास्कराचार्य.

सोम०=सोमेश्वर.

से० ब०=सेतुबन्ध.

स्क० पु०=स्कन्दपुराण.

स्मृ० रत्ना०=स्मृतिरत्नावली.

स्वा० यो० प्र०=स्वात्मयोगप्रदीप, a commentary on स्वात्मयोग by अमरानन्दयोगीन्द्र.

हर०=हरदत्त.

हला०=हलायुधकोष.

हेम०=हेमचन्द्र, pupil of देवचन्द्रसूरि, teacher of कुमारपाल, author of काव्यानुशासन and many other works. ( A. D. 1092-1173 ).

## Appendix VIII.

Containing Bhâmaha's work on poetics, based upon two Mss., one deposited in the Mahârâjâ's Sanskrit Library, Trivandrum, and the other which seems a transcript of the Ms. at Trivandrum is deposited in the Government Oriental Mss. Library, Madras. The former is designated T. It is written on palm leaves and is about five hundred years old. The ends of the palm-leaves are in many cases worn out. The latter is designated M. T. begins thus:—हरिः । श्रीगणपतये नमः । अविघ्नमस्तु । श्रीमदाचार्यपादेभ्यो नमः ॥ M. has अविघ्नमस्तु in the beginning.

श्रीः । भामहालंकारः ॥

प्रणम्य सार्वं सर्वज्ञं मनोवाक्कायकर्मभिः ।
काव्यालंकार इत्येष यथाबुद्धि विधास्यते ॥ १ ॥
[१]धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
प्रीतिं करोति कीर्तिं च साधुकाव्यनिबन्धनम् ॥ २ ॥
अधनस्येव दातृत्वं क्लीबस्येवास्त्रकौशलम् ।
अज्ञस्येव प्रगल्भत्वमकवेः शास्त्रवेदनम् ॥ ३ ॥
[२]विनयेन विना का श्रीः का निशा शशिना विना ।
रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता ॥ ४ ॥
गुरूपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम् ।
काव्यं तु जायते जातु कस्यचित् प्रतिभावतः ॥ ५ ॥
[३]उपेयुषामपि दिवं सन्निबन्धविधायिनाम् ।
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ॥ ६ ॥
रुणद्धि रोदसी चास्य यावत् कीर्तिरनश्वरी ।
तावत् किलायमध्यास्ते सुकृती वैबुधं पदम् ॥ ७ ॥
अतोऽभिवाञ्छता कीर्तिं स्थेयसीमा भुवः स्थितेः ।
यत्नो विदितवेद्येन विधेयः काव्यलक्षणः ॥ ८ ॥

---

१ This verse is found in ध्वन्यालोकलोचन, quoted without the author's name on p. 12. The reading there is साधुकाव्यनिषेवणम्. °निबन्धनम् is also noticed in the foot-note as found in क. and ख.

२ Found, quoted without the author's name, in चित्रमीमांसा p. 83.

३ Found, quoted without the author's name in लोचन p. 12.

१शब्दश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः।
लोको युक्तिः कलाश्चेति मन्तव्या काव्ययैर्ह्यमी? (मन्तव्याः काव्ययैर्ह्यमी?) ॥ ९ ॥
शब्दाभिधेये विज्ञाय कृत्वा तद्विदुपासनाम्।
विलोक्यान्यनिबन्धांश्च कार्यः काव्यक्रियादरः ॥ १० ॥
सर्वथा पदमप्येकं न निगाद्यमवद्यवत्।
विलक्ष्मणा हि काव्येन दुःसुतेनेव निन्द्यते ॥ ११ ॥
अकवित्वमधर्माय व्याधये दण्डनाय वा।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥ १२ ॥
२रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितः।
न कान्तमपि निर्भूषं विभाति वनितामुखम् ॥ १३ ॥
रूपकादिमलंकारं बाह्यमाचक्षते परे।
३सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम् ॥ १४ ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।
शब्दाभिधेयालंकारभेदादिष्टं द्वयं तु नः ॥ १५ ॥
शब्दार्थौ सहितौ काव्यं गद्यं पद्यं च तद् द्विधा।
४कयुतं ? ( संस्कृतं ? ) प्राकृतं चान्यदपभ्रंश इति त्रिधा ॥ १६ ॥
५वृत्तदेवादिचरितशंसि चोत्पाद्यवस्तु च।
कलाशास्त्राश्रयं चेति चतुर्धा भिद्यते पुनः ॥ १७ ॥
सर्गबन्धोऽभिनेयार्थं तथैवाख्यायिकाकथे।
अनिबद्धं च काव्यादि तत् पुनः पञ्चधोच्यते ॥ १८ ॥
सर्गबन्धो महाकाव्यं महतां च महच्च यत्।
अग्राम्यशब्दमर्थ्यं च सालंकारं सदाश्रयम् ॥ १९ ॥
६मन्त्रदूतप्रयाणाजिनायकाभ्युदयैश्च यत्।
पञ्चभिः संधिभिर्युक्तं नातिव्याख्येयमृद्धिमत् ॥ २० ॥

---

१ Quoted with Bhâmaha's name in लोचन p. 10. The different readings are शब्दश्छन्दोभिधानार्थः and शब्दश्छन्दोभिधानार्थं. Only the 1st Pâda is quoted.

२ Verses 13, 14 and 15 are quoted without the author's name in the 6th Ullâsa of the Kâvyaprakâs'a. ( V. l. there वनिताननम् ).

३ This half and the first half of verse 15 are quoted by S'rî Premachandra Tarkavâgis'a on Kâvyâdars'a. *Vide* p. 11 of his edition.

४ cf. प्राकृतं संस्कृतं चैतदपभ्रंश इति त्रिधा। quoted without name by नमिसाधु on काव्यालंकार of रुद्रट २-११.

५ Quoted with the name of Bhâmaha in the commentary on उद्भटालंकारसारसंग्रह by प्रतीहारेन्दुराज.

६ M. has मन्त्रि.

चतुर्वर्गाभिधानेऽपि भूयसार्थोपदेशकृत् ।
युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक् ॥ २१ ॥
नायकं प्रागुपन्यस्य वंशवीर्यश्रुतादिभिः ।
न तस्यैव वधं ब्रूयादन्योत्कर्षाभिधित्सया ॥ २२ ॥
यदि काव्यशरीरस्य न स व्यापितयेष्यते ।
न चाभ्युदयभाक् तस्य मुधादौ ग्रहणं स्तवे ॥ २३ ॥
नाटकं द्विपदीशम्यारासकस्कन्धकादि यत् ।
उक्तं तदभिनेयार्थमुक्तोऽन्यैस्तस्य विस्तरः ॥ २४ ॥
[1]प्रकृतानाकुलश्रव्यशब्दार्थपदवृत्तिना ।
गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता ॥ २५ ॥
वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम् ।
वक्त्रं चापरवक्त्रं च काले भाव्यर्थशंसि च ॥ २६ ॥
कवेरभिप्रायकृतैः कथा ( थ ? ) नैः कैश्चिदङ्किता ।
कन्याहरणसंग्रामविप्रलम्भोदयान्विता ॥ २७ ॥
न वक्त्रापरवक्त्राभ्यां युक्ता नोच्छ्वासवत्यपि ।
संस्कृतं संस्कृता चेष्टा कथापभ्रंशभाक् [2]तथा ॥ २८ ॥
[3]अन्यैः स्वचरितं तस्यां नायकेन तु नोच्यते ।
स्वगुणाविष्कृतिं कुर्यादभिजातः कथं जनः ॥ २९ ॥
अनिबन्धं पुनर्गाथाश्लोकमात्रादि तत् पुनः ।
युक्तं वक्रस्वभावोक्त्या सर्वमेवैतदिष्यते ॥ ३० ॥
वैदर्भमन्यदस्तीति मन्यन्ते सुधियोऽपरे ।
तदेव च किल ज्यायः सदर्थमपि नापरम् ॥ ३१ ॥
गौडीयमिदमेतत्तु वैदर्भमिति किं पृथक् ।
गतानुगतिकन्यायान्नानाख्येयममेधसाम् ॥ ३२ ॥
ननु चाश्मकवंशादि वैदर्भमिति कथ्यते ।
कामं तथास्तु प्रायेण संज्ञेच्छातो विधीयते ॥ ३३ ॥
अपुष्टार्थमवक्रोक्ति प्रसन्नमृजु कोमलम् ।
भिन्नं गेयमिवेदं तु केवलं श्रुतिपेशलम् ॥ ३४ ॥
अलंकारवदग्राम्यमर्थ्यं न्याय्यमनाकुलम् ।
गौडीयमपि साधीयो वैदर्भमिति नान्यथा ॥ ३५ ॥

---

१ T. notices प्रसृता also.

२ M. has तदा.

३ This distinction between आख्यायिका and कथा given by भामह is criticized by दण्डिन् in his काव्यादर्श १-२३-२८. *Vide* my notes on the Kāvya-prakaraṇa pp. २९-३६.

न नितान्तादिमात्रेण जायते चारुता गिराम् ।
१वक्राभिधेयशब्दोक्तिरिष्टा वाचामलंकृतिः ॥ ३६ ॥
नेयार्थं क्लिष्टमन्यार्थमवाचकमयुक्तिमत् ।
गूढशब्दाभिधानं च कवयो न प्रयुञ्जते ॥ ३७ ॥
नेयार्थं नीयते युक्तो यस्यार्थः कृतिभिर्बलात् ।
शब्दन्यायानुपारूढः कथंचित् स्वाभिसंधिना ॥ ३८ ॥
मायेव भद्रेति यथा सा चासाध्वी प्रकल्पना ।
वेणुदार्केरिति च तान् नयन्ति वचनाद्विना ॥ ३९ ॥
क्लिष्टं व्यवहितं विद्यादन्यार्थविगमे यथा ( दन्यार्थं विगमे यथा ? )
विजह्रुस्तस्य ताः शोकं क्रीडायां विकृतं च तद् ॥ ४० ॥
२हिमापहामित्रधरैर्व्याप्तं व्योमेत्यवाचकम् ।
साधारूढं वाच्येऽर्थे नाभिधानं प्रतीयते ॥ ४१ ॥
अयुक्तिमद्यथा दूता ३जलभृन्मात्रकेक च ? ( मारुतेन्दवः? ) ।
तथा भ्रमरहारीतचक्रवाकशुकादयः ॥ ४२ ॥
अवाचो व्यक्तवाचश्च दूरदेशविचारिणः ।
कथं दूत्यं प्रपद्येरन्निति युक्त्या न युज्यते ॥ ४३ ॥
यदि चोत्कण्ठया यत्तदुन्मत्त इव भाषते ।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते ॥ ४४ ॥
गूढशब्दाभिधानं च न प्रयोज्यं कथंचन ।
सुधियामपि नैवेदमुपकाराय कल्पते ॥ ४५ ॥
४असितर्तितुगद्रिच्छित्स्वःक्षितांपतिरद्विदृक् ।
अमिद्भिः शुभदृग्दृष्टैर्द्विषो जर्झीयिषीष्ट वः ॥ ४६ ॥

---

१ Found, quoted in अभिनवगुप्त's लोचन on ध्वन्यालोक p. 208.

२ हिमापहामित्रधरैर्व्याप्तं व्योम is found in Daṇḍin's Kâvyâdars'a 3-120. ( latter half ).

३ M. has जलभृन्मात्र ( रुत ) तेषु च ।

४ Given as an instance of a कठोर composition by भोज in his सरस्वतीकण्ठाभरण. १-३१— सौकुमार्यविपर्यासात् कठोर उपजायते । यथा असितर्ति &c. । अत्रातिकठोरत्वादसौकुमार्यं सुप्रतीतमेव ।

Ratnes'vara's commentary on the verse is as under:—

असितर्तीति । "ऋ गतौ" इति धात्वनुसाराद् ऋतिर्वर्त्म । असिता कृष्णा ऋतिर्वर्त्म यस्य कृष्णवर्त्मा वह्निस्तस्य तुगपत्यम् । अद्रिच्छिदिति क्रौञ्चदारणत्वात् । स्वर्गे क्षियन्ति निवसन्ति ये देवास्तेषां पतिः सेनानीत्वात् । अद्विदृग्द्वादशलोचनत्वात् । स एवंभूतो भगवान् कुमारोऽमिद्भिरक्लिष्टैः शुभदृग्दृष्टैर्मङ्गलाक्षिविलोकितैः सकोपनिभालने तारकामागस्योर्ध्वंतया नयनात्तथाभावो जातिर्नो युष्माकं द्विषः शत्रूञ्जर्झीयिषीष्ट । अत्यर्थं पुनःपुनर्वा वध्यादित्यर्थः । हन्तेर्यङि धीमावे आशीर्लिङि रूपम् । स्वतन्त्रस्य पदस्य श्रुतिकटुता पददोषः । इह तु पदानामतथाभावे तिद्रिच्छि इत्यादीनां वर्णानां परस्परसंनिधाने घटनैव कठोरेत्याह । अत्रातिकठोरत्वादिति ।

श्रुतिदुष्टार्थदुष्टे च कल्पनादुष्टमित्यपि ।
श्रुतिकष्टं तथैवाहुर्वाचां दोषं चतुर्विधम् ॥ ४७ ॥
विड्वर्चोविहितक्लिन्न[1]च्छिन्नवान्तप्रवृत्तयः ।
प्रचारधर्षितोद्गारविसर्गहदयं तुताः? ( यन्त्रिताः? ) ॥ ४८ ॥
हिरण्यरेताः संबाधः पेलवोपस्थिताण्डजाः ।
वाकुकाटवादयश्चेति श्रुतिदुष्टा मता गिरः ॥ ४९ ॥
अर्थदुष्टं पुनर्ज्ञेयं यत्रोक्ते जायते मतिः ।
असभ्यवस्तुविषया शब्दैस्तद्वाचिभिर्यथा ॥ ५० ॥
हन्तुमेव प्रवृत्तस्य स्तम्भस्य ( स्तब्धस्य ? ) विवरैषिणः ।
पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः ॥ ५१ ॥
पदद्वयस्य सन्धाने यदनिष्टं [2]प्रकल्पते ।
तदाहुः कल्पनादुष्टं सशौर्याभरणो यथा ॥ ५२ ॥
यथाजिह्वदित्यादि श्रुतिकष्टं च तद्विदुः ।
न तदिच्छन्ति कृतिनो गण्डमप्यपरे किल ॥ ५३ ॥
संनिवेशविशेषात्तु दुरुक्तमपि शोभते ।
नीलं पलाशमाबद्धमन्तराले स्रजामिव ॥ ५४ ॥
किंचिदाश्रयसौन्दर्याद्धत्ते शोभामसाध्वपि ।
कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम् ॥ ५५ ॥
आपाण्डुगण्डमेतत्ते वदनं वनजेक्षणे ।
संगमात् पाण्डुशब्दस्य गण्डः साधु यथोदितम् ॥ ५६ ॥
अनयान्यदपि ज्ञेयं दिशा युक्तमसाध्वपि ।
यथा विक्लिन्नगण्डानां करिणामुदवारिभिः ॥ ५७ ॥
मदक्लिन्नकपोलानां द्विरदानां चतुःशती ।
यथा तद्वदसाधीयः साधीयश्च प्रयोजयेत् ॥ ५८ ॥
एतद्ग्राह्यं सुरभिकुसुमं ग्राम्यमेतन्निधेयं
धत्ते शोभां विरचितमिदं स्थानमस्यैतदस्य ।
मालाकारो रचयति यथा साधु विज्ञाय मालां
योज्यं काव्येष्ववहितधिया तद्वदेवाभिधानम् ॥ ५९ ॥

इति भामहालंकारे प्रथमः परिच्छेदः ॥

अथ द्वितीयः परिच्छेदः ॥

माधुर्यमभिवाञ्छन्तः प्रसादं च सुमेधसः ।
समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥ १ ॥
केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि ।
यथा मन्दारकुसुमरेणुपिञ्जरितालका ॥ २ ॥

---

[1] 'च्छिन्नक्लिन्न' M.
[2] प्रगल्भते M.

[१]श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते ।
आविद्वदङ्गनाबालप्रतीतार्थं प्रसादवत् ॥ ३ ॥
अनुप्रासः सयमको रूपकं दीपकोपमे ।
इति वाचामलंकाराः पञ्चैवान्यैरुदाहृताः ॥ ४ ॥
[२]सरूपवर्णविन्यासमनुप्रासं प्रचक्षते ।
किं तया चिन्तया कान्ते नितान्तेति यथोदितम् ॥ ५ ॥
ग्राम्यानुप्रासमन्यत्तु मन्यन्ते सुधियोऽपरे ।
स लोलमालानीलालिकुलाकुलगलो बलः ॥ ६ ॥
नानार्थवन्तोऽनुप्रासा न चाप्यसदृशाक्षराः ।
युक्त्यानया मध्यमया जायन्ते चारवो गिरः ॥ ७ ॥
लाटीयमप्यनुप्रासमिहेच्छन्त्यपरे यथा ।
दृष्टिं दृष्टिसुखां धेहि चन्द्रश्चन्द्रमुखोदितः ॥ ८ ॥
आदिमध्यान्तयमकं पादाभ्यासं तथावली ।
समस्तपादयमकमित्येतत् पञ्चधोच्यते ॥ ९ ॥
संदष्टकसमुद्गादेरत्रैवान्तर्गतिर्मता ॥
आदौ मध्यान्तयोर्वा स्यामि ( दि ? ) ति पञ्चैव तद्यथा ॥ १० ॥
साधुनासाधुना तेन राजताराजता भृता ।
सहितं सहितं कर्तुं सङ्गतं सङ्गतं जनम् ॥ ११ ॥
साधुस्संसाराद्विभ्यदस्मादसारात्
  कृत्वा क्लेशान्तं याति वर्त्म प्रशान्तम् ।
ज्ञातिं व्याधीनां दुर्दयानामधीनां
  वाञ्छन्त्या यस्त्वं छिन्धि मुक्तानयस्त्वम् ॥ १२ ॥
न ते धीर्धीर भोगेषु रमणीयेषु संगता ।
मुनीनपि हरन्त्येते रमणीयेषु सङ्गता ॥ १३ ॥
सितासिताक्षीं सुपयोधराधरां
  सुसम्मदां व्यक्तमदां कलामदाम् ।
घनाघना नीलघनाघनालकां
  प्रियामिमामुत्सुकयन्ति यन्ति च ॥ १४ ॥

---

१ Found in the Sarvapathina, Mallinâtha's commentary on Bhaṭṭi-kâvya C. XI. I. The reading there is श्राव्यं for श्रव्यं. It is also found in Jayamaṅgalâ on the same verse. The readings there are श्राव्यं and काव्ये. Found quoted with Bhâmaha's name in his Ṭikâ on the Kavyânuśâsana p. 201 'तेन "श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते' इति माधुर्यलक्षणत्वेन श्रव्यत्वं यद्भामहेनोक्तं तत्र युक्तमित्यर्थः।'.

२ The first half of the verse is found quoted in the Jayamaṅgalâ on Bhaṭṭi X. I.

अमी नृपा दत्तसमग्रशासनाः
 कदाचिदप्यप्रतिबद्धशासनाः ।
कृतागसां मार्गभिदां च शासनाः
 पितृक्रमाध्यसितलाट्शासनाः ॥ १५ ॥

अनन्तरैकान्तरयोरेवं पादान्तयोरपि ।
कृत्स्नं च सर्वपादेषु दुष्कृतं साधु तादृशम् ॥ १६ ॥

[1]तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् ।
वर्णानां यः पुनर्वादो यमकं तन्निगद्यते ॥ १७ ॥

प्रतीतशब्दमोजस्वि सुश्लिष्टपदसन्धि च ।
प्रसादि स्वभिधानं च यमकं कृतिनां मतम् ॥ १८ ॥

नानाधात्वर्थगम्भीरा यमकव्यपदेशिनी ।
प्रहेलिका सा ह्युदिता रामशर्माच्युतोत्तरे ॥ १९ ॥

[2]काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत् ।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः ॥ २० ॥

[3]उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते ।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥ २१ ॥

समस्तवस्तुविषयमेकदेशविवर्ति च ।
द्विधा रूपकमुद्दिष्टमेतत्तच्चोच्यते यथा ॥ २२ ॥

[4]शीकराम्भोमदसृजस्तुङ्गा जलददन्तिनः ।
निर्यान्तो मदयन्तीमे शक्रकार्मुककारणम् ॥ २३ ॥

तडिद्वलयकक्ष्याणां बलाकामालभारिणाम् ।
पयोमुचां ध्वनिर्धीरो दुनोति मम तां प्रियाम् ॥

[5]आदिमध्यान्तविषयं त्रिधा दीपकमिष्यते ।
एकस्यैव व्यवस्थत्वादिति तद्भिद्यते त्रिधा ॥ २५ ॥

अमूनि कुर्वतेऽन्वर्थामस्याख्यामर्थदीपनात् ।
त्रिभिर्निदर्शनैश्चेदं त्रिधा निर्दिश्यते यथा ॥ २६ ॥

---

१ Found, quoted in the Jayamaṅgalā on the Bhaṭṭi-kāvya X. 1 without the author's name. The reading there is यमकं तन्निरूप्यते.

२ cf. व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम् । हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया ॥ भट्टि २२-३४.

३ Found in the Jayamaṅgalā on the Bhaṭṭi-kāvya X, 25 and also in the Agnipurāṇa without the author's name. The reading there is तुल्यत्वं for यत्तत्त्वं.

४ M. शीकरा°.

५ Found in the Lochana p. 38 without the author's name.

[1]मदो जनयति प्रीतिं [2]सानङ्गं मानभङ्गुरम् ।
स प्रियासंगमोत्कण्ठां सासह्यां मनसः शुचम् ॥ २७ ॥
मालिनीरंशुकभृतः स्त्रियोऽलंकुरुते मधुः ।
हारीतशुकवाचश्च भूधराणामुपत्यकाः ॥ २८ ॥
[3]चीरीमतीररण्यानीः सरितः शुष्यदम्भसः ।
प्रवासिनां च चेतांसि शुचिरन्तं निनीषति ॥ २९ ॥
[4]विरुद्धेनोपमानेन देशकालक्रियादिभिः ।
उपमेयस्य यत् साम्यं गुणलेशेन सोपमा ॥ ३० ॥
यथेवशब्दौ सादृश्यमाहतुर्व्यतिरेकिणोः ।
दूर्वाकाण्डमिव श्यामं तन्वी [5]श्यामलता यथा ॥ ३१ ॥
विना यथेवशब्दाभ्यां समासाभिहितापरा ।
यथा कमलपत्राक्षी शशाङ्कवदनेति च ॥ ३२ ॥
वतिनापि क्रियासाम्यं तद्वदेवाभिधीयते ।
द्विजातिवदधीतेऽसौ गुरुवच्चानुशास्ति नः ॥ ३३ ॥
समानवस्तुन्यासेन प्रतिवस्तूपमोच्यते ।
यथेवानभिधानेऽपि गुणसाम्यप्रतीतितः ॥ ३४ ॥
साधुसाधारणत्वादिर्गुणोऽत्र व्यतिरिच्यते ।
स साम्यमापादयति विरोधेऽपि तयोर्यथा ॥ ३५ ॥
कियन्तः सन्ति गुणिनः साधुसाधारणश्रियः ।
स्वादुपाकफला नम्राः कियन्तो वाध्वशाखिनः ॥ ३६ ॥
यदुक्तं त्रिप्रकारत्वं तस्याः कैश्चिन्महात्मभिः ।
निन्दाप्रशंसाचिख्यासाभेदादत्राभिधीयते ॥ ३७ ॥
सामान्यगुणनिर्देशात् त्रयमप्युदितं ननु ।
मालोपमादिः सर्वोऽपि न ज्यायान् विस्तरो मुधा ॥ ३८ ॥
हीनतासंभवो लिङ्गवचोभेदो विपर्ययः ।
उपमानाधिकत्वं च तेनासदृशतापि च ॥ ३९ ॥

---

[1] Found in the Lochana p. 40, quoted without the author's name.

Found in the Jayamaṅgalā with the name of the author, Bhatti, C. X. 21. The readings there are प्रीतिमानन्दं & यत्प्रियासङ्गमोत्कण्ठामसह्यां. Vámana also quotes a portion of it, though wrongly as मानङ्गं मानभङ्गुरम्. *Vide* the वृत्ति on ४।३।३८.

[2] मानतां M.

[3] चर्मिमती M.

[4] Found quoted with the author's name in the Jayamaṅgalā on Bhaṭṭi X. 30. ( V. l. गुणमात्रेण ).

[5] श्यामा M.

त एत उपमादोषाः सप्त [1]मेधाविनोदिताः ।
सोदाहरणलक्ष्माणो वर्ण्यन्तेऽत्र च ते पृथक् ॥ ४० ॥

[2]स मारुताकम्पितपीतवासा
　　बिभ्रत् सलीलं शशिभासमब्जम् ।
यदुप्रवीरः प्रगृहीतशार्ङ्ग–
　　स्सेन्द्रायुधो मेघ इवाबभासे ॥ ४१ ॥

शक्रचापग्रहादत्र दर्शितं किल कार्मुकम् ।
वासःशङ्खानुपादानाद्धीनमित्यभिधीयते ॥ ४२ ॥
सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित् ।
यथोपपत्तिकृतिभिरुपमा सुप्रयुज्यते ॥ ४३ ॥
अखण्डमण्डलः क्वेन्दुः क्व कान्ताननमद्युति ।
यत्किञ्चित्कान्तिसामान्याच्छशिनैवोपमीयते ॥ ४४ ॥
किं च काव्यानि नेयानि लक्षणेन महात्मनाम् ।
दृष्टं वा सर्वसारूप्यं राजामित्रे यथोदितम् ॥ ४५ ॥

[3]सूर्यांशुसंमीलितलोचनेषु
　　दीनेषु पद्मानिलनिर्मदेषु ।
साध्व्यः स्वगेहेष्विव भर्तृहीनाः
　　केका [4]विनेशुः शिखिनां मुखेषु ॥ ४६ ॥

[5]निपेतुरास्यादिव तस्य दीप्ताः
　　शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा
　　दिनार्धभाजः परिवेषिणोऽर्कात् ॥ ४७ ॥

शाखवर्धनस्य

---

१ मेधाविन् or मेधाविरुद्र is named and quoted by नमिसाधु in his commentary on रुद्रट's काव्यालंकार I. 1 and XI. 24. Medhāvin gives seven defects of Upamā:—' लिङ्गवचनभेदौ हीनताधिक्यमसंभवो विपर्ययोऽसादृश्यमिति सप्तोपमादोषाः '।

२ Found, quoted by नमिसाधु on काव्यालंकार XI. 24. शशिभासि शङ्खम् is the reading there and is correct as appears from वासःशङ्खानुपादानाद्धीनमित्यभिधीयते । ४२.

३ Found, quoted, without the author's name in the वृत्ति on वामन's काव्यालंकारसूत्र ४. २. १०. ( V. l. °निर्मलेषु and नर्मदेषु for °निर्मदेषु ). अत्र बहुत्वमुपमेयधर्माणामुपमानात् न विशिष्टानामेव गुणानामुपमेयत्वात् । तादृशेष्वेव केकाविनाशस्य संभवात् ।

४ विनेदुः M.

५ Found, quoted in the काव्यप्रकाश X. ( V. l. निपेतुः )–'अत्रापि ज्वलन्त्यो-म्बुधाराः सूर्यमण्डलान्निष्पतन्त्यो न संभवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।'

कथं पातोऽम्बुधाराणां ज्वलन्तीनां विवस्वतः ।
असंभवादयं युक्त्या तेनासंभव उच्यते ॥ ४८ ॥
तत्रासंभविनार्थेन कः कुर्यादुपमां कृती ।
को नाम वह्निनौपम्यं कुर्वीत शशलक्ष्मणः ॥ ४९ ॥
यस्यातिशयवानर्थः कथं सोऽसंभवो मतः ।
इष्टं चातिशयार्थत्वमुपमोत्प्रेक्षयोर्यथा ॥ ५० ॥
पुञ्जीभूतमिव ध्वान्तमेष भाति मतङ्गजः ।
सरः शरत्प्रसन्नाम्भो नभःखण्डमिवोज्झितम् ॥ ५१ ॥
अथ लिङ्गवचोभेदावुच्येते सविपर्ययौ ।
हीनाधिकत्वात् स द्वेधा प्रथमस्तूच्यते यथा ॥ ५२ ॥
अविगाह्योऽसि नारीणामनन्यमनसामपि ।
विषमोपलभिन्नोर्मिरापगेवोत्तितीर्षतः ॥ ५३ ॥
[1]क्वचिदग्रे प्रसरता क्वचिदापत्य निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥ ५४ ॥
[2]अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥ ५५ ॥
नवपद्मायते पाणिः कमलेन विकासिना ॥
अधरो विद्रुमच्छेदभासा बिम्बफलेन च ॥ ५६ ॥
उच्यते काममस्तीदं किं तु स्त्रीपुंसयोरयम् ।
विधिर्नाभिमतोऽन्यैस्तु ग्रहाणामपि नेष्यते ॥ ५७ ॥
[3]स पीतवासा प्रगृहीतशार्ङ्गो
मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान् निशायां
संसृज्यमानः शशिनेव मेघः ॥ ५८ ॥

रामशर्मणः ।

शशिनो ग्रहणादेतदाधिक्यं किल न क्षमम् ।
निर्दिष्ट उपमेयेऽर्थे वाच्यो वा जलदोऽत्र तु ॥ ५९ ॥
न सर्वसारूप्यमिति विस्तरेणोदितो विधिः ।
अभिप्रायात् कवेर्नात्र विधेया जल्पने मतिः ॥ ६० ॥
आधिक्यमुपमानानां न्याय्यं नाधिकता भवेत् ।
गोक्षीरकुन्दहंसानां विशुद्धया सदृशं यशः ॥ ६० ॥

---

1 Found quoted in केशवमिश्र's अलंकारशेखर ( V. l. क्वचिदापत्त ) *Vide* p. 18 of अलंकारशेखर.

2 Found quoted in the काव्यप्रकाश X. ( V. l. वेधाः for ब्रह्मा ).

3 Found, quoted in the काव्यप्रकाश X.—'अत्रोपमेयस्य शार्ङ्गादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते—इत्यधिकपदत्वम् ।'.

एतेनैवोपमानेन ननु सादृश्यमुच्यते ।
उक्तार्थस्य प्रयोगो हि गुरुमर्थं न पुष्यति ॥ ६२ ॥
[1]वनेऽथ तस्मिन् वनितानुयायिनः
प्रवृत्तदानार्द्रकटा मतङ्गजाः ।
विचित्रबर्हाभरणाश्च बर्हिणो
बभुर्दिवीवामलविग्रहा ग्रहाः ॥ ६३ ॥
धर्मैरपि गजादीनां यदि सादृश्यमुच्यते ।
तथापि तेषां तैरस्ति कान्तिर्वाऽप्युपतापि वा ॥ ६४ ॥
इत्युक्त उपमाभेदो वक्ष्यते चापरः पुनः ।
उपमादिरलंकाराद्विशेषोऽन्योऽभिधीयते ॥ ६५ ॥
आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना ।
समासातिशयोक्ती च षडलंकृतयोऽपराः ॥ ६६ ॥
वक्ष्यमाणोक्तविषयस्तत्राक्षेपो द्विधा मतः ।
एकरूपतया शेषा निर्दिश्यन्ते यथाक्रमम् ॥ ६७ ॥
[2]प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।
आक्षेप इति तं सन्तः शंसन्ति द्विविधं यथा ॥ ६८ ॥
[3]अहं त्वा यदि नेक्षेय क्षणमप्युत्सुका ततः ।
इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण तु ॥ ६९ ॥
स्वविक्रमाक्रान्तभुवश्चित्रं यन्न तवोद्धतिः ।
को वा सेतुरलं सिन्धोर्विकारकरणं प्रति ॥ ७० ॥
[4]उपन्यसनमन्यस्य यदर्थस्योदितादृते ।
ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यथा ॥ ७१ ॥

---

१ Found, quoted by नमिसाधु on रुद्रट's काव्यालंकार XI. 24. ( V. l. वनितानिहारिणः, प्रभिन्नदानार्द्रकटा ). 'यत्रोपमानोपमेययोः साम्यं नास्ति तदसादृश्यम्,—यथा 'वनेऽथ &c. । अत्र न किंचिद्दन्तिनां मयूराणां च ग्रहैः सारूप्यमस्तीति ।'.

२ Found, quoted, without the author's name in लोचन p. 36 ( प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया । वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥ ). It is also found, quoted, with the name of the author in the Jayamaṅgalâ on Bhaṭṭi X. 37 ( V. l. द्विविधं यथा ).

३ Found, quoted in अभिनवगुप्त's लोचन on ध्वन्यालोक p. 36 ( V. l. किमुक्तेनाप्रियेण ते ). Also quoted by Hemachandra in his Kâvyânus'âsana, p. 268 ( °नाप्रियेण ते ).

४ Found, quoted, with the name of भामह in जयमङ्गला on भट्टि X. 36 ( V. l. उपन्यसनमर्थस्य प्रकृतादपरस्य यत् । ). नमिसाधु on रुद्रट's काव्यालंकार VIII. 84. says 'भामहादिमतेन त्वर्थान्तरन्यास एव । 'अर्थद्वयस्य न्यासः सोऽर्थान्तरन्यासः' इति तदीयलक्षणात् ।

परानीकानि भीमानि विविशोनैं तव यथा ।
साधु वासाधु वागामि पुंसामात्मैव शंसति ॥ ७२ ॥
हिशब्देनापि हेत्वर्थप्रथनादुक्तसिद्धये ।
अयमर्थान्तरन्यासः सुतरां व्यज्यते यथा ॥ ७३ ॥
वहन्ति गिरयो मेघानभ्युपेतान् गुरूनपि ।
गरीयानेव हि गुरून् बिभर्ति प्रणयागतान् ॥ ७४ ॥
[1]उपमानवतोऽर्थस्य यद्विशेषनिदर्शनम् ।
व्यतिरेकं तमिच्छन्ति विशेषापादनाद्यथा ॥ ७५ ॥
सितासिते पक्ष्मवती नेत्रे ते ताम्रराजिनी ।
एकान्तशुभ्रश्यामे तु पुण्डरीकासितोत्पले ॥ ७६ ॥
[2]क्रियायाः प्रतिषेधे या तत्फलस्य विभावना ।
ज्ञेया विभावनैवासौ समाधौ सुलभे सति ॥ ७७ ॥
अपीतमत्ताः शिखिनो दिशोऽनुत्कण्ठिताकुलाः ।
नीपोऽविच्छिन्नसुरभिरनष्टकलुषं जलम् ॥ ७८ ॥
[3]यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः ।
सा समासोक्तिरुद्दिष्टा [4]संक्षिप्तार्थतया यथा ॥ ७९ ॥
स्कन्धवानृजुरव्यालः स्थिरोऽनेकमहाफलः ।
जातस्तरुरयं चोच्चैः पातितश्च नभस्वता ॥ ८० ॥
[5]निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम् ।
मन्यन्तेऽतिशयोक्तिं तामलंकारतया यथा ॥ ८१ ॥
स्वपुष्पच्छविहारिण्या चन्द्रभासा तिरोहिताः ।
अन्वमीयन्त भृङ्गालिवाचा सप्तच्छदद्रुमाः ॥ ८२ ॥
अपां यदि त्वक् शिथिला च्युता स्यात् फणिनामिव ।
तदा शुक्लांशुकानि स्युरङ्गेष्वम्भसि योषिताम् ॥ ८३ ॥

---

१ Found, quoted, with the name of भामह in जयमङ्गला on भट्टि X. 39 ( V. l. विशेषोत्पादनाद्यथा ).

२ Found, quoted, with the name of भामह, in जयमङ्गला on भट्टि X. 40 ( V. l. प्रतिषेधेन तत्फलस्य विभावनात् & सान्वयं कथ्यते यथा for समाधौ सुलभे सति ). रुद्रट's definition of विभावना is exactly the same as भामह's.

३ Found, quoted with the name of भामह, in जयमङ्गला on भट्टि X. 41 ( V. l. यत्रोक्तेर्गम्यते and °रुदिता for °रुद्दिष्टा ). अग्निपुराण has the same definition as is given in जयमङ्गला but has बुधैः for यथा. Also quoted without the name of भामह in ध्वन्यालोकलोचन p. 35 ( तत्समानैर्विशेषणैः V. l. ).

४ संक्षिप्तार्थां यथा तथा M.

५ Found, quoted without the name of भामह in जयमङ्गला on भट्टि X. 42. ( V. l. यत्र वचो ) रुद्रट has यत्तु वचो and बुधाः for यथा.

इत्येवमादिरुदिता गुणातिशययोगतः ।
सर्वैवातिशयोक्तिस्तु तर्कयेत् तां यथागमम् ॥ ८४ ॥

[१]सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥ ८५ ॥

[२]हेतुश्च सूक्ष्मो लेशोऽथ नालंकारतया मतः ।
समुदायाभिधानस्य वक्रोक्त्यनभिधानतः ॥ ८६ ॥

[३]गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।
इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते ॥ ८७ ॥

यथासंख्यमथोत्प्रेक्षामलंकारद्वयं विदुः ।
संख्यानमिति मेधाविनोत्प्रेक्षाभिहिता क्वचित् ॥ ८८ ॥

[४]भूयसामुपदिष्टानामर्थानामसधर्मणाम् ।
क्रमशो योऽनुनिर्देशो यथासङ्ख्यं तदुच्यते ॥ ८९ ॥

पद्मेन्दुभृङ्गमातङ्गपुंस्कोकिलकलापिनः ।
वक्त्रकान्तीक्षणगतिवाणीवालैस्त्वया जिताः ॥ ९० ॥

[५]अविवक्षितसामान्या किंचिच्चोपमया सह ।
अतद्गुणक्रियायोगादुत्प्रेक्षातिशयान्विता ॥ ९१ ॥

---

१ Found, quoted with the name of भामह in ध्वन्यालोक pp. 207-8 ( V. l. सर्वत्र for सर्वैव. सर्वैव however seems to be the reading of अभिनवगुप्त. *Vide* लोचन ). Found, quoted also in the काव्यप्रकाश X. ( V. l. सर्वत्र ). Also quoted by प्रेमचन्द्रतर्कवागीश on काव्यादर्श १।२३० ( V. l. सैव सर्वत्र ). Also found, quoted by Hemachandra in his ṭikā on the Kāvyānus'āsana, p. 267 ( सैषा सर्वैव ).

२ Found, quoted, with भामह's name on काव्यादर्श २।२३५ by प्रेमचन्द्रतर्कवागीश ( V. l. सूक्ष्मलेशौ च, मतः समुदायाभिधेयस्य ).

३ Found, quoted, in हेमचन्द्र's काव्यानुशासन p. 17. Found also quoted without भामह's name in जयमङ्गला on भट्टि X. 45 ( V. l. °मादिकं, °मेनां ). Also see काव्यादर्श २।२४४ where the first half is found. Also given by मम्मट in the काव्यप्रकाश 7 th उल्लास to indicate varieties of the व्यङ्ग्य according to the nature of the वक्तृ and the बोद्धृ.

४ Quoted without the author's ( भामह's ) name in the जयमङ्गला on भट्टि X. 43. ( V. l. °मुपदिष्टानां क्रियाणामथ कर्मणाम् ). रुद्रट has the same definition as भामह.

५ Quoted, without भामह's name in the जयमङ्गला on भट्टि X. 44. ( V. l. °सामान्यात्, °क्रियारोपादुत्प्रेक्षा ).

[1]किंशुकव्यपदेशेन तरुमारुह्य सर्वतः ।
दग्धादग्धमरण्यान्याः पश्यतीव विभावसुः ॥ ९२ ॥
[2]स्वभावोक्तिरलंकार इति केचित् प्रचक्षते ।
अर्थस्य तदवस्थत्वं स्वभावोऽभिहितो यथा ॥ ९३ ॥
आक्रोशन्नाह्वयन्नन्यानाधावन् मण्डलै रुदन् ।
गा वारयति दण्डेन डिम्भः सस्यावतारिणीः ॥ ९४ ॥
समासेनोदितमिदं धीखेदायैव विस्तरः ।
असंगृहीतमप्यन्यदभ्यूह्यमनया दिशा ॥ ९५ ॥
स्वयंकृतैरेव निदर्शनैरियं
मया प्रक्लृप्ता खलु वागलंकृतिः ।
अतः परं चारुरनेकधापरो
गिरामलंकारविधिर्विधास्यते ॥ ९६ ॥
इति भामहालंकारे द्वितीयः परिच्छेदः ।

अथ तृतीयः परिच्छेदः ।

प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम् ।
द्विप्रकारमुदात्तं च भेदैः श्लिष्टमपि त्रिभिः ॥ १ ॥
अपह्नुतिं विशेषोक्तिं विरोधं तुल्ययोगिताम् ।
अप्रस्तुतप्रशंसां च व्याजस्तुतिनिदर्शने ॥ २ ॥
उपमारूपकं चान्यदुपमेयोपमामपि ।
सहोक्तिपरिवृत्ती च ससन्देहमनन्वयम् ॥ ३ ॥
उत्प्रेक्षावयवं चान्ये संसृष्टमपि चापरे ।
भाविकत्वं च निजगुरलंकारं सुमेधसः ॥ ४ ॥
प्रेयो गृहागतं कृष्णमवादीद्विदुरो यथा ।
[3]अद्य या मम गोविन्द जाता त्वयि गृहागते ॥
कालेनैषा भवेत् प्रीतिस्तवैवागमनात् पुनः ॥ ५ ॥
[4]रसवद्दर्शितस्पष्टशृङ्गारादिरसं यथा ।
देवी समागमद्धर्ममस्करिण्यतिरोहिता ॥ ६ ॥

---

१ Found, quoted with भामह's name, by वल्लभ in सुभाषितावली ( No. 1546 °मरण्यान्याः ). Also found in Bhoja's Sarasvatíkaṇṭhábharaṇa in the Utprekshâprakaraṇa as an instance of Utprekshopamá.

२ Found, quoted, without भामह's name in the जयमङ्गला on भट्टि X. 45 ( V. l. अर्थस्य तादवस्थ्यं च ).

३ Found in the Kávyádars'a of Daṇḍin 2–276. Also quoted in the चित्रमीमांसा of अप्पय्यदीक्षित without the author's name p. 42.

४ Quoted, without भामह's name in the जयमङ्गला on भट्टि X. 47. ( V. l. दर्शितं ). Udbhaṭálaṁkárasárasaṁgraha has रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम् । स्वशब्दस्थायिसंचारिविभावाभिनयास्पदम् ॥

ऊर्जस्वि कर्णेन यथा पार्थाय पुनरागतः ।
द्विः संदधाति किं कर्णः शल्येत्यहिरपाकृतः ॥ ७ ॥
[1]पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
उवाच रत्नाहरणे चैद्यं शार्ङ्गधनुर्यथा ॥ ८ ॥
[2]गृहेष्वध्वसु वा नान्नं भुञ्ज्महे य ( द ) धीतिनः ।
न भुञ्जते द्विजास्तच्च रसदाननिवृत्तये ॥ ९ ॥
समाहितं राजमित्रे यथा क्षत्रिययोषिताम ।
रामप्रसत्त्यै यान्तीनां पुरोऽदृश्यत नारदः ॥ १० ॥
उदात्तं शक्तिमान् रामो गुरुवाक्यानुरोधकः ।
विहायोपनतं राज्यं यथा वनमुपागमत् ॥ ११ ॥
[3]एतदेवापरेऽन्येन व्याख्यानेनान्यथा विदुः ।
नानारत्नादियुक्तं यत् तत् किलोदात्तमुच्यते ॥ १२ ॥
चाणक्यो नक्तमुपयानन्दक्रीडागृहं यथा ।
शशिकान्तोपलच्छन्नं विवेद पयसां गणैः ॥ १३ ॥
[4]उपमानेन यत् तत्त्वमुपमेयस्य साध्यते ।
गुणक्रियाभ्यां नाम्ना च श्लिष्टं तदभिधीयते ॥ १४ ॥
[5]लक्षणं रूपकेऽपीदं लक्ष्यते काममत्र तु ।
इष्टः प्रयोगो युगपदुपमानोपमेययोः ॥ १५ ॥
[7] शीकराम्भोमदसृजस्तुङ्गा जलददन्तिनः ।
इत्यत्र मेघकरिणां निर्देशः क्रियते समम् ॥
[6]श्लेषादेवार्थवचसोरस्य च क्रियते भिदा ॥ १६ ॥
[7]तत् सहोक्त्युपमाहेतुनिर्देशात् क्रमशो यथा ।
छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः ॥ १७ ॥

---

१ Quoted in the Jayamaṅgalā on Bhaṭṭi X. 49 without Bhāmaha's name.

२ Found, quoted with भामह's name in ध्वन्यालोकलोचन p. 40 ( V. l. यदधीतिनो विप्रा न भुञ्जते तत्र ).

३ Found, quoted without भामह's name in the जयमङ्गला on भट्टि X. 52. ( V. l. वाक्यार्थेनान्यथा, नानारत्नार्थयुक्तं and नानारत्नाभियुक्तं ).

४ Quoted without भामह's name in the जयमङ्गला on the भट्टि X. 54 ( क्रियागुणाभ्यां V. l. )

५ Quoted without भामह's name in जयमङ्गला on भट्टि X. 54 ( विद्यते for लक्ष्यते and दृष्टः for इष्टः ).

६ Quoted without भामह's name in जयमङ्गला on भट्टि X. 54. (V. l. वचसो-र्भेदस्य क्रमशो for विविधं. )

७ Quoted with भामह's name in the commentary on उद्भटालंकारसारसंग्रह by प्रतीहारेन्दुराज.

मार्गद्रुमा महान्तश्च परेषामेव भूतये ।
उन्नता लोकदयिता महान्तः प्राज्यवर्षिणः ॥
शमयन्ति क्षितेस्तापं सुराजानो घना इव ॥ १८ ॥
रत्नवत्त्वादगाधत्वात् स्वमर्यादाविलङ्घनात् ।
बहुसत्त्वाश्रयत्वाच्च सदृशस्त्वमुदन्वता ॥ १९ ॥
[1]अपह्नुतिरभीष्टा च किंचिदन्तर्गतोपमा ।
भूतार्थापह्नवादस्याः क्रियते चाभिधा यथा ॥ २० ॥
[2]नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः ।
अयमाकन्द्यमाणस्य कन्दर्पधनुषो ध्वनिः ॥ २१ ॥
[3]एकदेशस्य विगमे या गुणान्तरसंस्थितिः ।
विशेषप्रथनायासौ विशेषोक्तिर्मता यथा ॥ २२ ॥
[4]स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शंभुना न बलं हृतम् ॥ २३ ॥
[5]गुणस्य वा क्रियाया वा विरुद्धान्यक्रियाभिधा ।
या विशेषाभिधानाय विरोधं तं विदुर्बुधाः ॥ २४ ॥
उपान्तरूढोपवनच्छायाशीतापि धूरसौ ।
विदूरदेशानपि वः संतापयति विद्विषः ॥ २५ ॥
[6]न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया ।
तुल्यकार्यक्रियायोगादित्युक्ता तुल्ययोगिता ॥ २६ ॥
शेषो हिमगिरिस्त्वं च महान्तो गुरवः स्थिराः ।

---

१ Quoted without भामह's name in the जयमङ्गला on the भट्टि X. 57 ( °रितिष्टाच, °पह्नवादेषा, क्रियतेऽस्या भिदा यथा ). Udbhata has the same definition as Bhâmaha, but has निबन्धः क्रियते बुधैः for क्रियते चाभिधा यथा. The first half is quoted in ध्वन्यालोकलोचन also, p. 38, °रभीष्टस्य & °इर्थगतोपमा ).

२ Quoted in ध्वन्यालोकलोचन p. 38 ( °राकृष्यमाणस्य ). Also found quoted with भामह's name by वल्लभ in सुभाषितावलि No. 1644 ( मधुरस्वरा for मुखरा मुहुः and °माकृष्यमाणस्य). Also found, quoted in हेमचन्द्र's काव्यानुशासन p. 28 ( अयमाकृष्यमाणस्य ).

३ Quoted in लोचन p. 38 ( निगमे. °संस्तुतिः, °क्तिरिति स्मृता. ) Also quoted without भामह's name in जयमङ्गला on भट्टि X. 58. ( संस्तुतिः ) Also quoted by प्रतिहारेन्दुराज on उद्भट's काव्यालंकारसारसंग्रह ( °संस्तुतिः ) with भामह's name.

४ Quoted in the ध्वन्यालोकलोचन p. 38 ( न हृतं बलम् ). Al-o quoted by हेमचन्द्र in his काव्यानुशासन p. 270.

५ Found, quoted, without भामह's name in the जयमङ्गला on the भट्टि X. 63 ( गुणस्य च, °क्रियाभिधा, विदुर्यथा ).

६ Found, quoted, without भामह's name in the जयमङ्गला on the भट्टि X. 16.

यदलङ्घितमर्यादाश्चलन्तीं [1]बिभृथ क्षितिम् ॥ २७ ॥

[2]अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः ।
अप्रस्तुतप्रशंसेति सा चैवं कथ्यते यथा ॥ २८ ॥

प्रीणितप्रणयि स्वादु काले परिणतं बहु ।
विना पुरुषकारेण फलं पश्यत शाखिनाम् ॥ २९ ॥

[3]दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यताम् ।
किञ्चिद्विधित्सोर्या निन्दा व्याजस्तुतिरसौ यथा ॥ ३० ॥

रामः सप्ताभिनत् सालान् गिरिं क्रौञ्चं भृगूत्तमः ।
शतांशेनापि भवता किं तयोः सदृशं कृतम् ॥ ३१ ॥

[4]क्रिययैव विशिष्टस्य तदर्थस्योपदर्शनात् ।
ज्ञेया निदर्शना नाम यथेववतिभिर्विना ॥ ३२ ॥

[5]अयं मन्दद्युतिर्भास्वानस्तं प्रतियियासति ।
उदयः पतनायेति श्रीमतो बोधयन् नरान् ॥ ३३ ॥

[6]उपमानेन तद्भावमुपमेयस्य साधयत् ।
यां वदन्त्युपमामेतदुपमारूपकं यथा ॥ ३४ ॥

समग्रगगनायाममानदण्डो रथाङ्गिणः ।
पादो जयति सिद्धस्त्रीमुखेन्दुनवदर्पणः ॥ ३५ ॥

[7]उपमानोपमेयत्वं यत्र पर्यायतो भवेत् ।
उपमेयोपमां नाम ब्रुवते तां यथोदिताम् ॥ ३६ ॥

[8]सुगन्धि नयनानन्दि मदिरामदपाटलम् ।
अम्भोजमिव वक्त्रं ते त्वदास्यमिव पङ्कजम् ॥ ३७ ॥

---

१ बिभ्रति M.

२ Found, quoted in the ध्वन्यालोकलोचन p. 42 ( °प्रशंसा सा त्रिविधा परिकीर्तिता ). It may have been quoted from some other work, as भामह's अप्रस्तुतप्रशंसा is not of three kinds.

३ Found, quoted, without भामह's name in the जयमङ्गला on the भट्टि X. 59 ( तुल्यता, विधित्सया ).

४ Found, quoted, without भामह's name, in the जयमङ्गला on the भट्टि X. 62 ( तदर्थस्य विशिष्टस्यो°, and इष्टा for ज्ञेया ).

५ Found, quoted with भामह's name by प्रतीहारेन्दुराज in his commentary on उद्भटालंकारसारसंग्रह. Also found quoted in ध्वन्यालोकलोचन p. 209.

६ Found, quoted without भामह's name, in the जयमङ्गला on the भट्टि X. 60 ( उपमानस्य, रूपयन् for साधयत्, यो for यां ).

७ Found, quoted, without भामह's name, in the जयमङ्गला on the भट्टि X. 64 ( धीरा for नाम ).

[1]तुल्यकाले क्रिये यत्र वस्तुद्वयसमाश्रये ।
पदेनैकेन कथ्येते सहोक्तिः सा मता यथा ॥ ३८ ॥
हिमपाताविलदिशो गाढालिङ्गनहेतवः ।
वृद्धिमायान्ति यामिन्यः कामिनां प्रीतिभिः सह ॥ ३९ ॥
[2]विशिष्टस्य यदादानमन्यापोहेन वस्तुनः ।
अर्थान्तरन्यासवती परिवृत्तिरसौ यथा ॥ ४० ॥
प्रदाय वित्तमर्थिभ्यः स यशोधनमादित ।
सतां विश्वजनीनानामिदमस्खलितं व्रतम् ॥ ४१ ॥
[3]उपमानेन तत्त्वं च भेदं च वदतः पुनः ।
ससन्देहं वचः स्तुत्यै ससन्देहं विदुर्यथा ॥ ४२ ॥
किमयं शशी न स दिवा विराजते
कुसुमायुधो न धनुरस्य कौसुमम् ।
इति विस्मयाद्विमृशतोऽपि मे मति-
स्त्वयि वीक्षिते न लभतेऽर्थनिश्चयम् ॥ ४३ ॥
[4]यत्र तेनैव तस्य स्यादुपमानोपमेयता ।
असादृश्यविवक्षातस्तमित्याहुरनन्वयम् ॥ ४४ ॥
ताम्बूलरागवलयं स्फुरद्दशनदीधिति ।
इन्दीवराभनयनं तवेव वदनं तव ॥ ४५ ॥
[5]श्लिष्टस्यार्थेन संयुक्तः किंचिदुत्प्रेक्षयान्वितः ।
रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा ॥ ४६ ॥
[6]तुल्योदयावसानत्वाद्गतेऽस्तं प्रति भास्वति ।
वासाय वासरः क्लान्तो विशतीव तमोगृहम् ॥ ४७ ॥

---

१ Quoted without भामह's name in the जयमङ्गला on the भट्टि X. 65 ( तुल्यकालक्रिये, °समाश्रिते, वाक्येनैकेन for पदेनैकेन ).

२ Quoted without भामह's name in the जयमङ्गला on the भट्टि X. 66.

३ Quoted without भामह's name in the जयमङ्गला on the भट्टि X. 67. (उप-मानोपमेयस्य तत्त्वं च वदतः पुनः ।, ससन्देहवचः स्तुत्यै ). Also quoted in ध्वन्यालो-कलोचन p. 107.

४ Quoted without भामह's name in the जयमङ्गला on the भट्टि X. 68 (साद-श्यस्याविवक्षात° ).

Also quoted with भामह's name in the चित्रमीमांसा p. 14 ( °विवक्षातो वदन्ति ). and without भामह's name in the अलंकारकौस्तुभ p. 23 of विश्वेश्वरपण्डित ( °विवक्षातो वदन्ति ).

५ Found, quoted without भामह's name in जयमङ्गला on भट्टि X. 69 ( किंचिच्चोत्प्रेक्षया° ).

६ Found quoted in ध्वन्यालोकलोचन p. 41 ( तमोगुहाम् ).

१वरा विभूषा संसृष्टिर्बह्वलंकारयोगतः ।
रचिता रत्नमालेव सा चैवमुदिता यथा ॥ ४८ ॥
गाम्भीर्यलावण्यवतोर्युवयोः प्राज्यरत्नयोः ।
सुखसेव्यो जनानां त्वं दुष्प्राहोऽम्भसां पतिः ॥ ४९ ॥
अनलंकृतकान्तं ते वदनं वनजद्युति ।
निशाकृतं प्रकृत्यैव चारोः का वास्त्यलंकृतिः ॥ ५० ॥
अन्येषामपि कर्त्तव्या संसृष्टिरनया दिशा ।
कियदुद्धिलष्टेभ्यः शक्यं कथयितुं मया ॥ ५१ ॥
२भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम् ।
प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः ॥ ५२ ॥
३चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता ।
शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते ॥ ५३ ॥
४आशीरपि च केषांचिदलंकारतया मता ।
सौहृदय्याविरोधोक्तौ प्रयोगोऽस्याश्च तद्यथा ॥ ५४ ॥
अस्मिन्नहीहि सुहृदि प्रणयाभ्युपेया-
माश्लिष्य गाढमसुमानतमादरेण ।
विन्ध्यं महानिव घनः समयेऽभिवर्ष-
न्नानन्दजैर्नयनवारिभिरुक्षतु त्वाम् ॥ ५५ ॥
स गन्धमातङ्गविभिन्नसाला
हतप्रवीरा द्रुतभीतपौराः ।

---

१ Found, quoted without भामह's name in the जयमङ्गला on the भट्टि X. 70 ( परामिभूता, कथ्यते for उदिता ).

२ Found, quoted without the author's name, in the Jayamaṅgalâ on the Bhaṭṭi-kâvya XII. 1.

Also, quoted without the name of the author, in the Sarvapathîna by Mallinâtha on the Bhatti XII. 1.

३ Found quoted in the Jayamaṅgalâ on the Bhaṭṭi XII. 1.

Quoted also in the Sarvapathîna by Mallinâtha, Bhaṭṭi XII. 1 ( The reading of the first half there is उदात्तार्थाद्भुतार्थत्वं कथायास्त्वभिनीतता ). It is also quoted by Pratîhârendurâja in his commentary on Udbhaṭa's Kâvyâlaṅkârasârasaṅgraha—'तदुक्तं भाविकमुपक्रम्य भामहेन " चित्रोदात्ताद्भुतार्थत्वं कथायां स्वभिनीतता । शब्दानुकूलता चेति तस्य हेतून् प्रचक्षते " इति । स्वभिनीततेत्यभिनयादिद्वारेण शृङ्गारादिरसंवलितत्वं चतुर्वर्गोपायस्योक्तम् ॥'.

The second half of the verse is found quoted by Ruyyaka in his Alaṅkârasarvasva—' शब्दानुकूलता चेति तस्य हेतून् प्रचक्षते ' इति भामहीये *Vide* p. 183.

४ Quoted in the जयमङ्गला on the भट्टि X. 71 आशीरिति च, सौहृदय्या").

स्वतेजसा दग्धसमस्तशोभा
  द्विषां पुरः पश्यतु राजलोकः ॥ ६६ ॥
गिरामलंकारविधिः सविस्तरः
  स्वयं विनिश्चित्य धिया मयोदितः ।
अनेन वागर्थविदामलंकृता
  विभाति नारीव विदग्धमण्डला ॥ ६७ ॥

इति भामहालंकारे तृतीयः परिच्छेदः ॥

अथ चतुर्थः परिच्छेदः ।

[१]अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धि च ॥ १ ॥
देशकालकलालोकन्यायागमविरोधि च ।
[२]प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टं च नेष्यते ॥ २ ॥
अपार्थमित्यपेतार्थं स चार्थः पदवाक्ययोः ।
अर्थवान् वर्णसंघातः सुप्तिङन्तं पदं पुनः ॥ ३ ॥
पदानामेव संघातः सापेक्षाणां परस्परम् ।
निराकाङ्क्षं च तद्वाक्यमेकवस्तुनिबन्धनम् ॥ ४ ॥
क्रमवृत्तिषु वर्णेषु सङ्घातादि न युज्यते ।
बुद्धौ तु संभवत्येतदन्यस्तेऽपि प्रतिक्षणम् ॥ ५ ॥
धीरन्त्यशब्दविषयाहृतवर्णाहितस्मृतिः ।
वाक्यमित्याहुरपरे न शब्दाः क्षणनश्वराः ॥ ६ ॥
अत्रापि बहु वक्तव्यं जायते तत्तु नोदितम् ।
गुरुभिः किं विवादेन यथाप्रकृतमुच्यते ॥ ७ ॥
[३]समुदायार्थशून्यं यत्तदपार्थकमिष्यते ।
दाडिमानि दशापूपाः षडित्यादि यथोदितम् ॥ ८ ॥
विरुद्धार्थं मतं व्यर्थं विरुद्धं तूपदिश्यते ।
पूर्वापरार्थव्याघाताद्विपर्ययकरं यथा ॥ ९ ॥
सखि मानं प्रिये धेहि लघुतामस्य मा गमः ।
भर्तुश्छन्दानुवर्तिन्यः प्रेम घ्नन्ति न हि स्त्रियः ॥ १० ॥
उपासितगुरुत्वात् त्वं विजितेन्द्रियशत्रुषु ।
श्रेयसो विनयाधानमधुना तिष्ठ केवलम् ॥ ११ ॥
यदभिन्नार्थमन्योन्यं तदेकार्थं प्रचक्षते ।
पुनरुक्तमिदं प्राहुरन्ये शब्दार्थभेदतः ॥ १२ ॥

---

१ The first verse and the first half of the second is exactly the same in the Kâvyâdars'a of Daṇḍin. 3-125-126.

२ The line प्रतिज्ञा° is quoted by Premachandratarkavâgis'a in his commentary on the Kâvyâdars'a 3-127.

३ Found in Daṇḍin's Kâvyâdars'a 3-128. ( तदपार्थमितीष्यते ).

न शब्दपुनरुक्तं तु स्थौल्यादत्रोपवर्ण्यते ।
कथमाक्षिप्तचित्तः सन्नुक्तमेवाभिधास्यते ॥ १३ ॥
भयशोकाभ्यसूयासु हर्षविस्मययोरपि ।
यथाह गच्छ गच्छेति पुनरुक्तं न तद्विदुः ॥ १४ ॥
अत्रार्थपुनरुक्तं यत्तदेवैकार्थमिष्यते ।
उक्तस्य पुनराख्याने कार्यासंभवतो यथा ॥ १५ ॥
तासुत्कमनसं नवं करोति ध्वनिरम्भसाम् ।
सौधेषु घनमुक्तानां प्रणालीमुखपातिनाम् ॥ १६ ॥
श्रुतेः सामान्यधर्माणां विशेषस्यानुदाहृतेः ।
अप्रतिष्ठं यदत्रैतज्ज्ञानं ( यदेकत्र तज्ज्ञानं ? ) संशयं विदुः ॥ १७ ॥
ससंशयमिति प्राहुस्ततस्तज्जननं वचः ।
इष्टं निश्चितये वाक्यं न वेलावेति ( ? ) तद्यथा ॥ १८ ॥
[१]व्यालवन्तो दुरारोहा रत्नवन्तः फलान्विताः ।
विषमा भूभृतस्तेभ्यो भयमाशु प्रमादिनाम् ॥ १९ ॥
यथोपदेशं क्रमशो निर्देशोऽत्र क्रमो मतः ।
तदपेतं विपर्यासादित्याख्यातमपक्रमम् ॥ २० ॥
विदधानौ किरीटेन्दू श्यामाभ्रहिमसच्छवी ।
रथाङ्गशूले बिभ्राणौ पातां वः शंभुशार्ङ्गिणौ ॥ २१ ॥
सूत्रकृत्पादकारेष्टप्रयोगाद्योऽन्यथा भवेत् ।
तमाहुश्शावकाः सिद्धेः शब्दहीनं विदुर्यथा ॥ २२ ॥
स्फुरत्तडिद्वलयिनो विततास्भोगरीयसः ।
तेजस्तिरयतः सौरं घनान् पश्य दिवाभितः ॥ २३ ॥
यतिश्छन्दोनि[२]रुद्धानां शब्दानां या विचारणा ।
तदपेतं यतिभ्रष्टमिति निर्दिश्यते यथा ॥ २४ ॥
विद्युत्वन्तस्तमालासितवपुष इमे वारिवाहा ध्वनन्ति ॥ २५ ॥
गुरोर्लघोश्च वर्णस्य योऽस्थाने रचनाविधिः ।
तन्न्यूनाधिकता वापि भिन्नवृत्तमिदं यथा ॥ २६ ॥
भ्रमति भ्रमरमाला काननेषून्मदासौ
   विरहितरमणीकोऽहं ...स्यच गन्तुम् ॥ २७ ॥
कान्ते इन्दुशिरोरत्ने आदधाने उदंशुनी ।
पातां वः शम्भुशर्वाण्याविति प्राहुर्विसन्धयः ॥ २८ ॥
या देशे द्रव्यसंभूतिरपि वा नोपदिश्यते ।
तत्तद्विरोधि विज्ञेयं स्वभावात् तद्यथोच्यते ॥ २९ ॥

---

१ Quoted by हेमचन्द्र in his commentary on काव्यानुशासन p. 279.

२ °भिरुद्धानां M.

मलये कन्दरोपान्तरूढकालागरुद्रुमे ।
सुगन्धिकुसुमा नम्रा राजन्ते देवदारवः ॥ ३० ॥
षण्णामृतूनां भेदेन कालः षोढेव भिद्यते ।
तद्विरोधकृदित्याहुर्विपर्यासादिदं यथा ॥ ३१ ॥
उद्वहशिशिरासारान् प्रावृषेण्यान् नभस्वतः ।
फुल्लाः सुरभयन्तीमे चूताः काननशोभिनः ॥ ३२ ॥
कला संकलना प्रज्ञा शिल्पान्यस्याश्च गोचरः ।
विपर्यस्तं तथैवाहुस्तद्विरोधकरं यथा ॥ ३३ ॥
ऋषभात् पञ्चमात् तस्मात् सषड्जं धैवतं स्मृतम् ।
अयं हि मध्यमग्रामो मध्यमोत्पीडितर्षभः ॥ ३४ ॥
इति सा धारितं मोहादन्यथैवावगच्छति ।
अन्यास्वपि कलास्वेवमभिधेया विरोधिता ॥ ३५ ॥
स्थास्नुजङ्गमभेदेन लोकं तत्त्वविदो विदुः ।
स च तद्व्यवहारोऽत्र तद्विरोधकरं यथा ॥ ३६ ॥
तेषां कटतटभ्रष्टैर्गजानां मदबिन्दुभिः ।
प्रावर्तत नदी घोरा हस्त्यश्वरथवाहिनी ॥ ३७ ॥
धावतां सैन्यवाहानां फेनवारि मुखच्युतम् ।
चकार जानुदघ्नापान् प्रतिदिङ्मुखमध्वनः ॥ ३८ ॥
न्यायः शास्त्रं त्रिवर्गोक्तिर्दण्डनीतिं च तां विदुः ।
अतो न्यायविरोधीदमपेतं यत् तया यथा ॥ ३९ ॥
विजिगीषुमुपन्यस्य वत्सेशं वृद्धदर्शनम् ।
तस्यैव कृतिनः पश्चादभ्यधापा (धा?) रयान्यताम् ॥ ४० ॥
अन्तर्योधशताकीर्णं सालङ्कायन[1]नेत्र कम ( ? ) ।
तथाविधं गजच्छद्मनाज्ञासीद् स स्वभूगतम् ॥ ४१ ॥
यदि वोपेक्षितं तस्य सचिवैः स्वार्थसिद्धये ।
अहो नु मन्दिमा तेषां भक्तिर्वा नास्ति भर्तरि ॥ ४२ ॥
शरा दृढधनुर्मुक्ता मन्युमद्भिररातिभिः ।
मर्माणि परिहृत्यास्य पतिष्यन्तीति कानुमा ॥ ४३ ॥
हतोऽनेन मम भ्राता मम पुत्रः पिता मम ।
मातुलो भागिनेयश्च रुषा संरब्धचेतसः ॥ ४४ ॥
अस्यन्तो विविधान्याजावायुधान्यपराधिनम् ।
एकाकिनमरण्यान्यां न हन्युर्बहवः कथम् ॥ ४५ ॥

नमोऽस्तु तेभ्यो विद्वद्भ्यो येऽभिप्रायं कवेरिमम् ।
शास्त्रलोकावपास्यैवं नयन्ति नयवेदिनः ॥ ४६ ॥
सचेतसो वनेभस्य चर्मणा निर्मितस्य च ।
विशेषं वेद बालोऽपि कष्टं किं नु[2] कथं नु तत् ॥ ४७ ॥

---

१ °नेत्रकम् M. २ तु. M.

आगमो धर्मशास्त्राणि लोकसीमा च तत्कृता ।
तद्विरोधि तदाचारव्यतिक्रमणतो यथा ॥ ४८ ॥
भूभृतां पीतसोमानां न्याय्ये वर्त्मनि तिष्ठताम् ।
अलङ्करिष्णुना वंशं गुरौ सति जिगीषुणा ॥ ४९ ॥
अभार्योढेन संस्कारमन्तरेण द्विजन्मना ।
नरवाहनदत्तेन वेश्यावान् निशि पीडितः ॥ ५० ॥

न दूषणायायमुदाहृतो विधि-
　र्न चाभिमानेन किमु प्रतीयते ।
कृतात्मनां तत्त्वदृशां च मादृशो
　जनोऽभिसंधिं क इवावभोत्स्यते ॥ ५१ ॥

इति भामहालंकारे चतुर्थः परिच्छेदः ॥

अथ पञ्चमः परिच्छेदः ॥

अथ प्रतिज्ञेत्यादिहीनं दुष्टं च वर्ण्यते ।
समासेन यथान्यायं तन्मात्रार्थप्रतीतये ॥ १ ॥
मा देव दुर्बोधतया शास्त्राद्बिभ्यत्यमेधसः ।
तदुपन्यासनायैव हेतुन्याय[1]लवोच्चयः ॥ २ ॥
स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटु भेषजम् ॥ ३ ॥
न स शब्दो न तद्वाच्यं न स न्यायो न सा कला ।
जायते यन्न काव्याङ्गमहो भारो महान् कवेः ॥ ४ ॥
[illegible] प्रमाणाभ्यां प्रत्यक्षमनुमा च ते ।
असाधारणसामान्यविषयत्वं तयोः किल ॥ ५ ॥
प्रत्यक्षं कल्पनापोढं ततोऽर्थादिति केचन ।
कल्पनां नाम जात्यादियोजनां प्रतिजानते ॥ ६ ॥
समारोपः किलैतावान् सदर्थालम्बनं च तत् ।
जात्याद्यपोहे वृत्तिः क क विशेषः कुतश्च सः ॥ ७ ॥
तदपोहेषु च तथा सिद्धा सा बुद्धिगोचरा ।
अवस्तुकं चेद्वितथं प्रत्यक्षं तत्त्ववृत्ति हि ॥ ८ ॥
ग्राह्यग्राहकभेदेन विज्ञानांशो मतो यदि ।
विज्ञानमत्र स्याद्द्वयाद्विशेषो स ( स्य ? ) विकल्पना ॥ ९ ॥

---

१ °लो° M.

२ Quoted with भामह's name in ध्वन्यालोकलोचन p. 182 (वाक्यार्थमुपयुञ्जते).

३ Quoted without Bhâmaha's name by Hemachandra in his Ṭîkâ on the Kâvyânus'âsana p. 7 ( काव्याङ्गमहाभारो गुरुः कवेः )

४ °द्वाक्यं M.

अर्थादेवेति रूपादेस्तत एवेति न्यायतः ।
[1]अन्यथा घटविज्ञानमन्येन व्यपदिश्यते ॥ १० ॥
त्रिरूपाल्लिङ्गतो ज्ञानमनुमानं च केन च ( केचन? ) ।
तद्विदो नान्तरीयार्थदर्शनं चापरं विदुः ॥ ११ ॥
विविधास्पदधर्मेण धर्मीकृतविशेषणः ।
पक्षस्तस्य च निर्देशः प्रतिज्ञेत्यभिधीयते ॥ १२ ॥
तदर्थहेतुसिद्धान्तसर्वागमविरोधिनी ।
[2]प्रसिद्धधर्मा प्रत्यक्षबा[3]धिनी चेति दुष्यति ॥ १३ ॥
तयैव हि तदर्थस्य विरोधकरणं यथा ।
यतिर्मम पिता बाल्यात् मनुर्यस्याहमौरसः ॥ १४ ॥
[4]अस्यात्मा प्रकृतिर्वेति ज्ञेया हेत्वपवादिनी ।
धर्मिणोऽस्याप्रसिद्धत्वात्त[5]द्धर्मोऽपि न सेत्स्यति ॥ १५ ॥
शाश्वतोऽशाश्वतो वेति प्रसिद्धे धर्मिणि ध्वनौ ।
जायते भेदविषयो विवादो [6]वादिनोर्मिथः ॥ १६ ॥
स्वसिद्धान्तविरोधित्वाद्विज्ञेया तद्विरोधिनी ।
कणभक्षो यथा शब्दमाचक्षीताविनश्वरम् ॥ १७ ॥
सर्वशास्त्रविरुद्धत्वात् सर्वागमविरोधिनी ।
यथा शुचिस्तनुक्षीणि प्रमाणानि ( नी? ) सन्ति वा ॥ १८ ॥
आकुमारमसंदिग्धधर्माहितविशेषणा ।
प्रसिद्धधर्मेति मता श्रोत्रग्राह्यो ध्वनिर्यथा ॥ १९ ॥
प्रत्यक्षबाधिनी तेन प्रमाणेनैव बाध्यते ।
यथा शीतोऽनलो नास्ति [7]रूपमुष्णः क्षपाकरः ॥ २० ॥
सन् द्वयोः सदृशे सिद्धो व्यावृत्तस्तद्विपक्षतः ।
हेतुस्त्रिलक्षणो ज्ञेयो हेत्वाभासो विपर्ययात् ॥ २१ ॥
सन् द्वयोरिति यः सिद्धः स्वपक्षपरपक्षयोः ।
अभिन्नलक्षणः पक्षः फलभेदादयं द्विधा ॥ २२ ॥
परपक्षानुपादानं तद्वृत्तेश्चानुदाहृतौ ।
कथमन्यतरासिद्धहेत्वाभासव्यवस्थितिः ॥ २३ ॥
साध्यधर्मानुगमतः सदृशस्तत्र यश्च सन् ।
अन्योऽप्यसावेक इव सामान्यादुपचर्यते ॥ २४ ॥
विपक्षस्तद्विसदृशो व्यावृत्तस्तत्र यो ह्यसन् ।
इति द्वयैकानुगतिव्यावृत्तिभिर्लक्ष्मसाधुता ॥ २५ ॥
साध्यसाधनधर्माभ्यां सिद्धो दृष्टान्त उच्यते ।
तद्विपर्ययतो वापि तदाभस्तद्दृष्टचित्तः ॥ २६ ॥

---

१ अन्यदा T. २ विरुद्धधर्मा T. ३ °बादिनी M. ४ अह्यात्मा T. ५ °तद्धर्मोऽपि M. ६ वादिनो मिथः M. ७ कूप° M.

साध्येन लिङ्गानुगतिस्तदभावे च नास्तिता ।
ख्याप्यते येन दृष्टान्तः स किलान्वयेद्विधोच्यते ॥ २७ ॥
दूषणन्यूनताद्युक्तिर्न्यूनं हेत्वादिनाथ च ।
तन्मूलत्वात् कथायाश्च न्यूनं नेष्टं प्रतिज्ञया ॥ २८ ॥
जातयो दूषणाभासास्ताः साधर्म्यसमादयः ।
तासां प्रपञ्चो बहुधा भूयस्त्वादिह नोदितः ॥ २९ ॥
अपरं वक्ष्यते न्यायलक्षणं काव्यसंश्रयम् ।
इदं तु शास्त्रगर्भेषु काव्येष्वभिहितं यथा ॥ ३० ॥
अथ नित्याविनाभावि दृष्टं जगति कारणम् ।
कारणं चेन्न तन्नित्यं नित्यं चेत् कारणं न तत् ॥ ३१ ॥
लक्ष्मप्रयोगदोषाणां [1]भेदेनानेकवर्त्मना ।
[illegible]साधनं सिद्ध्यै शास्त्रेषूदितमन्यथा ॥ ३२ ॥
[illegible] काव्यप्रयोगेषु नतु प्रादुष्कृतमन्यथा ।
[illegible]मास्त[2]त्त्वदर्शिनः ॥ ३३ ॥
[illegible] दूरादुपात्ययम् ।
[illegible] (+र्विा ) [illegible]न्धूनामहो स्थेमा महार्चिषः ॥ ३४ ॥
[illegible]श्रयो नश्वरीति या ।
[illegible] प्रतिजानते ॥ ३५ ॥
[illegible]श्रयात् सा चतुर्विधा ।
[illegible] प्रतिज्ञाय पितुर्यथा ॥
[illegible] स्याद्धर्मनिबन्धनी ॥ ३६ ॥
[illegible]मिति भर्तृनिदेशतः ॥
[illegible] सा ज्ञातेत्यर्थसंश्रया ॥ ३७ ॥
आहरिष्याम्यमूमद्य महासेनात्मजामिति ।
कृत्वा प्रतिज्ञां वत्सेन हृतेति मदनाश्रया ॥ ३८ ॥
भ्रातुर्भ्रातृव्यमुन्मथ्य पास्याम्यस्यासृगाहवे ।
प्रतिज्ञाय यथा भीमस्तच्चकारावशो रुषा ॥ ३९ ॥
कार्योऽन्यत्र प्रतिज्ञायाः प्रयोगो न कथंचन ।
परित्यागस्य कर्तव्यो नासां चतसृणामपि ॥ ४० ॥
प्रायोपवेशाय यथा प्रतिज्ञाय सुयोधनः ।
राज्याय पुनरुत्तस्थाविति धर्मविरोधिनी ॥ ४१ ॥
आहूतो न निवर्तेऽहं द्यूतायेति युधिष्ठिरः ।
कृत्वा संधां शकुनिना दिदेवेत्यर्थबाधिनी ॥ ४२ ॥
अथारभ्य निवत्स्यामि मुनिवद्वचनादिति ।
पितुः प्रियाय यां भीष्मश्चक्रे सा कामबाधिनी ॥ ४३ ॥

---

१ भेदेनानेन वर्त्मना M. २ T. notices °सत्त्वशंसिनः also.

अत्याजयद्यथा रामः सर्वक्षत्रवधाश्रयाम् ।
जामदग्न्यं वृथा जित्वा सा ज्ञेया कोपबाधिनी ॥ ४४ ॥
अथाभ्युपगमप्राप्तिः सन्ध्याभ्युपगमाङ्किता ।
अनुक्तमपि यत्रार्थोऽभ्युपैति यथोच्यते ॥ ४५ ॥
किमिन्द्रियद्विषा[1] ज्ञेयं को निराकृतयेऽरिभिः ।
को वा गत्वरमर्थिभ्यो न यच्छति धनं लघु ॥ ४६ ॥
किमत्ययं तु यः क्षेपः सौकर्यं दर्शयत्यसौ ।
हेतुविदस्यैव मतः काव्येष्वपि सुमेधसाम् ॥ ४७ ॥
अन्वयव्यतिरेकौ हि केवलावर्थसिद्धये ।
यथाभितो वनाभोगमेतदस्ति महत्सरः ॥ ४८ ॥
कूजनात् कुरराणां च कमलानां च सौरभात् ।
अन्वयर्मोऽपि तत्सिद्धिं संबन्धेन करोत्ययम् ॥ ४९ ॥
धूमादभ्रङ्कषात् साग्नेः प्रदेशस्यानुमामिव ।
अपृथक्कृतसाध्योऽपि हेतुरत्र प्रतीयते ॥ ५० ॥
अन्वयव्यतिरेकाभ्यां [2]विनैवार्थगतिर्यथा ।
दीप्रदीपा निशा जज्ञे व्यपवृत्तदिवाकरा ॥ ५१ ॥
हेतुप्रदीपदीपत्वमपवृत्तौ रवेरिह ।
तस्यापि सुधियामिष्टा दोषाः प्रागुदितास्त्रयः ॥ ५२ ॥
अज्ञानसंशयज्ञानविपर्ययकृतो यथा ।
काशा हरन्ति हृदयममी कुसुमसौ[3]रभात् ॥ ५३ ॥
अपामभ्यर्णवर्तित्वादेते ज्ञेयाः शरारवः ।
असौ शुकान्तनेत्रत्वाच्चकोर इति गृह्यताम् ॥ ५४ ॥
तुल्यजातावदृष्टत्वात् साधयत्यचकोरताम् ।
उक्तस्यार्थस्य दृष्टान्तं प्रतिबिम्बनिदर्शनम् ॥ ५५ ॥
ननूपमानममेवास्तु न हेत्वनभिधानतः ।
साध्यसाधनयोरुक्तिरुक्तादन्यत्र नेष्यते ॥ ५६ ॥
शुक्लं पद्ममिवेत्यत्र किं साध्यं किं च साधनम् ।
इति प्रयोगस्य यथा कलावपि भवानिह ॥
श्रेयान् वृद्धानुशिष्टत्वात् पूर्वं कार्त्तयुगे यथा ॥ ५७ ॥
यत्र दृष्टान्तमात्रेण व्यज्येते साध्यसाधने ।
तमाहुः शुद्धदृष्टान्तं तन्मात्राविष्कृतेर्यथा ॥ ५८ ॥
भरतस्त्वं दिलीपस्त्वं त्वमेवैलः पुरूरवाः ।
त्वमेव वीरप्रद्युम्नस्त्वमेव नरवाहनः ॥ ५९ ॥
कथमेकपदेनैव व्यज्येरन्नस्य ते गुणाः ।
इति प्रयुञ्जते सन्तः केचिद्विस्तरभीरवः ॥ ६० ॥

---

१ °द्विषा M. २ विनैकार्थ° M. ३ °सौहृदात् M.

यदमेकं परं साधु नार्वाचीननिबन्धनम् ।
वैपरीत्याद्विपर्यासं कीर्त्तेरपि करोति तत् ॥ ६१ ॥
अहृद्यमसुभिर्भेदं रसवत्त्वेऽप्यपेशलम् ।
काव्यं कपित्थमामंवत् ( ? ) केषांचित् सदृशं यथा ॥ ६२ ॥
प्रजाजनश्रेष्ठवरिष्ठभूभृ-
च्छिरोर्चिताङ्घ्रेः पृथुकीर्तिधिष्ण्य ।
अहिंस्रपद्मस्य जलारिधाम-
स्तवैव नान्यस्य सुतस्य वृत्तम् ॥ ६३ ॥
अंशुमद्भिश्च मणिभिः फलनिम्नैश्च शाखिभिः ।
फुल्लैश्च कुसुमैरन्यैर्वाचोऽलंकुरुते यथा ॥ ६४ ॥
शुभमरकतपद्मरागचित्रे
सकलसपल्लवभूरिचारुवृत्ते ।
बहुकुसुमविभूषिते स तस्थौ
सुरमुनिसिद्धयुते सुमेरुपृष्ठे ॥ ६५ ॥
[illegible]भूष्यन्ते भूषणोपवनस्रजः ।
वाचां वक्रा[illegible]रलंकाराय कल्पते ॥ ६६ ॥
विरुद्धपदमस्वर्थं बहुपूरणमाकुलम् ।
कुर्वन्ति काव्यमपरे व्यायताभीप्सया यथा ॥ ६७ ॥
[illegible]लताचन्दनस्पन्दनाढ्य-
[illegible]नाभिलाढ्यामकाव्यासतीरः ।
[illegible]स्तिमिमकरकुलाकीर्णवीचीप्रतानो
दूरे [illegible] शशिकुमुदसुधाक्षीरशुद्धां सुकीर्तिम् ॥ ६८ ॥
इति निगदितास्तास्ता वाचामलंकृतयो मया ।
बहुविधकृतीर्दृष्ट्वान्येषां स्वयं परितर्क्य च ।
प्रथितवचसः सन्तोऽभिज्ञाः प्रमाणमिहापरे
गुरुतरधियामस्वाराध्यं मनोऽकृतबुद्धिभिः ॥ ६९

इति भामहालंकारे पञ्चमः परिच्छेदः ।

अथ षष्ठः परिच्छेदः

सूत्राम्भसं पदावर्तं पारायणरसातलम् ।
धातूणादिगणग्राहं ध्यानग्रहबृहत्प्लवम् ॥ १ ॥
धीरैरालोकितप्रान्तममेधोभिरसूयितम् ।
सदोपभुक्तं सर्वाभिरन्यविद्याकरेणुभिः ॥ २ ॥
नापारयित्वा दुर्गाधममुं व्याकरणार्णवम् ।
शब्दरत्नं स्वयंगम्यमलंकर्तुमयं जनः ॥ ॥ ३ ॥
तस्य चाधिगमे यत्नः कार्यः काव्यं विधित्सता ।
परप्रत्ययतो यत्तु क्रियते तेन का रतिः ॥ ४ ॥

नान्यप्रत्ययशब्दा वाग …मुदे सताम् ।
परेण धृतमुक्तेव सरसा कुसुमावली ॥ ५ ॥
मुख्यस्तावदयं न्यायो यत् स्वशक्त्या प्रवर्त्तते ।
अन्ये सारस्वता नाम सन्त्यन्योकानुवादिनः ॥ ६ ॥
प्रतीतिरर्थेषु यतस्तं शब्दं ब्रुवतेऽपरे ।
धूमभासोरपि प्राप्ता शब्दतान्यानुमां प्रति ॥ ७ ॥
नन्वकारादिवर्णानां समुदायोऽभिधेयवान् ।
अर्थप्रतीतये गीतः शब्द इत्यभिधीयते ॥ ८ ॥
प्रत्येकमसमर्थानां समुदायोऽर्थवान् कथम् ।
वर्णानां क्रमवृत्तित्वाच्चाप्या नापि च संहतिः ॥ ९ ॥
न चापि समुदायिभ्यः समुदायोऽतिरिच्यते ।
दारुभित्तिभुवोऽतीत्य किमन्यत् सद्म कल्प्यते ॥ १० ॥
तस्मात् कूटस्थ इत्येषा शाब्दी वः कल्पना वृथा ।
प्रत्यक्षमनुमानं वा यत्र तत् परमार्थतः ॥ ११ ॥
शपथैरपि चादेयं वचो न स्फोटवादिनाम् ।
नभःकुसुममस्तीति श्रद्दध्यात् कः सचेतनः ॥ १२ ॥
इयन्त ईदृशा वर्णा ईदृगर्थाभिधायिनः ।
व्यवहाराय लोकस्य प्रागित्थं समयः कृतः ॥ १३ ॥
स कूटस्थोऽनपायी च नादादन्यश्च कथ्यते ।
मन्दाः सांकेतिकानर्थान् मन्यन्ते पारमार्थिकान् ॥ १४ ॥
विनश्वरोऽस्तु नित्यो वा संबन्धोऽर्थेन वा सता ।
नमोऽस्तु तेभ्यो विद्वद्भ्यः प्रमाणं येऽस्य निश्चितौ ॥ १५ ॥
[1]अन्यापोहेन शब्दोऽर्थमाहेत्यन्ये प्रचक्षते ।
अन्यापोहश्च नामान्यवा ( प ? ) दार्थावा ( पा ? ) कृतिः किल ॥ १६ ॥
यदि गौरित्ययं शब्दः कृतार्थोऽन्यनिराकृतौ ।
जनको गवि गोबुद्धेर्मृग्यतामपरो ध्वनिः ॥ १७ ॥
अर्थज्ञानफलाः शब्दा न चैकस्य फलद्वयम् ।
अपवादविधिज्ञाने फले चैकस्य वः कथम् ॥ १८ ॥
पुरा गौरिति विज्ञानं गोशब्दश्रवणाद्भवेत् ।
येनागोप्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः ॥ १९ ॥
वर्णभेदादिदं भिन्नं वर्णाः स्वांशविकल्पतः ।
के शब्दाः किं च तद्वाच्यमित्यहो वर्त्म दुस्तरम् ॥ २० ॥
द्रव्यक्रियाजातिगुणभेदात् ते च चतुर्विधाः ।
यदृच्छाशब्दमप्यन्ये डित्थादिं प्रतिजानते ॥ २१ ॥
नानाभाषाविषयिणामपर्यन्तार्थवर्त्तिनाम् ।
इयत्ता केन वाग्मीणां विशेषादवधार्यते ॥ २२ ॥

---

[1] अन्यापोह नु शब्दो° M.

वक्रवाचां कवीनां ये प्रयोगं प्रति साधवः ।
प्रयोक्तुं ये न युक्ताश्च तद्विवेकोऽयमुच्यते ॥ २३ ॥
नामयुक्तं प्रयुञ्जीत चेतः संमोहकारिणम् ।
तुल्यार्थत्वेऽपि हि ब्रूयात् को हन्ति गतिवाचिनम् ॥ २४ ॥
ओषार्दिं न तु दुर्बोधं न दुष्टादिमपेशलम् ।
ग्राम्यं न पिण्डीश्रयादिं न क्षित्यादिमपार्थकम् ॥ २५ ॥
नाप्रतीतान्यथार्थत्वं धात्वनेकार्थतावशात् ।
न हेमज्ञापकाकृष्टसंहति ध्याति वा यथा ॥ २६ ॥
न शिष्टैकमित्येव न तन्त्रान्तरसाधितम् ।
छन्दोवदिति चोत्सर्गाच्च चापि च्छान्दसं वदेत् ॥ २७ ॥
क्रमागतं श्रुतिसुखं शब्दमप्युदीरयेत् ।
अतिरेते ह्यलंकारमन्यं व्यञ्जनचारुता ॥ २८ ॥
सिद्धो यथोपसंख्यानादिष्टया यथोपपादितः ।
तमाद्रियेत प्रायेण न तु योगविभागजम् ॥ २९ ॥
इयं चन्द्रमुखी कन्या प्रकृत्यैव मनोहरा ।
अस्यां सुवर्णालंकारः पुष्णाति नितरां श्रियम् ॥ ३० ॥
तृडिपदं प्रयुञ्जीत संक्रमेऽपि सृजेर्यथा ।
मार्गेन्नायनरागे ते पतन्तो बाष्पबिन्दवः ॥ ३१ ॥
अकारान्तं तु पुमान् स्त्रिया यत्र च शिष्यते ।
यथाह ब्रह्माणिन्द्रौ भवौ भवौ मृडाविति ॥ ३२ ॥
यथा पचन्तीत्यादि स्त्रियां प्रातिपदिकात्ततः ।
कारितवदितीच्छा च तथा कथयतीत्यपि ॥ ३३ ॥
प्रयुञ्जीताव्ययीभावमदन्तं नाप्यपञ्चमी ।
तृतीयासप्तमीपदे नाऽम्भिवयमानयेत् ॥ ३४ ॥
तिष्ठद्गुप्रभृती नाम्नी वर्णनीयसगोचरौ ।
यथा विद्वानधीतेऽसौ तिष्ठद्गु च वहद्गु च ॥ ३५ ॥
शिष्टप्रयोगमात्रेण न्यासकारमतेन वा ।
तृचा समस्तषष्ठीकं न कथंचिदुदाहरेत् ॥ ३६ ॥
सूत्रज्ञापकमात्रेण वृत्रहन्ता यथोदितः ।
अकेन च न कुर्वीत वृत्तिं तद्गमको यथा ॥ ३७ ॥
पञ्चराजीति च यथा प्रयुञ्जीत द्विगुस्त्रियाम् ।
नपुंसकं तत्पुरुषं पुरहूतसभं यथा ॥ ३८ ॥
सर्वेभ्यश्च भृशादिभ्यो वदेद्धुमहलं यथा ।
प्रियोन्मनायते सा ते किं शठाभिमनायसे ॥ ३९ ॥
[1]तृतीयैकवचः षष्ठ्यामामन्तं च वदेत् क्विपि ।
यथोदितं बलभिदा सुरुचां विद्युतामिव ॥ ४० ॥

---

१ तृतीयैव चतुः पञ्चमा° M.

असन्तमपि यद्वाक्यं तत्तथैव प्रयोजयेत् ।
यथोच्यतेऽम्भसां भासा यशसामम्भसामिति ॥ ४१ ॥
पुंस्त्रियां च क्वस्वन्तमिच्छन्त्यच्छान्दसं किल ।
उपेयुषामपि दिवं यथा न च्येति चारुता ॥ ४२ ॥
इभकुम्भनिभे बाला दधुषी कन्तुके (?) स्तनौ ।
रतिखेदपरिश्रान्ता जहार हृदयं नृणाम् ॥ ४३ ॥
शब्दादिभ्योऽतितरां भाति णिज्विहितो यथा ।
बलाकाः पश्य सुश्रोणि घनान्धवलयन्त्यमूः ॥ ४४ ॥
शिशिरासारकणिकां सदृशस्ते तुकङ्गवत् (?) ।
संवीजयति सुश्रोणि रतिखेदाकसेक्षणाम् ॥ ४५ ॥
एवं णिचः प्रयोगस्तु सर्वत्रालंकृतिः परा ।
लिङ्गत्रयोपपन्नं च ताच्छील्यविषयं णिनिम् ॥ ४६ ॥
तस्या हारी स्तनाभोगो वदनं हारि सुन्दरम् ।
हारिणी तनुरत्यन्तं कियन्न हरते मनः ॥ ४७ ॥
ताच्छील्यादिषु चेष्यन्ते सर्व एवात्र नादयः ।
विशेषेण च तत्रेष्टा युच्कुकञ्वरजिष्णुचः ॥ ४८ ॥
क्तिन्नन्तं च प्रयुञ्जीत संगतिः संहतिर्यथा ।
शकारौ जागुरिष्टौ च जागर्या जागरा यथा ॥ ४९ ॥
उपासने तिचयुचं नित्यमासेः प्रयोजयेत् ।
ल्युटं च कर्तृविषयं देवनो रमणो यथा ॥ ५० ॥
अणन्तादपि ङीबिष्टो लक्ष्मीः पौरन्दरी यथा ।
अण्महाराजनाडाघ्रारोचनाभ्यां तथा च ठञ् ॥ ५१ ॥
ड्मतुबिष्टं च कुमुदाद्यथेयं भूः कुमुद्वती ।
ठञ् चापि तेन जयतीत्याक्षिकः शाक्तिको यथा ॥ ५२ ॥
हितप्रकरणेऽणं च सर्वशब्दात् प्रयुञ्जते ।
[1]ततश्छमिष्टया च यथा सार्वः सर्वीय इत्यपि ॥ ५३ ॥
वदेदिमनिजन्तं च पटिमा लघिमा यथा ।
विशेषेणेयसुन्निष्टो ज्यायानपि कनीयसीम् ॥ ५४ ॥
द्वयसज्दघ्नचाविष्टौ प्रमाणविषयौ यथा ।
जानुदघ्नी सरित्नारी नितम्बद्वयसं सरः ॥ ५५ ॥
मतुप्प्रकरणे ज्योत्स्नातमिस्राशृङ्गिणादयः ।
इनच् फलबर्हाभ्यां फलिनो बर्हिणो यथा ॥ ५६ ॥
इन्दिः प्रयुक्तः प्रायेण तथा ठंश्च मनीषिभिः ।
तत्रापि मेखलामालामायानां सुतरां मता ॥ ५७ ॥
अभ्यस्ताज्झेरदादेशे दधतीत्यादयोऽपि च ।
रोदितिस्वपितीत्यादि सहेडा सार्वधातुकम् ॥ ५८ ॥

---

[1] ततश्छमिष्टया M.

अभ्यस्तेषु प्रयोक्तव्यमदन्तं च विदेः शतुः ।
असौ दधदलंकारं स्रजं बिभ्रच्च शोभते ॥ ५९ ॥
... ... ... ...र्यं योगिनं वदेत् ।
यथैतच्छ्यामममाभाति वनं वनजलोचने ॥ ६० ॥
नैकत्रौकारभूयस्त्वं गतो यातो हतो यथा ।
सावर्ण्यावत्सयोभस्य [1]श्रुयाज्ञान्यत्र पद्धतेः ॥ ६१ ॥
सालातुरीयमतमेतदनुक्रमेण
को वक्ष्यतीति विरतोऽहमतो विचारात् ।
शब्दार्णवस्य यदि कश्चिदुपैति पारं
भीमाम्भसश्च जलधेरिति विस्मयोऽसौ ॥ ६२ ॥
विद्यानां सततमपाश्रयोऽपरासां
तासूक्तां न च विरुणद्धि कांश्चिदर्थान् ।
श्रेष्ठेयं जगति मते हि पाणिनीयं
माध्यस्थ्याद्भवति न कस्यचित् प्रमाणम् ॥ ६३ ॥
आलोच्य मतानि सत्कवीना-
मवगम्य स्वधिया च काव्यलक्ष्म ।
सुजनावगमाय भामहेन
ग्रथितं [2]रक्रिलगोमिसूनुनेदम् ॥ ६४ ॥
इति भामहालंकारे षष्ठः परिच्छेदः ।
षष्ट्या शरीरं निर्णीतं शतषष्ट्या त्वलंकृतिः ।
पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः ॥
षष्ट्या शब्दस्य शुद्धिः स्यादित्येवं वस्तुपञ्चकं
उक्तं षड्भिः परिच्छेदैर्भामहेन क्रमेण वः ॥
[3]श्रीदाशरथिपादेभ्यो नमः ॥

---

१ मूषाला° M. २ रक्तिल° M. ३ M. has शुभमस्तु.

# Addenda and Corrigenda

to

The Pratâparudrîya, the Ratnâpaṇa, and the Ratnas'âṇa.

| Incorrect. | Correct. |
|---|---|
| p. 1 l. 3 काव्यप्रकरणम् | नायकप्रकरणम् |
| Headings from p. 3 to p. 37 should be नायकप्रकरणम् for काव्यप्रकरणम्. | |
| p. 2 l. 21 मीमांसान्यायविस्तर: | मीमांसा न्यायविस्तरः |
| p. 3 l. 28 कारणमतम् | कारणमूलम् |
| p. 4 l. 24 m. | M. |
| p. 6 l. 3 गुणाः | गुणा |
| p. 8 l. 9 [illegible] | लोकादरः |
| p. 15 l. 14 [illegible] | अक्षितर्मवतिपरो |
| p. 16 l. 12 [illegible] | तदनु महिता |
| p. 21 l. 16 [illegible] | करेण |
| p. 26 l. 4 [illegible] | वसुमती या |
| ,, l. 16 [illegible] | न्यासोद्योतवचनात् |
| p. [illegible] l. 6 [illegible] | शृणोम्यभिसारिकाम् |
| p. [illegible] No. 4 marked for the form should be No. 5. | |
| p. 36 l. 5 [illegible] | मृगाक्ष्या |
| p. 39 l. 17 [illegible] | पतस्स |
| ,, l. 20 °[illegible] T. | °मर्तिगन्ध T., P. |
| p. 44 l. 23 [illegible] | मामाकराः |
| p. 47 l. 5 तत्र संकेतितार्थगोचरः &c. should be in another para. | |
| ,, l. 18 अथोद्देशक्रमानुसारेणाभिधालक्षणमाह should be in another para. | |
| p. 53 l. 5 वक्तुर्विवक्षितत्वात् । | वक्तुर्विवक्षितत्वात् |
| p. 55 l. 20–21 विशेषस्यापि | विशेष्यस्यापि |
| p. 58 l. 17 पदार्थान्तरमात्रेणानित° | पदार्थान्तरमात्रेणान्वित° |
| p. 70 l. 23 कुलाचलाद्योपमैषिणा | कुलाचलाद्युपमैषिणा |
| p. 72 l. 5 °भिदा दम्भोलयः | °भिदादम्भोलयः |
| p. 72 l. 23 पतस्येति | पतस्सेति |
| p. 73 l. 6 द्युम्न्त° | द्युन्त° |
| p. 76 l. 8 एकावध एवति | एकविध एवेति |
| p. 77 l. 7 पुनश्चतुर्थायोजने | पुनश्चतुर्था योजने |
| p. 83 l. 4 नमोभ्रमरकीबा | नमो भ्रमरकीबा |

# Addenda and Corrigenda

| | Incorrect. | Correct. |
|---|---|---|
| p. 86 l. 11 | °वाक्यं | °वाक्यम्। |
| " l. 19 | मिवतिवविवज्जल | मिवतिवविज्ञवज्ज |

p. 89 Before l. 1 the heading वस्तुव्यनिर्णयः should be inserted.

| | Incorrect. | Correct. |
|---|---|---|
| p. 91 l. 21 | नष्टचेततां | नष्टचेष्टता |
| p. 92 l. 15 | इत्युक्तं। | इत्युक्तं |
| p. 98 l. 2 | विमक्त° | विमुक्त° |
| " l. 7 | °प्रचुरोज्ज्वला | °प्रचुरोज्ज्वला |
| p. 100 l. 7 | नोऽघाद° | नोऽन्वाद° |
| p. 101 l. 7 | नृत्तं | नृत्यं |
| " " | नृत्यं | नृत्तं |
| " l. 10 | नृत्य° | नृत्त°. |
| " l. 13 | परिमाणावच्छेदः। | °परिमाणावच्छेदः |
| p. 106 l. 1 | प्राप्त्याशाकार्य° | प्राप्त्याशा कार्य° |
| " l. 7 | संभवः। | संभवः |
| " l. 8 | संभावनामति° | संभावना मति° |
| p. 107 l. 1 | पताकाव्यापिनी | पताका व्यापिनी |

p. 108 l. 9 Put in inverted commas from स्नानि° to [illegible].

" l. 17 तत्र should be struck off.

| | Incorrect. | Correct. |
|---|---|---|
| p. 110 l. 9 | छद्मनाहिता° | छद्मना हिता° |
| p. 111 l. 16 | °जन्यौ | °जन्यौ |
| p. 113 l. 8–9 | °रूपगहनम् | °रूपग्रहणम् |
| p. 121 l. 3 | °प्रयुक्ति° | °प्रयुक्ति° |

p. 126 l. 12 Complete the inverted commas

| | Incorrect. | Correct. |
|---|---|---|
| p. 127 l. 11 | चत्वारोऽङ्गा | चत्वारोऽङ्गाः |
| p. 128 l. 17 | जामदग्न्यजयोर्यथा | जामदग्न्यजयो यथा |
| p. 128 l. 20 | °पदिष्टा मुखा° | °पदिष्टामुखा° |
| " " | °ध्यत्रामुखं | °ध्यत्रामुखं |
| p. 129 l. 5 | कथायाम° | कथा याम° |
| p. 131 l. 3 | °प्रतिनायकौ | °प्रतिनायकौ |
| p. 133 l. 11 | व्यक्तः | व्यक्तः |
| p. 134 l. 8 | धने | घने |

p. 136 l. 10–11, 23–24 Read किं मारुदंय &c. as a verse.

| | Incorrect. | Correct. |
|---|---|---|
| p. 140 l. 7–8 | मंगल° and मंगलं | मङ्गल° and मङ्गलं |
| p. 142 Heading | °समन्वित | समन्विते |
| " l. 10 | °कर्तृक मुखा° | °कर्तृकमुखा° |

| | Incorrect. | Correct. |
|---|---|---|
| p. 143 l. 2 | त्वरा | त्वरा । |
| " l. 7 | कुणइ ॥ | कुणइ ॥ १६ ॥ |
| " l. 8 | तदर्थोक्तमेव | तदर्थोक्तमेव |
| " l. 29 | तदर्थोक्त एव | तदर्थोक्त एव |
| p. 147 l. 16 | तास्मन् | तस्मिन् |
| p. 150 l. 16 | स युवति° | सयुवति° |
| p. 151 l. 19 | याने | यामे |
| p. 157 l. 10 | सरितं | सरितः |
| p. 166 l. 1 | प्रस्तूयन्तो | प्रस्तूयतो |
| " l. 12 | °गुग्गुल° | °गुग्गुलु°. |
| p. 168 l. 20 | लोहदुलदग्ध: | °लोहहुलदग्ध: |
| " l. 31 | °हुल° t. | °हुल° p. |
| p. 176 l. 19 | °र्णाइनुमप्रृतिषु | °र्णा हनुप्रभृतिषु |
| p. 177 l. 17 | °विच्छेदाधो° | °विच्छेद् अधो° |
| p. 178 l. 13 | °र्थांतामृतैः | °र्थांतामृतैः |
| p. 179 l. 22 | T'. | प्रयुज्यन्ते T'. |
| p. 180 l. 19 | शौनिकेन | शौनकेन |
| p. 18[illegible] l. 16–17 | °प्रसक्ति° | °प्रसक्ति° |
| " l. 25 | प्रसक्ति° | प्रसक्ति° |
| p. 185 l. 13 | Drop कलिङ्ग | |
| p. 187 l. 8 | पादमूलमेव | पादमूलमेव |
| p. 192 l. 15 | प्रशमस्या | प्रशस्या° |
| " l. 21 | महल्लका° | महोल्लका° |
| p. 198 l. 9–10 | Read पुत्रकेन भवता—सत्याशिषो वयम् ॥ as a verse. | |
| " l. 28 | P'. | T'. |
| p. 199 l. 8 | विहितै° | विहित° |
| p. 200 l. 17–18 | °पगमनसनात् | पगमनात् |
| p. 201 l. 13 | कल्पाद° | कल्पात° |
| " l. 28 | मेघाति° | मेघातिं° |
| p. 202 l. 11 | विलम्बाद्दौ | विलम्बाद्दैः |
| p. 206 l. 7 | शिरःकम्पनै | शिरःकम्पनै– |
| p. 207 l. 13–14 | तान्युपानयन्ति | तान्युपानयति. |
| p. 208 l. 21 | यस्य | येऽस्य |
| " l. 25 | After मुक्तातपत्रविभवाः insert मौक्तिकमयच्छत्रविभवाः | |
| " l. 26 | द्विषत्सु | द्विषत्सु |
| p. 209 l. 13 | शिरंस्व° | शिरस्त्र° |

| | Incorrect. | Correct. |
|---|---|---|
| p. 211 l. 17 | सौवर्ण° | सौपर्ण° |
| p. 212 l. 6 | पच | पतत् |
| " " | °रूपगुहनन् | °रुपगुहनन् |
| p. 214 l. 7 | पूर्णाङ्क° | पूर्णांकं° |
| " l. 18 | मदनुग्रहस्य | महदनुग्रहस्य |
| p. 218 l. 14 | संख्याः | संख्या |
| " " | शताधिकात् | शतादिकात् |
| p. 223 l. 1 | °सुखा° | °सुख° |
| p. 224 l. 19 | °व्यक्तं च लक्षण° | [illegible] |
| p. 227 l. 8 | °द्विशेषम । | [illegible] |
| p. 228 l. 20 | लक्षणम् । पुन° | [illegible] |
| p. 229 l. 23 | योगात् | [illegible] |
| " l. 26 | °प्रमादित° | [illegible] |
| p. 230 l. 7 | प्रमोदता | [illegible] |
| p. 231 l. 23 | तत्कुतेनापः | [illegible] |
| " l. 24 | कोपः | [illegible] |
| p. 232 l. 9 | पत्यायन° | [illegible] |
| p. 233 l. 2 | सुबन्धस्य° | [illegible] |
| " l. 9 | तथा | [illegible] |
| " l. 11 | समुद्रः | [illegible] |
| p. 237 l. 1 | इत्यास्तां तर्ह° | [illegible] |
| " l. 6 | °सुखस्यैते | [illegible] |
| " l. 15 | तथव | [illegible] |
| p. 238 l. 20 | पञ्चवर्षाधिका | पञ्चवर्षाधिका । |
| p. 239-40 l. 10 | काम्यइ° &c. is a verse. | |
| " l. 14 | पत्र | पत्रं |
| " l. 19 | काकति | काकति- |
| p. 242 l. 1 | अश्रुनेत्रो° | अश्रु नेत्रो° |
| p. 243 l. 10 | महीतं | मही तं |
| " l. 26 | महीतां | मही तां |
| p. 244 l. 4 | अंपणोति | अंपोति |
| p. 247 l. 5 | चिन्ताशून्यत्व° | चिन्ता शून्यत्व° |
| p. 248 l. 23 | प्रती° | प्रति° |
| p. 251 l. 2 | संचितं | सचितं |
| p. 256 l. 15 | शब्दा° | शब्द° |

| | Incorrect. | Correct. |
|---|---|---|
| p. 260 l. 2 | °त्रित° | °त्रित° |
| p. 262 l. 18 | चित्तस्य विकृतिः | चित्तस्याविकृतिः |
| p. 264 l. 16 | प्रियचरिता° | प्रियचरिता° |
| p. 267 l. 21 | कथावाद° | कथा वाद° |
| p. 268 l. 2 | मनाक् प्रिय° | मनाक्प्रिय° |
| ,, l. 4 | क्षोणीभुजा° | क्षोणी भुजा° |
| ,, l. 14 | °मासदि° | °मासदि° |
| p. 271 l. 21 | कृशता रतिः | कृशतारतिः |
| p. 272 l. 8 | विमुक्ता | विमुक्ता |
| p. 275 l. 12–13–14 | Put–at the end of each line. | |
| ,, l. 18 | [illegible] | पदार्थं° |
| p. 278 l. 5 | °र्ष्या विरह° | °र्ष्याविरह° |
| p. 287 l. 2 | विशेष | विशेष– |
| ,, l. 15 | कथ | कथं |
| p. 288 l. 24 | तत्रैवोक्तम | तत्रैवोक्तम् |
| p. 292 l. 11 | अमन्दानन्दात्म | अमन्दानन्दात्मा |
| p. 296 l. 6 | शब्दगतत्वे | शब्दगतत्वे– |
| p. 297 l. 7 | °दूरायतो | °दूरा यतो |
| p. [illegible] l. 12 | देवता | देवताः |
| p. 300 l. 17 | वलयं | वलये |
| ,, l. 20 | [illegible] | शोणितेति |
| p. 303 l. 5 | °पदत्वे | °पदित्वे |
| p. 306 l. 2 | कीर्ण | कीर्णे |
| ,, l. 4 | चक्रेन | चक्रे न |
| ,, l. 6 | [illegible] | तिक्तां |
| ,, l. 9 | संपूर्णो | संपूर्णः |
| p. 312 l. 17 | गुहागृहाणि | गुहा गृहाणि |
| p. 316 l. 18 | °भिपात्तु° | °भिपात्तु° |
| p. 319 l. 4 | सुरभै° | सुरभे° |
| p. 321 l. 1 | पव | पवं |
| ,, l. 15 | °वाच्यत्व | °वाच्यत्वं |
| p. 326 l. 4 | °तटी दीर्घा | °तटीदीर्घा |
| ,, l. 23 | सपीतिः। 'सहपानं स पीतिः | सपीतिः सहपानम्। ' सपीतिः |
| p. 327 l. 5 | क्ष्वेडमटा | क्ष्वेडद्रटा |
| p. 328 l. 2 | तिक्त | तिक्तं |
| ,, l. 6 | निग्रहन्तु° | निग्रहन्तु° |
| p. 329 l. 11 | भिदा दम्भोलयः | भिदादम्भोलयः |

| | Incorrect. | Correct. |
|---|---|---|
| p. 335 l. 4 | गुणप्रकरण | गुणप्रकरणं |
| p. 340 l. 5 | °पमेयोपमोपमयो° | °पमेयोपमानन्वययो° |
| p. 347 l. 13 | सकर्णिका | सकर्णिकान् |
| " l. 17 | मूर्तेः रित्यर्थः | मूर्तेरित्यर्थः |
| p. 350 l. 8 | संदृशाः | सदृशाः |
| p. 351 l. 11 | °जनिता मन्द° | °जनितामन्द° |
| p. 352 l. 19–20 | °दधिकोप मादिसंग्रहः | °दधिकोप– मादिसंग्रहः । |
| 5, 353 l. 21 | उपमानोप° | उपमानेनोप° |
| p. 355 l. 21 | After मुखं insert चन्द्र इवेत्यत्र मुखं | |
| p. 356 l. 1–2 | At the end of the lines put – | |
| p. 361 l. 1 | तारादिहारावली– | तारादि हारावली- |
| " l. 22 | सर्वलोप° | सर्वलोपा° |
| p. 366 l. 11 | कर्तृः | कर्तुः |
| p. 373 l. 2 | प्रासाधिता° | प्रसाधिता° |
| " l. 11–12 | Put – at the end of the lines. | |
| p. 375 l. 9 | °पंशो लीला° | °पंशोलीला° |
| p. 376 l. 24 | कपिलादावप्रप | कपिला दावाप्रप |
| p. 378 l. 15 | °विषयिणो | °विषयिणोः |
| " l. 18 | अलयो विषय° | °अन्योविषय° |
| p. 381 l. 18 | राज्ञः सत्यत्वं | राज्ञोऽसत्यत्वं |
| p. 385 l. 22 | षण्णवतिभेदा | षण्णवतिभेदाः |
| p. 386 l. 16 | After नियमात् put । | |
| p. 395 l. 12 | °मध्यत्रपर्यंत° | °मध्यत्र पर्यंत° |
| p. 404 l. 17 | परतयाः | परवशाः |
| p. 406 l. 26 | पालकाव्ये | पालकाप्ये |
| p. 407 l. 15 | ध्वजाद्याया | ध्वजाद्या या |
| p. 409 l. 9 | Put – at the end of the line. | |
| " l. 22 | प्रभाकरं | प्राभाकरं |
| p. 410 l. 16 | इत्यादिना | इत्यादिना । |
| " l. 18 | वैचित्र्यम | वैचित्र्यम् । |
| p. 411 l. 13 | सख्या। | सख्या |
| p. 414 l. 3 | तथा | यथा |
| p. 419 l. 4–8 | द्रव्येन | द्रव्येण |
| " l. 10 | विष्णु | जिष्णु |
| p. 420 l. 7 | अशेष° | अशक्य° |

| | Incorrect. | Correct. |
|---|---|---|
| p. 426 l. 16 | °भ्रंश- | °भ्रंश- |
| p. 427 l. 21 | संबन्ध्य | संबन्ध° |
| ,, l. 22 | इदोती | उद्योती |
| p. 430 l. 3–16 | द्वापारा° | द्वापरा° |
| p. 431 l. 14 | strike off । at the end of the line. | |
| p. 433 l. 21 | नानुपलब्धेन | नानुपलब्धे न |
| p. 434 l. 16 | मुञ्चन्तीति | मुञ्चन्तीति |
| p. 438 l. 15 | सकलातीथिः | सकला तिथिः |
| | and °स्थितयोर्द्वयोः | °स्थितयो द्वयोः |
| p. 448 l. 16 | साध्यं | साधनं |
| ,, l. 19 | °संप्रतिपन्ना रूप° | °संप्रतिपन्नरूप° |
| p. 450 l. 8 | बि[illegible]यमी | बिम्बत्यमी |
| p. 455 l. 13 | [illegible]शिला | पत्रसिला |
| ,, l. 21 | °[illegible]विवक्षित° | °भावस्याविवक्षित° |
| p. 456 l. 14 | युगपद्स्थानं | युगपदवस्थानं |
| ,, l. 22 | Insert न after युगपदवस्थानं | |
| p. 459 l. 22 | °[illegible]मिनी | कामिनी |
| p. 462 l. 22 | [illegible]तिरूपा | भ्रान्तिरूपा |
| p. 46[illegible] l. 20 | °[illegible]स्य | °शब्दस्य |
| ,, l. 13 | [illegible]° | अद्यो° |
| p. 466 l. 11 | ताराप्रभू° | ताराप्रभू° |
| p. 469 l. 10 | Put the Heading चक्रावत्यलंकारः before the line. | |
| p. 472 l. 22 | °हेतोरसंबन्धस्य | °हेतोस्संबन्धस्य |
| p. 474 l. 11 | °कादम्बिनी° | °कादम्बिनी° |
| ,, l. 18 | प्रशाम्यत | प्रशाम्यत |
| ,, l. 19 | After °स्यगने read कादम्बिनीभिरुपमानस्यैव सविशेषणत्वं or कादम्बिनीरूपोपमानस्यैव सविशेषणत्वं | |
| p. 475 l. 1 | कादम्बिनीवद्विप° | कादम्बिनीव द्विप° |
| p. 476 l. 1 | °द्रुपमाविलसत्° | °द्रुपमा विलसत्° |

---



## WORKS IN THE PRESS.

Dvyâśraya-Kâvya, by A. V. Kâthavate, B. A.

Harshacharita, by Dr. A. A. Führer.

Parâśara-Smriti, with the Commentary of Sâyaṇa-Mâdhavâchârya, Vol. III., by Vamanshastri Islampurkar.

S'ribhâshya, by Vasudevshastri Abhyankar.

Vaiyâkaraṇa-Bhûshaṇa of Koṇḍabhaṭṭa, by K. P. Trivedi, B. A.

*In Preparation.*

Vol. II. of Mṛichchhakaṭika, containing an introduction discussing the date of the play, the age of the author, etc., and English Notes, by K. C. Mehendale, B. A.

## WORKS UNDERTAKEN.

Kâvyâdarśa, edited by Babu Manmohan Chakravarti.

Keśavamiśra's Tarkabhâshâ, with the Commentary of Chinnabhaṭṭa, edited, with Notes, Critical and Explanatory, by D. R. Bhandarkar, M. A.

Ratnâvalî, edited by N. S. Panse, B. A.

Samudra-Saṃgama-Grantha, with an English translation, edited by A. V. Kathavate, B. A.

Shaḍbhâshâchandrikâ of Lakshmîdhara, edited by K. P. Trivedi, B. A.

Shaṭprâbhṛitaṭikâ, edited by K. B. Pathak, B. A.

Syâdvâdamañjarî, edited by A. B. Dhruva, M. A.

Udbhaṭa's Kâvyâlaṃkâra-Sâra-Saṃgraha, with Commentary, the "Laghuvṛitti" of Pratihârendurâja, edited by N. D. Banhatti, B. A.

Uttararâmacharita, edited by Dr. R. G. Bhandarkar and S. R. Bhandarkar, M. A.

Veṇîsaṃhâra, edited by N. S. Panse, B. A.

Yâska's Nirukta, with the Commentary of Durgâchârya, edited by H. M. Bhadkamkar, B. A.

